# काशीविद्यासुधानिधिः

# THE PANDIT.

A MONTHLY PUBLICATION

OF THE

BENARES COLLEGE

DEVOTED TO

SANSKRIT LITERATURE.

NEW SERIES

VOL XXX.

BENARES

PRINTED AND PUBLISHED BY BHAGAVATI PRASAD B A.

AT THE MEDICAL HALL PRESS

1908

# INDEX TO VOLUME XXX NEW SERIES



यते ॥ * ॥ सम्भाण्डयते । भाण्डानि समाचिनोति । राशीकरोतीत्यर्थः । समबभाण्डत ॥ चीवरादर्जने परिधाने च ॥ * ॥ सञ्चीवरयते भिक्षुः । चीवराण्यर्जयति परिधत्ते वेत्यर्थः ॥

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् । ३ । १ । २१ ॥

कृञर्थे ॥ मुण्डं करोति मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । व्रताद्भोजनतन्निवृत्त्योः ॥ * ॥ पयः शूद्रान्नं वा व्रतयति ॥ वस्त्रात्समाच्छादने ॥ * ॥ सम्वस्त्रयति ॥ हल्यादिभ्यो ग्रहणे ॥ * ॥ हलिकल्योरदन्तत्वं निपात्यते । हलिं कलिं वा गृह्णाति हलयति । कलयति । महद्धलं हलिः । परत्वाद्वृद्धौ सत्यामपीष्ठवद्भावेनाग्रेव लुप्यते । अतः सन्वद्भावदीर्घौ न । अजहलत् । अचकलत् । कृतं गृह्णाति । कृतयति । तूस्तानि विहन्ति तूस्तयति । तूस्तं केश इत्येके । जटीभूता केशा इत्यन्ये । पापमित्यपरे । तत्करोतीत्येव सिद्धे केषाञ्चिद् ग्रहणं सापेक्षेभ्योऽपि णिजर्थम् । मुण्डयति माणवकम् । मिश्रयत्यन्नम् । श्लक्ष्णयति वस्त्रम् । लवणयति व्यञ्जनमिति । हलकलयोरत्वार्थम् । केषाञ्चित्तु प्रपञ्चार्थम् । मुण्डादयः सत्यापेत्यत्रैव पठितुं युक्ताः ॥

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । ३ । १ । २२ ॥

पौनः पुन्यं भृशार्थश्च क्रियासमभिहारस्तस्मिन्द्योत्ये यङ् स्यात् ॥ गुणो यङ्लुकोरित्यभ्यासस्य गुणः । सनाद्यन्ता इति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे । बोभूयिता । बोभूयिष्यते । बोभूय-

ताम् । बोभूयिषीष्ट । अबोभूयिष्ट । अबोभूयिष्यत । बेभिद्यते । यस्य हलः । आदेः परस्येति यलोपः । अतो लोपः । तस्य स्थानिवत्त्वा न्नोपधागुणः । बेभिदाञ्चक्रे । बेभिदिता । धातोः किम् । आर्द्धधातुकत्व यथा स्यात् । तेन ब्रुवो वचिरित्यादि । एकाच. किम् । जागर्ति । हलादेः किम् । भृशमीक्षते । भृशं शोभते रोचत इत्यत्र यङ् नेति भाष्यम् । पैनः पुन्ये तु स्यादेव । शोशुभ्यते । रोरुच्यते ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः ॥ * ॥ आद्यास्त्रयश्चुरादावदन्ताः । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अनेकाच्त्वेनाषोपदेशत्वात् षत्व न । यस्य हल' । आदेः परस्येति यलोपः । अतो लोप । सोसूचाञ्चक्रे । सोसूचिता । सोसूत्रिता । दीर्घोऽकित इत्यभ्यासस्य दीर्घः । अटाट्यते । यङि चेति गुणः । अरार्यते । अरारिता । अशाश्यते । अशाशिता । ऊर्णोनूयते । ऊर्णोतेर्न वक्तव्यः ।

> वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
> आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

तत्र यङि भावातिदेशः । आमिटोस्त्वभावातिदेशः । तयोर्नीतेरभावात् । इडुपग्रह इट्प्रतिषेधः । विभाषागुण इति पञ्चमी । फलस्य चात्र हेतुत्वम् । यथा ऽध्ययनेन वसतीति । यङुदाहृतः ॥ ऊर्णुनाव । ऊर्णुतः । ऊर्णुतवानिति शिष्टोदाहरणानि ॥

## नित्यं कौटिल्ये गतौ । ३ । १ । २३ ॥

गत्यर्थात्कौटिल्ये एव यङ् स्यान्नतु क्रियासमभिहारे ॥ कुटिल व्रजति वाव्रज्यते ॥

## लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ३ । १ । २४ ॥

एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् ॥ गर्हितं लुम्पति लोलुप्यते । सासद्यते । चञ्चूर्यते । जञ्जप्यते । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । जेगिल्यते ॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् । ३ । १ । २५ ॥

एभ्यो णिच् स्यात् ॥ चूर्णान्तेभ्यस्तत्करोतीत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । सत्यस्यत्वापुगर्थम् । सत्यं करोत्याचष्टे वा सत्यापयति ॥ अर्थवेदयोरप्यापुग्वक्तव्यः ॥ * ॥ अर्थापयति । वेदापयति । पाशं विमुञ्चति । विपाशयति । रूपं पश्यति रूपयति । वीणयोपगायति उपवीणयति । तूलेनानुकुष्णाति अनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति उपश्लोकयति । सेनयाऽभियाति अभिषेणयति । उपसर्गात्सुनोतीति षः । अभ्यषेणयत् । प्राक्सितादिति षः । लोमान्यनुमार्ष्टि अनुलोमयति । त्वचं संवरणे घः । त्वचं गृह्णाति त्वचयति । वर्मणा सन्नह्यति वर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसते ऽवचूर्णयति । चुरादिभ्यस्तु स्वार्थे चोरयति । चिन्तयति ॥

## हेतुमति च । ३ । १ । २६ ॥

प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् ॥ भवन्तं प्रेरयति भावयति । पाचयति । णयन्तात् णिच् । पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः । चोरयति । पाचयति । यङ् । णिच् । सन्नन्ताण्णिच् । बोभूययिषयति । निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ

शुद्धेन तुल्योऽर्थः । तेन "प्रार्थयन्ति शयनोत्थितं प्रिया" इत्यादि सिद्धम् । एवं सकर्मकेषु सर्वेषूह्यम् ॥ तत्करोतीत्युपसंख्यानम् ॥ * ॥ करोतीति धात्वर्थोपलक्षणं स एव च णिजर्थः । लडर्थस्त्वविवक्षितः । पटुं करोत्याचष्टे वा पटयति । परत्वाद्वृद्धौ सत्यां टेरिति सूत्रे णाविष्ठवत्प्रातिपदिकस्येति वक्ष्यमाणवार्त्तिकेन टिलोपः । अपीपटत् । णौचङीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् । अपपटत् ॥ आख्यानात्कृतस्तदाचष्ट इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥ * ॥ आख्यानात्कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्यस्मिन्नर्थे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीत्यर्थः । कंसवधमाचष्टे कंसं घातयति । बलिबन्धमाचष्टे बलिं बन्धयति । राजागमनमाचष्टे । राजानमागमयति । नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता ततश्चाट्द्वित्वयोर्दोषः । किञ्च कुत्वतत्वे न स्याताम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । सत्यम् । प्रकृतिवच्चेति चकारो भिन्नक्रमः । कारकञ्च चात्कार्यञ्च । हेतुमण्णिच प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयाद्यन्तं यादृशञ्च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः । कंसमजीघतत् । आख्यानशब्दाच्च प्रतिषेधो वक्तव्यः ॥ * ॥ आख्यानमाचष्टे इति वाक्यमेव ॥ दृश्यर्थायाञ्च प्रवृत्तौ णिज्वक्तव्यः ॥ कृदन्तात्तदाचष्टे इत्येतस्मिन्नर्थे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । दृश्यर्थेति इक् कृष्यादिभ्य इति दृशिः साधुः । मृगरमणमाचष्टे मृगान् रमयति । यदाऽरण्यस्थो रममाणान् मृगान् प्रतिपद्य व्याचष्टे एतस्मिन्नवकाशे एवंविधा मृगा रमन्त इति तदा प्रतिपाद्यदर्शनार्था प्रवृत्तिर्भवति । दृश्यर्थायामिति किम् । यदा हि ग्रामे मृगरमणमाचष्टे तदा मृगाणामसम्भवाद्दर्शनार्थप्रवृत्त्यभावान्मृगरमण-

माचष्ट इत्येव यथा स्यात् । एतच्च मृगरमणादिविषयमेव । राजागमनादिषु तु दृश्यर्थप्रवृत्यभावेऽपि णिच् भवति ॥ आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥ * ॥ कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । कालात्यन्तसंयोगे गम्यमाने इत्यर्थः । आरात्रिविवासमाचष्टे रात्रिं विवासयति । यावद्रात्रेर्विवासो ऽतिक्रमणं तावत्कथाः कथयतीत्यर्थः । रात्रिरूपकालेनात्यन्तसंयोगः । कथाश्चाख्याने कर्म । आरात्रिविवासशब्देन तावत्पर्यन्तकथाः लक्ष्यन्ते । वसेरकर्मकतया गतिबुद्धीति रात्रेः कर्मत्वं हेतुमण्णिचि । तद्वद्रात्रिं विवासयतीत्यत्रापि ॥ चित्रीकरणे प्राप्नावर्थे णिज्वक्तव्यः ॥ * ॥ कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सम्भावयते सूर्यमुद्गमयति । सम्भावयते इति भूप्राप्नावात्मनेपदीत्यस्य रूपम् । प्राप्नोतीत्यर्थः ॥ नक्षत्रयोगे ज्ञि ॥ * ॥ नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज्वक्तव्यः कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । पुष्ययोगं जानाति पुष्येण योजयति । मघाभिर्योजयति ॥

## कण्ड्वादिभ्यो यक् । ३ । १ । २७ ॥

वेति निवृत्तम् । एभ्यो नित्यं यक् स्यात्स्वार्थे ॥ धातुभ्यः किम् । प्रातिपदिकेभ्यो माभूत् । द्विधा हि कण्ड्वादयो धातवः प्रातिपदिकानि च । कण्डूञ् गात्रविघर्षणे । कण्डूयति । कण्डूयते । मन्तु अपराधे । रोष इत्येके । मन्तूयति । चान्द्रस्तु ञितमाह । मन्तूयते । वल्गु पूजामाधुर्ययोः । वल्गूयति । असु उपतापे । असु असुञ् इत्येके । अस्यति । असूयति । असूयते । लेट् लोट् धौर्त्ये पूर्वभागे स्वप्ने च ।

दीप्ताविस्त्येके । लेट्यति । लोट्यति । लेटिता । लोटिता । लेला दीप्तौ । इरस् इरज् इरज् ईर्ष्यायाम् । इरस्यति । इरज्यति । हलिचेति दीर्घः । ईर्य्यते । उषस् प्रभातीभावे । वेद धौर्त्ये स्वप्ने च । मेधा आशुग्रहणे । मेधायति । कुषुभ क्षेपे । कुषुभ्यति । मागध परिवेष्टने । नीचदास्ये इत्यन्ये । तन्तस् पम्पस् दुःखे । सुख दुःख तत्क्रियायाम् । सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । सपर पूजायाम् । अरर आराकर्मणि । भिषज चिकित्सायाम् । भिष्णज् उपसेवायाम् । इषुध शरधारणे । चरण वरण गतौ । चुरण चौर्ये । तुरण त्वरायाम् । भुरण धारणपोषणयोः । गद्गद वाक्स्खलने । एला केला खेला विलासे । इलेत्यन्ये । लेखा स्खलने च । अदन्तोऽयमित्यन्ये । लेख्यति । लिट् अल्पकुत्सनयोः । लिट्यति । लाट जीवने । हृणीङ् रोषणे लज्जायाञ्च । महीङ् पूजायाम् । महीयते । पूजां लभत इत्यर्थः । रेखा श्लाघासादनयोः । द्रवस् परितापचारणयोः । तिरस् अन्तर्द्धौ । अगद नीरोगत्वे । उरस् बलार्थः । उरस्यति । बलवान् भवतीत्यर्थः । तरण गतौ । पयस् प्रसृतौ । सम्भूयस् प्रभूतभावे । अवर संवर सम्भरणे । आकृतिगणोऽयम् । इति कण्ड्वादयः ।

## गुपूधूपविच्छिपणिपनिभ्य आयः । ३ । १ । २८ ॥

गुपू रक्षणे । धूप सन्तापे । विच्छ गतौ । पण व्यवहारे स्तुतौ च । पन च । स्तुतावित्येव सम्बध्यते पृथङ्निर्देशसामर्थ्यात् । एतावनुदात्तेतौ । एभ्य आयप्रत्ययः स्यात्स्वार्थे ॥ गोपायति । धूपायति । विच्छायति । पणायति । पनायति । स्तुतिमात्रार्थकपनिसाहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः । व्यवहारे तु पणते । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् ॥

## ऋतेरीयङ्। ३। १। २६॥

ऋतिः सौत्रस्तस्मादीयङ् स्यात्स्वार्थे॥ जुगुप्सायामयं धातुरिति बहवः। कृपायाम्ब्रित्येके। ऋतीयते॥

## कमेर्णिङ्। ३। १। ३०॥

स्वार्थे॥ कामयते॥

## आयादय आर्द्धधातुके वा। ३। १। ३१॥

आर्द्धधातुकविवक्षायामायादयो वा स्युः॥ जुगोप। गोपायाञ्चकार। गोप्ता। गोपिता। गोपायिता। ऋतीयाञ्चक्रे। आनर्त। ऋतीयिता। अर्तिता। कामयाञ्चक्रे। चकमे। कामयिता। कमिता। आर्द्धधातुकविवक्षायामित्युक्ते पूर्वमायादिषु कृतेषु पश्चाद्यथायथमार्धधातुकप्रत्यया भवन्ति। गुप्ति'। गोपाया॥

## सनाद्यन्ता धातवः। ३। १। ३२॥

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः॥ धातुत्वाल्लडादयः। तथाचैवोदाहृतम्॥

## स्यतासी लृलुटोः। ३। १। ३३॥

लृ इति लृङ्लृटोर्ग्रहणम्। धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः॥ शबाद्यपवादः। करिष्यति। अकरिष्यत्। श्वः कर्ता॥

## सिब्बहुलं लेटि। ३। १। ३४॥

सिब्बहुलं णिद्वक्तव्यः॥ * ॥ वृद्धिः। प्रण आयूंषि तारिषत्। सुपेशसस्करति जोषिषद्धि। आ साविषदर्शसानाय। न च भवति। पताति दिद्युत्। प्रियः सूर्ये प्रियो अग्ना भवाति॥

**कास्प्रत्ययादाममन्त्रे लिटि । ३ । १ । ३५ ॥**

कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि न तु मन्त्रे ॥ आमो मकारस्य नेत्वम् । आस्कासोराम्विधानाज्ज्ञापकात् । कासाञ्चक्रे । लोलूयाञ्चक्रे । पोपूयाञ्चक्रे । अमन्त्रे किम् । कृष्णो नोनाव ॥ कास्यनेकाज्ग्रहणं कर्तव्यम् ॥ * ॥ सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः । चुलुंपाञ्चकार । चकासाञ्चकार । दरिद्राञ्चकार । आत औ णल इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । अत एव ज्ञापकादाम् नेत्येके । ददरिद्रौ । ददरिद्रतुरित्यादि । यत्तु णलि ददरिद्रेति तन्निर्मूलमेव ॥

**इजादेश्च गुरुमतोऽनृच्छः । ३ । १ । ३६ ॥**

इजादिर्यो धातुर्गुरुमान् ऋच्छत्यन्यस्तत आम्स्याल्लिटि ॥ ईहाञ्चक्रे । ऊहाञ्चक्रे । इजादेः किम् । ततक्ष । ररक्ष । गुरुमतः किम् । इयज । उवप । इह तु सन्निपातपरिभाषया न । इयेष । उवोष । अनृच्छः किम् । आनर्च्छ । आनर्च्छतुः । ऊर्णोतेर्नुवद्भावादाम्नेत्युक्तम् । ऊर्णुनाव ॥

**दयायासश्च । ३ । १ । ३७ ॥**

दय अय आस एभ्य आम् स्याल्लिटि ॥ दयाञ्चक्रे । अयाञ्चक्रे । आसाञ्चक्रे ॥

**उषविदजागृभ्योऽन्यतरस्याम् । ३ । १ । ३८ ॥**

एभ्यो लिट्याम् वा स्यात् ॥ ओषाञ्चकार । उवोष । विदेत्यकारान्तनिपातनान्न लघुपधगुणः । विदाञ्चकार । विवेद । जागराञ्चकार । जजागार ॥

भीह्रीभृहुवां श्लुवच्च। ३। १। ३९ ॥

एभ्यो लिट्याम् वा स्यादामि श्लाविव कार्यं च ॥ बिभयाञ्चकार। बिभाय। जिह्रयाञ्चकार। जिह्राय। श्लुवद्भावाद्द्वित्वेत्वे। बिभरामास। बभार। जुहवाञ्चकार। जुहाव ॥

कृञ् चानुप्रयुज्यते लिटि। ३। १। ४० ॥

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते ॥ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्येति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते। तेन कृभ्वस्तियोग इत्यतः कृञो द्वितीयतृतीयेति ञकारेण प्रत्याहाराश्रयणात् कृभ्वस्तिलाभः। तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः। सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते। पाचयाञ्चकार। पाचयाम्बभूव। पाचयामास। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न। अन्यथा हि कृस् चानुप्रयुज्यते इति कृभ्विति वा ब्रूयात् ॥

विदाङ्कुर्वन्त्वित्यन्यतरस्याम्। ३। १। ४१ ॥

वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते ॥ पुरुषवचने न विवक्षिते। इति शब्दात्। विदाङ्करोतु। विकुरुताम्। विदाङ्कुर्वन्तु। विदाङ्कुरु। इत्यादि। पक्षे वेत्तु इत्यादि ॥

अभ्युत्सादयाम्प्रजनयाञ्चिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि। ३। १। ४२ ॥

आद्येषु चतुर्षु लुङि आम् अक इत्यनुप्रयोगश्च। अभ्युत्सादयामकः। अभ्युदसीषददिति लोके। प्रजनयामकः। प्राजीजनन्नित्यर्थः। चिकयामक। अचेषिदित्यर्थे चिनोतेराम् द्विर्वचन

कृत्वश्च । रमयामकः । अरीरमत् । पावयांक्रियात् । पाव्यात्क्रिति लोके । विदामक्रन् । अवेदिषुः ॥

## च्लि लुङि । ३ । १ । ४३ ॥

शबाद्यपवादः ॥

## च्लेः सिच् । ३ । १ । ४४ ॥

इचावितौ । अकार्षीत् । अहार्षीत् ॥ स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वक्तव्यः ॥ * ॥ त्रिभ्यः क्से प्राप्ते द्वाभ्यां पुषाद्यङि प्राप्ते सिज्विधीयते । अस्पृक्षत् । अस्प्राक्षीत् । अस्पार्क्षीत् । अमृक्षत् । अम्राक्षीत् । अमार्क्षीत् । अकृक्षत् । अक्राक्षीत् । अकार्क्षीत् । अतृपत् । अत्राप्सीत् । अतार्प्सीत् । अतर्पीत् । अदृपत् । अद्राप्सीत् । अदार्प्सीत् । अदर्पीत् ॥

## शल इगुपधादनिटः क्सः । ३ । १ । ४५ ॥

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् ॥ अधुक्षत् । अलिक्षत् । शलः किम् । अभैत्सीत् । इगुपधात्किम् । अधाक्षीत् । अनिटः किम् । अकोषीत् ॥

## श्लिषः । ३ । १ । ४६ ॥

अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादो न तु चिणः । पुरस्तादपवादन्यायात् ॥

## आलिङ्गने । ३ । १ । ४६ ॥

श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र ॥ योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियमः । अश्लिक्षत्कन्यां देवदत्तः । आलिङ्गन एवेति किम् । समश्लिषज्जतु काष्ठम् । अङ् । प्रत्यासत्ता-

विह श्लिषिः । कर्मणि अनालिङ्गने सिजेव न तु क्सः । एकवचने चिण् । अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् ॥

## न दृशः । ३ । १ । ४७ ॥

दृशश्च्लेः क्सो न ॥ अद्राक्षीत् । अदर्शत् ॥

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् । ३ । १ । ४८ ॥

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे ॥ अचीकरत् । अजीहरत् । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । लघूपधगुणादन्तरङ्गत्वादियङुवङौ । कर्तरि किम् । अकारयिषाता कटो देवदत्तेन यज्ञदत्तेन ॥ णिङभावपक्षे कमेश्च्लेश्चङ् वक्तव्यः ॥ * ॥ अचकमत । णेरभावान्न दीर्घसन्वद्भावौ । णिङ्पक्षे त्वचीकमत ॥

## विभाषा धेट्श्व्योः । ३ । १ । ४९ ॥

आभ्यां च्लेश्चङ् वा स्यात्कर्तृवाचिनि लुङि परे ॥ अदधत् । सिच्पक्षे विभाषा घ्राधेडिति वा लुक् । अधात् । अधासीत् । अशिश्वियत् । अङ्च विकल्पयिष्यते । अश्वत् । अश्वयीत् । कर्तरि किम् । अधायिषाता गावौ वत्सेन ॥

## गुपेश्छन्दसि । ३ । १ । ५० ॥

च्लेश्चङ् वा ॥ गृहानजूगुपतं युवम् । अगौप्तम् । अगोपिष्टम् अगोपायिष्टमिति वार्थे. ॥

## नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः । ३ । १ । ५१ ॥

च्लेश्चङ् न छन्दसि । मा त्वायतो जरितुः काममूनयीः । मा त्वाग्निर्ध्वनयीत् । काममैलयीत् । काममार्दयीत् । औनिनः । अदिध्वनत् । ऐलिलत् । आर्दिददिति भाषायाम् ॥

**अस्यतिवक्तिख्यातिभ्यो ऽङ् । ३ । १ । ५२ ॥**

एभ्यश्च्लेरङ् कर्तृवाचिनि लुङि परे ॥ अस्यतेः पुषादित्वादङि सिद्धे पुनर्वचनं तङर्थम् । तङ् तूपसर्गादस्यत्यूह्योरित्यनेन । पर्यास्थत । अवोचत् । अवोचत । अख्यत् । अख्यत । कर्तरि किम् । पर्यासिषाता गावौ वत्सेन ॥

**लिपिसिचिह्वश्च । ३ । १ । ५३ ॥**

एभ्यश्च्लेरङ् स्यात् ॥ योगविभाग उत्तरार्थः ॥

**आत्मनेपदेष्वन्यतरस्याम् । ३ । १ । ५४ ॥**

अलिपत् । अलिपत । अलिप्त । असिचत् । असिचत । असिक्त । अह्वत् । अह्वत । अह्वास्त ॥

**पुषादिद्युताद्लृदितः परस्मैपदेषु । ३ । १ । ५५ ॥**

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु ॥ अपुषत् । अशुषत् । अद्युतत् । अश्वितत् । अगमत् । अशकत् । परस्मैपदेषु किम् । अद्योतिष्ट ॥

**सर्तिशास्त्यर्तिभ्यश्च । ३ । १ । ५६ ॥**

एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि ॥ इह लुग्विकरणेन शासिना साहचर्यात्सर्त्यर्ती जौहोत्यादिकावेव गृह्येते ॥ तेन भ्वाद्योरङ् न । असरत् । अशिषत् । आरत् । तङ्यपि भवति । समारत । अर्तिसृदृशिभ्यश्चेति वक्तव्यमिति तङ् ॥

**इरितो वा । ३ । १ । ५७ ॥**

इरितो धातोश्च्लेरङ् वा स्यात् परस्मैपदे परे ॥ अभिदत् । अभैत्सीत् । अस्कदत् । अस्कान्त्सीत् । परस्मैपदेषु किम् । अभित्त ॥

**जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।३।१।५८॥**

एभ्यश्च्लेरङ् वा स्यात् ॥ अजरत् । अजारीत् । स्तम्भुः सौत्र. । अस्तभत् । अस्तम्भीत् । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । अग्रुचत् । अग्रोचीत् । अग्लुचत् । अग्लोचीत् । अग्लुचत् । अग्लुञ्चीत् । अश्वत् । अश्वयीत् । अशिश्वियत् । ग्लुचुग्लुञ्च्वोरेकतरोपादानेऽपि रूपत्रयं सिध्यतीत्यन्यतरच्छक्यमकर्तुम् । अर्थभेदाद्द्वयोरुपादानन्तु न । धातूनामनेकार्थत्वादिति कैयट. ॥

**कृमृदृरुहिभ्यश्छन्दसि । ३ । १ । ५९ ॥**

च्लेरङ् वा ॥ इदं तेभ्यो करं नमः । अमरत । अदरत् । यत्सानोः सानुमारुहत् ॥

**चिण् ते पदः । ३ । १ । ६० ॥**

पदश्च्लेश्चिण् स्यात्तशब्दे परे ॥ अपादि । ते किम् । अपत्साताम् । अपत्सत ।

**दीपजनबुधपूरितायिप्यायिभ्यो ऽन्यतरस्याम् । ३ । १ । ६१ ॥**

एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे ॥ अदीपि । अदीपिष्ट । अजनि । अजनिष्ट । अबोधि । अबुद्ध । पूर्वोत्तरसाहचर्येण दैवादिकस्यैव ग्रहणात् भ्वादेर्न । अबुधत् । अबोधीत् । इरित्वादङ् वा । अपूरि । अपूरिष्ट । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट ॥

**अचः कर्मकर्तरि । ३ । १ । ६२ ॥**

अजन्तात् च्लेश्चिण् वा स्यात् कर्मकर्तरि तशब्दे परे ॥ प्राप्तविभाषेऽयम् । अकारि घटः स्वयमेव । अकृत घटः स्वयमेव ।

अलावि केदारः स्वयमेव । अलाविष्ट केदारः स्वयमेव । अथः किम् । अभेद काष्ठ स्वयमेव । कर्मकर्तरि किम् । अकारि कटो देवदत्तेन ॥

## दुहश्च । ३ । १ । ६३ ॥

अप्राप्तविभाषेयम् । न दुहस्नुनमामिति निषेधात् । अदोहि गौः स्वयमेव । पक्षे क्सः । लुग्वेति पक्षे लुक् । अदुग्ध । अधुक्षत । कर्मकर्तरीत्येव । अदोहि गौर्गोपालेन ॥

## न रुधः । ३ । १ । ६४ ॥

अस्मात् च्लेश्चिरान । अवारुद्ध गौः स्वयमेव । कर्मकर्तरीत्येव । अवारोधि गौर्गोपेन ।

## तपोऽनुतापे च । ३ । १ । ६५ ॥

तपश्च्लेश्चिण्न स्यात्कर्मकर्तर्यनुतापे च ॥ अनुतापः पश्चात्तापः । तस्य ग्रहणमकर्मकार्थम् । तत्र हि भावकर्मणोरपि प्रतिषेधो भवति । अतप्त तपस्तापसः । तपस्तपः कर्मकस्यैवेति कर्मवद्भावः । अनुतापे । अन्वतप्त पापेन । पाप कर्तृ तेनाभ्याहत इत्यर्थः । कर्मणि लुङ् । यद्वा पापेन पुंसा कर्त्रा अशोचीत्यर्थः ॥

## चिण् भावकर्मणोः । ३ । १ । ६६ ॥

च्लेश्चिण् स्याद् भावकर्मवाचिनि तशब्दे परे ॥ अशायि भवता । अकारि कटो भवता । अहारि भारो देवदत्तेन ॥

## सार्वधातुके यक् । ३ । १ । ६७ ॥

धातोर्यक् प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके परे ॥ भावो भावना उत्पादना क्रिया सा च धातुत्वेन सकलधातुवाच्या

भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः । तिङ्वाच्यभावनाया असत्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किन्त्वेकवचनमेव । तस्यौत्सर्गिकत्वेन संख्यानपेक्षत्वात् । अनभिहिते कर्तरि तृतीया । त्वया मया अन्यैश्च भूयते । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये ॥

## कर्तरि शप् । ३ । १ । ६८ ॥

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् ॥ शपाविती । भवति । पचति ॥

## दिवादिभ्यः श्यन् । ३ । १ । ६९ ॥

शपोऽपवादः ॥ दीव्यति । सीव्यति ॥

## वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ३ । १ । ७० ॥

एभ्यः श्यन् वा स्यात्कर्त्रर्थे सार्वधातुके परे ॥ भ्राश्यते । भ्राशते । भ्लाश्यते । भ्लाशते । द्वावपीमौ तालव्यान्तौ । भ्रम्यति । दैवादिकस्य शमामष्टानामिति दीर्घे भ्राम्यति । भ्रमति । क्राम्यति । क्रामति । क्लाम्यति । क्लामति । त्रस्यति । त्रसति । त्रुट्यति । त्रुटति । लष्यति । लषति ॥

## यसो ऽनुपसर्गात् । ३ । १ । ७१ ॥

## संयसश्च । ३ । १ । ७२ ॥

श्यन्वा स्यात् ॥ यस्यति । यसति । संयस्यति । संयसति । अनुपसर्गात्किम् । प्रयस्यति ॥

## स्वादिभ्यः श्नुः । ३ । १ । ७३ ॥

शपोऽपवादः । सुनोति । सिनोति ॥

**श्रुवः शृ च । ३ । १ । ७४ ॥**

श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च ॥ शपोऽपवादः । शृणोति । शृणुतः । शृण्वन्ति ॥

**अक्षो ऽन्यतरस्याम् । ३ । १ । ७५ ॥**

अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे ॥ पक्षे-शप् । अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति । अक्षति । अक्षतः । अक्षन्ति ॥

**तनूकरणे तक्षः । ३ । १ । ७६ ॥**

श्नु स्याद्वा शब्विषये ॥ तक्ष्णोति तक्षति वा काष्ठम् । तनूकरणे किम् । वाग्भिः सन्तक्षति । भर्त्सयतीत्यर्थः ॥

**तुदादिभ्यः शः । ३ । १ । ७७ ॥**

शपोऽपवादः । तुदति । नुदति ॥

**रुधादिभ्यः श्नम् । ३ । १ । ७८ ॥**

शपोऽपवादः ॥ मित्वादन्त्यादचः परः । नित्यत्वाद् गुणं बाधते । रुणद्धि । भिनत्ति । शकारः श्नान्नलोप इति विशेषणार्थः । अन्यथा नान्नलोप इत्युच्यमाने यज्ञानां यत्नानामित्यत्रापि प्रसज्येत ।

**तनादिकृञ्भ्य उः । ३ । १ । ७९ ॥**

तनादेः कृञश्च उप्रत्ययः स्यात् ॥ शपोऽपवादः । तनोति । सनोति । करोति । तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम् । तेन न विश्वसेदविश्वस्तमित्यादि सिद्धम् ॥

**धिन्विकृण्व्योर च । ३ । १ । ८० ॥**

अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये ॥ अल्लोपस्य स्थानिवद्भावाल्लघूपधगुणो न। धिनोति। कृणोति ॥

**क्र्यादिभ्यः श्ना। ३। १। ८१ ॥**

शपोऽपवादः। क्रीणाति। प्रीणाति ॥

**स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च। ३।१।८२॥**

चात् श्ना ॥ स्तन्भ्वादयश्चत्वारः सौत्राः। सर्वे रोधनार्था इत्येके। माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ। द्वितीयो निष्कोषणार्थः। चतुर्थो धारणार्थ इत्याह। सर्वे परस्मैपदिनः। स्कुञ् आप्रवणे इति क्र्यादि। नलोपः। विष्टभ्नोति। विष्टभ्नाति। स्तुभ्नोति। स्तुभ्नाति। विष्कभ्नोति। विष्कभ्नाति। स्कुभ्नोति। स्कुभ्नाति। स्कुनोति। स्कुनाति ॥

**हलः श्नः शानज्झौ। ३। १। ८३ ॥**

हलः परस्य श्नः शानजादेशः स्याद्धौ परे ॥ बधान। मुषाण। स्तभान। स्तुभान। स्कभान। स्कुभान। पक्षे स्तभ्नुही-त्यादि। हलः किम्। क्रीणीहि। श्नः किम्। आदेशप्रत्ययो यथा स्यात्। प्रत्ययान्तर सर्वविषय मा विज्ञायीति। हौ किम्। मुष्णाति ॥

**छन्दसि शायजपि। ३। १। ८४ ॥**

गृभाय जिह्वया मधु। अपिशब्दाच्छानजपि। बधान देव सवितः ॥

**व्यत्ययो बहुलम्। ३। १। ८५ ॥**

विकरणानां व्यत्ययः स्यात् छन्दसि ॥ आण्डा शुष्णस्य भेदति। भिनत्तीति प्राप्ते। जरसा मरते पतिः। म्रियत इति

प्राप्ते । इन्द्रो वस्तेन नेषतु । नयतेर्लोट् । शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम् । तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ् । उ. सिप् शप् चेति त्रयो विकरणाः । बहुलग्रहणं सर्वोपाधिव्यभिचारार्थम् ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥

धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । चषालं ये विश्वपूपाय तक्षति । तक्षन्तीति प्राप्ते । उपग्रहः परस्मैपदात्मनेपदे । ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते । मधोस्तृप्ता इवासते । मधुन इति प्राप्ते । नरः पुरुषः । अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । कालः कालवाची प्रत्ययः । श्वोऽग्नीनाधास्यमानेन । लुटो विषये लृट् । तमसो गा अदुक्षत् । अधुक्षदिति प्राप्ते । मित्र वयञ्च सूरयः । मित्रा वयमिति प्राप्ते । स्वरव्यत्ययस्तु परादिश्छन्दसि बहुलमित्यत्र वक्ष्यते । कर्तृशब्दः कारकमात्रपरः । तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः । अन्नादाय । अणिवषये अच् । चतुर्थ्यन्तमेतत् । अवग्रहे विशेषः । यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण प्रत्याहारः । तेषां व्यत्ययो भेदतीत्यादिरुक्त एव ॥

## लिङ्याशिष्यङ् । ३ । १ । ८६ ॥

आशीर्लिङि परे धातोरङ् स्यात् छन्दसि ॥ वच उम् । मन्त्रं वोचेमाग्नये ॥ दृशेरग्वक्तव्यः ॥ * ॥ पितरञ्च दृशेयं मातरञ्च । अङि तु ऋदृशोऽङीति गुणः स्यात् ॥

## कर्मवत्कर्मणा तुल्यक्रियः । ३ । १ । ८७ ॥

कर्तरि शबित्यत·कर्तृग्रहणमनुवर्त्य प्रथमया विपरिणम्यते। कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् ॥ यदा सौकर्यातिशय द्योतयितु कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसञ्ज्ञा लभन्ते। स्वव्यापारे स्वतन्त्रत्वात्। तेन पूर्वं करणत्वादिसत्त्वेऽपि सम्प्रति कर्तृत्वात्कर्तरि लकारः। साध्वसिश्छिनत्ति। काष्ठानि पचन्ति। स्थाली पचति। कर्मणस्तु कर्तृत्वविवक्षाया प्राक्सकर्मका अपि प्रायेणाकर्मकाः। तेभ्यो भावे कर्तरि च लकारः। पच्यते ओदनेन। भिद्यते काष्ठेन। कर्तरि तु अनेन कर्मवद्भावः। कार्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्चिण्वदिटः स्युः। कर्तुरभिहितत्वात्प्रथमा। पच्यते ओदन। भिद्यते काष्ठम्। अपाचि। अभेदि। ननु भावे लकारे कर्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न। लकारवाच्य एव कर्ता कर्मवत्। लिङ्याशिष्यङिति द्विलकारकान्न इत्यनुवृत्तेः। भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः। अत एव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति किन्तु भावे एव। भेत्तव्य कुसूलेन। ननु पचिभिद्योः कर्मस्था क्रिया विक्लित्तिर्द्विधाभवन च सैवेदानीं कर्तृस्था न तु तत्तुल्या। सत्यम्। कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य व्यवहारः। कर्मणेति किम्। करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ माभूत्। किञ्च कर्तृस्थक्रियेभ्यो माभूत्। गच्छति ग्राम। आरोहति हस्ती। अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च। यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु तत्र कर्मस्था क्रिया नेतरत्र। न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते। करोतिरुत्पादनार्थः।

उत्पत्तिश्च कर्मस्था । तेन कारिष्यत घट इत्यादि । यत्नार्थत्वे तु नैतत्सिध्येत् । ज्ञानेच्छादिवत् यत्नस्य कर्तृस्थत्वात् । एतेनानुव्यवस्यमानेऽर्थे इति व्याख्यातम् । कर्तृस्थत्वेन यगभावात् । श्यनि कृते ओलोपे च रूपसिद्धे । ताच्छील्यादावय चानश् नत्वात्मनेपदम् ॥ सकर्मकाणा प्रतिषेधो वक्तव्य: ॥ * ॥ अन्योन्य स्पृशत: । अजा ग्रामं नयति ॥ दुहिपच्योर्बहुल सकर्मकयोरिति वाच्यम् ॥ * ॥ न दुहस्नुनमामिति यकि निषिद्धे शप्लुक् । गौ. पयो दुग्धे । उदुम्बर: फल पच्यते ॥ सृजियुज्यो: श्यस्तु ॥ * ॥ अनयो: सकर्मकयो: कर्ता बहुल कर्मवत् यगपवादश्च श्यन्वाच्य इत्यर्थ: ॥ सृजे: श्रद्धोपपन्ने कर्तर्येवेति वाच्यम् ॥ * ॥ सृज्यते स्रजं भक्त: । श्रद्धया निष्पादयतीत्यर्थ: । असर्जि । युज्यते ब्रह्मचारी योगम् ॥ करणेन तुल्यक्रिय: कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम् ॥ * ॥ परिवारयति कण्टकैर्वृक्षम् । परिवारयन्ते कण्टका वृक्षम् । णिश्रिग्रन्थीति यक. प्रतिषेधाच्छप् । बहुलग्रहणात्साध्वसिश्छिनत्तीत्यादौ न भवति ॥ भूषाकर्मकिरादिसना चान्यचात्मनेपदात् प्रतिषेध: ॥ * ॥ भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थ: । अलङ्कुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकीर्ष्ट । गिरते । अगीर्ष्ट । आद्रियते । आदृत । किरादिस्तुदाद्यन्तर्गण: । चिकीर्षते कट. । अचिकीर्षिष्ट । इच्छाया. कर्तृस्थत्वेऽपि करोतिक्रियापेक्षमिह कर्मस्थक्रियत्वम् ॥

## तपस्तप:कर्मकस्यैव । ३ । १ । ८८ ॥

कर्ता कर्मवत्स्यात् ॥ विध्यर्थमिदम् । एवकारस्तु व्यर्थ एवेति वृत्त्यनुसारिण' । तप्यते तपस्तापस' । अर्जयतीत्यर्थ । तपो

ऽनुतापे चेति चिरिग्निषेधात्सिच् । अतप्त । तपःकर्मकस्येति किम् । उत्तपति सुवर्णं सुवर्णकारः ॥

## न दुहस्नुनमां यक्चिणौ । ३ । १ । ८९ ॥

एषां कर्मकर्तरि यक्चिणौ न स्तः ॥ दुहेरनेन यक एव निषेधः । चिण् तु दुहश्चेत्यनेन पूर्वमेव विभाषितः । गौः पयो दुग्धे । अदोहि । अदुग्ध । अधुक्षत । प्रस्नुते । प्रास्नाविष्ट । नमते दण्डः । अनंस्त । अन्तर्भावितण्यर्थोऽत्र नमिः ॥ यक्चिणोः प्रतिषेधे हेतुमण्णिच्श्रिब्रूञामुपसंख्यानम् ॥ * ॥ कारयते । अचीकरत । उच्छ्रयते दण्डः । उदशिश्रियत । चिण्वदिट् तु स्यादेव । कारिष्यते । उच्छ्रायिष्यते । ब्रूते कथा । अवोचत । भारद्वाजीयाः पठन्ति ॥ णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसङ्ख्यानम् ॥ * ॥ पुच्छमुदस्यति । उत्पुच्छयते गौः । अन्तर्भावितण्यर्थतायां उत्पुच्छयते गाम् । पुनः कर्तृत्वविवक्षायां उत्पुच्छयते गौः । उदपुपुच्छत । यक्चिणोः प्रतिषेधाच्छप्चङौ । श्रन्थिग्रन्थ्योराधृषीयत्वाण्णिजभावपक्षे ग्रहणम् । ग्रन्थति ग्रन्थम् । श्रन्थति मेखला देवदत्तः । ग्रन्थते ग्रन्थः । अग्रन्थिष्ट । श्रन्थते । अश्रन्थिष्ट । क्रैयादिकयोस्तु श्रथ्नीते ग्रथ्नीते स्वयमेव । विकुर्वते सैन्धवाः । वल्गन्तीत्यर्थः । वेः शब्दकर्मणोऽकर्मकाच्चेति तङ् । अन्तर्भावितण्यर्थस्य पुनः प्रेरणात्यागे विकुर्वते सैन्धवाः । व्यकारिष्ट । व्यकारिषाताम् । व्यकारिषत । व्यकृत । व्यकृषाताम् । व्यकृषत ॥

## कुषिरजोः प्राचां श्यन् परस्मैपदञ्च । ३ । १ । ९० ॥

न यगित्यनुवर्तते । अनयोः कर्मकर्तरि न यक् किन्तु तस्मिन्नेव विषये श्यन् परस्मैपदञ्च ॥ आत्मनेपदापवादः । कुष्यति

कुष्यते पादः । रज्यति रज्यते वस्त्रम् । प्रसक्तिपूर्वको निषेधः । यत्र तु यको न प्रसक्तिस्तत्र न निषेधः । नापि श्यन् । नापि तत्सन्नियोगशिष्टं परस्मैपदम् । तेन लिङाशीर्लिङोः स्यादीनाञ्च विषये यगविषये नास्य सूत्रस्य प्रवृत्तिः । कोषीष्ट । रंक्षीष्ट ॥

## धातोः । ३ । १ । ९१ ॥

आतृतीयसमाप्तेरधिकारोऽयम् ।

## तत्रोपपदं सप्तमीस्थम् । ३ । १ । ९२ ॥

सप्तम्यन्तपदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात् ॥ वक्ष्यति कर्मण्यण् । कुम्भकारः । नगरकारः । उपपदप्रदेशा उपपदमतिङित्येवमादयः ॥

## कृदतिङ् । ३ । १ । ९३ ॥

सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥ कर्तव्यम् । करणीयम् । अतिङ् किम् । चीयात् । कृत्प्रदेशाः कृत्तद्धितसमासाश्चेत्येवमादयः ॥

## वा ऽसरूपो ऽस्त्रियाम् । ३ । १ । ९४ ॥

परिभाषेयम् । अस्मिन्धात्वधिकारे ऽसरूपो ऽपवादः प्रत्यय उत्सर्गस्य वा बाधकः स्यात् स्त्र्यधिकारोक्तं विना ॥ ण्वुल्तृचावुत्सर्गौ । इगुपधज्ञाप्रीकिरः क इत्यपवादस्तद्विषये ण्वुल्तृचावपि भवतः । विक्षेपकः । विक्षेप्ता । विक्षिपः । असरूपः किम् । कर्मण्यणुत्सर्गः । आतो ऽनुपसर्गे क इत्यपवादः । स बाधक एव भवति । गोदः । अस्त्रियां किम् । स्त्रियां क्तिन्नित्युत्सर्गः । अप्रत्ययादित्यप-

वादः । स बाधक एव भवति । चिकीर्षा । जिहीर्षा । अधिकारग्रहणं किम् । व्यावक्रुष्टिः । व्यावक्रोशी । कर्मव्यतिहारे णच् स्त्रियामिति णचा क्तिनो बाधा माभूत् ॥

## कृत्याः । ३ । १ । ९५ ॥

अधिकारोऽयं ण्वुल' प्राक् ॥

## तव्यत्तव्यानीयरः । ३ । १ । ९६ ॥

धातोरेते प्रत्ययाः स्यु ॥ तकाररेफौ स्वरार्थौ । एधितव्यं एधनीयं त्वया । भावे औत्सर्गिकमेकवचन क्लीबत्वञ्च । चेतव्यश्चयनीयो वा धर्मस्त्वया ॥ वसेस्तव्यत्कर्तरि णिच्च ॥ * ॥ वसतीति वास्तव्य. ॥ केलिमर उपसङ्ख्यानम् ॥ * ॥ पचेलिमा माषाः । पक्तव्याः । भिदेलिमाः सरलाः । भेत्तव्याः । कर्मणि प्रत्ययः । वृत्तिकास्तु कर्मकर्तरि चायमिष्यते इत्याह । तद्भाष्यविरुद्धम् ॥

## अचो यत् । ३ । १ । ९७ ॥

अजन्ताद्धातोर्यत्स्यात् ॥ चेयम् । जेयम् । अज्ग्रहणं शक्यमकर्तुं यावता हलन्ताण्ण्यत वक्ष्यति । योगविभागोऽप्यवम् । तव्यदादिष्वेव यतोऽपि सुपठत्वात् ॥ तकिशसिचतियतिजनिभ्यो यद्वाच्यः ॥ * ॥ तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । जनेर्यद्विधिः स्वरार्थः । ण्यतापि रूपसिद्धेः । न च वृद्धिप्रसङ्गः । जनिवध्योश्चेति निषेधात् ॥ हनो वा यद्वधश्च वक्तव्य. ॥ * ॥ वध्यः । पक्षे वक्ष्यमाणो ण्यत् । घात्य ॥

## पोरदुपधात् । ३ । १ । ९८ ॥

पवर्गान्ताददुपधाद्यत्स्यात् ॥ ण्यतोऽपवादः । शप्यम् । लभ्यम् । नानुबन्धकृतमसारूप्यम् । अतो न ण्यत् । तव्यदादयस्तु

स्युरेव । पो: किम् । पाक्यम् । अदुपधात्किम् । कोप्यम् । तपरत्वान्नेह । आप्यम् ॥

**शकिसहोश्च । ३ । १ । ९९ ॥**

शक्यम् । सह्यम् ।

**गदमदचरयमश्चानुपसर्गे । ३ । १ । १०० ॥**

गद्यम् । मद्यम् । चर्यम् । यम्यम् अनुपसर्गे किम् । प्रगाद्यम् । प्रमाद्यम् । यमेर्नियमार्थम् । सोपसर्गान्माभूदिति । प्रयाम्यम् । निपूर्वात्स्यादेव । तेन न तत्र भवेद्विनियम्यमिति वार्तिकप्रयोगात् । एतेन अनियम्यस्य नायुक्तिः । "त्वया नियम्या ननु दिव्यचक्षुषा" इत्यादि व्याख्यातम् । नियमे साधुरिति वा ॥ चरेराङि चागुरौ ॥ * ॥ आचर्यो देशः । मन्तव्य इत्यर्थः । अगुरौ किम् । आचार्यो गुरुः ॥

**अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु । ३ । १ । १०१ ॥**

वदेर्नञि उपपदे वदः सुपीति यत्क्यपोः प्राप्तयोर्यदेव सोऽपि गर्हायामेवेत्युभयार्थं निपातनम् । अवद्यं पापम् । गर्ह्येति किम् । अनुद्यं गुरुनाम । तद्धि न गर्ह्यं वचनानर्हं च ॥

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।

श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोरितिस्मृतेः ॥

पण्या गौः । व्यवहर्तव्येत्यर्थः । पण्यमन्यत् । स्तुत्यर्हमित्यर्थः । अनिरोधोऽप्रतिबन्धः । तस्मिन्विषये वृङो यत् । एतेन वर्या कन्या । वृत्याऽन्या ॥

## वह्यं करणम् । ३ । १ । १०२ ॥

वहन्त्यनेनेति वह्यं शकटम् । करणं किम् । वाह्यम् । वोढव्यम् ।

## अर्यः स्वामिवैश्ययोः । ३ । १ । १०३ ॥

ऋ गतौ अस्माद्यत् ॥ ण्यतोऽपवादः । अर्यः स्वामी वैश्यो वा ॥ यतो नाव इत्याद्युदात्तत्वे प्राप्ते स्वामिन्यन्तोदात्तत्वं वक्तव्यम् ॥ * ॥ अनयोः किम् । आर्यो ब्राह्मणः । प्राप्तव्य इत्यर्थः ॥

## उपसर्या काल्या प्रजने । ३ । १ । १०४ ॥

गर्भग्रहणे प्राप्तकाला चेदित्यर्थः । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । प्रजने काल्येति किम् । उपसार्या काशी । प्राप्तव्येत्यर्थः ॥

## अजर्यं सङ्गतम् । ३ । १ । १०५ ॥

नञ्पूर्वाज्जीर्यतेः कर्तरि यत्सङ्गतश्चेद्विशेष्यम् ॥ न जीर्यतीत्यजर्यम् । तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतमिति भट्टिः । मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धेत्यत्र सङ्गतमिति विशेष्यमध्याहार्यम् । सङ्गत किम् । अजरिता कम्बलः । भावे तु सङ्गतकर्तृकेऽपि ण्यदेव । अजार्यं सङ्गतेन ॥

## वदः सुपि क्यप् च । ३ । १ । १०६ ॥

उत्तरसूत्रादिह भावे इत्यपकृष्यते । वदेर्भावे क्यप् चाद्यत् अनुपसर्गे सुप्युपपदे ॥ ब्रह्मोद्यम् । ब्रह्मवद्यम् । ब्रह्म वेदस्तस्य वदनमित्यर्थः । कर्मणि प्रत्ययावित्येके । उपसर्गे तु ण्यदेव । अनुवाद्यम् । अपवाद्यम् । सुपि किम् । वाद्यम् ॥

भुवो भावे । ३ । १ । १०७ ॥

क्यप् स्यात् ॥ ब्रह्मणो भावो ब्रह्मभूयम् । सुपीत्येव । भव्यम् । अनुपसर्गे इत्येव । प्रभव्यम् ।

हनस्त च । ३ । १ । १०८ ॥

अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप्स्यात् तकारश्चान्तादेशः ॥ ब्रह्मणो हनन ब्रह्महत्या । स्त्रीत्व लोकात् । सुपि किम् । घातो वर्तते । यत्तु भावे न भवत्यनभिधानात् । अनुपसर्गे किम् । प्रघातः ॥

एतिस्तुशास्वृदृजुषः क्यप् । ३ । १ । १०९ ॥

एभ्य क्यप् स्यात् ॥ इत्य । स्तुत्यः । शिष्यः । वृ इति वृञो ग्रहण न वृङ । वृत्यः । वृङस्तु वार्या ऋत्विजः । आदृत्यः । जुष्यः । पुन क्यबुक्ति परस्यापि ण्यतो बाधनार्था । अवश्यस्तुत्यः । शंसिदुहिगुहिभ्यो वेति काशिका । शस्यम् । शंस्यम् । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम् । प्रशस्यस्य श्रः ईडवन्दवृशंसदुहां ण्यत इति सूत्रद्वयबलाच्छसेः सिद्धम् । इतरयोस्तु मूलं मृग्यम् । कथमुपेयमिति । ईङो दैवादिकाद्यत् ॥ आङ्पूर्वादञ्जेः सञ्ज्ञायामुपसङ्ख्यानम् ॥ * ॥ अञ्जू व्यक्तिम्रक्षणादिषु । बाहुलकात्करणे क्यप् । अनिदितामिति नलोपः । आज्यम् ॥

ऋदुपधाच्चाक्लृपिचृतेः । ३ । १ । ११० ॥

वृत् । वृत्यम् । वृध् । वृध्यम् । क्लृपिचृत्योस्तु कल्प्यम् । चर्त्यम् । तपरकरणं किम् । कॄत् । कीर्त्यम् । अनित्यण्यन्ताश्चुरादय इति णिजभावे ण्यत् । णिजन्तात्तु यदेव ॥

ई च खनः । ३ । १ । १११ ॥

चान्त्क्यप् ॥ आद्रुत्या । खेयम् । इ चेति ह्रस्वः सुपठ. ॥

### भृञो ऽसंज्ञायाम् । ३ । १ । ११२ ॥

भृत्याः कर्मकराः । भर्तव्या इत्यर्थः । क्रियाशब्दोऽयं न तु संज्ञा ॥ समश्च बहुलम् ॥ * ॥ सभृत्याः सभार्या. । असंज्ञायामेव विकल्पार्थमिदं वार्तिकम् । असंज्ञायां किम् । भार्या नाम क्षत्रियाः । अथ कथं भार्या वधूरिति । इह हि संज्ञायां समजेति क्यपा भाव्यम् । संज्ञापर्युदासस्तु पुंसि चरितार्थः. । सत्यम् । बिभर्तेर्भृ इति दीर्घान्तात्क्र्यादेर्वा ण्यत् । क्यप्तु भरतेरेव । तदनुबन्धकग्रहणे इति परिभाषया ॥

### मृजेर्विभाषा । ३ । १ । ११३ ॥

मृजेः क्यप् वा स्यात् पक्षे ण्यत् ॥ ऋदुपधत्वात्प्राप्तविभाषेयम् । मृज्य । मार्ग्य. ॥

### राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः । ३ । १ । ११४ ॥

एते सप्त क्यबन्ता निपात्यन्ते ॥ राज्ञा सोतव्यो ऽभिषवद्वारा निष्पादयितव्यः । यद्वा लतात्मकः सोमो राजा सूयते कण्ड्यते यत्रेति अधिकरणे क्यप् । निपातनाद्दीर्घ । राजसूयः । राजसूयम् । अर्द्धर्चादिः । सरत्याकाशे सूर्यः । कर्तरि क्यप् । निपातनादुत्वम् । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि लोकं प्रेरयति । क्यपो रुट् । मृषोपपदाद्वदेः कर्मणि नित्यं क्यप् । मृषोद्यम् । विशेष्यनिघ्नोऽयम् । उच्छ्रायसौन्दर्यगुणा मृषोद्याः । रोचते रुच्यः । गुपेरादेः कुत्वञ्च संज्ञायाम् । सुवर्णरजतभिन्नं धनं कुप्यम् । गोप्यमन्यत् । कृष्टे

स्वयमेव पच्यन्ते कृष्टपच्याः । कर्मकर्तरि । शुद्धे तु कर्मणि कृष्टपाक्याः । न व्यथते अव्यथ्यः ॥

## भिद्योद्ध्यौ नदे । ३ । १ । ११५ ॥

भिदेरुज्झेश्च क्यप् उज्झेर्धत्वञ्च ॥ भिनत्ति कूलं भिद्यः । उज्झत्युदकमुद्ध्यः । नदे किम् । भेत्ता । उज्झिता ॥

## पुष्यसिध्यौ नक्षत्रे ३ । १६ ॥

अधिकरणे क्यन्निपात्यते । पुष्यन्ति अस्मिन्नर्थाः पुष्यः । सिध्यन्त्यस्मिन्निति सिध्यः ॥

## विपूयविनीयजित्या मुञ्जकल्कहलिषु । ३ । १ । ११७ ॥

पूञ्नीञ्जिभ्यः क्यप् ॥ विपूयो मुञ्जः । रज्ज्वादिकरणाय सोधयितव्य इत्यर्थः । विनीयः कल्कः । पिष्ट औषधविशेष इत्यर्थः । पापमिति वा । जित्यो हलिः । बलेन कृष्टव्य इत्यर्थः । कृष्टसमीकरणार्थं स्थूलकाष्ठम् । अन्यत्तु विपव्य विनेयं जेयञ्च ॥

## प्रत्यपिभ्यां ग्रहेः । ३ । १ । ११८ ॥

छन्दसीति वक्तव्यम् ॥ * ॥ प्रतिगृह्यम् । अपिगृह्यम् । लोके तु प्रतिग्राह्यम् । अपिग्राह्यम् ॥

## पदास्वैरिवाह्यापक्ष्येषु च । ३ । १ । ११९ ॥

अवगृह्य प्रगृह्य पदम् । अस्वैरी परतन्त्रः । गृह्यकाः शुकाः । पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः । वाह्यायाम् । ग्रामगृह्या सेना । ग्रामबहिर्भूतेत्यर्थः । स्त्रीनिर्देशात्पुन्नपुंसकयोर्न । पक्षे भवः पक्ष्यः । दिगादित्वाद्यत् । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः ॥

## विभाषा कृवृषोः । ३ । १ । १२० ॥

क्यप्स्यात् ॥ करोतेर्ण्यति प्राप्ते वर्षतेर्ऋदुपधत्वान्नित्ये क्यपि प्राप्ते विकल्पोऽयम् । कृत्यम् । वृष्यम् । पक्षे कार्यं वर्ष्यम् ॥

## युग्यञ्च पत्रे । ३ । १ । १२१ ॥

पत्रं वाहनम् । युग्यो गौः । अत्र क्यप् कुत्वञ्च निपात्यते । योग्यमन्यत् ॥

## अमावस्यदन्यतरस्याम् । ३ । १ । १२२ ॥

अमोपपदाद्वसेरधिकरणे ण्यत् वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते ॥ अमा सह वसतोऽस्यां चन्द्रार्कावमावस्या । अमावास्या वा ॥

## छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि । ३ । १ । १२३ ॥

कृन्ततेर्निस्पूर्वात् क्यपि प्राप्ते ण्यत् । आद्यन्तयोर्विपर्यासः । निसः षत्वञ्च । निष्टर्क्यं चिन्वीत पशुकामः । दिवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घश्च । स्पर्द्धन्ते वा उ देवहूये । प्र उत् आभ्यां नयतेः क्यप् । प्रणीयः । उन्नीयः । उत्पूर्वाच्छिषे. क्यप् । उच्छिष्यः । मृङ् स्तृञ् ध्वृ एभ्यो यत् । मर्य. । स्तर्या । स्त्रियामेवायम् । ध्वर्यः । खनेर्यत्ण्यतौ । खन्यः । खान्यः । यजेर्यः । शुन्धध्वं दैव्याय कर्मणे देवयज्यायै । आङ्पूर्वात्पृच्छे क्यप् । आपृच्छ्य धरुणं वाज्यर्षति । सिव्यतेः क्यप् षत्वञ्च । प्रतिषीव्यः । ब्रह्मणि वदेर्ण्यत् । ब्रह्मवाद्यम् । लोके तु वदः सुपि क्यप् चेति क्यप्यतौ । भवतेः स्तौतेश्च ण्यत् । भाव्यः । स्ताव्यः । उपपूर्वा-

च्चिनोतेर्ण्यत्। आयादेशश्च पृडे उत्तरपदे। उपचाय्यपृडम्॥ हिरण्य इति वक्तव्यम्॥ * ॥ उपचेयपृडमेवान्यत्। मृड सुखने पृड चेत्यस्मादिगुपधलक्षणः कः॥

## ऋहलोर्ण्यत्। ३। १। १२४॥

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यात्॥ कार्यम्। हार्यम्। पाक्यम्। वाच्यम्। पाणौ सृजेर्ण्यद्वाच्यः॥ * ॥ ऋदुपधलक्षणस्य क्यपोऽपवादः। पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः॥ समवपूर्वाच्च॥ * ॥ समवसर्ग्या॥ ण्यत्प्रकरणे लपिदभिभ्याञ्चेति वक्तव्यम्॥ * ॥ लाप्यम्। दभिर्धातुष्वपठितोऽपि वार्तिकबलात्स्वीकार्यः। दाभ्यः॥

## ओरावश्यके। ३। १। १२५॥

उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यम्भावे द्योत्ये॥ लाव्यम्। पाव्यम्॥

## आसुयुवपिरपित्रपिचमश्च। ३। १। १२६॥

षुञ्। आसाव्यम्। यु मिश्रणे। याव्यम्। वाप्यम्। राप्यम्। त्राप्यम्। चाम्यम्।

## आनाय्योऽनित्ये। ३। १। १२७॥

आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते॥ दक्षिणाग्निविशेष एवेदम्। स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्वलनात्॥ आनेयोऽन्यः। घटादिर्वैश्यकुलादेरानीतो दक्षिणाग्निश्च॥

## प्रणाय्योऽसम्मतौ ३। १। १२८॥

सम्मतिः प्रीतिविषयीभवनं कर्मव्यापारः। तथा भोगेष्वादरो-

ऽपि सम्मतिः । प्रणाय्यश्चोरः । प्रीत्यनर्ह इत्यर्थः । प्रणाय्योऽन्तेवासी । विरक्त इत्यर्थः । प्रणेयोऽन्यः ॥

**पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु । ३ । १ । १२९ ॥**

मीयतेऽनेन पाय्य मानम् । ण्यत् धात्वादेः पत्वञ्च । आतो युगिति युक् । सम्यङ् नीयते होमार्थमग्निं प्रतीति सान्नाय्य हविर्विशेषः । ण्यदायादेशः समो दीर्घश्च निपात्यते । निचीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः । अधिकरणे ण्यत् । आय् धात्वादेः कत्वञ्च निपात्यते । धीयते ऽनया समिदिति धाय्या ऋक् ॥

**क्रतौ कुण्डपाय्यसञ्चाय्यौ । ३ । १ । १३० ॥**

कुण्डेन पीयतेऽस्मिन्सोमः कुण्डपाय्यः क्रतुः । सञ्चीयतेऽसौ सञ्चाय्यः क्रतुः ॥

**अग्नौ परिचाय्योपचाय्यसमूह्याः । ३ । १ । १३१ ॥**

अग्निरिह न ज्वलन । किन्तु तद्धारणार्थमिष्टकाचयने निर्मितं स्थलम् । तत्रैवैते साधवः । अन्यत्र तु परिचेयम् । उपचेयम् । संवाह्यम् ॥

**चित्याग्निचित्ये च । ३ । १ । १३२ ॥**

चीयतेऽसौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या ॥

**ण्वुल्तृचौ । ३ । १ । १३३ ॥**

धातोरेतौ स्तः । कारकः । कर्ता । हारकः । हर्ता । यङन्तात्ण्वुल् । अल्लोपस्य स्थानिवत्वान्न वृद्धिः । पापचकः । यङ्लुगन्तात्तु पापाचकः ॥

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । ३ । १ । १३४ ॥

नन्द्यादेर्ल्युः ग्रहादेर्णिनिः पचादेरच् स्यात् ॥ नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । मधुसूदनः । विशेषेण भीषयते इति बिभीषणः । लवणः । नन्द्यादिगणे निपातनाण्णत्वम् । ग्राही । स्थायी । मन्त्री । विशयी । वृद्ध्यभावो निपातनात् । विषयी । इस षत्वमपि । परिभावी । परिभवी । पाचिको वृद्ध्यभावो निपात्यते । पचादिराकृतिगणः । शिवशमरिष्टस्य करे कर्मणि घटो ठच् इति सूत्रयोः करोतेर्घटेश्च अच्प्रयोगात् । अच्प्रत्यये परे यङ्लुग्विधानाच्च । केषाञ्चित्पाठस्तु अनुबन्धासञ्जनार्थः । केषाञ्चिद्बाधकबाधनार्थः । पचतीति पचः । नदट् चोरट् देवट् चरट् इत्यादयष्टितः । नदी । चोरी । देवी । चरी । दीव्यतेरिगुपधलक्षणः क. प्राप्त. । जारभरा । श्वपचा । अनयोः कर्मण्यण् प्राप्तः । न्यङ्क्वादिषु पाठात् श्वपाकोऽपि । यङोऽचि चेति लुक् । न धातुलोप इति गुणवृद्धिनिषेधः । चेक्रिय. । नेन्यः । लोलुवः । पोपुव. । मरीमृजः ॥

## इगुपधज्ञाप्रीकिरः कः । ३ । १ । १३५ ॥

एभ्य कः स्यात् ॥ क्षिप । लिखः । बुधः । कृश । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः । वासरूपविधिना ण्वुल्तृचावपि । क्षेपक । क्षेप्ता ।

## आतश्चोपसर्गे । ३ । १ । १३६ ॥

कः स्यात् ॥ श्याद्व्यधेति णस्यापवादः । सुग्ल । प्रज्ञः ॥

## पाघ्राध्माधेट्दृशः शः । ३ । १ । १३७ ॥

पिबतीति पिबः । जिघ्रः । धमः । धयः । धया कन्या । घेटष्टित्वात्स्तनन्धयीति खशीव ङीप्प्राप्तः । खशोऽन्यत्र नेष्यत इति हरदत्तः । पश्यतीति पश्यः । घ्रः सञ्ज्ञायां न । व्याघ्रादिभिरिति निर्देशात् ॥

**अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३ । १ । १३८ ॥**

शः स्यात् ॥ लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः सुखार्थः सौत्रो हेतुमण्ण्यन्तः । सातयः । वासरूपन्यायेन क्विबपि । सात् परमात्मा । सात्वन्तो भक्ताः । षह मर्षणे चुरादिः । हेतुमण्ण्यन्तो वा । साहयः । अनुपसर्गात्किम् । प्रलिपः । नौ लिम्पेर्वाच्यः ॥ * ॥ निलिम्पा देवाः ॥ गवादिषु विन्देः सञ्ज्ञायाम् ॥ * ॥ गोविन्दः । अरविन्दम् ॥

**ददातिदधात्योर्विभाषा । ३ । १ । १३९ ॥**

शः स्यात् ॥ ददः । दधः । पक्षे वक्ष्यमाणो णः । अनुपसर्गादित्येव । प्रदः । प्रधः ॥

**ज्वलितिकसन्तेभ्यो णः । ३ । १ । १४० ॥**

इतिशब्द आद्यर्थः । ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा ॥ पक्षे अच् । ज्वालः । ज्वलः । चालः । चलः । अनुपसर्गादित्येव । उज्ज्वलः ॥ तनेरुपसंख्यानम् ॥ * ॥ इहानुपसर्गादिति विभाषेति च न सम्बध्यते । अवतनोतीत्यवतानः ॥

**श्याद्व्यधास्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च । ३ । १ । १४१ ॥**

श्येङ्प्रभृतिभ्यो नित्य णः स्यात् ॥ श्येङो ऽवस्यतेश्चादन्तत्वात्सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम् । अवश्यायः । प्रतिश्यायः । आत् । दायः । धायः । व्याधः । स्रु गतौ । आङ्पूर्वः सम्पूर्वश्च । आस्रावः । सस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥

## दुन्योरनुपसर्गे । ३ । १ । १४२ ॥

णः स्यात् । दुनोतीति दावः । नीसाहचर्यात्सानुबन्धकाद्दुनोतेरेव णः । दवतेस्तु पचाद्यच् । दवः । नयतीति नायः । उपसर्गे तु प्रदवः । प्रणयः ॥

## विभाषा ग्रहः । ३ । १ । १४३ ॥

णो वा । पक्षे अच् । व्यवस्थितविभाषेयम् । तेन जलचरे ग्राहः । ज्योतिषि ग्रहः । भवतेश्चेति काशिका । भवो देवः संसारश्च । भावा. पदार्थाः । भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच् ॥

## गेहे कः । ३ । १ । १४४ ॥

गेहे कर्तरि ग्रहेः कः स्यात् ॥ गृह्णाति धान्यादिकमिति गृहम् । तात्स्थ्याद्गृहा दाराः ॥

## शिल्पिनि ष्वुन् । ३ । १ । १४५ ॥

क्रियाकौशल शिल्पम् । तद्वति कर्तरि ष्वुन्स्यात् । नृतिखनिरञ्जिभ्य एव । नर्तकः । खनकः । नर्तकी । खनकी । असि अके अने च रञ्जेर्नलोपो वाच्य इत्यनिदितामिति सूत्रस्थवार्तिकेन नलोपः । रजकः । रजकी । अनिदितामिति सूत्रे वक्ष्यमाणभाष्यमते तु नृतिखनिभ्यामेव ष्वुन् । रञ्जेस्तु क्वुन् शिल्पिसंज्ञयोरिति क्वुन् । टाप् । रजिका । प्रयोगे तु रजकी ॥

**गः स्थकन् । ३ । १ । १४६ ॥**

गायतेः स्थकन्स्यात् शिल्पिनि कर्तरि ॥ गाथकः ॥

**ण्युट् च । ३ । १ । १४७ ॥**

गायनः । टित्वाद्गायनी ॥

**हश्च व्रीहिकालयोः । ३ । १ । १४८ ॥**

हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि ॥ जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति हायनो वर्षम् । जिहीते प्राप्नोतीति वा ॥

**प्रुसृल्वः समभिहारे वुन् । ३ । १ । १४९ ॥**

समभिहारग्रहणेन साधुकारित्व लक्ष्यते । भूयः सहचारात् । यो हि यां क्रियां पुनःपुनरनुतिष्ठति स तत्र प्रायेण कौशलं लभते तेन सकृदपि यः सुष्ठु करोति तत्र वुन् । बहुशोऽपि दुष्टं कुर्वति तु न । प्रवकः । सरकः ॥

**आशिषि च । ३ । १ । १५० ॥**

आशीर्विषयार्थवृत्तेर्धातोर्वुन्स्यात् कर्तरि ॥ जीवतात् जीवकः । नन्दतात् नन्दकः । आशीः प्रयोक्तृधर्मः । आशासितुः पित्रादेरियमुक्तिः ॥

इति श्रीव्याकरणदीपिकायां वृत्तौ तृतीयाध्यायस्य प्रथमः पादः ।



# अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

## कर्मण्यण् । ३ । २ । १ ॥

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् ॥ उपपदसमासः । कुम्भं करोतीति कुम्भकारः । आदित्यं पश्यतीत्यादावनभिधानान्न ॥ शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वञ्च ॥ * ॥ अणोऽपवादार्थं वार्तिकम् । मांसशीलः । मांसशीला । मांसकामः । मांसकामा । मांसभक्षः । मांसभक्षा । कल्याणाचारः । कल्याणाचारा । मांसशब्दः सप्रत्ययान्तोऽन्तोदात्तः । कल्याणशब्दो लघावन्ते द्वयोश्चेति मध्योदात्तः । तत्र कृदुत्तरपदप्रकृतिस्वरे प्राप्ते पूर्वपदप्रकृतिस्वरो विधीयते ॥ ईक्षिक्षमिभ्याञ्च ॥ * ॥ सुखप्रतीक्षा । बहुक्षामा । कथं तर्हि गङ्गाधरभूधरादयः । कर्मणः शेषत्वविवक्षया भविष्यन्ति ॥

## ह्वावामश्च । ३ । २ । २ ॥

अण् स्यात् ॥ कापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ॥

## आतोऽनुपसर्गे कः । ३ । २ । ३ ॥

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यान्नाण् ॥ आतोलोपः । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् । गोसन्दायः ॥ कविधौ सर्वत्र प्रसारणिभ्यो डः ॥ * ॥ ब्रह्म जिनाति ब्रह्मज्यः । सर्वत्रग्रहणात् आतश्चोपसर्गे । आह्वः । प्रह्वः ॥

## सुपि स्थः । ३ । २ । ४ ॥

' सुपीति योगो विभज्यते ॥ सुपि उपपदे आदन्तात्कः स्यात् ॥ द्वाभ्यां पिबतीति द्विपः । समस्थः । ततः स्थः ॥ सुपि तिष्ठतेः कः स्यात् ॥ आरम्भसामर्थ्याद्भावे । आखूनामुत्थानमाखूत्थः । इत ऊर्ध्वं कर्मणि सुपीति द्वयमप्यनुवर्तते । तत्राकर्मकेषु सुपीत्यस्य सम्बन्धः ॥

## तुन्दशोकयोः परिमृजापनुदोः । ३ । २ । ५ ॥

तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात् ॥ आलस्यसुखाहरणयोरिति वक्तव्यम् ॥ * ॥ तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता । अलसादन्यत्र तुन्दपरिमार्ज एव । यश्च संसारासारत्वोपदेशेन शोकमेवापनुदति न तु सुखमुत्पादयति स शोकापनोदः ॥ कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ॥ * ॥ मूलानि विभुजति मूलविभुजो रथः ॥ आकृतिगणोऽयम् । महीध्रः । कुध्रः । गिलतीति गिलः ॥

## प्रे दाज्ञः । ३ । २ । ६ ॥

दारूपाज्ज्ञानातेश्च प्रोपसृष्टात्कर्मण्युपपदे कः स्यात् ॥ अणोऽपवादः । सर्वप्रदः । पथिप्रज्ञः । अनुपसर्ग इत्युक्तेः प्रादन्यस्मिन्सति न कः । गोसम्प्रदायः ॥

## समि ख्यः । ३ । २ । ७ ॥

गोसंख्यः ॥

## गापोष्टक् । ३ । २ । ८ ॥

अनुपसृष्टाभ्यामाभ्यां टक् स्यात् कर्मण्युपपदे ॥ सामगः । सामगी । उपसर्गे तु सामसङ्गायः ॥ पिबतेः सुराशीध्वोरिति वक्त-

व्यम् ॥ * ॥ सुरापी । शीधुपी । अन्यत्र क्षीरपा ब्राह्मणी । सुरां पाति रक्षतीति सुरापा ॥ बहुलं तणीति वक्तव्यम् ॥ * ॥ या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति । या ब्राह्मणी सुरापा भवति नैना देवाः पतिलोकं नयन्ति ॥

## हरतेरनुद्यमनेऽच् । ३ । २ । ९ ॥

अंशहरः ॥ अनुद्यमने किम् । भारहारः ॥ शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम् ॥ * ॥ शक्तिग्रहः । लाङ्गलग्रह इत्यादि ॥ सूत्रे च धार्यर्थे ॥ * ॥ सूत्रग्रहः । यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव । सूत्रग्राहः ॥

## वयसि च । ३ । २ । १० ॥

उद्यमनार्थं सूत्रम् । कवचहरः कुमारः ॥

## आङि ताच्छील्ये । ३ । २ । । ११ ॥

पुष्पाण्याहरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् । भाराहारः ॥

## अर्हः । ३ । २ । १२ ॥

अर्हतेरच् स्यात्कर्मण्युपपदे ॥ अणोऽपवादः । पूजार्हा ब्राह्मणी ॥

## स्तम्बकर्णयो रमिजपोः । ३ । २ । १३ ॥

हस्तिसूचकयोरिति वक्तव्यम् ॥ * ॥ स्तम्बे रमते स्तम्बेरमो हस्ती । तत्पुरुषे कृतीति हलदन्तादिति वा ङेरलुक् । कर्णेजपः सूचकः । हस्तिसूचकयोः किम् । स्तम्बेरन्ता । कर्णेजपिता मशकः ॥

## शमि धातोः संज्ञायाम् । ३ । २ । १४ ॥

शम्भवः । शवदः । पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम् । कृञो हेत्वादिषु टो माभूत् । शङ्करा नाम परिव्राजिका तच्छीला ॥

## अधिकरणे शेतेः । ३ । २ । १५ ॥

खे शेते खशयः ॥ पार्श्वादिषूपसंख्यानम् ॥ * ॥ पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः ॥ दिग्धसहपूर्वाच्च ॥ * ॥ दिग्धेन सह शेते दिग्धसहशयः । मयूरव्यंसकादित्वात्समासः ॥ उत्तानादिषु कर्तृषु ॥ * ॥ उत्तानः शेते उत्तानशयः । अवमूर्द्धशयः । अवनतो मूर्द्धा यस्य सः अवमूर्द्धा । अधोमुखः शेते इत्यर्थः ॥ गिरौ डश्छन्दसि ॥ * ॥ गिरौ शेते गिरिशः । कथं तर्हि गिरिशमुपचचार प्रत्यहं सा सुकेशीति । गिरिरस्यास्तीति विग्रहे लोमादित्वात् शः ॥

## चरेष्टः । ३ । २ । १६ ॥

अधिकरणे उपपदे ॥ कुरुचरः । कुरुचरी ॥

## भिक्षासेनादायेषु च । ३ । २ । १७ ॥

अनधिकरणार्थ आरम्भः ॥ भिक्षां चरतीति भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः । कथं प्रेक्ष्य स्थितां सहचरीमिति । पचादिषु चरडिति पाठात् ॥

## पुरोऽग्रतोऽग्रेषु सर्तेः । ३ । २ । १८ ॥

पुरःसरः ॥ अग्रतःसरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः । सूत्रे ऽग्रेइत्येदन्तत्वमपि निपात्यते । कथं तर्हि यूथं तदग्रसरगर्वितकृष्णसारमिति । बाहुलकादिति हरदत्तः ॥

## पूर्वे कर्तरि । ३ । २ । १९ ॥

कर्तृवाचिनि पूर्वशब्दे उपपदे सर्तेष्टः स्यात् ॥ पूर्वः सरतीति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरतीति पूर्वसारः ॥

## कृञो हेतुताच्छील्यानुलोम्येषु । ३ । २ । २० ॥

एषु द्योत्येषु कर्मण्युपपदे करोतेष्टः स्यात् ॥ अतः कृकमीति सः । यशस्करी विद्या । श्राद्धकरः । वचनकरः । एतेषु किम् । कुम्भकारः ॥

## दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु । ३ । २ । २१ ॥

एषु कृञष्टः स्यादहेत्वादावपि ॥ दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः । भास्करः । कारकरः । बहुकरः । बहुशब्दस्य वैपुल्यार्थे संख्यापेक्षया पृथग्ग्रहणम् । लिपिलिबिशब्दौ पर्यायौ । सख्या । एककरः । द्विकरः । कस्कादित्वादहस्करः । नित्यसमासेऽनुत्तरपदस्थेति षत्वम् । धनुष्करः । अरुष्करः ॥ किंयत्तद्बहुषु कृञोऽज्विधानमिति वार्तिकम् ॥ * ॥ सूत्रे च किमादिग्रहणं न कार्यमिति हरदत्तादयः । किङ्करा । यत्करा । हेत्वादौ टं बाधित्वा परत्वादच् । पुंयोगे ङीष् किङ्करी ॥

## कर्मणि भृतौ । ३ । २ । २२ ॥

कर्मशब्दे उपपदे करोतेष्टः स्यात् ॥ कर्मकरो भृतकः । कर्मकारोऽन्यः ॥

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु । ३ । २ । २३ ॥

एषु कृञष्टो न । हेत्वादिषु प्राप्तः प्रतिषिध्यते । शब्दकार इत्यादि ॥

## स्तंबशकृतोरिन् । ३ । २ । २४ ॥

व्रीहिवत्सयोरिति वक्तव्यम् ॥ * ॥ स्तंबकरिर्व्रीहिः । शकृत्करिर्वत्सः । व्रीहिवत्सयोः किम् । स्तंबकारः । शकृत्कारः ॥

## हरतेर्दृतिनाथयोः पशौ । ३ । २ । २५ ॥

दृतिनाथयोः कर्मणोरुपपदयोः हृञ इन् स्यात्पशौ कर्तरि ॥ दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः । पशौ किम् । दृतिहारः । नाथहारः ॥

## फलेग्रहिरात्मंभरिश्च । ३ । २ । २६ ॥

फलानि गृह्णातीति फलेग्रहिः । उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीति आत्मम्भरिः । आत्मनो मुमागमः । भृञ इन् । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । ज्योत्स्नाकरम्भमुदरम्भरयश्चकोरा इति मुरारिः ॥

## छन्दसि वनसनरक्षिमथाम् । ३ । २ । २७ ॥

एभ्यः कर्मण्युपपदे इन् स्यात् ॥ ब्रह्मवनिं त्वा क्षत्रवनिम् । उत नो गोषणिं धियम् । ये पथां पथिरक्षयः । चतुरक्षौ पथिरक्षी । हविर्मथीनामभि ॥

## एजेः खश् । ३ । २ । २८ ॥

ण्यन्तादेजेः कर्मण्युपपदे खश् स्यात् ॥ अरुर्द्विषदिति मुम् । शित्वाच्छबादि । जनमेजयतीति जनमेजयः ॥ वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्यः खश उपसङ्ख्यानम् ॥ * ॥ वातमजा मृगाः ।

खित्यनव्ययस्येति ह्रस्वस्ततो मुम्। शुनिन्धय:। तिलन्तुद:। शर्द्धंजहा माषा। शर्द्धोऽपानशब्द:। तं जहतीति विग्रह:। जहातिरन्तर्भावितण्यर्थः॥

## नासिकास्तनयोर्ध्माधेटोः।३।२।२९॥

अत्र वार्तिकम्॥ स्तने धेट इति वक्तव्यम्। नासिकायां ध्मश्च धेटश्चेति वक्तव्यम्॥ * ॥ स्तनन्धय:। धेटष्टित्वात्स्तनन्धयी। नासिकन्धम:। नासिकन्धय:॥

## नाडीमुष्ट्योश्च।३।२।३०॥

एतयो: कर्मणोरुपपदयोर्ध्माधेटो: खश् स्यात्॥ यथासंख्यं नेष्यते। नाडिन्धम। नाडिन्धय:। मुष्टिन्धम:। मुष्टिन्धय:॥ घटीखारीखरीषूपसंख्यानम्॥ * ॥ घटिन्धम:। घटिन्धय इत्यादि॥ खारी परिमाणविशेष। खरी गर्दभी॥

## उदि कूले रुजिवहोः।३।२।३१॥

उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात्॥ कूलमुद्रुजतीति कूलमुद्रुज। कूलमुद्वह.॥

## वहाभ्रे लिहः।३।२।३२॥

वह: स्कन्ध: तं लेढीति वहलिहो गौ:। अदादित्वाच्छपो लुक्। खशो ङित्वान्न गुण:। अभ्रंलिहो वायु:॥

## परिमाणे पचः।३।२।३३॥

प्रस्थम्पचा स्थाली॥ खारिम्पच: कटाह:॥

## मितनखे च।३।२।३४॥

अपरिमाणार्थ आरम्भ:। मितम्पचा ब्राह्मणी। नखम्पचा यवागू:। पचिरत्र तापवाची॥

## विध्वरुषोस्तुदः । ३ । २ । ३५ ॥

विधुन्तुदः । मुमि कृते संयोगान्तस्य लोपः । अरुन्तुदः ॥

## असूर्यललाटयोर्दृशितपोः । ३ । २ । ३६ ॥

असूर्यमित्यसमर्थसमासः । दृशिना नञः सम्बन्धात् । सूर्यं न पश्यन्तीत्यसूर्यंपश्या राजदाराः । ललाटन्तपः सूर्यः ॥

## उग्रम्पश्येरम्मदपाणिन्धमाश्च । ३ । २ । ३७ ॥

एते निपात्यन्ते ॥ उग्रमिति क्रियाविशेषणम् । तस्मिन्नुपपदे दृशेः खश् ॥ उग्र पश्यतीत्युग्रम्पश्यः । इरा उदकं तेन माद्यति दीप्यते ऽबिन्धनत्वादिति इरम्मदो मेघज्योतिः । इह निपातनात् श्यन्न । पाणयो ध्मायन्ते ऽस्मिन्निति पाणिन्धमोऽध्वा । अन्धकाराद्यावृत इत्यर्थः । तत्र हि सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते ॥

## प्रियवशे वदः खच् । ३ । २ । ३८ ॥

प्रियंवदः । वशंवदः । खशि प्रकृते प्रत्ययान्तरकरणमुत्तरार्थम् । द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्यातां शप् च माभूत् । न त्वेवमुत्तरत्रैव क्रियतामिति चेन्सत्यम् । इह करणादन्यत्रापि क्वचित् । तदाह वार्तिककारः ॥ गमेः सुपि वाच्यः ॥ * ॥ असंज्ञार्थमिदम् । सञ्ज्ञायां तु गमश्चेति सूत्रेणैव सिद्धम् । मितङ्गमो हस्ती । मितङ्गमा हस्तिनी ॥ विहायसो विह च इति वाच्य खच्च डिद्वा वाच्यः ॥ * ॥ विहङ्गमः । विहङ्गः । भुजङ्गमः भुजङ्गः ॥ डे च विहायसो विहादेशो वक्तव्यः ॥ * ॥ विहगः । अन्तात्यन्तेतिसूत्रे ऽन्यत्रापीति वार्तिकेन डः ॥

## द्विषत्परयोस्तापेः । ३ । २ । ३९ ॥

खच् स्यात् ॥ द्विषन्तं परं वा तापयतीति द्विषन्तपः । परन्तपः । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या । तेनेह न । द्विषतीं तापयतीति द्विषतीतापः ॥

**वाचि यमो व्रते । ३ । २ । ४० ॥**

वाक्शब्दे उपपदे यमेः खच् स्यात् व्रते गम्ये ॥ वाचंयमपुरन्दरौ चेत्यनेन वाक्पुरोरमन्तत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः ॥

**पूः सर्वयोर्दारिसहोः । ३ । २ । ४१ ॥**

पुरं दारयतीति पुरन्दरः । सर्वंसहः । सहिग्रहणमसंज्ञार्थम् । भगे च दारेरिति काशिका । बाहुलकेन लब्धमिदमित्याहुः । भगं दारयतीति भगन्दरः ॥

**सर्वकूलाभ्रकरीषेषु कषः । ३ । २ । ४२ ॥**

सर्वंकषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या ॥

**मेघर्तिभयेषु कृञः । ३ । २ । ४३ ॥**

मेघङ्करः ॥ ऋतिङ्करः । भयङ्करः । भयशब्देन तदन्तविधिः । अभयङ्करः ॥

**क्षेमप्रियमद्रे ऽण् च । ३ । २ । ४४ ॥**

एषु कृञो ऽण् स्यात् चात् खच् ॥ क्षेमङ्करः । क्षेमकारः । प्रियङ्कर । प्रियकारः । मद्रङ्करः । मद्रकारः । वेति वाच्ये ऽण्ग्रहणं हेत्वादिषु टो माभूदिति । कथं तर्हि अल्पारम्भाः क्षेमकरा इति । कर्मणः शेषत्वविवक्षायां पचाद्यच् ॥

## आशिते भुवः करणभावयोः । ३ । २ । ४५ ॥

आशितशब्दे उपपदे भवतेः खच् ॥ आशितो भवत्यनेनेति आशितम्भव ओदनः । आशितस्य भवनं आशितम्भवः ॥

## संज्ञायां भृतॄवृजिधारिसहितपिदमः । ३ । २ । ४६ ॥

विश्वं बिभर्तीति विश्वम्भरः । विश्वम्भरा । रथन्तरं साम । इह रथेन तरतीति व्युत्पत्तिमात्रं न त्ववयवार्थानुगमः । पतिंवरा कन्या । शत्रुञ्जयो हस्ती । युगन्धरः पर्वतः । शत्रुसहः । शत्रुन्तपः । अरिन्दमः । दमिः शमनायाम् । दमु उपशमे इत्यत्र हि उपशमे इति ण्यन्तस्य तेन सकर्मकः । न तु शमिवदकर्मकः । मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः । संज्ञायां किम् । कुट्टालं बिभर्तीति कुट्टालभारः ॥

## गमश्च । ३ । २ । ४७ ॥

सुतङ्गमः ॥

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । ३ । २ । ४८ ॥

संज्ञायामिति निवृत्तम् । एषु गमेर्डः स्यात् ॥ डित्वसामर्थ्यादभस्यापि टेर्लोपः । अन्तं गच्छतीत्यन्तग इत्यादि ॥ सर्वत्रपन्नयोरुपसङ्ख्यानम् ॥ * ॥ सर्वत्रगः । पन्नं पतितं गच्छतीति पन्नगः । पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम् ॥ उरसो लोपश्च ॥ * ॥ उरसा गच्छतीत्युरगः ॥ सुदुरोरधिकरणे ॥ * ॥ सुखेन गच्छत्यत्र सुगः । दुर्गः ॥ निसो देशे ॥ * ॥ निर्गो देशः । अपर आह । अन्यत्रापि दृश्यत इति वक्तव्यम् ॥ * ॥ ग्रामगः । गुरुतल्पगः ॥

## आशिषि हनः । ३ । २ । ४९ ॥

शत्रु वध्याच्छत्रुहः। आशिषि किम्। शत्रुघातः॥ दारावाहनोऽणन्तस्य च टः संज्ञायाम्॥ *॥ दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः। दार्वाघाटः॥ चारौ वा॥ *॥ चारावुपपदे आङ्पूर्वाद्धन्तेरण् वक्तव्य अन्त्यस्य च टो वक्तव्य इत्यर्थः। चार्वाघाटः। चार्वाघातः॥ कर्मणि समि च॥*॥ कर्मण्युपपदे सम्पूर्वाद्धन्तेरुक्त वेत्यर्थः। वर्णान्संहन्तीति वर्णसङ्घाटः। वर्णसङ्घातः॥

## अपे क्लेशतमसोः। ३। २। ५०॥

अपपूर्वाद्धन्तेर्डः स्यात्॥ अनाशीरर्थमिदम्। क्लेशापहः पुत्रः। तमोपहः सूर्यः॥

## कुमारशीर्षयोर्णिनिः। ३। २। ५१॥

कुमारघाती। शिरस. शीर्षभावो निपात्यते। शीर्षघाती॥

## लक्षणे जायापत्योष्टक्। ३। २। ५२॥

हन्तेष्टक् स्यात् लक्षणवति कर्तरि॥ जायाघ्नो ना। पतिघ्नी स्त्री॥

## अमनुष्यकर्तृके च। ३। २। ५३॥

अमनुष्यकर्तृके धात्वर्थे वर्तमानाद्धन्तेः कर्मण्युपपदे टक् स्यात्॥ जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्येति किम्। आखुघातः शूद्रः। अथ कथं बलभद्रः प्रलम्बघ्नः शत्रुघ्नः कृतघ्न इत्यादि। मूलविभूजादित्वात्सिद्धम्। चौरघातो नगरघातो हस्तीति तु बाहुलकादण्।

## शक्तौ हस्तिकपाटयोः। ३। २। ५४॥

हन्तेष्टक् स्यात् शक्तौ द्योत्यायाम् ॥ मनुष्यकर्तृकार्थमिदम्। हस्तिघ्नो ना। कपाटघ्नश्चोरः। कवाटेति पाठान्तरम् ॥

**पाणिघताडघौ शिल्पिनि। ३। २। ५५॥**

हन्तेष्टक् टिलोपो घत्वञ्च निपात्यते पाणिताडयोरुपपदयोः शिल्पिनि कर्तरि ॥ शिल्पिनि किम्। पाणिघातः। ताडघातः। राजघ उपसंख्यानम् ॥ * ॥ राजानं हन्ति राजघः ॥

**आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्। ३। २। ५६॥**

एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात् ॥ अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यङ्करणम्। च्व्यर्थेषु किं। आढ्यं कुर्वन्त्यनेन। अच्वौ किम्। आढ्यीकुर्वन्त्यनेन। इह प्रतिषेधसामर्थ्यात् ल्युडपि नेति काशिका। भाष्यमते तु ल्युट् स्यादेव। अच्वावित्युत्तरार्थमिति तदुक्तेः ॥

**कर्तरि भुवः खिष्णुच्खुकञौ। ३। २। ५७॥**

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः ॥ अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः। आढ्यम्भावुकः ॥

**स्पृशोऽनुदके क्विन्। ३। २। ५८॥**

अनुदके सुप्युपपदे स्पृशेः क्विन्स्यात् ॥ कनावितौ। घृतस्पृक्। कर्मणीति निवृत्तम्। मन्त्रेण स्पृशतीति मन्त्रस्पृक्। अनुदके किम्। उदकस्पर्शः ॥

**ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च। ३। २। ५९॥**

एभ्यः क्विन् स्यात् ॥ अलाक्षणिकमपि किञ्चित्कार्यं निपातनाल्लभ्यते । ऋतावुपपदे यजेः क्विन् । क्विन्नन्तत्वात्कुत्वम् । ऋत्विक् । ऋत्विग् । ऋत्विजौ । ऋत्विजः । ञिधृषा प्रागल्भ्ये । अस्मात् क्विन् द्वित्वमन्तोदात्तत्वञ्च निपात्यते । कुत्वात्पूर्वं जश्त्वेन डः गः कः । धृष्णोतीति दधृक् । दधृग् । दधृषौ । दधृषः । दधृग्भ्यामित्यादि । सृजेः कर्मणि क्विन् । अमागमश्च निपात्यते । स्रक् । स्रग् । स्रजौ । स्रजः । स्रग्भ्याम् । स्रक्षु । दिशेः कर्मणि क्विन्निपात्यते । दिक् । दिग् । दिशौ । दिशः । दिग्भ्याम् । दिक्षु । उत्पूर्वात्ष्णिह प्रीतावित्यस्माक्विन् । निपातनाट्टुलोपषत्वे । क्विन्नन्तत्वात्कुत्वेन हस्य घः । जश्त्वचर्त्वे । उष्णिक् । उष्णिग् । उष्णिहौ । उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु । अञ्चेः सुप्युपपदे क्विन् । अनिदितामिति नलोपः । उगिदचामिति नुम् । संयोगान्तस्य लोपः । नुमो नकारस्य क्विन्प्रत्ययस्येति कुत्वेन ङकारः । प्राङ् । अनुस्वारपरसवर्णौ । प्राञ्चौ । प्राञ्चः । प्राञ्चम् । प्राञ्चौ । अच इत्यकारलोपे चाविति दीर्घः । प्राचः । प्राचा । प्राग्भ्यामित्यादि । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ । अच इति लोपस्य विषये अन्तरङ्गोऽपि यण् न प्रवर्तते । अकृतव्यूहा इति परिभाषया । प्रतीचः । प्रतीचा । अमुमञ्चतीति विग्रहे अदस् अञ्च् इति स्थिते विष्वग्देवयोरित्यद्र्यादेशे यणि अदसोऽसेरिति मुत्वे च । अमुमुयङ् । अमुमुयञ्चौ । अमुमुयञ्चः । अमुमुयञ्चम् । अमुमुयञ्चौ । अमुमुईचः । अमुमुईचा । अमुमुयग्भ्यामित्यादि । मुत्वस्यासिद्धत्वान्न यण् । अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते । अदमुयङ् । अः सेः सकारस्य स्थाने यस्य स असिरिति व्याख्यानात् त्यदाद्यत्वविषये एव मुत्वं नान्यत्रेति पक्षे अदद्र्यङ् । अदद्र्यञ्चौ । उदङ् । उदञ्चौ । उदञ्चः ।

## तद्भूतो विधानात् ॥ ३ । ४ । ६ ॥

"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः" इति श्रुत्या सकलवेदार्थज्ञानवतः कर्मविधानादपि लिङ्गात्कर्माङ्गत्वं वेदार्थब्रह्मविद्याया इत्यर्थः । यद्यपि "वेदमधीत्य"त्यध्ययनमात्रं श्रुतं, नार्थबोधः, तथापि फलवदर्थावबोधपर्यन्तमध्ययनमिति बोध्यम् । आचार्यस्य कुलं गृहम् । उपनयनं कृत्वा तदनन्तरं गुरोः शुश्रूषणरूपं कर्म विधायातिशेषेण शिष्टेन कालेन यथाविधानं पवित्रपाणित्वप्राङ्मुखत्वादिविधानमनतिक्रम्य वेदमधीत्यानन्तरमभिसमावृत्य व्रतविसर्गं कृत्वा कुटुम्बे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनं कुर्वन्कर्मान्तराणि च विहितानि यथाशक्ति कुर्वाणो ब्रह्मलोकमभिसम्पद्यत इत्यर्थः ॥

## नियमाच्च ॥ ३ । ४ । ७ ॥

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इत्यादिवाक्याद्यावज्जीवं कर्माचारनियमाच्च विद्यायाः कर्मशेषत्वमेवेत्यर्थः । इह देहे शतं समाः शतं संवत्सरान् जीवितुमिच्छेदिति यत्, तत्कर्माणि कुर्वन्नेवेति नियमविधिः । एवं त्वयि नरे वर्तमाने सति, अशुभकर्म न लिप्यते तेन त्वं न लिप्यस इत्यर्थः । इतः प्रकारादन्यथा प्रकारान्तरं नास्ति यतः कर्मलेपो न स्यादित्यर्थः ॥

तस्माद्ब्रह्मविद्या कर्माङ्गमेवेति प्राप्ते, समाधत्ते ।

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ३ । ४ । ८ ॥

तुः पूर्वपक्षनिरासार्थः । यदुक्तं तत्त्वज्ञानं कर्माङ्गं फलशून्यत्वे सति कर्माङ्गाश्रयत्वादिति, तन्न, हेतोः विशेष्यासिद्धेः । कुतो विशेष्यासिद्धिः । अधिकोपदेशात्, कर्मकर्तुः संसारिणः कर्माङ्गादधिकस्याकर्तुरसंसारिणश्चिन्मात्रस्य वेदान्तेषूपदेशात् । तथा च तत्त्वज्ञानं चिन्मात्राश्रयमेवेति भवति विशेष्यासिद्धिः । एवं च तत्त्वज्ञानफलश्रुतेरपि नार्थवादत्वम् । तस्मात् "पुरुषार्थोऽतः शब्दात्" इति यन्मतं बादरायणस्य तदेवमेव तथैवेत्यर्थः । अधिकोपदेशासिद्धिमाशङ्क्याह "त"दिति । तस्याधिकस्यात्मनो "यः सर्वज्ञः सर्ववि"दित्यादिश्रुतिसहस्रेषु दर्शनादित्यर्थः ॥

यदुक्त"माचारदर्शना"दिति तत्राह ।

तुल्यं तु दर्शनम् ॥ ३ । ४ । ९ ॥

विद्यायाः कर्मशेषत्वाभावेऽप्याचारदर्शनं तुल्यमेव । तथाहि "एतद्धस्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे" इत्यादिका श्रुतिर्विदुषः कर्माचाराभावं दर्शयति । तुशब्देनाकर्माङ्गत्वलिङ्गदर्शनस्य प्राबल्यं सूचितम् । न हि ब्रह्मविद्यावतां जनकादीनां कर्माचारदर्शनं विद्यायाः कर्मशेषत्वे लिङ्गम्, तेषामहमभिमानाभावेन चोदनाप्रवृत्त्यसम्भवात्तत्कृतकर्मणश्चोदनालक्षणत्वाभावेनाकर्मतया तदाचारदर्शनस्य विद्यायाः कर्मशेषत्वबोधने दुर्बलत्वादित्यर्थः ॥

यदुक्तं "तच्छ्रुते"रिति तत्राह ।

## असार्वत्रिकी ॥ ३ । ४ । १० ॥

"यदेव विद्यया करोती"ति श्रुतिरसार्वत्रिकी सर्वविद्याविषया न भवति, प्रकृतोद्गीथविद्यामात्रपरत्वात् । तथा च न श्रुतिबलाद्ब्रह्मविद्यायाः कर्माङ्गत्वमित्यर्थः ॥

यदप्युक्तं "समन्वारम्भणा"दिति तत्राह ।

## विभागः शतवत् ॥ ३ । ४ । ११ ॥

"तं विद्याकर्मणी समन्वारभेते" इत्यत्र विभागो बोध्यः, विद्याऽन्यं पुरुषमन्वारभते कर्मान्यमिति । शतवत्, यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वदित्यर्थः । वस्तुतोऽस्य समन्वारम्भवाक्यस्य मुमुक्षुविषयत्वाभावाद्विद्याशब्देन विहितोद्गीथादिविद्या प्रतिषिद्धा च नग्नस्त्रीदर्शनादिरूपा गृह्यते । तादृशविद्यायाः फलारम्भे कर्मसाहित्येऽपि न क्षतिरिति मन्तव्यम् ॥

यत्पुनरुक्तं "तद्वतो विधाना"दिति तत्राह ।

## अध्ययनमात्रवतः ॥ ३ । ४ । १२ ॥

"आचार्यकुलाद्वेदमधीत्ये"ति वाक्ये वेदाध्ययनमात्रवतः कर्म विधीयते नात्मज्ञानवत इत्यर्थः । मात्रपदेनौपनिषदात्मज्ञानमेव व्यावर्त्यते, न कर्मकाण्डार्थावबोधः, कर्मज्ञानं विनाऽनुष्ठानासम्भवादिति ॥

यच्चोक्तं "नियमाच्चे"ति तत्राह ।

## नाविशेषात् ॥ ३ । ४ । १३ ॥

"कुर्वन्नेवेह कर्माणी"ति नियमवाक्यं न ज्ञानिविषयं, विद्वानिति विशेषाभावादित्यर्थः ॥

अस्य नियमवाक्यस्य ज्ञानिविषयत्वेऽप्यविरोधः, ज्ञानिस्तुत्यर्थत्वादित्याह ।

## स्तुतये ऽनुमतिर्वा ॥ ३ । ४ । १४ ॥

इयं विदुषः कर्मानुमतिः कर्मानुज्ञा ब्रह्मविद्यास्तुतये ज्ञातव्या । स्तुतिश्चैवम् । यावज्जीवं कर्म कुर्वत्यपि त्वयि विदुषि न कर्म लेपाय भवति विद्यासामर्थ्यादिति । अस्मिन्पक्षे "नान्यथेतोऽस्ती"त्यस्यायमर्थः । एवं कर्म कुर्वत्यपि त्वयीतो ब्रह्मभावाद्विद्यालभ्यादन्यथा संसारापत्तिर्नास्ति यतो न कर्म लिप्यत इति ॥

अपि च ब्रह्मविद्यायाः प्रत्यक्षं फलं दर्शयन्ती श्रुतिः कालान्तरभाविफलककर्माङ्गत्वं वारयतीत्याह ।

## कामकारेण चैके ॥ ३ । ४ । १५ ॥

एके विद्वांसः प्रत्यक्षीकृतविद्याफलाः परोक्षफलककर्मसाधनं प्रजादिकं कामकारेण स्वेच्छया त्यक्तवन्त इति श्रूयते "एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक"इति । विद्यायाः कर्माङ्गत्वाभावे विदुषः स्वेच्छया कर्मसाधनप्रजादित्यागो लिङ्गमनेन सूत्रेण सूच्यत इति वा बोध्यम् । विद्यायाः कर्माङ्गत्वे हि कर्मसाधनत्यागो न स्यादिति । श्रुत्यर्थस्तु । येषां नोऽस्माकमयमपरोक्ष आत्माऽयं लोकः प्रत्यक्षफलं, ते वयं किं प्रजया करिष्यामः, इति निश्चित्याग्निहोत्रादिकर्म न कृतवन्तः ॥

## उपमर्दं च ॥ ३ । ४ । १६ ॥

किञ्च कर्मानुष्ठानहेतोः क्रियाकारकफलविभागस्य समस्तस्याविद्याकृतस्य विद्यासामर्थ्यादुपमर्दमभावमाम-

नन्ति "यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये"-दित्यादिना । तथा च ब्रह्मविद्यायाः कर्मविरोधित्वान्न कर्माङ्गत्वमिति भावः ॥

विद्यायाः कर्मानङ्गत्वे हेत्वन्तरमाह ।

**ऊर्ध्वरेतस्सु च शब्दे हि ॥ ३ । ४ । १७ ॥**

ऊर्ध्वरेतस्सु यतिषु ब्रह्मविद्याऽवगता । न हि तस्याः कर्माङ्गत्वं सम्भवति, यतीनामग्निहोत्रादिकर्माभावात् । तथा चायं प्रयोगः, विद्याकर्मणी नाङ्गाङ्गिभूते, मिथो व्यभिचारित्वात्, ऋतुगमननैष्ठिकव्रतवत्, इति । ननु यत्याश्रमसद्भावे किं मानमित्यत आह "शब्दे ही"ति । वेदे ह्यूर्ध्वरेतसामाश्रमाः श्रूयन्ते "त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेती"ति "ब्रह्मचर्यादेव प्रव्रजे"दित्यादौ । श्रुत्यर्थस्तु । स्कन्धशब्द आश्रमपरः । यज्ञादिधर्मप्रधानो गार्हस्थ्याश्रम एकः । तपःप्रधानो वानप्रस्थाश्रमो द्वितीयः । तृतीयः स्पष्टः । एतेषामाश्रमाणामनित्यफलभाक्त्वमुक्त्वा ब्रह्मसंस्थस्य संन्यासिनो नित्यफलत्वमाह "ब्रह्मे"ति । ब्रह्मणि प्रत्यग्रूपे सम्यङ्निष्ठा यस्य स ब्रह्मसंस्थः परिव्राडित्यर्थः । तस्माद्ब्रह्मविद्या न कर्माङ्गं, किन्तु स्वतन्त्रा मुक्तिफलेति सिद्धम् ॥

"त्रयो धर्मस्कन्धा" इत्यादिश्रुतिराश्रमसद्भावे प्रमाणमित्युक्तम् । तदाक्षिपति ।

**परामर्शं जैमिनिरचोदना चापवदति हि ॥ ३ । ४ । १८ ॥**

तत्त्वज्ञानस्यान्तरङ्गसाधनं पारिव्राज्यमत्र निरूप्यत

इति स्फुटे साधनाध्यायपादसङ्गती । अत्र संशयः, किं पारिव्राज्यमनुष्ठेयं न वेति। पूर्वपक्षे पारिव्राज्यस्याभावाद्विद्यायाः कर्माव्यभिचारेण कर्माङ्गत्वमिति फलम्, सिद्धान्ते तत्सत्त्वाद्विद्यायाः स्वातन्त्र्यमिति बोध्यम् । तत्र पारिव्राज्यं प्रमाणाभावान्नानुष्ठेयमित्याह "परामर्श"मिति । "त्रय"इति श्रुतौ चतुर्णामाश्रमाणां परामर्शमनुवादमात्रं जैमिनिराचार्यो मन्यते, न विधिम् । यत इयं श्रुतिरचोदना लिङादिशून्या । अस्याः श्रुतेर्ब्रह्मसंस्थतास्तुतिपरत्वं चेति चकारार्थः । तथा चान्यपराद्वाक्यादनुवादमात्रेण नाश्रमसिद्धिरिति भावः । तपःशब्देन वानप्रस्थयत्याश्रमयोरनुवाद इति द्रष्टव्यम् । निन्द्यमानत्वाच्च पारिव्राज्यं नानुष्ठेयमित्याह "अपवदति ही"ति । "वीरहा वा एष देवानां यो ऽग्निमुद्वासयते" इत्यादिश्रुतिरग्न्युद्वासनप्रधानं पारिव्राज्यमपवदतीत्यर्थः । यत्याश्रमातिरिक्ताश्रमान्तरमग्निहोत्रादिविधानसामर्थ्यात्प्रामाणिकमेव "त्रय"इत्यादिश्रुतावनूद्यते । यत्याश्रमस्तु न श्रुतिसिद्धः, किन्तु स्मृतिसिद्ध एवानूद्यते । स्मृतिश्च "यावज्जीवमग्निहोत्रं जुहुया"दित्यादिप्रत्यक्षश्रुतिविरोधादप्रमाणमिति पूर्वपक्ष्यभिमानः । यद्यपि "ब्रह्मचर्यादेव प्रव्रजे"दिति प्रत्यक्षश्रुतिरस्ति तथाऽपीयं श्रुतिर्नास्तीति कृत्वा चिन्तेयमिति मन्तव्यम् ॥

समाधत्ते ।

**अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥ ३ । ४ । १९ ॥**

पारिव्राज्यमनुष्ठेयं भगवान्बादरायणो मन्यते । कुतः । "त्रय"इत्यादि श्रुतौ प्रामाणिकगार्हस्थ्येन साम्यश्रवणादित्यर्थः । अयं भावः । तपःशब्देन वानप्रस्थाश्र-

मस्यैवानुवादः, संन्यासिनां तपःशून्यत्वात्। ब्रह्मसंस्थ इत्यनेनैव यत्याश्रमानुवादः, आश्रमचतुष्टयानुवादेन ब्रह्मसंस्थतास्तुतिपरत्वमेव वाक्यस्य। तथा चान्यपरादपि वाक्यात्प्रतीयमाना आश्रमाः सिद्ध्यन्ति, देवताधिकरणन्यायात्। न च "वीरहे"त्यादिश्रुतिविरोधः। तस्याः श्रुतेरज्ञानादग्न्युद्वासनोद्युक्ताहिताग्निविषयत्वादिति॥

एवमस्य वाक्यस्यानुवादत्वमङ्गीकृत्यानुवादस्य प्रमाणान्तरसापेक्षत्वादाश्रमाणां प्रामाणिकत्वमुक्तम्। इदानीमस्मिन्नेव वाक्य आश्रमाणां विधिकल्पनम्, अन्यथाऽस्यानुवादकत्व आश्रमविधायिवाक्यान्तरकल्पनायां गौरवप्रसङ्गात्, सिद्धे वाक्ये विधिमात्रकल्पनायाश्च लघुत्वादित्याह।

## विधिर्वा धारणवत्॥ ३। ४। २०॥

अस्मिन्वाक्य आश्रमाणां विधिरेव, नानुवादः। न चानेकाश्रमविधाने वाक्यभेदः स्यादिति वाच्यम्, अपूर्वत्वेनाश्रमाणां विधेरावश्यकत्वेन वाक्यभेदस्येष्टत्वात्। एकवाक्यताप्रतीतावपि तत्त्यागेनापूर्वार्थविधौ दृष्टान्तमाह "धारणे"ति। मृताग्निहोत्रप्रकरणे तृतीये पितृयज्ञे स्रुचि प्रक्षिप्तं हविराहवनीयं प्रति यदा नीयते तत्र श्रूयते "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती"ति। तत्र स्रुग्दण्डादधस्तात्समिद्धारणविध्येकवाक्यस्य "उपरि ही"त्यादेरनुवादतया प्रतीतावपि स्रुचिस्थहविरुपरिसमिद्धारणस्यापूर्वत्वादेकवाक्यताभङ्गेन विधिर्यथा कल्पितः, तथेहापीत्यर्थः। वस्तुतस्तु ब्रह्मसंस्थत्वमेव पारिव्राज्यलक्षणमस्मिन्वाक्ये विधीयते, आश्रमत्रयानुवादेनानित्यफलत्वेनाश्रमत्रयनिन्दया ब्रह्मसंस्थत्व-

स्यैव नित्यफलत्वेन स्तूयमानत्वात्, यत्स्तूयते तद्विधेयमिति न्यायात् । न च ब्रह्मसंस्थत्वस्य यौगिकार्थस्य गृहस्थादेरपि सम्भवात्कथं ब्रह्मसंस्थत्वं पारिव्राज्य एवेति वाच्यम् । गृहस्थादीनां स्वस्वकर्मासक्ततया ब्रह्मसंस्थत्वायोगात्, परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति । तथा च नास्मिन्पक्षे वाक्यभेद इति । तस्मात्पारिव्राज्यस्य प्रामाणिकत्वात्तेषां च कर्माभावात्सिद्धं ब्रह्मविद्यायाः स्वातन्त्र्यम् ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३ । ४ । २१ ॥

उद्गीथादिविद्यासु श्रूयते "स एष उद्गीथो रसानां रसतमः परमः" इत्यादि । तत्र संशयः, किमिदं कर्माङ्गोद्गीथस्तुतिमात्रमुद्गीथोपासनायां गुणविधायकमिति । पूर्वपक्षे "उद्गीथमुपासीते"त्यादेः सर्वस्यापि स्तुतिमात्रत्वात्कर्माङ्गाश्रितोपासनानुष्ठानासिद्धिः फलम्, सिद्धान्ते कर्माङ्गाश्रितोपासनानां विधेयत्वादनुष्ठानसिद्धिरिति । एवं चाङ्गपरतन्त्राणामपि विद्यानामनुष्ठानसमर्थनेन पुरुषार्थहेतुत्वोक्तौ, अङ्गानाश्रितब्रह्मविद्यायाः पुरुषार्थहेतुत्वं किमु वक्तव्यमिति सिद्धेः पादसङ्गतिः । तत्रानुष्ठेयाश्रमसाम्यश्रुतेः पारिव्राज्यस्यानुष्ठेयत्ववत्, "इयमेव जुहूरादित्य" इत्यादिकर्माङ्गस्तुत्या रसतमत्वादिवाक्यस्य साम्यात्स्तुतिमात्रत्वमिति दृष्टान्तेन पूर्वपक्षयति "स्तुतिमात्र"मिति । रसतमत्वादिवाक्यं सर्वमपि कर्माङ्गविधिस्तुतिमात्रम्, कर्माङ्गोद्गीथाद्युपादानात्, इति चेन्न । कुतः । अपूर्वत्वात् । कर्माङ्गोद्गीथाद्युपासनानां रसतमत्वादिगुणानां

चापूर्वत्वान्मानान्तराप्राप्तत्वाद्यागादिवद्विधेयत्वमेवेत्यर्थः । प्रकृत एव विधिसम्भवे प्रकरणान्तरगतोद्गीथादिविधिस्तुतिलक्षणाकल्पनमन्याय्यतरमिति भावः ॥

**भावशब्दाच्च ॥ ३ । ४ । २२ ॥**

"उद्गीथमुपासीत" "सामोपासीत"इत्यादिविधिशब्दाच्च विधेयत्वमेवेत्यर्थः ॥

**पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥३।४।२३॥**

वेदान्तेषु तत्रतत्र "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी चे"त्याद्या आख्यायिकाः श्रूयन्ते । तत्र संशयः, किमेताः पारिप्लवार्था उत सन्निहितविद्यास्तुत्यर्था इति । पूर्वपक्षे कथानामासां पारिप्लवप्रयोगशेषत्वात्तदेकवाक्यतापन्नशब्दबोध्यविद्यायाः प्राधान्याभावेन पुरुषार्थहेतुत्वासिद्धिः फलम्, सिद्धान्ते तु तत्सिद्धिः, इति मन्तव्यम् । एवं फलपर्यवसानादेवास्य पादसङ्गतिर्बोध्या । तत्र रसतमत्वादेरुद्गीथादिस्तुत्यर्थत्वापेक्षयोपास्यविषयसमर्पकत्वस्य ज्यायस्त्ववत्, कथानामपि विद्यास्तुत्यर्थत्वापेक्षया पारिप्लवशेषत्वं ज्याय इति दृष्टान्तेन पूर्वपक्षयति "पारिप्लवे"ति । अश्वमेधे पुत्रादिपरिवृताय राज्ञे यन्नानाविधकथाकथनं तत्पारिप्लवशब्देनोच्यते । तदर्था एवौपनिषदकथा अपीत्यर्थः । समाधत्ते "ने"ति । कुतः । विशेषितत्वात् । "पारिप्लवमाचक्षीते"त्युपक्रम्य "मनुर्वैवस्वतो राजा" इत्यादिवाक्यशेषे कासांचिदेव कथानां पारिप्लवशेषत्वेन विशेषितत्वादित्यर्थः । तस्मादौपनिषदकथानां न पारिप्लवशेषत्वम् ॥

ननु तर्हि किमर्था इमाः कथा इत्याशङ्क्य, सन्निधिबलाद्विद्यार्था इत्याह ।

**तथा चैकवाक्यतोपबन्धात् ॥ ३ । ४ । २४ ॥**

तथा चोक्तयुक्त्या पारिप्लवार्थत्वाभावे सति सन्निधिबलाद्विद्याशेषत्वं कथानां युक्तम् । एकवाक्यतोपबन्धात्, सन्निहिततत्तद्विद्यैकवाक्यतादर्शनादित्यर्थः । कथानां विद्यास्तुतिलक्षकत्वेन विद्याज्ञानसौकर्यार्थत्वेन च विद्यैकवाक्यत्वं बोध्यम् । तस्मात्सन्निहितविद्याशेषत्वमेव कथानामिति सिद्धम् ॥

एवं पुरुषार्थाधिकरणे ब्रह्मविद्यायाः स्वातन्त्र्यं प्रतिपाद्य तत्प्रसक्त्या प्राप्तं विचारं परिसमाप्य पुरुषार्थाधिकरणस्य फलमाह ।

**अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३ । ४ । २५ ॥**

किं ब्रह्मविद्या स्वफले मोक्षे शेषत्वेन यज्ञादिकर्माण्यपेक्षते न वेति सन्देहे, कथानां विद्याशेषत्वेनापेक्षावत्कर्मणामपि फले विद्याशेषत्वेनापेक्षा न्याय्या, यज्ञादिश्रुत्या विविदिषायां विनियुक्तयज्ञादीनां विषयसौन्दर्यलभ्यायां तस्यामनन्वयादिच्छाविषयज्ञानसाध्ये मोक्षेऽन्वयस्य सम्भवादपेक्षते, इति प्राप्ते, ब्रूमः । आद्याधिकरणे ब्रह्मविद्यायाः कर्मशेषत्वनिरासेन यत्पुरुषार्थहेतुत्वमुक्तं त"दतः"-शब्देन परामृश्यते । अत एव ब्रह्मविद्यायाः स्वातन्त्र्येण पुरुषार्थहेतुत्वादेव । अग्नीन्धनशब्देन स्वस्वाश्रमविहितानि कर्माणि लक्ष्यन्ते । विद्याफले मोक्षे कर्मापेक्षा नास्ति, शुक्तिज्ञानस्येव रजतभ्रमनिवृत्तावित्यर्थः । अयं भावः । यज्ञादिश्रुत्या विविदिषायामेव कर्मणां विनियोगश्रवणान्न मोक्षे कर्मापेक्षा । न च विषयसौन्दर्यलभ्यायां तस्यामनन्वयः कर्मण इति वाच्यम्, ब्रह्मज्ञानेच्छोत्पत्तिप्रतिबन्ध-

कल्मषनिवृत्तिजननद्वारेच्छायामन्वयसम्भवादिति । अस्याद्याधिकरणफलपरत्वान्न पृथक्पादसङ्गत्याद्यपेक्षा ॥

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्** ॥ ३ । ४ । २६ ॥

ब्रह्मविद्या किं स्वोत्पत्तौ कर्माण्यपेक्षते न वेति सन्देहे, पूर्वपक्षे ज्ञानार्थं यज्ञाद्यनुष्ठानाभावः फलम्, सिद्धान्ते तदनुष्ठानावश्यम्भावः । अत्र यज्ञादीनां शमादीनां च ज्ञानसाधनानां निरूपणादस्ति पादसङ्गतिः । तत्र यथा ब्रह्मविद्यायाः प्रमात्वाच्छुक्तिज्ञानस्येव स्वफले कर्मानपेक्षा तथा स्वोत्पत्तावपि न कर्मापेक्षा प्रमात्वादेवेति दृष्टान्तेन प्राप्ते ब्रूमः । विद्यायाः स्वोत्पत्तौ सर्वेषामाश्रमकर्मणामपेक्षाऽस्ति । कुतः । यज्ञादिश्रुतेः, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"त्येवंरूपायाः कर्मणां सर्वेषां ज्ञानसाधनत्वबोधिकायाः श्रुतेः । यद्यप्यत्र विविदिषन्तीति वर्तमानोपदेशः प्रतिभाति न विधिः, तथापि यज्ञादीनां ज्ञानसंयोगस्यापूर्वत्वाद्विधिः कल्प्यः । ब्रह्मानुभवकामो यज्ञादि कुर्यात् । न चानुभवस्य प्रमाणाधीनत्वान्न यज्ञाद्यपेक्षेति वाच्यम् । मलिनान्तःकरणस्य सत्यपि प्रमाणेऽनुभवानुत्पत्तेः, अनुभवोत्पत्तिप्रतिबन्धकान्तःकरणमालिन्यनिवृत्त्यादिपरम्परया ज्ञानस्य यज्ञादिजन्यत्वेन तदपेक्षाया आवश्यकत्वादिति । ननु परम्परया ज्ञानोत्पत्तौ कर्मापेक्षावत्, मोक्षेऽप्यपेक्षाऽस्तु । तत्राह "अश्वव"दिति । यथाऽश्वो योग्यताबलाद्रथचर्यायां विनियुज्यते न लाङ्गलाकर्षणे, तद्वत्कर्मणां मोक्षे योग्यत्वाभावान्नापेक्षेत्यर्थः ॥

ज्ञानोत्पत्तौ बहिरङ्गमुक्त्वा, अन्तरङ्गमाह ।

**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ ३ । ४ । २७ ॥**

यदि कश्चिद्यज्ञादीनां ज्ञानसाधनत्वे विध्यभावाद्ब्रह्मविद्याऽर्थिनाऽननुष्ठेयत्वं मन्यते, तथाऽपि शमदमाद्युपेतस्तु ब्रह्मविद्याऽर्थी स्यादेव । कुतः । तद्विधेः । "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यती"ति तदङ्गतया विद्याहेतुत्वेन तेषां शमादीनां विधानात्, विहितानां चैतेषामवश्यानुष्ठेयत्वादित्यर्थः । यज्ञादीनां ज्ञानसाधनत्वे विधिर्नास्तीति परभ्रान्तिमभ्युपेत्यैवमुक्तं भगवता सूत्रकृता "तथाऽपि त्वि"ति । वस्तुतो विधिरस्तीत्युक्तमेवेति बोध्यम् । यस्मादेवमात्मानं विदित्वा पापेन कर्मणा न लिप्यते, तस्मादेवंविच्छमाद्युपेतो विचारयेदिति श्रुत्यर्थः । अत एवैवंविदिति विद्यासन्निधानाच्छमादीनामन्तरङ्गत्वं, विविदिषासन्निधानाद्यज्ञादीनां बहिरङ्गत्वं बोध्यम् ॥

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३ । ४ । २८ ॥**

बृहदारण्यके श्रूयते प्राणसंवादे "न ह वा अस्यानन्नं जग्धं भवती"ति । अस्य प्राणोपासकस्य यज्जन्तुमात्रस्य जग्धं भक्ष्यं तत्सर्वमनन्नं न भवति ह वा, अदनीयमेव भवतीत्यर्थः । तत्र संशयः, किमियं प्राणोपासकस्य सर्वान्नानुमतिः शमादिवद्विद्याऽङ्गं विधीयते, उत स्तुत्यर्थं कथ्यते, इति । पूर्वपक्षे प्राणविदो भक्ष्याभक्ष्यविभागासिद्धिः फलम्, सिद्धान्ते तत्सिद्धिरिति । अत्र ब्रह्मविद्यासाधनस्य प्राणविद्यायाः स्वतन्त्रपुरुषार्थहेतोः स्तुत्यर्थं सर्वान्नानुज्ञा-

नमिति निरूपणात्पादसङ्गतिः । अत्र विद्यासन्निधानाच्छमांदिवद्विद्याङ्गमेव सर्वान्नानुमतिरिति प्राप्ते ब्रूमः । न सर्वान्नानुज्ञानं विद्याङ्गं विधीयते, विध्यभावात्, श्वादिमर्यादस्यान्नस्य प्राणोपासकेनात्तुमशक्यत्वाच्च । न ह्यशक्ये विधिः सम्भवति । तस्मात्प्राणविद्यायां प्राणस्यान्नमिदं सर्वमिति यच्चिन्तनं विहितं तत्प्रशंसाऽर्थोऽयमर्थवादः । इदमभिप्रेत्याह सूत्रकारः "सर्वान्नानुमतिश्च प्राणात्यय" इति । सावधारणमिदं सूत्रम् । प्राणात्यय एव हि परस्यामापदि सर्वमन्नं सुरावर्जं विद्वांसमविद्वांसं प्रति वाऽदनीयत्वेनानुमतं, न स्वस्थं प्रति । "तद्दर्शनात्", अभक्ष्यभक्षणस्यापत्काल एव श्रुतौ दर्शनादित्यर्थः । तथाहि "मटचीहतेषु कुरुषु" इत्येतस्मिन्ब्राह्मणे चाक्रायणः किलर्षिः कुरुदेशे दुर्भिक्षे जाते क्षुत्पीडितो देशान्तरमागतः कदाचिद्धस्तिपालकदेशं सन्निविष्टस्तेन हस्तिपालकेनार्धभक्षितान्कुल्माषान्कुत्सितान्माषान्भक्षितवान् । तेनोदपानं गृहाणेत्युक्ते सति, उच्छिष्टं मे पीतं स्यादिति प्रतिषिध्य, किमेते माषा उच्छिष्टा नेति हस्तिपालकेनोक्ते, नेत्यत्र हेतुमाह चाक्रायणः । कुल्माषभक्षणं यद्यहं न कुर्यां तर्हि मे जीवनमेव न स्यात्, उदपानं तु तडाकादिषु स्वतो भविष्यतीति । एवमिभ्योच्छिष्टान्माषान्खादित्वा शिष्टं जायाऽर्थं ददौ । तया च भर्तृस्वभावज्ञया निहितानुत्तरदिने ऽपि भक्षितवानिति श्रुतम् । एवं स्वपरोच्छिष्टपर्युषितान्नभक्षणं दर्शयन्त्याः श्रुतेरयं भावः । परस्यामापदि प्राणनिर्वाहार्थमभक्ष्यमपि भक्षणीयम्, स्वस्थावस्थायां विदुषामपि तन्न कर्तव्यमिति । मटचीशब्देन पाषाणवृष्टयो रक्तवर्णाः क्षुद्रपक्षिविशेषा वा ग्राह्याः । तस्मात्सर्वान्नानुज्ञानमर्थवादमात्रम् ॥

## अबाधाच्च ॥ ३ । ४ । २९ ॥

भक्ष्याभक्ष्यविभागशास्त्रस्याबाधाच्चार्थवादमात्रमित्यर्थः । अन्यथा सामान्यशास्त्रं विशेषपरतया नियम्यमानं बाधितं स्यादिति भावः ॥

## अपि च स्मर्यते ॥ ३ । ४ । ३० ॥

अपिच परस्यामापदि विदुषोऽविदुषश्च सर्वान्नभक्षणं स्मर्यते "जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥" इति । तथा "मद्यं नित्यं ब्राह्मणो वर्जयेत्"इति । तस्मात्स्वस्थेन विदुषाऽपि नाभक्ष्यं भक्षितव्यम् ॥

स्मृतिमूलभूतां श्रुतिमप्याह ।

## शब्दश्चातोऽकामकारे ॥ ३ । ४ । ३१ ॥

अस्याभक्ष्यभक्षणस्य प्रतिषेधकः "तस्माद्ब्राह्मणः सुरां न पिबेत्" इत्येवंरूपः शब्दश्चाकामकारे स्वेच्छाकृतप्रवृत्तिनिरासे वर्तत इत्यर्थः । तस्मात्प्राणविदः सर्वान्नानुज्ञानमर्थवादमात्रमिति सिद्धम् । श्रुतौ तस्मादिति सुरापस्य ब्राह्मणस्यात्युष्णसुरासेकस्य मरणान्तिकप्रायश्चित्तस्य सत्त्वादित्यर्थः ।

## विहितत्वाच्चाश्रमकर्मापि ॥ ३ । ४ । ३२ ॥

"सर्वापेक्षे"त्यत्र स्वस्वाश्रमनित्यकर्मणां तत्त्वज्ञानसाधनत्वमुक्तम् । तानि नित्यकर्माण्यमुमुक्षुणा कर्तव्यानि न वेति सन्देहः । तत्र "तमेतं वेदानुवचनेने"त्यादिना विद्यासाधनत्वनिर्णयान्न कर्तव्यानीति प्राप्ते । यद्वा, सर्वान्नानुमतेः शास्त्रान्तरविरोधात्स्तुतित्ववत्, यावज्जीवमि-

त्यादिकर्मनित्यत्वशास्त्रविरोधाद्यज्ञादीनां ज्ञानसाधनत्व-श्रुतिः स्तुतिमात्रम्, अन्यथा नित्यत्वेनावश्यानुष्ठेयत्वं ज्ञानार्थत्वेन काम्यतयाऽवश्यानुष्ठेयत्वाभावश्चेत्येकस्मिन्कर्मणि विरुद्धधर्मद्वयं स्यात्, इति प्राप्ते, ब्रूमः । अमुमुक्षुणाऽप्याश्रमकर्मानुष्ठेयमेव, "यावज्जीवमग्निहोत्र"मित्यादिना विहितत्वादित्यर्थः ॥

नन्वेवं सति विद्यासाधनत्वं कर्मणां न युक्तम्, विरुद्धद्वयापत्तेः इत्युक्तमित्यत आह ।

## सहकारित्वेन च ॥ ३ । ४ । ३३ ॥

विद्यासहकारित्वेनापि सत्त्वशुद्ध्यादिद्वारा विद्यासाधनत्वेनापि नित्यकर्माण्यनुष्ठेयानि, यज्ञादिश्रुत्या विद्यार्थत्वेन विहितत्वादेवेत्यर्थः । यथैकस्य खादिरत्वस्य "खादिरो यूपो भवति" "खादिरं वीर्यकामस्ये"ति शास्त्रद्वयात्क्रत्वर्थत्वेन नित्यत्वं पुरुषार्थत्वेनानित्यत्वं चाविरुद्धम्, तद्वदिहापि शास्त्रद्वयबलात्कर्मणां नित्यत्वं काम्यत्वं चाविरुद्धम् । सिद्धे हि वस्तुनि विरुद्धधर्मद्वययोगो बाधकः । न तु साध्ये कर्मणि, उभयथाऽप्यनुष्ठानसम्भवात् । न च काम्यत्वे "यावज्जीव"मिति नित्यत्वश्रुतिविरोधः, काम्यानुष्ठानेनैव नित्यत्वसिद्धेरिति तात्पर्यम् । अत्र पूर्वपक्षे यज्ञादिश्रुतेः स्तुतिपरत्वं फलम्, सिद्धान्ते विधायकत्वमिति बोध्यम् ॥

ननु ज्ञानकाण्डस्थयज्ञादिश्रुत्या कर्मकाण्डस्थयज्ञाद्यनुवादेन ज्ञानसाधनत्वविधानं न युक्तम्, किन्त्वपूर्वयज्ञादीनामेव, प्रकरणभेदेन कर्मभेदस्यावश्यकत्वात्, इत्यत आह ।

**सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३ । ४ । ३४ ॥**

सर्वथाऽपि नित्यत्वेन ज्ञानार्थत्वेन चानुष्ठेया यज्ञादयो धर्मास्त एव । न कर्मभेदोऽस्ति । कुतः । उभयलिङ्गात्, श्रुतिलिङ्गात्स्मृतिलिङ्गाच्चेत्यर्थः । तथाहि श्रुतिलिङ्गम् । "यज्ञेन विविदिषन्ती"ति यज्ञादिशब्देन प्रसिद्धयज्ञाद्यनुवादेन विद्यासाधनत्वं विधीयते । न तु "मासमग्निहोत्रं जुहुती"त्यत्रेव प्रसिद्धाग्निहोत्रात्कर्मान्तरम् । तत्र हि "जुहुती"ति विधायकाख्यातप्रकृतिभूतस्य जुहोतेरर्थोऽग्निहोत्रमिति युक्तस्तस्य प्रसिद्धाग्निहोत्राद्भेदः, जुहोतेः साध्यहोमव्यक्तिवचनत्वेन सिद्धाग्निहोत्रपरामर्शानुपपत्तेः । अत एव तदेकार्थकाग्निहोत्रशब्दस्य न नित्याग्निहोत्रानुवादकत्वं, व्यक्तिवचनत्वादेव । प्रकृते तु न यज्ञादिर्विधायकाख्यातप्रकृत्यर्थः, विविदिषाया एव तदर्थत्वात् । तस्मादाख्यातप्रकृत्यर्थाद्भिन्नार्थकैर्यज्ञादिशब्दैः प्रसिद्धयज्ञाद्यनुवादेन विद्यासंयोगमात्रमपूर्वं विधीयत इति न कर्मभेदः । स्मृतिलिङ्गमपि । "अनाश्रितः कर्मफलं कार्यं कर्म करोति यः" इति प्रसिद्धमेव कर्म ज्ञानार्थं दर्शयति । तस्मान्न कर्मभेदः ॥

**अनभिभवं च दर्शयति ॥ ३ । ४ । ३५ ॥**

रागादिभिः क्लेशैः "एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते" इत्याद्या श्रुतिर्ब्रह्मचर्यादेराश्रमकर्मणो मनःशुद्धिद्वारा ज्ञानसाधनत्व आत्मानभिभवं लिङ्गं दर्शयतीत्यर्थः । तस्मात्सर्वेषामाश्रमनित्यकर्मणां ज्ञानार्थत्वमिति सिद्धम् ॥

**अन्तरा चापि तु तद्दृष्टेः ॥ ३ । ४ । ३६ ॥**

*Objection* "It is the form of the cognition that is cognised "

*Reply* Not so, as what is cognised is something outside the cognition If the cognised were of the form of the cognition, then the cognition would be in the form '*I* am blue' and not as '*this* is blue'

*Objection* "As the form of every cognition is distinct and peculiar to itself, some cognitions are apprehended in the form of 'I,' and others in that of 'this'"

*Reply* But no particular cognition is formed to be appearing always in the form of 'I', as we have those pertaining to the form of 'blue' &c (which always appear as *blue*) Because that which one person will perceive as 'I', another person will perceive as 'you'

*Objection* "It is only when one cognises himself then the cognition is in the form of 'I' "

*Reply* Then, is there a cognition of 'something else' also? (this the Pūrvapakshi denies as all cognitions are only self-cognisable according to him)

*Objection* (No, but) it often happens that one's own form is, by mistake, cognised as 'something else' "

*Reply* When this difference is directly perceived, why do not you accept it as real?

*Objection* "Well, the direct perception is a mistaken one, as has been well said 'after a cognition there appears a factor existing outside the cognition, and this idea of difference, with regard to cognition which is one and identical, must be regarded as mistaken' "

How do you prove this?

"The identity of the cognition is proved by means of Inference"

*Reply* An inference could be possible only after the sense-perception has been proved to be true and not false—and the

sense-perception you would prove to be mistaken, by means of Inference,—this would certainly be a case of queer inter-dependence We grant, for the sake of argument, that the distinction is mistaken, but how is it that it is cognised only at particular places and at definite times? There certainly is no cause for restricting the assumption or imposition to a particular time and place

*Objection* "The restriction of the assumption would be due to the peculiarities of the *vāsanā* (of the cogniser)"

*Reply* This is not possible, as there is no reason for restricting the operation of the *vāsanā* to any particular time or place If however, there is an external object, then in whichsoever place that object would exist, at that place we would have its perception, and to that place would pertain the *vāsanā* preceding that cognition When there is no object however, then to what would be due the restriction of the place? Nor, without a particular cause, is a particular effect possible

*Objection* "As there would be no external object, the diversity could belong to the *vāsanās* alone, and this diversity is due, as in the case of your 'object', to the diversity of the causes of these *vāsanās*, and this process is beginningless"

*Reply* If the diversity of *vāsanās* were something other than the form of the cognition, then what would be the difference of one *vāsanā* from another? If however it be something other than the cognition, then why should you be so perverse to the existence of the *object* (something distinct from the cognition) and thereby upset the common notions of all men? By what too this form (of *vāsanās*) imposed outside? By cognition? Does this exterior imposition consist in the apprehension in itself of the form? Or is it something else? If the former, then it would come to this that, that which is its *right* apprehension is also the *wrong* apprehension! As the apprehension of the form as pertaining to the *cognition* would be right, while that pertaining to the *outside* would be wrong If however, it were something else, then there could be no sequence in the appearance

of the two, as the cause, in the shape of the cognition, would be momentary (according to the *Pūrvapakshi-Bauddha*), nor could one and the same thing, *at one and the same time*, be perceived as *right* and *wrong* And yet there is no other way save those of *sequence* and *simultaneity*, wherein existing, the cognition could apprehend the form in itself and also impose it outside.

Then again, if the *blue object* were only in the form of the *cognition*, then that cognition alone could apprehend it, of which this *blue* would be the form, and it could not be perceived by another person As a matter of fact, however, we often find a single object being perceived by many persons, whenever all these persons have their attention turned towards it We often find people saying 'I have seen that which you have seen' From this we conclude that the object is not in the form of the cognition.

**Page 130]** There are some extremists who deny even this idealistic form to the objects of perception, all of which they regard as unreal But for these people there could be no restriction as to particular effects following only from particular causes, or that as to definite purposes being served only by certain definite objects Because when there is no object, there is nothing that would be the cause of another, or everything would be the cause of everything, nor could there be any analogy, or want of analogy, in useful poses to be served, because of the absence of any differences This has been well said by the revered teachers—'Those that are satispurified with imaginary sweets, and those that have tasted real sweets that they have obtained,—would both have in their body the same organic changes (if the sweets had no real existence)"

*Objection* "The distinction in such cases would be due to the differences of *vasanā*"

*Reply* If the *vāsanā* were the cause of the particular purposes served in the world, then your theory differs from ours only in name—what you call '*vāsanā*' we call '*artha*,' '*object*' If the *vāsanā* be said to be of the nature of a cognition, then, in the

absence of an object, any peculiarity in it would be without cause, baseless, as the only factor of 'cognition' would be common in all cases And if you admit of peculiarities in the form of cognitions, as well as in some other shape, then that would amount to the admission of 'objects'

Then too, in accordance with this theory, the cognition of *blue* could not appear at certain times only, and not at all times, as the series of moments capable of producing it would continue always and everywhere If they did not continue, then the cognition would not be possible at any future time

*Objection* "The cognition not standing in need of anything besides itself, and the fruition of the cause appearing only at particular times, it would follow that the effect of these also should appear only at particular times"

*Reply* The "fruition" of the cause is nothing else save its tending towards the production of the effect, and this too would depend only upon self apprehension, and as such it could not appear only at certain times As a matter of fact, a direct perception is always such as appears only at certain times And this perception applies to the external object, which is cognised as pertaining to definite points of place and time, and hence it is this perception which sets aside all arguments brought forward to prove the non-existence of that object And thus your premises become open to the fallacy of being '*kālātyayāpadishta*'

Thus has Number been explained

---

*Text (86).—Dimension is that which forms the basis of all measurement It is of four kinds (1) Minute, (2) Large, (3) Long and (4) Short (vii-i-8, 17) The Large again is of two kinds eternal and non-eternal To the eternal kind belongs the highest extensiveness of the Ākāça, Space, Time*

*and Self, while the non-eternal exists in the Triad and the rest (vii-i-22, 24, 25, 16) The Minute again is of two kinds—eternal and non-eternal The eternal is that in the Atom and in the Mind, and this is what is known as* 'Pārimāndalya' *(the atomic measure) The non-eternal is the Diad (vii-i-11, 13, 17) Though such things as the Lotus, the myrobolan fruit, the Bēl and the like, are spoken of as* minute *and* large, *yet the idea of minuteness can be applied to these only-indirectly (or figuratively), being based upon the existence in them of greater or less dimension as compared with something else* Longness *and* Shortness *cohere with such* Largeness *and* Minuteness *as are caused In the case of such things as a piece of fuel, a sugar-cane and the bamboo, even though they are found to be distinctly* long, *yet they are figuratively spoken of as 'short,' in view of their greater or less length as compared with that of something else (vii-i-9, 10, 17)*

*Of the non-eternal Dimensions, all the four (the Long, the Short, the Large and the Small) are caused by* (1) *Number,* (2) *Dimension and* (3) *Aggregation*

(1) *The plurality of number appears in the atoms and the diads, according to the will of God, and when these atoms and diads bring about the effects in the shape of the triad and the like, the said plurality creates in these a certain* length *and* largeness, *simultaneously with colour and the other qualities* (2) *In a case where the created object is caused by two large components, as also when it is caused by many large components, the* largeness *of the object is due to* largeness *of the*

*component parts, and not to their* plurality, *as even in a case where the number of the components in two objects is the same, we find a difference in their magnitudes (if there happens to be a difference in the volumes of the components of those objects)* (3) *As for Aggregation, we have it in the case where two balls of cotton are rolled into a single ball,—where what the Conglomeration produces in this single double ball, is, not* plurality *and* largeness, *but* largeness *only, by means either of conjunctions of the loose particles composing the balls of cotton, or of the mutual conjunction of the particles of one ball with those of the other We infer this from the fact that even in a case where the number, the largeness (or magnitude) and the dimension of the components of two objects are the same, there is yet a difference in the magnitudes of the objects themselves (i e in two objects where the conglomeration of particles is loose and closely compact* )

*It is the duality of two atoms which produces the minuteness in the diad In the triad, its* length *is produced, just like its* largeness, *by means of the* plurality, *the* largeness *and* homogeneous conglomeration, *of its material cause (the component molecules) In the Diad* shortness *is produced, just like its minuteness, through the duality of number*

*Question* "*What is the difference between* largeness *and* length *as belonging to triads, as also between* minuteness *and* shortness *belonging to diads ?*"

*Answer There is a vast difference between the said* largeness *and* length, *as is apparent from the fact that we find people, saying with regard to a* large substance—"*bring a* long *thing (and not*

*this* large *one'), and similarly, with regard to the* long *thing—'bring the* large *thing ( and not this* long *one)'—where a clear distinction is made between the two As for the difference between* minuteness *and* shortness, *it is clearly perceptible to those* ( yogis ) *who are capable of directly perceiving them ( in the* atom *and the* Diad, *which are not perceptible to the ordinary man)*

*All these four kinds of Dimension are* caused , *and as such, come to be destroyed on the destruction of their substratum*

## Commentary

**Page 133 ]** The author now proceeds to describe Dimension *Parimānam &c*, 'Measurement' consists in the recognition of the minuteness, largeness, length or shortness of a thing, and in an expression of these qualities by words, the basis of this 'measurement' is what is called 'Dimension' By this declaration the author means to assert and prove, by showing its effect, the existence of this quality, for one who would deny its existence As we have already shown above how an idea or cognition proves the existence of what is cognised, which is its substratum

*Objection* "But how can the words ('anu' &c) prove the existence of the quality, for certainly the word is not of the nature of an *object*, if it were so, then the uttering of the words 'food,' 'fire' and 'sword,' would lead to the *filling, burning* and *cutting*, respectively, of the mouth Nor can the word be said to be born of an object, as it is a well known fact that words are produced by the air within the body striking against the throat and other parts of the organ of speech And certainly, that which is not of the nature of the *object*, nor is born of it, could never be a *Prātipadika*, the basic noun denoting a certain object, if it could be so, it would lead to a deal of disorder"

*Reply* The above reasoning is not right, if the word were produced entirely by the inner air striking against the walls of

the throat, then its utterance could not even prove the existence of the *desire to speak*, on the part of the speaker, as it would not originate from any such desire, and this would justify such an assertion as that words do not indicate a desire to speak on the part of the speaker—which would be like the incoherent mumblings of a drunkard

*Objection* "The *desire to speak* may be regarded as the remote cause of the word, operating through the striking of the inner air, and as such the word would point to the existence of such a desire"

*Reply* In the same manner would the word also indicate the cognition of the object expressed by the word, as a desire to speak is always preceeded by a perception of the object desired to be spoken of

*Objection* "In the case of a cheat we find that he has a desire to speak of objects which he has never perceived"

*Reply* We find that even though a man may not have the desire to speak of a certain object, yet, through a mistake, he gives utterance to words expressing that same object This has been well described by the teachers thus 'In the case of deluded or mistaken persons we find a word really expressive of one object being used with reference to a totally different object (and the concomitance of desire with utterance is as invariable as that of the utterance and the perception of the object expressed)'

*Objection* "It is not possible for words expressive of one object being uttered through a desire to speak of a totally different object As if there were any such irregularity in the concomitance of a thing with what has been universally recognised as its necessary and invariable cause, then there would be an utter irregularity and disorder in the whole world process Hence even in the case of the mistaken person, even though the desire to speak of a certain thing (of which he unconsciously speaks) may not be quite perceptible, yet it must be admitted that it does appear quickly, in an indistinct form,

प्राप्तासि नियतं पुत्रानीप्सितान् परमद्युतीन् ॥ १३ ॥
[1]पुत्रार्थे धर्म्मसंयुक्ता यस्यते मतिरीदृशी ।
[2]ततः प्रीतोऽभवद्राजा श्रुत्वैतदृषिभाषितम् ॥ १४ ॥
सुमन्त्रप्रभृतींश्चैवमब्रवीन्मन्त्रिसत्तमान् ।
[3]गुरूणामाज्ञयैषां मे यज्ञसम्भारविस्तरः ॥ १५ ॥
आशु सम्भृयतां कृत्स्नो युष्माभिर्मम [4]शासनात् ।
यथा न भवति च्छिद्रं केनचित् तद्विधीयताम् ॥ १६ ॥
सुमन्त्राधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम् ।
[5]सरय्वा[6]श्चापरे पारे यज्ञभूमिर्विधीयताम् ॥ १७ ॥
[7]शान्तयश्चैव तत्रैव क्रियन्तां विधिनिर्मिताः ।
[8]शक्योऽवाप्तुमयं यज्ञो नाशक्तेन महीक्षिता ॥ १८ ॥
न चैवाश्रद्दधानेन न चाल्पद्रविणेन च ।
[9]छिद्रं हि मृगयन्त्यत्र यज्ञघ्ना ब्रह्मराक्षसाः ॥ १९ ॥

1 G 16 पुत्रार्थं &c 2 For this and the following line B 14 तत. प्रीतो ऽभवद्राजा श्रुत्वा तु द्विजभाषित । अमात्यानब्रवीद्राजा हर्षेणेद शुभाक्षर ॥ 3 For this, and the following three lines, B 15 गुरूणां वचनाच्छीघ्र सभारा सभ्रियन्तु मे । समर्थाधिष्ठितश्चाश्व सोपाध्यायो विमुच्यता ॥ 4 G 18 चाज्ञया, but P has शासनात 5 For this, and the following line B 16 सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयता । शान्तयश्चाभिवर्धन्ता यथाकल्प यथाविधि ॥ 6 G 19 श्च परे तीरे &c 7 G 20 शान्तयश्चैव क्रियन्ता विधिना विधिनिर्म्मिता । &c , but P agrees with our text 8 For this, and the following line B 17 शक्य कर्त्तुमय यज्ञ सर्वेणापि महीक्षिता । नापराधो भवेत कष्टो यद्यस्मिन क्रतुसत्तमे ॥ 9 For this, and the following line, B 18 छिद्र हि मृगयन्त्येते विद्वासो ब्रह्मराक्षसा । विधिहीनस्य यज्ञस्य सद्यः कर्त्ता विनश्यति ॥

[1]विघ्नितस्य च यज्ञस्य संहर्त्तापि विनश्यति ।
[2]तद्यथायमविघ्नेन मम यज्ञः समाप्यते ॥ २० ॥
तथा समस्तैर्यज्ञोऽयं भवद्भिः संविधीयताम् ।
[3]तथेति च नृपस्याज्ञां मन्त्रिणः प्रतिगृह्य ते ॥ २१ ॥
यथाज्ञप्तमशेषेण चक्रुर्नृपतिशासनम् ।
[4]ततो द्विजास्ते राजानमामन्त्र्य प्रतिपूज्य च ॥ २२ ॥
अविघ्नमस्त्वित्युक्त्वा च प्रतिजग्मुर्यथागतम् ।
[5]तेष्वथ द्विजमुख्येषु [6]सुगतेषु नराधिपः ।
शेषानुष्ठानमाज्ञाप्य विवेशान्तःपुरन्ततः ॥ २३ ॥

आदिकाण्ड अश्वमेधारम्भः ॥

XII

पुनः प्राप्ते वसन्ते [7]च पूर्णः संवत्सरोऽभवत् ।
अभिवाद्य वशिष्ठं [8]स न्यायतः प्रतिपूज्य च ॥ १ ॥

1 G 22 विघ्ने तु तस्य &c, but P has विघ्नितस्य च &c 2 For this, and the following line B 19 तद्यथा विधिपूर्व मे क्रतुरेष समाप्यते । तथा विधान क्रियता समर्था करणेष्विह ॥ 3 For this, and the following line B 20 तथेति च तत सर्वे मन्त्रिण प्रत्यपूजयन । पार्थिवेन्द्रस्य तद्वाक्य यथाज्ञप्तमकुर्वत ॥ 4 For this, and the following line B 21 ततो द्विजास्ते धर्मज्ञमस्तुवन पार्थिवर्षभ। अनुज्ञातास्तत सर्वे पुनर्जग्मुर्यथागत ॥ 5 For this and the following line, B 22 (a) गताना तेषु विप्रेषु मन्त्रिणस्तान्नराधिप ॥ विसर्जयित्वा स्व वेश्म प्रविवेश महामति ॥ (a) गताना is ungrammatical here V has गताना तु द्विजातीना &c 6 G 25 गतेषु स &c 7 B XIII 1 and G XII 1 तु &c, but P has च &c Between the two lines of this Sl in our text —B reads the line—प्रसवार्थं ततो यष्टु हयमेधेन वीर्यवान् ॥ 8 B 2 च &c

अब्रवीत् प्रसृतं वाक्यं [1]प्रसवार्थे नराधिपः ।
यज्ञः संक्रियतां शीघ्रं यथाशास्त्रमनुष्ठितः ॥ २ ॥
यथा न विघ्नः क्रियते यज्ञघ्ने नेह केनचित् ।
[3]भवान् स्निग्धः सुहृच्चैव गुरुश्च परमो मम ॥ ३ ॥
वोढव्यो [4]भवता चैव भारो [5]यज्ञार्थ उद्यतः ।
तथेति च स राजानमब्रवीद्द्विजसत्तमः ॥ ४ ॥
करिष्ये सर्वमेवैत[6]द्भवतो यदभीप्सितम् ।
ततोऽब्रवीद्द्विजान् [7]सर्वान् यज्ञकर्मसु निष्ठितान् ॥ ५ ॥
[8]स्थापत्ये चेह स्थाप्यन्तां वृद्धाः परमधार्मिकाः ।
[9]कर्मान्तिका लिपिकरा वर्द्धकाः [10]खनकास्तथा ॥ ६ ॥
गणकाः शिल्पिनश्चान्ये तथैव नटनर्तकाः ।
[11]ततोऽब्रवीच्छास्त्रविदः पुरुषान् सुबहुश्रुतान् ॥ ७ ॥

---

1 G 2 प्रसवार्थ &c B 2 प्रसवार्थ द्विजोत्तम　2 For this and the following line B 3 यज्ञो मे क्रियता ब्रह्मन यथोक्त मुनिपुगव । यथा न विघ्ना क्रियन्ते यज्ञाङ्गेषु विधीयता ॥　3 For this and the following line, B 4 भवान स्निग्ध सुहृन्मह्य गुरुश्च परमो (a) महान । वोढव्यो भवता चैव भारो यज्ञस्य चोद्यत ॥ (a) S has भवान्　4 G 4 भवता चैव &c P भवतैवैष &c　5 G 4 यज्ञार्थमुद्यत but P has यज्ञार्थउद्यत ।　6 B 5 भवता यत समर्थित ।　7 B 6 वृद्धान &c 8. For this line, B 6 स्थापत्ये निष्ठिताश्चैव वृद्धान्परमधार्म्मिकान ॥ 9 For this and the following line B 7 कर्म्मान्तिकान (a) शिल्पकारान (b) वर्धकीन खनकानपि । गणकान शिल्पिनश्चैव तथैव नटनर्त्तकान ॥ a V & S have शिल्पकरान (b) V has वर्धकान &c　10 G 6 खनका अपि, but P has खनकास्तथा　11 B 8 तथा शुचीन शास्त्रविद &c

यज्ञकर्म समीहन्तां भवन्तो राजशासनात् ।
[1]इष्टीश्च बहुसाहस्रीः क्षिप्रं चाहूयत द्विजान् ॥ ८ ॥
[2]अवकाशाः क्रियन्तां च [3]राज्ञां बहुगुणान्विताः ।
ब्राह्मणावसथाश्चैव [4]क्रियन्तां शतशः शुभाः ॥ ९ ॥
भक्ष्यान्नपानैर्बहुभिः समुपेताः सुनिष्ठिताः ।
[5]तथा पौरजनस्यापि कर्त्तव्या बहुविस्तराः ॥ १० ॥
आवासा बहुभक्ष्यान्नाः सर्वकामैः [6]सुपूजिताः ।
[7]तथा जानपदं चैव कर्त्तव्यं बहुभोजनम् ॥ ११ ॥
दातव्यमन्नं [8]विविधं [9]सत्कृतन्नतु पीडया ।
सर्वे वर्णा यथा पूजां प्राप्नुवन्ति सुसत्कृताः ॥ १२ ॥
[10]नापमानः प्रयोक्तव्यः कामक्रोध[11]हृतः क्वचित् ।

---

1 G 8 इष्टि च बहुसाहस्री शीघ्र &c but P agrees with our text B 9 इष्टका बहुसाहस्री शीघ्रमानीयतामिति 2 G 9 and B 9 उपकार्या. &c but V and S have औपकार्या &c 3 B 9 राज्ञो &c but V has राज्ञा &c 4 B 10 कर्तव्या. &c. 5 For this, and the following line, B 11 (a) तथा पौरजनस्यापि कर्त्तव्याश्च सुविस्तरा । आगताना सुदूराच्च पार्थिवाना पृथक पृथक ॥ (a) V has पौरजानपदस्यापि &c 6 G 11 प्रपूरिता, but P has सुपूजिता. Before the next line of Sl 11 of our text B (12 13) reads the following three lines, which, however, are wanting in V —वाजिवारणशालाश्च तथा शय्यागृहाणि च । भटाना महदावासा वैदेशिकनिवासिना ॥ आवासा बहुभक्ष्या वै सर्वकामैरुपस्थिता· । 7 For this line B 13 तथा पौरजनस्यापि जनस्य बहुशोभन ॥ 8 B 14 विधिवत 9. G 12 सत्कृत्य &c, but P has सत्कृत &c, B 14 सत्कृत्य न तु लीलया 10 For this Sl B 15 न चावज्ञा प्रयोक्तव्या कामक्रोधवशादपि । यज्ञकर्म्मसु येऽव्यग्रा· पुरुषाः शिल्पिनस्तथा ॥ 11 G 13 कृत· &c, but P has हृत &c

यज्ञकर्मसु [1]ये चाग्राः पुरुषाः शिल्पिनस्तथा ॥ १३ ॥
[2]तेषामपि विशेषेण पूजा कार्या यथाक्रमम् ।
यथा सर्वं सुविहितं न किञ्चित् परिहीयते ॥ १४ ॥
तथा भवन्तः कुर्वन्तु [3]प्रीतियुक्तेन चेतसा ।
ततः सर्वे समागम्य वशिष्ठमिदमब्रुवन् ॥ १५ ॥
[4]यथोक्तं तत् करिष्यामो न किञ्चित् परिहास्यते ।
ततः सुमन्त्रमाहूय वशिष्ठो वाक्यमब्रवीत् ॥ १६ ॥
निमन्त्रयस्व नृपतीन् पृथिव्यां ये च धार्मिकाः ।
ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रांश्चैव सहस्रशः॥१७॥
समानयस्व सत्कृत्य सर्वदेशेषु मानवान् ।
मिथिलाधिपतिं शूरं जनकं [5]दृढविक्रमम् ॥ १८ ॥
[6]निष्ठितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितम् ।
तमानय महाभागं स्वयमेव सुसत्कृतम् ॥ १९ ॥
[7]पूर्वं सम्बन्धकं ज्ञात्वा ततो वाक्यं ब्रवीम्यहम् ।
तथा काशिपतिं स्निग्धं सततं प्रियवादिनम् ॥ २० ॥
[8]वयस्यं राजसिंहस्य तमानय यशस्विनम् ।

---

1 G 13 ये चाग्र्या. &c , P ये ऽव्यग्रा &c 2 Between the two lines of this Sl of our text B (16) reads the line, ये स्यु सम्पूजिता सर्वे वसुभिर्भोजनेन च ॥ 3 G 15 प्रीतिस्निग्धेन &c 4 Before this Sl of our text B (18) reads the line यथेष्ट तत्सुविहितं न किचित्परिहीयते ॥ 5. B 21 सत्यवादिन 6 This line is wanting in B, but V. and S have it 7 For this line B 22 पूर्वं सम्बन्धिनं ज्ञात्वा तत पूर्वं ब्रवीमि ते । 8 For this line B 23 सद्वृत्त देवसकाश स्वयमेवानयस्वह ।

तथा केकयराजानं वृद्धं परमधार्मिकम् ॥ २१ ॥
श्वशुरं राजसिंहस्य सपुत्रं [1]त्वमिहानय ।
अङ्गेश्वरं [2]तथा स्निग्धं लोमपादं सुसत्कृतम् ॥ २२ ॥
[3]सुव्रतं देवसङ्काशं स्वयमेव समानय ।
[4]प्राच्याश्च सिन्धुसौवीराः सुराष्ट्रे ये च पार्थिवाः॥२३॥
[5]दाक्षिणात्या नरेन्द्राश्च सर्वानानय मा चिरम् ।
अतिस्निग्धाश्च येऽन्येऽपि राजानः पृथिवीश्वराः॥२४॥
[6]तानप्यानय वै क्षिप्रं सानुगान् [7]सहबान्धवैः ।
वशिष्ठवाक्यं तच्छ्रुत्वा सुमन्त्र[8]स्त्वरितस्तदा ॥ २५ ॥
व्यादिशत् पुरुषांस्तत्र राज्ञामानयने [9]बहून् ।
[10]स्वयमेव च धर्मात्मा प्रययौ राजशासनात् ॥ २६ ॥
सुमन्त्रः प्रयतो भूत्वा समानेतुं महीक्षितः ।

1 B 24 and G 22 तमिहा &c, but V and P have त्वमिहा &c 2 B 25 महेष्वासं रोमपाद &c, but V has च राजान रोमपाद &c 3 For this line B 25 वयस्य राजसिंहस्य(a)सपुत्र तमिहानय ॥ (a) V and S have समानय यशस्विन Between the two lines of this Sl of our text—B (26 and 27) reads—तथा कोसलराजान भानुमन्त सुसत्कृत । मगधाधिपति शूर सर्वशास्त्रविशारद ॥ (a) प्राप्तिज्ञं परमोदार सत्कृत पुरुषर्षभ । राज्ञ शासनमादाय चोदयस्व नृपर्षभान् ॥ (a) This line is wanting in V 4 For this, B 28. प्राचीनान सिधुसौवीरान सौराष्ट्रे याश्च पार्थिवान् ॥ 5 For this Sl B 29 दाक्षिणात्यान्नरेन्द्राश्च समस्तानान यस्वह। सन्ति स्निग्धाश्च ये चान्ये राजान' पृथिवीतले ॥ 6 For this line B 30 तानानय यथाक्षिप्र सानुगान् सहबान्धवान् । एतान्दूतैर्महाभागैरानयस्व नृपाज्ञया ॥ 7 G 25 सहबान्धवान्, but P has सहबान्धवै । 8 B 31 त्वरितं &c 9 B 31 शुभान् 10 For this and the following line B 32 स्वयमेव हि धर्मात्मा(a)प्रयातो मुनिशासनात । सुमन्त्रस्त्वरितो भूत्वा समानेतुं (b) महामति ॥ (a) V has प्रययौ &c (b) V has महीक्षितः

[1]ततः कर्मान्तिकाः सर्वे वशिष्ठाय [2]महर्षये ॥ २७ ॥
[3]सर्वान् निवेदयन्तिस्म [4]यज्ञियानुपकल्पितान् ।
ततः प्रीतो द्विजश्रेष्ठस्तान् सर्वान् [5]पुनरब्रवीत् ॥२८॥
[6]भवद्भिर्न यथा यज्ञे [7]परिहास्येत किञ्चन ।
[8]नावज्ञया प्रदातव्यं किञ्चिद्वा केनचित् क्वचित् ॥२९॥
[9]अवज्ञया हि यद्दत्तं दातुस्तद्दोषमावहेत् ।
ततः कैश्चिदहोरात्रै[10]रुपायाता महीक्षितः ॥ ३० ॥
[11]रत्नान्यादाय बहवो राज्ञो दशरथस्य ह ।
ततो वशिष्ठः सुप्रीतो राजानमिदमब्रवीत् ॥ ३१ ॥
[12]उपायाता नरव्याघ्र राजानस्तव शासनात् ।
[13]मया हि सत्कृताः [14]सर्वैर्यथार्हं [15]पूजिताश्च ते ॥३२॥
[16]यथावत् संभृतं सर्वं पुरुषैः स्वैः समाहितैः ।

1 B 33 ते च &c 2 V च धीमते 3 B 33 सर्व &c 4 B यज्ञे यदुपकल्पित । 5 B 34 मुनिरब्रवीत, but V has पुनरब्रवीत 6 This line is wanting in B 7 G 29 परिहीयेत &c, but P has परिहास्येत &c 8 For this line B 34 अवज्ञया न दातव्य कस्यचिल्लीलयापि वा ॥ 9 For this line B 35 अवज्ञया कृत हन्याद्दातार नात्र संशय ॥ 10 B 35 and G 30 रुपयाता &c, but P has रुपायाता &c 11 B 36 बहूनि रत्नान्यादाय &c 12 B 37 उपयाता &c 13 B मयापि &c. 14 B 37 and G 32 सर्वे यथार्हं &c 15 B राजसत्तम, but S and V have राजसत्तमा 16 For this, and the following Slokas B 38-42 यज्ञिय च कृत सर्व पुरुषै सुसमाहितै । निर्यातु च भवान यष्टु यज्ञायतनमन्तिकात ॥ सर्वकामैरुपहृतैरुपेत वै समन्तत । द्रष्टुमर्हसि राजेन्द्र मनसेव विनिर्म्मित ॥ (a) तथा वसिष्ठवचनादृष्यशृङ्गस्य चोभयो । दिवसे शुभनक्षत्रे निर्यातो जगतीपति ॥ ततो वसिष्ठप्रमुखा सर्व एव द्विजोत्तमा. । ऋष्यशृङ्ग पुरस्कृत्य यज्ञकर्म्मारभस्तदा ॥ यज्ञवाट गताः सर्वे यथाशास्त्र यथाविधि । श्रीमाश्च सहपत्नीभीराजा दीक्षामुपाविशत् ॥ (a) V यथा &c

सुमन्त्रं चाब्रवीद्धृष्टो यज्ञः संभारसंभृतः ॥ ३३ ॥
सर्वकामै[1]रुपकृतैरुपपन्नः समन्ततः ।
क्रियतां वचनं मेऽद्य ऋष्यशृङ्गस्य चैव हि ॥ ३४ ॥
शुभे नक्षत्रदिवसे निर्यातु जगतीपतिः ।
ततो वशिष्ठप्रमुखाः सर्व एव द्विजातयः ॥
[2]अश्वमेधं पुरस्कृत्य कर्माण्यारेभिरे तदा ॥ ३५ ॥

आदिकाण्डे यज्ञारम्भः ॥

---

## XIII

[3]अथ प्रदक्षिणं कृत्वा भूमिं प्राप्ते तुरङ्गमे ।
सरय्वा उत्तरे कूले यज्ञभूमिरकल्प्यत ॥ १ ॥
[4]ऋष्यशृङ्गपुरोगैस्तैर्याजकैः परिनिर्मिता ।
अश्वमेधे महायज्ञे राज्ञस्तस्य महात्मनः ॥ २ ॥
[5]वेददृष्टेन विधिना ततस्ते वेदपारगाः ।

---

1 G 34 रुपहितै &c , P रुपहृतै &c 2 After this line P. has the line यज्ञवाट गता॰ सर्वे यथाशास्त्र यथाविधि ॥ 3 For this Sl B XIV 1 अथ सवत्सरे पूर्णे तस्मिन प्राप्ते तुरङ्गमे । सरय्वाश्चोत्तरे तीरे राज्ञो यज्ञोऽभ्यवर्तत ॥ 4 For this Sl B 2 ऋष्यशृङ्ग पुरस्कृत्य कर्म्म चक्रुर्द्विजर्षभा । अश्वमेधे महायज्ञे राज्ञोऽस्य सुमहात्मन ॥ 5 For this, and the following two Shlokas, B 3 10 कर्म्म कुर्वन्ति विधिवद्याजका वेदपारगा । यथाविधियथा न्याय परिक्रामन्ति शास्त्रत ॥ प्रवर्ग्य शास्त्रतः कृत्वा तथैवोपसद द्विजा । चक्रुश्च विधिवत् सर्वमधिक कर्म्म शास्त्रत ॥ अभिपूज्य तदा हृष्टा सर्वे चक्रुर्यथा विधि । प्रात सवनपूर्वाणि कर्म्माणि मुनिपुङ्गवाः । ऐन्द्रश्च विधिवद्दत्तो राजा चाभिषुतोऽनघ । मध्यन्दिन च सवन प्रावर्त्तत यथाक्रम ॥ तृतीयसवन चैव (a) राज्ञोऽस्य सुमहात्मन. । चक्रुस्ते शास्त्रतो दृष्ट्वा यथा ब्राह्मणपुङ्गवाः ॥ आहुयांचक्रिरे

प्रवर्ग्यादिक्रमं चक्रुः कल्पसूत्रविधानतः ॥ ३ ॥
प्रायश्चित्त[1]विधानानि चक्रुश्चानवशेषतः ।
सवनानि च सर्वाणि यथाकालं प्रचक्रिरे ॥ ४ ॥
नासीदपकृतं तेषां स्खलितं [2]वापि किञ्चन ।
परेण ह्यवधानेन तं क्रतुं ते प्रचक्रिरे ॥ ५ ॥
[3]न तेष्वहःसुकृपणाः [4]क्षुत्क्षामो वाप्यदृश्यत ।
तिर्यक्ष्वपि कुतोऽन्येषु भूतेष्वपरितर्पितः ॥ ६ ॥
कोटिशो ब्राह्मणास्तत्र तथा शतसहस्रशः ।
तस्मिन् यज्ञ उपावृत्ता नानादेशनिवासिनः ॥ ७ ॥
[5]नाविद्वान् ब्राह्मणस्तत्र नाशतानुचरो द्विजः ।
नानाहिताग्निर्नायज्वा नाव्रती पतितो न च ॥ ८ ॥
[6]ब्राह्मणानां सहस्राणि [7]तानि तत्र महामखे ।

---

तत्र शक्रादीन विबुधोत्तमान । ऋष्यशृङ्गादयो मन्त्रै शिक्षाक्षरसमन्वितै ॥ गोतिभिर्म्मधुरै स्निग्धैर्मन्त्राह्वानैर्यथार्हत । होतारो ददुरावाह्य हविर्भागान दिवौकसाम ॥ न चाहुतमभूत्तत्र स्खलित वा न किञ्चन । दृश्यते ब्रह्मवत सर्व क्षेमयुक्त हि चक्रिरे ॥ (a) S यज्ञेऽस्य &c 1 P विधानञ्च &c 3 G 5 चापि &c 3 For this, and the following two Slokas, B. 11 न तेष्वह सु श्रान्तो वा क्षुधितो वा न दृश्यते । नाविद्वान् ब्राह्मण कश्चिच्चाशतानुचरस्तथा ॥ 4 G o क्षुतक्रमो वापि दृश्यते, but P agrees with our text 5 G 8 नाविद्वानागतस्तत्र &c. but P agrees with our text 6 For this, and the following 14 lines B 12-15 ब्राह्मणा भुञ्जते नित्य नाथवन्तश्च भुञ्जते । तापसा भुञ्जते चापि श्रमणाश्चैव भुञ्जते ॥ वृद्धाश्च व्याधिताश्चैव स्त्रीबालाश्च तथैव च । अनिश भुञ्जमानाना न तृप्तिरुपलभ्यते ॥ दीयता दीयतामन्न वासासि विविधानि च । इति सञ्चोदितास्तत्र तथा चक्रुरनेकशः ॥ अन्नकूटाश्च दृश्यन्ते बहव. पर्वतोपमा । दिवसे दिवसे तत्र सिद्धस्य विधिवत्तदा ॥ 7 G 9 तत्र तानि &c, but P has तानि तत्र &c

पृथग्बुभुजिरे ऽन्नानि स्वादूनि विविधानि च ॥ ९ ॥
[1]भक्षांश्च विविधान् हृद्यान् पानानि विविधानि च ।
रुक्मपात्रीष्वनेकासु राजतीषु च सर्वशः ॥ १० ॥
द्विजातयोऽन्नपानानि तत्राभुञ्जत चासकृत् ।
[2]न तेष्वहस्सु ब्राह्मण्यं क्षुधितं दृश्यते क्वचित् ॥ ११ ॥
[3]नाविद्वान् ब्राह्मणः कश्चिन्नागतानुगतस्तथा ।
अनाथा भुञ्जते नित्यं नाथवन्तश्च भुञ्जते ॥ १२ ॥
तापसा भुञ्जते चापि भुञ्जते श्रमणा अपि ।
अनाथानां तथा स्त्रीणां बालवृद्धस्य चैव [4]ह ॥ १३ ॥
बुभुक्षितानां दीनानां नातृप्तिरुप[5]लभ्यते ।
व्यश्रूयत च शब्दोऽत्र दीयतां भुज्यतामिति ॥ १४ ॥
स्वाध्यायगीतशब्दाश्च व्यश्रूयन्त समन्ततः ।
सर्वकामगुणाश्चात्र व्यदृश्यन्तान्नपर्वताः ॥ १५ ॥
दिवसे दिवसे क्लृप्ता व्यञ्जनानां ह्रदास्तथा ।
[6]अहो स्वादु प्रभूतं च विविधं चान्नमीदृशम् ॥ १६ ॥

---

1 This line is wanting in G, but P has it 2 This, and the following line are wanting in G, but P has them 3 Between the two lines of this Sl P reads the lines कृपणानाथविकला ये च केचिदुपागता । तेऽप्यन्नपानै कामैश्च सर्वशस्तत्र तर्पिता. ॥ 4 G 12 हि, P has both ह and हि as alternatives 5 G 12 लक्ष्यते, but P has लभ्यते 6 For this, and the following line B 16 17 -नानादेशादनुप्राप्ता पुरुषाः स्त्रीगणास्तथा । अन्नपानै. (a) सुविहितास्तस्मिन् यज्ञे महात्मन ॥ अन्न हि विधिवत स्वादु प्रशसन्ति द्विजर्षभा । अहो तृप्ता स्म भद्रन्ते इति शुश्राव राघव॰ ॥

अहोस्म [a]लृप्ता भद्रं वः शशंसुरितिं वै द्विजाः ।
[1]राजानोऽभ्यागतास्तत्र स्वयमेव स्वलङ्कृताः ॥ १७ ॥
भृत्यवत् प्रणता यज्ञे द्विजान् वै पर्यवेशयन् ।
[2]तत्र कर्मान्तरे प्राप्ते हेतुवादान् बहूं[3]स्तदा ॥ १८ ॥
प्राहुः सुवाग्मिनो वीराः परस्परजिगीषवः ।
[4]ऋष्यशृङ्गादयो मन्त्रैः शिक्षाक्षरसमन्वितैः ॥ १९ ॥
आहूयांचक्रिरे तत्र शक्रादीन् विबुधोत्तमान् ।
व्यापिभिर्मधुरैः स्निग्धैर्मन्त्राह्वानैर्यथार्हतः ॥ २० ॥
होतारो [5]जुहुयामासुर्हविर्भागान् दिवौकसाम् ।
[6]दिवसे दिवसे [7]कुर्युः संस्तरे कुशला द्विजाः ॥ २१ ॥
सर्वं कर्म यथाव[8]च्च यथा [9]शास्त्रेषु चोदितम् ।
[10]नाषड्ङ्गविदत्रासीत् सदस्यो नाबहुश्रुतः ॥ २२ ॥

---

(a) S has सुविहिते &c 1 For this, and the following line B 18 स्वलङ्कृताश्च पुरुषा ब्राह्मणान्पर्यवेशयन । उपासन्ते च तानन्ये सुमृष्टमणिकुण्डला ॥ 2 For this and the following line, B 19–कर्मान्तरे तदा विप्रा हेतुवादान बहूनपि । प्राहुः सुवाग्मिनो धीराः परस्परजिगीषया ॥ For तत्र G 17 तत॰, but P has तत्र 3 G 17 स्तथा, but P has स्तदा 4 This, and the following 3 lines are wanting in B 5, G 19 जुहुवुश्चात्र &c, but P has जुहुयामासु &c 6 For this, and the following line, B 20 दिवसे दिवसे तत्र संस्तरे कुशला द्विजा. । सर्वकर्म्माणि चक्रुस्ते यथाशास्त्र प्रचोदिता ॥ 7 G 20 चक्रुः &c, P is illegible here 8 G त्तद &c, but P has च्च &c 9 G शास्त्रेण &c 10 For this, and the following line B 21 नाषडङ्गविदत्रासीन्नाव्रतो नाबहुश्रुतः । सदस्यास्तस्य वै राज्ञो नावाद(a)कुशलो द्विज. । (a) V has कुशला द्विजा

न सूत्रकल्पाकुशलो न वाचाकुशलस्तथा ।
[1]उच्छ्रिताश्चाभवन् यूपाः षड्वैल्वाः खादिराश्च षट् ॥२३॥
तावन्त एव पालाशास्तथैवोदुम्बराः पृथक् ।
[2]श्लेष्मातकमयश्चैको देवदारुमयोऽपरः ॥ २४ ॥
द्वावास्तां तत्र विहितौ यूपौ वेदाङ्गपारगैः ।
[3]महोच्छ्रायपरीणाहो यूपोऽन्यः सर्वकाञ्चनः ॥ २५ ॥
यज्ञे समभवत्तत्र शोभार्थमुपकल्पितः ।
विन्यस्ता विधिवत् सर्वे शिल्पिभिः सुकृता दृढाः ॥२६॥
अष्टाश्रयः सर्व एव [4]श्लक्ष्णरूपसमन्विताः ।
[5]आच्छादितास्ते वासोभिः कुशलैः [6]शिल्पकर्मभिः ॥२७॥
[7]निश्चितश्चाभवच्चैत्यो ब्राह्मणैर्यज्ञकर्मभिः ।
[8]नानायूपोच्छ्रयैस्तैश्च सर्वतः [9]समलङ्कृतैः ॥ २८ ॥

1 For this, and the following line, B 22 प्राप्ते यूपोच्छ्रये तस्मिन् (a) षड्वैल्वा. खादिरास्तथा । तावन्तो विल्वसहिता पर्णिनश्च तथा परे ॥ (a) V षड्विल्वा. &c 2 For this, and the following line B 23 श्लेष्मातकमयोदिष्टो देवदारुमयस्तथा । द्वावेव तत्र विहितौ बाहुव्यस्तपरिग्रहौ ॥ 3 For this, and the following line B 24-25 कारिता. सर्व एवैते शास्त्रज्ञैर्यज्ञकोविदै । शोभार्थं तस्य यज्ञस्य काञ्चनालङ्कृताभवन् ॥ एकविंशतियूपास्ते एकविंशत्यरत्नय । वासोभिरेकविंशद्भिरेकैक (a) समलङ्कृता ॥ (a) V has समलङ्कृत 4 G 25 शूक्ष्मरूप &c, but P has श्लक्ष्ण &c 5 For this, and the following two Slokas B 27 आच्छादितास्ते वासोभि. पुष्पैर्गन्धैश्च पूजिता· । सप्तर्षयो दीप्तिमन्तो विराजन्ते यथा दिवि ॥ 6 G 26 शिल्पकर्मसु 7 G निचितश्चा &c P विततश्चा &c. 8 G 27 मञ्चयूपो &c, P. मन्त्रयूपो &c 9 G समलङ्कृत but P has समलङ्कृतै.

रराज सुभृशं यज्ञः कल्पवृक्षैरिवोच्छ्रितैः ।
[1]चित्रितश्चाभवच्चैत्यो ब्राह्मणैर्यज्ञकर्मभिः ॥ २९ ॥
[2]अश्वदघ्नः कृतश्चापि गरुडः काञ्चनेष्टकः ।
प्रोक्षितास्तत्र पशवस्तास्ता उद्दिश्य देवताः ॥ ३० ॥
[3]जले चरा स्थलचरा अन्तरीक्षचरास्तथा ।
पतङ्गाः पक्षिणश्चैव तथा वनचराश्च ये ॥ ३१ ॥
[4]नानासत्वर्षभाश्चैव हयमेधे महाक्रतौ ।
नानासरीसृपाश्चैव [5]नानौषध्यश्च कल्पिताः ॥ ३२ ॥
[6]पशूनां त्रिशतं [7]चापि प्रत्यहं प्रोक्षितं द्विजैः ।
अश्वरत्नं चावभृथे प्रोक्षितं वैश्वदेविकम् ॥ ३३ ॥
[8]कौशल्या [9]तं हयं तत्र परिगम्य प्रदक्षिणम् ।

---

1. For this line G 28 विचिताश्चाभवन मेघा &c , P has विचित्राश्चाभवन् वेद्यो &c 2 For this, and the following two Slokas B 28 31 इष्टकाश्च यथान्यायं कारिताश्च प्रमाणत । चितोऽग्निर्ब्राह्मणैस्तत्र कुशलै शिल्पकर्म्मणि ॥ सचित्यो राजसिंहस्य सञ्चित कुशलैर्द्विजै । गरुडो रुक्मपक्षो वै त्रिगुणोऽष्टादशात्मक. ॥ नियुक्तास्तत्र पशवस्तत्तदुद्दिश्य दैवतं । उरगा पक्षिणश्चैव यथाशास्त्रं प्रचोदिता. ॥ शामित्रे तु हयस्तत्र तथा जलचराश्च ये । (a) ऋषिभि सर्वमेवैतन्नियुक्त शास्त्रतस्तदा ॥ (a) V has ऋत्विग्भि. &c 3 G 29 जलचराः &c., but P has जलेचरा &c 4 Before this Sl P has औदकानि च सत्वानि नानामृगवयासि च। नियुक्ता सर्व एवेह हयमेधे महाक्रतौ । 5 G 31 नानौषध्य प्रकल्पिता', but P agrees with our text 6 For this Sl B 32 पशूना त्रिशतं तत्र यूपेषु नियत तदा । अश्वरत्नोत्तम तत्र राज्ञो दशरथस्य ह ॥ For the first line of this Sl P has पशूना प्रोक्षणञ्चैव प्रत्यह त्रिशत द्विजै । 7 G 31 तत्र &c 8 For this Sl B 33 कौसल्या त हय तत्र परिचर्य समन्तत' । कृपाणैर्विशशासैन त्रिभि. परमया मुदा ॥ Before this Sl P has the line स यज्ञो ववृधे तत्र राज्ञो दशरथस्य च । 9 P तु &c

सम्यगभ्यर्चयाञ्चक्रे गन्धमाल्यविभूषणैः ॥ ३४ ॥
[1]अध्वर्युसहिता चैनं समालभ्य शुचिव्रता ।
रजनीं पर्युपास्तैकां कौशल्या पुत्रकाम्यया ॥ ३५ ॥
[2]तमश्वमुपतिष्ठन्त्याः कौशल्यायास्ततो द्विजाः ।
ऋष्यशृङ्गादयः प्रीताः प्रायुञ्जन्त तदाशिषः ॥ ३६ ॥
[3]विशस्योद्धृत्य च वपामश्वस्य विधिवत्तदा ।
ऋत्विग्मन्त्रान्वितामग्नौ जुहावावाहयन् सुरान् ॥३७॥
[4]तस्याश्च नृपतिर्धूमं जघ्रौ पत्नीसहायवान् ।
वपायां हूयमानायां पावके पुत्रकाम्यया ॥ ३८ ॥
[5]हयस्य तस्य चाङ्गानि कल्पितानि विभागशः ।
जुहुवुर्याजकास्तत्र यथाभागं दिवौकसाम् ॥ ३९ ॥
[6]समाप्य [7]चैवं क्रमशो राजा क्रतुवरं ततः ।

---

1 For this Sl B 34 पत्न्त्रिणा तदा सार्धं सुस्थितेन च चेतसा । अवसद्रजनीमेका कौसल्या धर्म्मकाम्यया ॥ 2 For this Sl B 35 होताध्वर्युस्तथोद्गाता ह्यथेन समयोजयन । महिष्या परिवृत्त्याथवावाता(a)मपरान्तथा ॥ (a) S has मपरे तथा ॥ 3 For this Sl B 36 पतत्त्रिणस्तस्य वपामुद्धृत्य नियतेन्द्रिय । ऋत्विक परमसम्पन्न श्रपयामास शास्त्रत ॥ 4 For this Sl B 37 धूमगन्ध वपायास्तु (a) जिघ्रतिस्म नराधिप । यथाकाल यथान्याय निर्णुदन पापमात्मन. ॥ (a) V and S जिघ्रन्तिस्म नराधिपा । For तस्याश्च, P has the alternative वपाया 5 For this Sl B 38 हयस्य यानि चाङ्गानि तानि सर्वाणि (a) ब्राह्मणा । अग्नौ प्रास्यन्ति विधिवत समस्ता षोडशर्त्विज ॥ (a) V भूसुरा । 6 For this Sl B 39–42 प्लक्षशाखासु यज्ञानामन्येषा क्रियते हवि । अश्वमेधस्य यज्ञस्य वैतसो भाग इष्यते ॥ त्र्यहोऽश्वमेध सख्यात कल्पसूत्रेण ब्राह्मणै । चतुष्टोममहस्तस्य प्रथम परिकल्पित ॥ उक्थ्य द्वितीय सख्यातमतिरात्र तथोत्तर । कारितास्तत्र बहवो विहिता शास्त्रदर्शनात् ॥ ज्योतिष्टोमायुषी चैवमतिरात्रौ च निर्म्मितौ ॥ अभिजिद्विश्वजिच्चैवमाप्तोर्यामो महाक्रतु ॥ 7. G 38 चैन &c, but P has चैव &c

दक्षिणा[1]मंददत्तेषां कर्मिणान्तदनन्तरम् ॥ ४० ॥
[2]प्राचीं होत्रे ददौ स्फीतां दिशं बाहुबलार्जिताम् ।
अध्वर्यवे प्रतीचीन्तु दक्षिणां ब्रह्मणे [3]तथा ॥ ४१ ॥
[4]उद्गात्रे च तथोदीचीं दक्षिणैषा विनिर्मिता ।
अश्वमेधे महायज्ञे पुराकल्पे स्वयंभुवा ॥ ४२ ॥
[5]समग्रां पृथिवीं दत्त्वा [6]चातुर्होत्रे सदक्षिणाम् ।

---

1 G 39 व्यददात &c , but P has अददात &c 2 For this Sl B 43 प्राचो होत्रे ददौ राजा दिश स्वकुलवर्धन । अध्वर्यवे प्रतीचो तु ब्रह्मणे दक्षिणा दिश ॥ 3 G. 40 दिश, but P has तथा 4 For this Sl B 44 उदगात्रे तु तथोदीचो दक्षिणैषा विनिर्म्मिता। अश्वमेधे महायज्ञे स्वयंभूविहिते पुरा ॥ 5 For this, and the following 3 Slokas B. 45 58 क्रतुं समाप्य तु तदा न्यायत पुरुषर्षभः । ऋत्विग्भ्यो हि ददौ राजा धरा ता कुलवर्धन ॥ एव दत्त्वा प्रहृष्टोऽभूच्छ्रीमानिक्ष्वाकुनन्दन । ऋत्विजस्त्वब्रुवन सर्वे राजान गतकिल्बिष ॥ भवानव महीं कृत्स्नामेको रक्षितुमर्हति । न भूम्या कार्यमस्माक न हि शक्ता स्म पालने ॥ रता स्वाध्यायकरणे वय नित्य हि भूमिप । निष्क्रय किञ्चिदेवेह प्रयच्छतु भवानिति ॥ मणिरत्न सुवर्ण वा गावो यद्वा समुद्यत । तत्प्रयच्छ नृपश्रेष्ठ धरण्या न प्रयोजन ॥ एवमुक्तो नरपतिर्ब्राह्मणैर्वेदपारगै । गवा शतसहस्राणि दश तेभ्यो ददौ नृप ॥ दशकोटि सुवर्णस्य रजतस्य चतुर्गुणा । ऋत्विजस्तु तत सर्वे प्रददु सहिता वसु ॥ ऋष्यशृङ्गाय मुनये वसिष्ठाय च धीमते । ततस्ते न्यायत कृत्वा प्रविभाग द्विजोत्तमा ॥ सुप्रीतमनस सर्वे प्रत्यूचुर्मुदिता भृश । तत प्रसर्पकेभ्यस्तु हिरण्य सुसमाहित ॥ जाम्बूनद कोटिसख्य ब्राह्मणेभ्यो ददौ तदा । दरिद्राय द्विजायाथ हस्ताभरणमुत्तम ॥ कस्मैचिद्याचमानाय ददौ राघवनन्दन । तत प्रीतेषु विधिवद्द्विजेषु द्विजवत्सल ॥ प्रणाममकरोत्तेषा हर्षव्याकुलितेन्द्रिय । तस्याशिषोऽथ विविधा ब्राह्मणै समुदाहृता ॥ उदारस्य नृवरस्य धरण्या पतितस्य च । तत प्रीतमना राजा प्राप्य यज्ञमनुत्तम ॥ पापापह स्वर्नयन दुस्तर पार्थिवर्षभै । for these 4 Slokas of our text as an alternative P has the following lines on the margin—क्रतु समाप्य तु तदा न्यायत पुरुषर्षभ । वारिणा प्रददौ राजा धरा ता क्रतुवर्द्धन. ॥ ऋत्विजोऽथाब्रुवन सर्वे राजान गतकल्मष । अस्या निष्क्रयमस्माक देहि राजन महाद्युते ॥ त्व हि पालयितास्माक येनाशसितुमर्हसि । तेषा श्रुत्वा वचस्तथ्य राजा राष्ट्रविवर्द्धन ॥ गवा शतसहस्राणि दश तेभ्यो ददौ नृप ॥ 6 G 41 सचातुर्होत्रे &c P सचातुर्होत्र &c Between the two lines of

शतं शतं सहस्राणां हिरण्यस्योत्ससर्ज सः ॥ ४३ ॥
दशकोटीः सुवर्णस्य रजतस्य [1]चतुर्गुणाः ।
ऋत्विग्भ्यः प्रददावन्यान् कामांस्तत्र यथेप्सितान् ॥४४॥
जावालये वशिष्ठाय वामदेवाय च प्रभुः ।
ऋष्यशृङ्गाय च तदा स राजा क्रतुवर्द्धनः ॥ ४५ ॥
[2]दक्षिणां प्रतिगृह्याथ सुप्रीतमनसो द्विजाः ।
ऊचुर्दशरथं तत्र कामं ध्यायेति वै तदा ॥ ४६ ॥
[3]तानब्रवीद्धृष्टमना राजा दशरथो द्विजान् ।
इच्छामि चतुरः पुत्रानुदारान् ख्यातविक्रमान् ॥ ४७ ॥
तथेति [4]चैव राजानं तमूचुर्ब्रह्मवादिनः ।
यथाभिलषितान् पुत्रानचिरात्त्वमवाप्स्यसि ॥ ४८ ॥

आदिकाण्डे यज्ञकर्म ॥

---

this Sl G reads the line अन्येषा कर्म्मिणा राजा सदस्याना च दक्षिणां 1 G 43 चतुर्गुणं, but P has चतुर्गुणा· 2 Between the two lines of this Sl, P has the line–ततश्च याजका. सर्वे ऋषयश्च तपोधना । 3 For this and the next Sloka. B 58 61 ततोऽब्रवीदृष्यशृङ्ग राजा दशरथस्तदा ॥ कुलस्य वर्धन तत्तु कर्त्तुमर्हसि सुव्रत । तथेति च स राजानमुवाच द्विजसत्तम ॥ भविष्यन्ति सुता राजश्चत्वारस्ते कुलोद्वहा ॥ स तस्य वाक्य मधुर निशम्य प्रणम्य तस्मै प्रयतो नृपेन्द्र । जगाम हर्ष परम महात्मा तमृष्यशृङ्गं पुनरप्युवाच ॥ 4 G 47 च ते &c, but P has चैव &c

क्रमशोधिरुह्यकृतिनस्समिन्धते
परिशुद्धसत्वपरिकर्मिते पदे ॥ ८२ ॥

अपि च

स्वयमुपशमयन्ती स्वामिनः स्वैरलीलां
स्वमतमिहदुहानास्वादुपथ्यं प्रजानां ।
नियतमिदमिदानी मन्यदावा भवित्री
निरवधिसुखसिध्यै निष्प्रकंपानुकंपा ॥ ८३ ॥

इय हि

---

तेच ते देशिकाश्च तै निदर्शिता नितराप्रकाशिता इमा कमलासहायस्य करुणैवाधिरोहणी निश्रेणिका ता कृतिन॰ कुशला स्वाधिकारानुगुणकर्मज्ञानादिविमुखाः प्रपदनैकप्रवणा इत्यर्थः । क्रमशोधिरुह्य परिशुद्ध रजस्तमोभ्यामस्पृष्ट यत सत्व तेन परिकर्मिते अलंकृते पदेस्थाने समिन्धते वर्धन्ते अविच्छेदेन भगवदनुभवं कुर्वन्तीत्यर्थ॰ ॥ ८२ ॥

एवभूता भगवत्कृपावश्य भवित्रीत्याह ।

**स्वयमिति–॥** स्वामिनस्सर्वेश्वरस्य स्वैरलीला स्वच्छन्दलीला स्वतन्त्रो हि भगवान कदाचित् जीवात्मनामपराधभूयस्तामवलोक्य ।

उपकारशतेनापि न क्षमामि वसुन्धरे ।
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ॥
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिं ।

इत्युक्तरीत्या लीलापरो भवति सैव स्वैरलीला तामुपशमयन्ती स्वादुभोग्य पथ्यं हितं च स्वमतमुपायविशेष भगवदनुभवं वा स्वादु निरतिशयानन्दरूपां भक्तिं पथ्य भगवत्प्राप्तिहेतुतया हितरूपां प्रपत्ति वा दुहाना जनयन्ती । निष्प्रकंपा अचचलानुकंपा सुखस्य निरतिशयानन्दरूपस्य भगवदनुभवस्य सिद्ध्यै इदानीमन्यदा कालान्तरे वा भवित्री नियत निश्चित ॥ ८३ ॥

अस्या भगवत्कृपाया अनन्तकतिपयगुणवत्ता प्रकटनाय वर्तिनीत्वं प्रतिपादयति ।

अविरलगुणच्छायामायातमःप्रतिरोधिनी
परिहृतरजःपङ्का तापैरसङ्घटितास्त्रिभिः ।
मधुरिपुदयामूर्तिर्दिव्यानिराकृतकण्टका
वहति निगमाद्वर्तन्येकापुरीमपराजिताम् ॥८४॥

सुमतिः— * अअउन्त अपरिमिअ दुरिअ भरिअसजन्तुणो दुखसाअरादो उन्तारवअणं बालअण सतोसवअण विअ उवञ्चन्दणन्ति पेखामि ।

राजा— भद्रे अबाधितार्थग्राहिणि, मास्मामिथ्यादृष्टिमुपतिष्ठ । सुमतिः खल्वसि । अपिदृष्टः क्वचिदाप्तागमस्य बाधः ऐश्वरस्य वा भक्तजनसरक्षणप्रतिज्ञानस्य ।

---

* आर्यपुत्र अपरिमितदुरितभरितस्य जन्तोर्दु खसागरादुत्तारवचन बालजन सन्तोषवचनमिव उपच्छन्दनमिति पश्यामि ।

---

अविरलेति—॥ छायावत्वा तपराहित्य तापरज पङ्ककण्टकविधुरत्वादय समीचीममार्गगुणा ते सर्वेप्यस्यास्सन्तीति पदवीत्व व्यज्यत इति भाव । अविरलाः निबिडा गुणा शैत्यमार्दवादय एव छाया यस्यास्सा तथोक्ता मायाप्रकृतिस्सैव तम । तमोवदपथप्रवृत्तिहेतुत्वेन मायायास्तमस्त्व । तस्य प्रतिरोधिनी नाशिनी रज रजो गुण एव पङ्क परिहृतो रज पंको यस्यास्सा तथोक्ता त्रिभि तापै आध्यात्मिकाधि भौतिकाधिदैविकरूपै असघटिता असयुता ( असवलितेति वा पाठ.) मधुरिपोर्दयैव मूर्त्तिश्शरीर यस्यास्सा तथा दिव्या विलक्षणा निराकृता निरस्ता कण्टका यस्यास्सा तथा । अत्र कण्टकशब्देन ऐश्वर्यकैवल्ये प्रतिपाद्येते कण्टको हि महापथे गच्छता तम प्रहाय मार्गान्तरगमनहेतु एषा वर्त्तिनी एकपदीनिगमात नगरात वेदान्ताच्चापराजिता विरोधिभिरनभिभूता पुरीं अपराजिताख्या पुरी नगरीं वहति प्रापयति । अपराजितेति वैकुण्ठनगर्या एव नाम । यायोध्येत्यपराजितेति विदिता नाक परेण स्थितेत्यभियुक्तोक्ते । लोके हि मार्ग कस्माच्चिन्नगराान्नगर्यन्तर प्रापयति । तद्वदियमपि वेदान्ता न्निर्गत्य वैकुण्ठनगरीं प्रापयतीति भाव ॥ ८४ ॥

प्रच्छन्दन प्रतारण ।

अबाधितार्थग्राहिणी प्रमाणान्तरप्रतिपन्नस्वभावमर्थ गृह्णातीत्यबाधितार्थग्राहिणी । मिथ्यादृष्टिर्नास्तिक्य । आप्तागमस्याप्तत्वादेवबाधा दर्शन । ऐश्वरस्य ईश्वर संबन्धिन । भक्तजनसंरक्षणे प्रतिज्ञानस्य प्रतिज्ञाया । एव किल भगवता प्रतिज्ञात ।

इयन्ते प्रत्यायना

शपेदैष्टिक्येन स्वयमिह भवत्या च सुमते
त्वयैव द्रष्टव्यः स्वपनविगमोन्मीलितधिया ।
अहङ्कारग्राहग्रहकदनसाक्रन्दतनुभृ-
न्मुमुक्षासंरब्धो मुरमथनसङ्कल्पमहिमा ॥ ८५ ॥

अथवा—साधारणश्चायमाश्रितसरक्षणसमारम्भः ।

तथा हि

दीनो दृप्यतु वापराध्यतु परं व्यावर्ततां वा तत-
स्त्रातव्यश्शरणागतश्शकुनतः सद्भिस्तथा स्थाप्यते ।

---

मित्रभावेन संप्राप्तं न त्यजेयं कथंचन ।
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितं ॥
विभीषणो वा सुग्रीव यदि वा रावणस्स्वयं ।
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ॥
सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः ॥

इत्यादौ अत्रापि बाध इत्यनुषज्यते ।

प्रत्यायना शपथ तामेवाह ।

**शप इति**—॥ दैष्टिक्यमास्तिक्य तेन भवत्या च शपे शपथ करोमि सुप्तस्य सुप्तेर्विगमनेन निवृत्त्या उन्मीलिता प्रकाशमाना धीर्यस्यास्तया त्वया एव वक्ष्यमाण प्रकारेण द्रष्टव्य । अहङ्कार एव ग्राह नक्र तेन ग्रह॰ ग्रहण तेन यत्कदनं पीडा तेन साक्रन्दः सप्रलाप॰ यस्तनुभृतशरीरी तस्य मुमुक्षाया मोक्षणेच्छाया संरब्धः उद्युक्त इत्यर्थं ये सकृदाश्रितास्तेषा संरक्षणसंकल्पस्सर्वसाधारणः ॥ ८५ ॥

किमुत भगवत इत्याहाथवेति ।

**दीन इति**—॥ दीनोवास्तु दीन. आर्त्त. दृप्यतु विलंबसहोवास्तु पर अपराध्यतु विरोधमेव वा करोतु विरोधाद्व्यावर्ततां व्यावृत्तो वास्तु शरणागत॰ शकुनत शक्तितः त्रातव्य. रक्षितव्य विश्वामित्रादिभिस्सद्भि एष घण्टापथ. तथा स्थाप्यते प्रतिष्ठाप्यते ननु प्रसिद्ध खल्वेतदिति भाव. विश्वामित्रेण शुनश्शेफश्शरणागतो रक्षित॰ कपोतेन स्वनीडाभ्याशे पतितो व्याध राघवेण विभीषण रघुणा कश्चिद्ब्राह्मण

विश्वामित्रकपोतराघवरघु व्योमाध्वग प्रेयसी
नालीजङ्घबृहस्पतिप्रभृतिभिर्नन्वेष घण्टापथः ॥८६॥

सुमतिः-*अअउत्त होन्तिखु महन्ताणि आमहप मुहाविमोख कामेहि-
तेहि तेहि उवासिजन्ता, ताक्कि सिरीवई एव्वणिवाण स
कालण भणिजइ ।

राजा-प्रिये सूक्ष्मदर्शिनि, किंच मन्यसे, असाधारणं हि मधुमथनस्य
माहात्म्यम् ।

पुरावेधस्तम्बावधि पुरुषसृष्टिस्थितिमति
स्थिराभक्तिस्सूते विपदुपरतिं पुंसि परमे ।
तदन्यानभ्यर्चन्नभिलषितमुक्तिस्सुरगणा
नुदन्यां प्रालेयैरुपशमयितुं वाञ्छति जडः ॥८७॥

---

*आर्यपुत्र भवन्तिखलु महान्तः पितामहप्रमुखा अपि मोक्षकामैस्तैस्तैरुपास्य-
मानाः, तत्किं श्रीपतिरेव निर्वाणस्य कारणं भण्यते ।

---

व्योमाध्वगाः देवाः तेषां प्रेयस्यः पत्न्यः तास्त्वष्टारं जिघांसन्निन्द्रोऽभ्यद्रवत् सपत्नीः
प्रापद्यत-तन्न प्रतिप्रायच्छन् तस्माद्धृध्यं प्रपन्नं न प्रतिप्रयच्छन्तीति श्रूयते ।
नालीकजघाख्येन हंसेन कश्चित् बृहस्पतिना शक्रः ॥ ८६ ॥

कारणमितीति वा कारणतयेति वा योज्यं । किं तन्माहात्म्यमित्यत आह ।

पुरेति-॥ वेधाः चतुर्मुखः स्तम्बस्सूक्ष्मतमस्तृणविशेषः आवेधस्तम्बावधि ब्रह्माण-
मारभ्यस्तम्बपर्यन्तमित्यर्थः चेतनेषूत्कृष्टश्चतुर्मुखः अचेतनेषु निकृष्टस्स्तम्बः एतयोः ग्रहण-
मन्येषां सर्वेषां प्रदर्शनार्थः पुरुषसृष्टेः पुरुषाणां करचरणकलेबरादिसृष्टेः स्थितिमति
चतुर्मुखादिसृष्टिस्तत्रैव स्थितिमतीति भावः परमेपुंसि स्थिरा निश्चला भक्तिः विपदुप
रतिं विपच्छब्दः संसारवाची तदुपरतिं पुरासूते जनयिष्यति तद्भक्तेरेव मोक्षहेतुत्वात् ।

तदन्यान चतुर्मुखादीन् अभिलषिता मुक्तिर्येन स तथा अभ्यर्चन् अर्चयन् उद-
न्या पिपासां प्रालेयैः हिमशीकरैः उपशमयितुं वाञ्छति । अत्र भगवतो जगत्कारण-
त्वमत एव ध्येयत्वं मोक्षप्रदत्वमन्येषामसज्यत्वं अनुपास्यत्वं मोक्षदाना शक्तत्वं च
प्रतिपादितं । एषां प्रमाणानि ॥

नारायणाद्ब्रह्मा जायते ।
नारायणाद्रुद्रो जायते ॥

न खलु सहस्रमप्यालेख्यदिवसकरा अन्धकारं प्रतिक्षिपन्ति ।

अजस्य नाभावध्येकमर्पितं ।
यस्मिन्निदं विश्व भुवनमधिश्रितं ॥
पद्मे दिव्येर्कसङ्काशे नाभ्यामुत्पाद्यमामपि ।
प्राजापत्यं त्वया कर्म सर्वं मयि निवेशितं ॥
आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति विश्वात्मा स तु नारायणः स्मृतः ॥
नारस्त्विवति सर्वपुंसां समूहः परिकीर्तितः ।
गतिरालम्बनं तस्य तेन नारायणः स्मृत ॥
नराज्जातानि तत्वानि नाराणीति विदुर्बुधाः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥
परात्परं पुरिशयं पुरुषमीक्षते ।
परमपुरुषमभिध्यायीत शम्भुराकाशमध्ये ध्येयः ॥
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥
उतामृतत्वस्येशानः ।
अमृतत्वस्यैष सेतुः ॥
समाश्रितात्कल्पतरोरनन्तात् निस्संशयोमुक्तिफलप्रपातः ।
मोक्षमिच्छेज्जनार्दनात् ॥
यो ब्रह्माणं विदधाति पूर्वं त्र्यक्षशूलपाणिः पुरुषो जायत ।
कइति ब्रह्मणो नाम ईशोहं सर्वदेहिनां ।
आवान्तवाङ्गसंभूतौ तस्मात्केशवनामवान् ।
आब्रह्मस्तंबपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्त्तिनः ॥

ततश्च ।

आबध्नतो विगतशान्तिमनादिनिद्रां
चेतस्विनस्त्रिगुणशक्तिमयी त्रियामा ।
नाथस्य केवलमसौ नरकान्तकर्तुः
सङ्कल्पसूर्यविभवेन समापनीया ॥ ८८ ॥

सुमतिः—*अ अउत्त अजखु देवाण मणीणवि परावर पुरुस विवेअण डोला
अइ चिन्ता, तुए उणकहं एक्कम्मि पुरुसो तमे णिट्ठाणिजम्मइ ।

राजा—देवि ननु सोपब्रह्मणनिपुणनिरूपिताभिरुपनिषद्भिरेव, प्रसिद्धं खलु वेदविप्रकेशवाना मेकराश्यम् ।

---

* आर्यपुत्र, अद्य खलु देवाना मुनीनामपि परावर पुरुषविवेचने डोलायते चिन्ता, त्वया पुन कथ एकस्मिन पुरुषोत्तमे निष्ठा नियम्यते ।

---

अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनय ।
पश्चाद्भूतबोधाश्च ध्यानेनैवोपकारकाः ॥
नैसर्गिको नवै बोधस्तेषामप्यतो यतः ।
न संपदां समाहारे विपदां विनिवर्त्तने ।
समर्थो दृश्यते कश्चित्त विना पुरुषोत्तमं ॥ ८७ ॥

इत्यादिना मोक्षप्रदानशक्तिस्तेषां कुतो नास्तीत्यत आह न खल्विति—

आलेख्यदिवाकराणामन्धकारनिरासकत्वे सिद्धे तेषामपि मोक्षप्रदानशक्तत्वमितिभाव । तत ब्रह्मादीना मोक्षप्रदानशक्त्यभावात ।

आबध्नतीति । विगता शान्तिरुपरमो यस्यास्ता ता अनादिनिद्रामाबध्नती उत्पादयन्ती त्रिगुणशक्तिमयी सत्वादिगुणत्रयशक्तिरूपा त्रियामा यामिनी नरकस्य नरकासुरस्यान्तकर्तु विनाशकरस्य नाथस्य भगवत केवल तस्यैवेत्यर्थ । सङ्कल्पः मोक्षयिष्यामि नयामि परमाङ्गतिमित्येव रूप. सएव सूर्य तस्य विभवेन सामर्थ्येन समापनीयानत्वन्यस्य कस्यापीति भाव ॥ ८८ ॥

सोपब्रह्मण स्मृतीतिहासपुराणानि उपब्रह्मणानि तैस्सहित यथाभवति तथा निपुणै. परावरतत्वयाथार्थ्यविद्भिः पराशरपाराशर्यादिभिः निरूपिताभि उपनिषद्भि वेदादीनामेकराश्य एकराशित्व प्रसिद्ध खल्विति वेदाविप्राः केशवश्चैकराशिरिति प्रसिद्धं खल्वित्यर्थ. । कथमैकराश्यमित्यत आह

महाजनो येन गतस्सपन्था इति च महर्षिभाषित, दृश्यते चैतत् ।

**तर्को न प्रतितिष्ठति प्रभवति त्रय्यापि वैय्याकुली**
**क्षोभं यान्ति मिथः क्षता ऋषिगिरः क्षुद्रोक्तयः किंपुनः ।**
**इत्थं तत्वविनिश्चयो निधिरिव क्षिप्तो गुहाभ्यन्तरे**
**पन्थानन्तु महाजनस्य निपुणः प्रत्यञ्चमभ्यञ्चति ॥ ६१ ॥**

इहैतदावभाषितमित्याह **महाजन** इति ।

महांश्चासौ जनश्च महाजन । महत्व च तत्ववेदित्व तर्काप्रतिष्ठश्रुतयो विभिन्नाः । नचानृषेर्दर्शनमस्ति किञ्चित् । धर्मस्य तत्व निहित गुहायां, महाजनो येन गतस्स पन्थाः ॥ इत्येतन्महर्षिभाषित तस्यानुभवसिद्धत्वमाह **दृश्यत** इति ।

**तर्क इति** । तर्के ऊह नप्रतितिष्ठति तदधिककुतर्कसम्भवात् त्रय्यावेदत्रयेण वैय्याकुली व्याकुलता प्रभवति । तथाहि क्वचित **नारायणादेव समुत्पद्यन्ते । नारायणे प्रलीयन्ते** । इति भगवत कारणत्व प्रतीयते । अन्यत्र ।

**प्रजापति. प्रजा असृजत हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**

इति चतुर्मुखस्य कारणमाम्नायते । अपरत्र

**न सन्नचासच्छिव एव केवल. एक एव रुद्रो न द्वितीयायतस्थे ।**

इति रुद्रस्य कारणत्व प्रतिपाद्यते । परत्रतु **इन्द्रोमायाभिः पुरुरूप ईयत ।**

इतीन्द्रस्य कारणत्व श्रूयते । एव त्रय्या वैय्याकुला हेतुत्व । मुनीना गिरः इति हासपुराणानि मिथ क्षतास्सत्य क्षोभ यान्ति । पुराणानि हि सात्विकराजसतामस-भेदेन परस्परविरुद्धानि । तदुक्त

**अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते ।**
**राजसेषु च माहात्म्यमधिक ब्रह्मणो विदुः ॥**
**सङ्कीर्णेषु सरस्वत्या. पितृणा च निगद्यते ।**
**सात्विकेष्विति कल्पेषु माहात्म्यमधिकं हरे. ॥ इति ।**

क्षुद्राणामुक्तय कि पुनः । ता परस्परव्याहता इत्यत्र कि पुनर्वक्तव्यमित्यर्थः । तत्वस्य याथात्म्यस्य विनिर्णय गुहाभ्यन्तरे क्षिप्त । अनेन महताऽपि यत्नेन न लभ्यत इति सूच्यते । एव सति किंकर्तव्यमित्यपेक्षायामाह **पन्थानमिति** । निपुणः महाजनस्य पन्थानमभ्यञ्चति पूजयति । पूज्यत्वे हेतुमाह प्रत्यञ्चमिति प्रत्यञ्च श्रेष्ठमित्यर्थ. ॥६१॥

केपुनस्त महान्त इत्यत्राह **महान्त इति** । व्यासादिभि. कृतान प्रबन्धाना मानन्त्यात्तेषु परिचयो दुश्शकइत्यत आह **तिष्ठन्त्विति** ॥

महान्तश्च व्यासवाल्मीकिमनुबृहस्पतिशुकशौनकप्रभृतयः प्रवदन्त्यस्माकमध्वानं, तिष्ठन्त्वेते बहवः, अयं पुनरेकोपि ।

अपजन्मजरादिकां समृद्धिं
कृपया सम्मुखयन्नशेष पुंसां ।
परदैवत पारमार्थ्यवेदी
परिगृह्णातु पराशरस्स्वयन्नः ॥ ६२ ॥

अपजन्मेति । अपगताः जन्मजरादिकाः यस्यास्तां आदिशब्देन व्याधिमृत्यू गृह्येते । समृद्धिं मुक्तिरूपां अशेषपुंसां संमुखयन् किमेतैरर्थित इत्यत आह कृपयेति । प्रदिशतु भगवान् अशेषपुंसां हरिरपजन्मजरादिकां समृद्धिमिति । पुराणान्ते तेनैवोक्तं । परं स्वेतरसमस्तवस्तुभ्य उत्कृष्टं यद्दैवतं नारायणाख्यं दैवतं दैवतानाञ्चेति तस्यैव परदैवतत्वात् तस्य पारमार्थ्यं सत्यत्वं वेत्तीति तद्वेदी । अस्य हि पराशरस्य परदैवतपारमार्थ्यवेदित्वं प्रसिद्धं यथा ।

साधु मैत्रेय धर्मज्ञस्मारितोस्मि पुरातनम् ।
पितुः पिता मेभगवान्वसिष्टो यदुवाचह ॥
विश्वामित्रप्रयुक्तेन रक्षसाभक्षितो मया ।
श्रुतस्तातस्ततः क्रोधोमैत्रेयाभून्ममातुलः ॥
ततोहं रक्षसां सत्रं विनाशाय समारभे ।
भस्मीकृताश्चशतशस्तस्मिन्सत्रे निशाचराः ॥
ततः संक्षीयमाणेषु तेषु रक्षस्स्वशेषतः ।
मामुवाच महाबाहो वसिष्टोस्मत्पितामहः ॥
अलमत्यन्तकोपेन तातमन्युमिमं जहि ।
राक्षसानापराध्यन्ते पितुस्तेविहितं तथा ॥
मूढानामेषभवति क्रोधोज्ञानवतां कुतः ।
हन्यते तातकः कैनयतः स्वकृतभुक् पुमान् ॥
सञ्चितस्यापि महतो वत्सक्लेशेनमानवैः ।
यशसस्तपसश्चैव क्रोधो नाशकरः परः ॥
स्वर्गापवर्गव्यासेधकारणं परमर्षयः ।
वर्जयन्ति सदाक्रोधं तातमातद्वशोभव ॥
अलंनिशाचरैर्दग्धैर्दीनैरनपराधिभिः ।

सुमति.—*अअउन्त अणुन्तर एद उन्तर, अज्ज उण अणन्त साहण णिअमन्त णिरूपण असहत स तु रन्तहि अअस चे अणस सवा असार सङ्कल अण दावे उन्तुम पेयामि ।

---

*आर्यपुत्रानुत्तरमेतदुत्तर, अद्य पुनरनन्तसाधननिगमान्तनिरूपणमसहमानस्य त्वरमाणहृदयस्य चेतनस्य सर्वागमसार सङ्कलय्य दर्शयितु त्वा प्रार्थयामि ।

---

सत्रं तेविरमत्वेतत्क्षमासाराहि साधव ॥
एवं तातेन तेनाहमनुनीतो महात्मना ।
उपसंहृतवान्सत्र सद्यस्तद्वाक्य गौरवात् ॥
तत प्रीतस्सभगवान्वसिष्ठो मुनिसत्तम. ।
सम्प्राप्तस्तदा तत्र पुलस्त्यो ब्रह्मण सुत. ॥
पितामहेन दत्तार्घ्यः कृतासनपरिग्रहः ।
मामुवाच महाभागो मैत्रेयपुलहाग्रज ॥
वैरेमहति यद्वा क्याद्गुरोरस्याश्रिताक्षमा ।
त्वया तस्मात्समस्तानि भवान्शास्त्राणि वेत्स्यति ॥
सन्ततेर्नममच्छेदः क्रुद्धेनापि यतः कृत. ।
त्वया तस्मान्महाभाग ददाम्यन्य महावरम् ॥
पुराणसंहिता कर्ता भवान्वत्सभविष्यति ।
दैवत परमार्थं च यथावद्वेत्स्यतेभवान् ॥
प्रवृत्तेच निवृत्तेच कर्मण्यस्तमलामतिः ।
मत्प्रसादादसन्दिग्धा तववत्सभविष्यति ॥
तत स भगवान्प्राह वसिष्ठोमेपितामह. ।
पुलस्त्येन युदुक्त ते सर्वमेतद्भविष्यति ॥ इति ॥

पराशर परान्वेदप्रामाण्यमसहमानान् आसमन्ताच्छृणाति दहति हिनस्तीत्यर्थ । शृपाक हतिधातु । स न अस्मान् स्वय परिग्रहणातु अङ्गीकरोतु । एव पुलस्त्यवरप्रदानलब्धपरदेवता पारमार्थ्यज्ञानेन भगवता पराशरेण परिगृहीतानामस्माक मतमेव प्रामाणिकमित्युक्त भवति ॥ ६२ ॥

आर्यपुत्रानुत्तरमेतदुत्तर यस्मादुत्तर शङ्कावचन न विद्यते तत्तयोक्त उत्तर मत्प्रश्नस्योत्तर प्रदर्शयामीत्युक्तमेव दर्शयति ।

राजा–साधुविचिन्तितं भवत्या, तदिदं प्रदर्शयामि ।

स्वसङ्कल्पोपघ्नत्रिविधचिदचिद्वस्तुविततिः
पुमर्थानामेकः स्वयमिह चतुर्णां प्रसवभूः ।
शुभस्रोतोभाजां श्रुतिपरिषदां श्रीपतिरसा-
वनन्तस्सिन्धूनामुदधिरिव विश्रान्तिविषयः ॥६३॥

अपि च

परः पद्माकान्तः प्रणिपतनमस्मिन् हिततमं
शुभस्तत्सङ्कल्पश्चुलकयति संसारजलधिं ।

---

स्वसङ्कल्पेति । स्वस्य सङ्कल्प एवोपघ्नो आश्रयो यस्यास्सा तथा त्रिविधा चिद चिद्वस्तुविततिर्यस्यास्सा तथा त्रिविधाना चिद्वस्तूनामचिद्वस्तूना च विततिर्विस्तार चिद्वस्तूनां त्रैविध्य बद्धमुक्तनित्यभेदात अचिद्वस्तूना त्रैविध्य त्रिगुणकालशुद्धसत्व भेदात् । चतुर्णा पुमर्थाना धर्मार्थकाममोक्षाणा एक स्वयमेव प्रसवभू' उत्पत्तिस्थान । शुभ स्रोत भजन्तीति भाज तासा । स्रोतश्शब्दस्यान्तत्यवचन । श्रुतिपरिषदा श्रुति समूहाना अनन्त अपरिच्छिन्न अनन्तत्व स्वरूपरूपगुणविभूतिभि अन्यत्रापारत्वमसौ श्रीपति सिन्धूना नदीना मुदधिरिव विश्रान्तिविषय पर्य्यवसानभूमि. । नारायणपरावेदा. सर्वे वेदा यत्पदमामनन्ति । इतिह्युच्यते ॥ ६३ ॥

तत्वहितपुरुषार्थास्तत्प्रतिपादकमन्त्र चाह ।

पर इति । पद्माकान्त. लक्ष्मीवल्लभ परः स्वेतरसमस्तवस्तुभ्य उत्कृष्ट । श्रीपतित्वादेवास्य सर्वोत्कृष्टत्व । यथाहि

श्रद्धया देवो देवत्वमश्नुते ॥
अप्रमेयं हि तत्तेजो यस्य साजनकात्मजा ॥
वेदान्तास्तत्वचिन्तां मुरभिदुरसियत्पादचिन्हैस्तरन्ति ।
स्वरूपं स्वातन्त्र्यं भगवत इद चन्द्रवदने ।
त्वदाश्लेषोत्कर्षात्भवति खलु निष्कर्षसमये । इत्याद्या' । अस्मिन्प

द्माकान्ते प्रणिपतन प्रपदनं हिततमंहिततभमतिशयेन हित तस्यैव ह्युपायान्तरेभ्य उत्कर्ष ।

तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः । इति श्रूयते । स्मरन्ति च मुनय ।

**झटित्येवं प्रज्ञामुपजनयता केनचिदसा-**
**वविद्यावेतालीमतिपतति मन्त्रेण पुरुषः ॥ ९४ ॥**

सर्वयोग्यमनायासमप्रमादमनूपमम् ।
प्रपन्नार्तिहरं विष्णुं शरणं गन्तुमर्हथ ॥
यद्येन कामकामेन नसाध्य साधनान्तरैः ।
मुमुक्षुणा यत्सांख्येन योगेन न च भक्तितः ॥
तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ।
उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी ॥
साध्यभक्तिस्तु साहन्त्री प्रारब्धस्यापिभूयसी ।

इत्यादिषु । शुभ शोभन तत्सङ्कल्प. तस्य भगवतस्सर्वपापेभ्यो मोक्षयिष्यामि इति सङ्कल्प समार एव जलधिस्त । समारस्य दुस्तरत्वापेक्षया जलधित्वरूपण । मुनयोप्येवमेववदन्ति ।

संसारसागरं घोरमनन्तक्लेशभाजनं ।
त्वामेव शरण प्राप्य निस्तरन्ति मनीषिणः ॥
संसारार्णवमग्नानां विषयाक्रान्तचेतसां ।
विष्णुपोतं विनानान्यत्किञ्चिदस्ति परायणम् ॥

इत्यादिषु । चुलकयति सङ्कोचयति नाशयतीत्यर्थः झटित्येव प्रज्ञां तत्त्वोपाय पुमर्थ याथात्म्य विषया धियमुपजनयता केनचिन्मन्त्रेण । केनचिदित्यत्र मूलमन्त्रो विवक्षित. । एव सति कि शब्देन कथ तस्य परामर्श· । उच्यते । मन्त्रं यत्नेन गोपयेत् । इतिमन्त्रमात्रस्य गोपनीयत्वात । तदष्टाक्षरस्य किमुतेति । तदुक्त ।

मन्त्राणां परमो मन्त्रो गुह्यानां गुह्यमुत्तमं ।
पवित्रं च पवित्राणा मूलमन्त्रस्सनातनः ॥ इति ।

ननु मूल मन्त्रोऽत्रविवक्षित इति केनावगम्यते । झटित्येव प्रज्ञामुपजनयतेत्युक्तवैभवस्य तत्रैव वृत्ते । अय हि पदत्रयात्मको मूलमन्त्र । तत्र प्रथमपदेन भगवतो निरुपाधिकशेषित्वं जीवानां तदपेक्षयानन्यार्हशेषत्वं च दर्शयति । द्वितीयपदेन स्वोचितपुरुषार्थसाधनभूतं प्रपदनं विशदयति । चतुर्थ्यन्तेन तृतीयपदेन च भगवत्कैङ्कर्य प्रार्थनया पुमर्थं सूचयति । अत एव प्रज्ञाजनकोय मन्त्रोऽष्टाक्षर एवेति निश्चीयते । असौ पुरुष. अविद्या अज्ञानं सैववेताली पिशाचिका ता अतिपतति अतिक्रामति । अविद्याशब्दः प्रकृतिवाचीवा ॥ ९४ ॥

प्रिये, समितमतीनामपि चित्तसमाधानहेतुसङ्ग्रहो दर्शितः ।

किन्तु

धृतनिगमकवचगूढाः

कष्टं सम्प्रति कुदृष्टयः केचित् ।

छलयन्ति सौगतादीन्

स्यालोपालम्भतुल्यया वाचा ॥ ६५ ॥

अथ विस्तरेण प्रतिविधिरस्य वेदान्तेषु विपुलमतिभिरनुसन्धीयते,

इष्टमेव खलु विदुषा समासव्यासधारणम् ।

सुमतिः—*सुट्ठु भणिअं अज्जउत्तेण एवं वितेहिं तेहिं महेसि मदहिन्तक्केहिं वि तारिसेहिंप आरिज्जन्ताणि अमन्ता चोराकिट्ठगोधणसरिसा होहिन्ति सपणं सन्धसा महचिन्ता ।

---

*सुष्ठुभणितमार्यपुत्रेण एवमपि तैस्तैर्महर्षिमतैस्तर्कैरपि तादृशैः प्रतार्यमाणा निगमान्ता चोराकृष्टगोधन सदृशा भविष्यन्तीति सपत्नसाध्वसा मम चिन्ता ।

---

अस्य सग्रहस्य प्रयोजनमाह प्रियेसंमितेति । समितमतीना मनस्समाधानार्थं नानेन सग्रहेण कथ शङ्करादिकुदृष्टिकल्पितनिगमान्तनिरोधनिरसन विमलमतीनां सुशकम्भवतीति सुमतेरभिप्रायमवेत्याह किन्त्विति ॥

धृतेति ॥ निगम एव कवच. धृतश्चासौ निगमकवचश्च तेन गूढा वेदप्रामाण्य मङ्गीकुर्वन्त इव स्थिता इत्यर्थः । कष्टमिति । वेदसौगतादीन आदिशब्देन जैनचार्वाका ग्राह्यन्ते । स्यालानामुपालम्भ तत्तुल्ययावाचा स्यालोपालम्भोहि जामातरि स्वोक्तदोषाणा स्वस्मिन्नेव पर्य्यवसाने हेतु । छलयन्ति वञ्चयन्ति । सम्यक्निरूपणे सौगतादि मतेषु ये दोषाउक्ताः तेसर्वेपि स्वमतेप्या पतन्तीति भाव ॥ ६५ ॥

अथ च तेषु छलयत्स्वपि अस्यैतन्मतस्य प्रतिविधिः प्रतिविधानं दूषणं विपुलमतिभि. अनुसन्धीयत इत्यर्थ । एव तर्हि विस्तरेणैवास्य प्रतिविधिः क्रियतां । किसंग्रहेणोक्त इत्यत आह इष्टमिति । समासस्सग्रह. व्यासो विस्तरः ताभ्यां धारणं विदुषामिष्ट । तदुक्त इष्टं हि विदुषां लोके समासव्यासधारणं । इति पुनरपि बिभेति ।

महर्षिः कपिल तस्य मतै. सिद्धान्तै. तादृशै. ऋषिप्रणीतै कणादादिपरिकल्पितैस्तर्कै प्रतार्यमाणा. वञ्च्यमाना. चोरैराकृष्ट यतगोधन तत्सदृशाः । गोरूपं धनं

राजा—अलमतिशङ्कया ।

अविप्लुतपरिग्रहस्मृतिशतैककण्ठी श्रुति-
स्स्वभक्तिविकलस्मृतीस्स्वपनतोऽपि न प्रेक्षते ।
स्वतः प्रमिति साधिनी सुदृढतर्कगुप्ता च सा
रुणद्धि पुनरप्रतिष्ठित कुतर्ककोलाहलम् ॥ ९६ ॥

नेपथ्ये ।

मूलच्छेदभयोभिभूतेन महता मोहेन दुर्मेधसा
कंसेन प्रभुरुग्रसेन इव नः कारागृहे स्थापितः ।
विख्यातेन विवेकभूमिपतिना विश्वोपकारार्थिना
कृष्णेनेव बलोत्तरेण घृणिनामुक्तश्श्रियं प्राप्स्यति ॥९७॥

---

गोधन गाव इत्यर्थ । ताश्चोराकृष्टाश्चेत स्वामिन न प्राप्नुवन्तिहि तथा एते स्वम तानुगुणयेन वर्ण्यमाना वेदान्ताश्च स्वप्रतिपाद्य नारायण न प्राप्नुवन्तीत्यर्थ । सपत्न सिद्ध साध्वस भय यस्यास्सा तथोक्ता ।

अविप्लुतेति । अविप्लुत अक्षुण्ण परिग्रहश्शिष्टपरिग्रहोयासा तासा स्मृतीना शत तेनैककण्ठी समानाभिप्राया श्रुति स्वस्या भक्तिस्नेह तया विकला हीना स्ववि रुद्धास्मृति. स्वपनत स्वप्नेपि नप्रेक्षते नापेक्षत इत्यर्थ. । प्रमिति साधयतीति प्रमिति साधिनी सुदृढै तर्कै गुप्ता च सा अप्रतिष्ठिताना कुतर्काणा कोलाहल रुणद्धि ॥ ९६ ॥

एव स्वसिद्धान्त वर्णयन्त विवेक आरब्धकार्यप्रोत्साहयन्तस्त्रिदशा. नेपथ्ये वदन्ति ।

मूलेति । मूलस्य स्वपितृभूतस्य पुरुषस्य छेदात प्रकृति ससर्गकृतस्वरूपतिरो धानातभय तेनोभिभूतेनत्यक्तेनातएव दुर्मेधसा दुर्बुद्धिनामहता मोहेन न प्रभु. जीव कसेन कारागृहे स्थापितोग्रसेन इव विख्यातेन विशेषत प्रसिद्धेन विश्वोपकारा र्थिना सकलजगतामुपकार कर्तुमिच्छावता बलोत्तरेण बलाधिकेन बल. बलभद्र उत्तरः ज्येष्ठ यस्य स तथा तेन घृणिना दयालुना विवेकभूमिपतिना कृष्णेनेव मुक्त मोचितः मुक्तश्श्रिय प्राप्स्यति ॥ ९७ ॥

अकृत्रिमानित्या सरस्वती त्रयी वावितथवादिनी अशरीरणी शरीरविधुरा अदृ श्यकर्तृकेति यावत् भारती वाक् श्रूयते किल ।

राजा-( कर्णं दत्त्वा, सानन्द )

प्रिये श्रयते सेयमकृत्रिमसरस्वतीवावितथवादिन्यशरीरिणी भारती।

सुमतिः-*( सानन्द ) अअउत्त तिअसभासि अखु एद णखु कहवि अलि-अ होज्ज ।

राजा-प्रिये सर्वथा तावत् त्वत्साहाय्यस्य मे हस्तगतैव विजयसिद्धिः

अपि च

रिपुगणविजिगीषा बिन्दुलेशोऽप्यसौ मे
मधुजिदनुजिघृक्षावाहिनी वर्धितात्मा ।
सफलयितुमधीष्टे साधुसम्भावयिष्यन्
यतिगणबहुमान्यं यत्नसन्तानवृत्तम् ॥ ६८ ॥

पुनर्नेपथ्ये दुन्दुभिध्वनि. ।

उभौ-( कर्णन्दत्तः )

सुमति -( सविस्मय ). † अअउत्त ।

कुलवइमोंक्खणूसवमि अङ्कहाकइआ
णवसमरूसुआविण अहोइग इन्दघडा ।

*आर्यपुत्र त्रिदशभाषित खल्वेतत नखलु कथमप्यलीक भवेत ।

†आर्यपुत्र ।

कुलपतिमोक्षणोत्सवमदङ्ककथा कदा
नवसमरोत्सुकापि न च भवति गजेन्द्रघटा ।

विजयस्य शत्रुविजयस्य महामोहविषयस्य विजयस्येत्यर्थ· सिद्धि· ।

हस्तगतैव एव सुमतिसमेतस्य विजयहेतुमुक्त्वा भगवदनुजिघृक्षा च तन्निमित्त मित्याह पिचेति ।

रिपुगणेति । रिपूणा महामोहादीना गण तद्विजिगीषाया त विजेतुमिच्छाया बिन्दु कण तस्य लेश स्वल्पाशोपि मधुजित हरे अनुजिघृक्षा अनुग्रहीतुमिच्छा सैव वाहिनी नदी तयावर्धितस्समर्धित आत्मास्वरूप यस्य स तथा यतिगण बहुमान्य जितेन्द्रिय समूह बहुमान्य यत्न एव सन्तानवृत्त देवतरुविशेष साधु सम्यक् भावयिष्यन सफलयितु सफलकर्तुमधीष्टे शक्नोति ॥ ६८ ॥

उभौ सुमतिविवेकौ कर्ण दत्त तच्छ्रवणाय कर्णा दिशत· ।

आकस्मिकदुन्दुभिश्रवणात्सुमते र्विस्मय ।

*तहविजु अन्तहों तथणइं गुणिहं कणिओ
कहकह कोविहन्तणिहिलं मुहलेइणहम् ॥९९॥*

राजा—प्रिये अस्मद्विजयसन्नाहसन्धुक्षकैरमरपतिभिरयमभिहन्यते दुन्दुभिः। तदिह स्थापितस्वपक्षैरस्माभिः परपक्षप्रतिक्षेपे प्रयतितव्यम्।

इत्युभौ निष्क्रान्तौ ॥

इतिकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु सङ्कल्पसूर्योदये स्वपक्षप्रकाशोनाम
प्रथमोऽङ्कः।

श्रीमते भगवते भाष्यकाराय महादेशिकाय नम. ॥
श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

*तथापि युगान्तभवत्स्तनयित्नु निजक्वणित.
कथं कथ कोऽपिहन्तर्निखिल मुखरयति नभ' ॥

---

कुलपतिरिति। कुलपतिः पुरुष' तस्यमोक्षणमेव उत्सव तस्मिन्ये अभिहन्यमाना मदङ्गा तेषा कथाकदा कस्मिन्काले भविष्यति। इदानीं नास्ति किलेत्यर्थ.। नव नूतनः समर तस्मिन् उत्सुका अभिलाषवती गजेन्द्रघटापि न भवति तादृशीगजेन्द्रघटाप्यधुना नास्ति तथापि युगान्ते प्रलये भवन्त स्तनयित्नव. मेघा तद्ध्वनिसदृश निजक्वणित कोपि निखिलं नभ. मुखरयति। मदङ्गा गजघटा च ध्वनिहेतु तद्द्वयाभावेपि कोपिरव कथ नभो मुखरयति। कथ कथमिति वीप्सादराधिक्यसूचनं ॥ ९९ ॥

विजये सन्नाह अस्माकं विजयप्रनाहोऽस्मद्विजयसन्नाह परिकरबन्ध तस्य सन्धुक्षकैः वर्धकै स्थापित स्थिति प्रापितः स्वपक्षोयैस्तैरस्माभि' परपक्षप्रतिक्षेपे प्रयतितव्यमिति उपरितनाङ्कार्थसूचनं।

निष्क्रान्तौ नेपथ्य प्रविष्टौ।

इति सङ्कल्पसूर्योदयव्याख्यायां प्रभावल्याख्यायां स्वपक्षप्रकाशनाम प्रथमोऽङ्कः।

दकावच्छेदेन बाधनिश्चयः प्रतिबन्धक इति । एवं च यथा पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति नांशतः सिद्धसाधन दोषस्तथा पक्षतावच्छेदकसामानाधिकरण्येन तर्कं प्रत्यंशत इष्टापत्तिरपि न दोषस्तादृशेष्टापत्तेः सामानाधिकरण्येन बाधनिश्चयविघटकत्वाभावात् पक्षतावच्छेदकावच्छेदेन तर्कं प्रति त्वंशत इष्टापत्तिर्दोषस्तस्य पक्षतावच्छेदकावच्छेदेन बाधनिश्चयविघटकत्वादिति सक्षेपः

**ननु सेयं व्याप्तिर्दृष्टान्तवृत्तिधूमे गृहीता न च पक्षीये ऽपि तथा च कथं तदनुमितिः पक्षवृत्तिधूमे व्याप्तिग्रहस्यानुमितिहेतुत्वादिति चेदत्राहुः, उक्ता व्याप्तिर्दृष्टान्तवृत्तिहेतौ धूमत्वेन गृहीता पर्वते धूमन्दृष्ट्वा स्मर्यते ततो विशेषणज्ञानरूपात्तस्मादसति बाधके व्याप्तिविशिष्टत्वेन पक्षधर्म्मधूमज्ञानं जायते । यद्वा दृष्टान्ते व्याप्तिज्ञानं ज्ञायमानधूमत्वरूपसामान्यलक्षणया प्रत्यासत्त्या सकलधूमगोचरमेव जायत इत्यदोषः ।**

अथ सामान्यलक्षणं प्रतिपादयितुं भूमिकामारचयति । नन्वित्यादि । यद्वा समानाधिकरणयोरेव व्याप्तिरिति पक्षमवलम्ब्याह नन्वित्यादि । सा अनुमितिहेतुभूतव्याप्तिज्ञानविषयिणी इय यद्विशिष्टसमानाधिकरणेत्यादिरूपा नच पर्वतीय इति दृष्टान्तवृत्तिमहानसीयधूमे व्याप्तिर्गृहीता पर्वतीयधूमेन सह सन्निकर्षविरहात् तत्र व्याप्तिर्न गृहीतेत्यर्थः । ननु किमनिष्टमत आह तथा चेति । पर्वतीयधूमे सन्निकर्षं विना न पर्वतीयधूमे वन्हिव्याप्तिविशिष्टधीरिति कथ पर्वतीयवह्न्यनुमितिरित्यर्थः । अथ महानसीयधूमे गृहीताया महानसीयवन्हिव्याप्तेरेव पर्वतीयधूमे ऽपि सत्वात्तामादायैव पर्वतीयधूमे वन्हिव्याप्तिग्रहमन्तरेणापि

पर्वतीयधूमे इन्द्रियसन्निकर्षानन्तरमुद्बोधकवशात्स्मर्यत इति व्याप्तिस्मरणरूपविशेषणज्ञानसत्वे व्याप्तिविशिष्टरूपविशिष्टज्ञान ततोऽनुमितिरित्यभिप्रायवता केषाञ्चिन्मतमाह तत्राहुरिति । तस्माद्व्याप्तिज्ञानात् । नन्वादौ भ्रमात्मको महानसीयवह्न्यादौ कदाचिद्धूमव्याप्त्यनुभवः कदाचिदुपाधेरप्यनुभवः पश्चात्समूहालम्बनबलाद्व्याप्त्युपाध्योः समूहालम्बनमेव स्मरणं तत्रापि व्याप्तिविशिष्टपक्षधर्मस्मरणं स्यादत आह असतीति । ननु पर्वतीयधूमदर्शनोत्तरं नियमेनोद्बोधकसत्वे मानाभावेन नियमतो व्याप्तिस्मरणाभावादाह यद्वेति ज्ञायमान सामान्य प्रत्यासत्तिरित्यभिप्रायेणाह धूमत्वेति । तथा चासन्निकृष्टस्य प्रत्यक्षविषयत्वाभावादन्यसन्निकर्षाभावेऽपि धूमत्ववन्हित्वरूपसामान्यस्यापि सन्निकर्षत्वस्वीकारात् पर्वतादिवृत्तिधूमेन पर्वतादिवृत्तिवन्हिना सह धूमत्ववन्हित्वरूपसन्निकर्षस्य सत्वात्पर्वतादिवृत्तिधूमवन्हीनामुपस्थितौ धूमत्वेन धूमसामान्ये वह्नित्वेन वन्हिसामान्यस्य व्याप्तिग्रह इत्यर्थः । ननु सामान्याश्रयनिखिलव्यक्तिप्रत्यक्षविशेषनिर्वाहार्थं सामान्यलक्षणाप्रत्यासत्तिस्वीकारस्तन्निर्वाहश्च न सम्भवति । सन्निकर्षत्वस्यैक्याभावेन जन्यप्रत्यक्षत्वावच्छिन्नं प्रति सन्निकर्षत्वेन क्लृप्तकारणताया वक्तुमशक्यत्वादिति चेन्न । इन्द्रियसन्निकर्षत्वस्यैक्याभावेऽपि सम्बन्धाननुगमस्य दोषत्वाभावेन क्षतिविरहादिति । अत्रेदं बोध्यम् । संयोगादिषोटासन्निकर्षशून्याज्ञातद्रव्यादिप्रत्यक्षनिर्वाहार्थं सामान्यलक्षणा एतत्सप्तकसन्निकर्षशून्याज्ञातद्रव्यादिप्रत्यक्षनिर्वाहार्थं ज्ञानलक्षणा एतदष्टकशून्याज्ञातद्रव्यादिप्रत्यक्षनिर्वाहार्थं योगजधर्मप्रत्यासत्तिरिति ॥

**ननु सामान्यं यदि प्रत्यासत्तिस्तदाश्रयसाक्षात्कारजननी तदा विमुद्रितनयनस्यापि धूमत्वेन सकलधूमसाक्षात्कारः स्यादिति चेन्न । यत्सामान्यं प्रत्यासत्तिस्तत्प्रकारकतदाश्रयलौकिकसाक्षात्कारजनकसामग्र्या अपि सामान्यप्रत्यासत्तौ सहकारित्वात् ।**

अथ सामान्य लक्षण स्वरूप यस्या इत्यर्थस्तत्र सर्वत्राश्रये साक्षादेव तदिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यमेव तदिन्द्रियस्य प्रत्यासत्तिस्तत्र सामान्यज्ञानानन्तर निमीलितनयनदशाया धूमत्वादिना सकलधूमसाक्षात्कारः स्याज् ज्ञायमानधूमत्वादेः सत्वादितिप्राचीनमते शङ्कते नन्वित्यादिना सामान्यप्रत्यासत्तिस्तदाश्रयसाक्षात्कारकजननी यदीत्यन्वयः । यत्सामान्यमिति अयमर्थः । यत्र ज्ञायमानसामान्यप्रत्यासत्तिस्तत्र कारणतावच्छेदकीभूतलौकिकसाक्षात्कारे तद्बहिरिन्द्रियजन्यत्व विशेष्येण सम बहिरिन्द्रियस्य लौकिकसन्निकर्षश्चापेक्षित इत्यर्थस्तथा च निमीलितनयनदशाया विशेष्येण सम चक्षुःसन्निकर्षाभावान्न दोषः । लौकिकसन्निकर्षं विना ऽपि ज्ञानरूपसन्निकर्षसत्त्वादणुत्वेन यत्किञ्चिदणूपस्थितौ निखिलाणुगोचरः सामान्यलक्षणप्रत्यासत्तिजन्यो मानसो बोध इति बहिरित्युक्त । सामान्यप्रकारकस्मरणविशेष्ये चक्षुःसन्निकृष्टे दोषवशान्नयनेनागृह्यमाणे धर्मिणि सामान्येन चाक्षुषापत्तिरत उक्त बहिरिन्द्रियजन्यत्वमिति । एव नयनेन गृह्यमाणे सामान्यप्रकारकज्ञानविशेष्ये धर्मिणि लौकिकसन्निकर्षविरहे ऽपि ज्ञानलक्षणालौकिकसन्निकर्षसत्वे ऽपि चाक्षुषज्ञानापत्तिरत उक्त लौकिक इति । तथा च तत्पुरुषीयलौकिकसन्निकर्षविशिष्टधूमत्वेन कारणता तत्पुरुषीयधूमत्वप्रकारकधूमत्वाश्रयचाक्षुषत्वेन कार्यतेत्येव क्रमेण कार्यकारणभाव इति । ननु तदिन्द्रियसम्बद्धवृत्तित्वमेवोच्यता किन्तदिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारतापर्यन्तानुधावनेनेति चेन्न । यत्रेन्द्रियसम्बद्धधूलीपटले धूमत्वभ्रमे वन्हिव्याप्तिभ्रमदशाया तत्रेन्द्रियसम्बद्धवृत्तिधूमत्वरूपप्रत्यासत्तेरभावेन धूमेषु वन्हिव्याप्यग्रहाद्व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपकारणाभावेन धूम इति दर्शनाद्वह्न्यनुमितिर्न स्यादिति विवक्षिते त्विन्द्रियसम्बद्धधूलीपटलविशेष्यकधूमत्वप्रकारकज्ञानप्रकारीभूत धूमत्व प्रत्यासत्तिरिति सक्षेपः । ननु यत्रादौ पुरोवर्तिनि घटत्वरूपेण यत्किञ्चिद्घटवत्वप्रकारकप्रत्यक्ष तदुत्तर घटप्रकारेण निखिलघटाधिकरणसाक्षात्कारो जायते स न स्यात् । निखिलाना घटाधिकरणीभूतानां कपालानामिन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतघटाधिकरणत्वा-

भावादिति चेन्न। द्विविधं हि सामान्य सखण्डमखण्ड ञ्च सखण्डे च परम्परासम्बद्धमखण्डमेव प्रत्यासत्तिः। तथा च निरुक्तस्थले घटसम्बन्धेन घटत्वमेव प्रत्यासत्तिः। निखिलाना कपालाना घटसम्बन्धेन घटत्ववत्त्वादिति नोक्तदोषः। अथ समवायेन घटत्वप्रकारकज्ञानात्कालिकसम्बन्धेन घटत्वाश्रयभूताना पटादीना ज्ञान स्यादिति चेन्न येन सम्बन्धेनेन्द्रियसम्बद्ध यत्सामान्य ज्ञायते तेन सम्बन्धेन तदाश्रयाणा सा प्रत्यासत्तिरिति न दोषलेशो ऽपि। ननु सखण्डस्थले तद्घटादिव्यक्तिसम्बन्धेन घटत्वादेः कारणत्वमित्युक्त तच्च न सम्भवति तद्घटादेरतीतानागतत्वदशाया तद्घटादिसम्बन्धेन च घटत्वादेरभावादिति चेदत्र नव्याः। सामान्य लक्षणानिरूपक विषयो यस्या इत्यर्थः तथा च स्वविषयाश्रयतासम्बन्धेन सर्वत्राश्रये तदिन्द्रियसम्बद्धविशेष्यकतदिन्द्रियजन्यसामान्यज्ञानमेव प्रत्यासत्तिः। ननु सामान्यज्ञानानन्तर सामान्यज्ञानस्य प्रत्यासत्तित्वे ऽपि निमीलितनयनदशाया सन्निकर्षविरहे ऽपि सामान्यज्ञानस्य सत्वान्निखिलघटादेः सामान्यलक्षणाजन्यः साक्षात्कारः स्यादिति चेन्न। तद्बहिरिन्द्रियकरणकतद्धर्मप्रकारकज्ञानसामग्र्यन्तरस्याप्यपेक्षितत्वात्। सामग्र्यन्तर च योग्यव्यक्तावालोकसंयोगावधिचक्षुःसयोगमहत्वोद्भूतरूपवत्त्वादीति। एव च द्रव्यचक्षुःसयोगसत्वे बहुलतमे तमसि विद्युत्सम्पातजनिते द्रव्यचाक्षुषे तदुत्तर न सकलद्रव्यचाक्षुषधीरिति। प्राचीनमते तु विशेष्येण सममालौकिकसन्निकर्षस्य तदिन्द्रियजन्यज्ञानस्य च सत्वान्निखिलद्रव्यचाक्षुषं स्यादिति सक्षेपः। ननु घटत्वनिर्विकल्पकोत्तर प्रथम घटत्वविशिष्टप्रत्यक्षोत्पत्तिकाले घटत्वसामान्यलक्षणया यावद्घटविषयकप्रत्यक्ष स्यादिति। अत्रोच्यते समवायसम्बन्धावच्छिन्नघटत्वादिविषयताशालिज्ञानत्वेन समवायसम्बन्धावच्छिन्नघटत्वाद्याश्रयत्वशालियावद्घटादिविशेष्यकप्रत्यक्षत्वेन कार्यकारणभावः। एव सम्बन्धान्तरेणाऽपि बोध्यम्। एवं च समवायसम्बन्धावच्छिन्नघटत्वादिप्रकारकज्ञानाच्च कालिकसम्बन्धेन घटत्वादिप्रकारककालिकसम्बन्धेन घटत्वाद्याश्रयकालस्य प्रत्यक्ष तथा च निर्विकल्पकस्य सम्बन्धानवगाहित्वाच्च ततः सामान्यलक्ष-

कारेण पक्षे हेतुर्निश्चयोऽनुमितौ हेतुर्न तु व्याप्तिज्ञानमात्रं, न च धूमो वह्निव्याप्यो द्रव्यं पर्वतवृत्तीति ज्ञानं व्याप्यत्वेन पर्वते धूममवगाहते येन ततोऽनुमितिः स्यात्। पर्वतो वह्निव्याप्यधूमवान्नवेति संशयादनुमितिर्म्माभूदिति निश्चयपदम् ॥

यत्र महानस, इति। ज्ञान व्याप्तिज्ञान,। तत्रापि महानसे ऽपि,। ननु सिद्धेः प्रतिबन्धकत्वान्महानसे नानुमितिः। नापि पर्वते पर्वतीयधूमे व्याप्तिज्ञानाभावादित्यभिप्रायवान् शङ्कते। न चेति। तच्च व्याप्तिज्ञान च,। अत्र महानसीय धूमे,। एवं वन्हिव्याप्य इति ज्ञानस्थले सर्वत्रैव धूमे पर्वतादिवृत्तिधूमे,। व्याप्यत्वेनेति। तथा च व्याप्तिप्रकारकपक्षधर्मतानिश्चयोऽनुमितौ कारणमित्यर्थः। न चेति। द्रव्य पर्वतवृत्तीत्यत्र द्रव्यत्वेन रूपेण धूमस्यावगाहन न तु धूमत्वेनावगाहनमित्यर्थः ॥

मीमांसकास्तु व्याप्यतावच्छेदकप्रकारकं पक्षधर्मताज्ञानं व्याप्तिज्ञाने सहकारि व्याप्यतावच्छेदकं धूमत्वं तद्रूपेण व्याप्तिग्रहान्न तु द्रव्यत्वं, न ततो द्रव्यं पर्वतवृत्तीति ज्ञानादनुमितिः। एवं च धूमो वह्निव्याप्यो धूमवान् पर्वत इति ज्ञानद्वयादप्यनुमितिरित्याहुस्तन्न, व्याप्यत्वप्रकारकपक्षधर्मताज्ञानहेतुतायां लाघवात् किं चैवं वह्निव्याप्यवानिति ज्ञानादनुमितिर्न स्याद्धूमत्वेन पक्षधर्मत्वानवगाहनात् ॥

व्याप्यतावच्छेदकमिति। न चैव धूमो वन्हिव्याप्य आलोकः पर्वतवृत्तिरिति ज्ञानादनुमितिः स्यादालोकत्वस्यापि व्याप्यतावच्छेदकत्वादिति वाच्यम्। यद्धर्मावच्छेदेन व्याप्तिज्ञान तद्धर्मावच्छेदेन पक्षधर्म-

तज्ज्ञानस्य विवक्षितत्वात् । अत्राय निर्गलितार्थः । अनुमितौ व्याप्तिज्ञान कारण तत्रातिप्रसङ्गभङ्गाय पक्षधर्मताविषयकत्व देय । तथा च व्याप्यतावच्छेदकविशिष्टपक्षधर्मताविषयकव्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वेन कारणतेति दिक् । ज्ञानद्वयादिति । अत्र द्वित्व सम्पातायात । कथमन्यथा तादृशैकज्ञानादनुमितिः । लाघवादिति । व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वोभयरूपेण कारणत्वापेक्षया व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन रूपेण हेतुताया लाघवादित्यर्थः । न च परामर्शहेतुतावादिना ऽपि परामर्शजनकत्वेन ज्ञानद्वयस्य हेतुत्वमवश्य वाच्यमिति वाच्यम् । अन्य प्रति पूर्ववृत्तित्व गृहीत्वैवान्य प्रति पूर्ववृत्तित्वग्रहणेनान्यथासिद्धत्वात् । ननु धूमत्वेन व्याप्तिज्ञानत्व धूमत्वेन च पक्षधर्मताज्ञानत्वमिति नोभयरूपेणाकारणत्वमिति परामर्शापेक्षया नगुरुरित्याशयावानाह । किं चेति । यदि च निर्धर्मितावच्छेदकव्यभिचारज्ञानस्य विरोधित्वाभावान्निरुक्ताव्यभिचरितसामानाधिकरण्यविशिष्टधूमत्वादेरेव व्याप्तित्वात्परामर्शे नियमतोधूमत्वस्य तादृशविषयत्व स्वीक्रियते तदा ऽपि गृह्यमाणव्याप्यवच्छेदकप्रकारकपक्षधर्मताज्ञत्वेन पक्षधर्मताग्रहप्रकारीभवद्व्याप्तिज्ञानत्वेन वेति विनिगमनाविरहो ऽपि बोध्यः । न च तवापि व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताविषयकव्याप्तिज्ञानत्वेन वा परामर्शस्य हेतुत्वमिति विनिगमनाविरह इति वाच्यम् । व्याप्तिप्रकारकपक्षधर्मताज्ञानपर्याप्तविशिष्टवैशिष्ट्यविषयिताया एव कारणतावच्छेदकत्वात् । गृह्यमाणव्याप्यवच्छेदकधर्मप्रकारकपक्षधर्मताज्ञानत्वेन पक्षधर्मताविषयकव्याप्यतावच्छेदकप्रकारकज्ञानत्वेन वा हेतुत्व एवं पक्षधर्मताज्ञानप्रकारीभवद्व्याप्तिज्ञानत्वेन व्याप्तिप्रकारकज्ञानविषयीभवत्पक्षधर्मताज्ञानत्वेन वा हेतुत्वमिति तव मते कार्यकारणभावचतुष्टयं बोध्यम् ॥

**तस्माद्वह्निव्याप्यवानित्येवं रूपाद्व्याप्तिविशिष्टपक्षधर्मताज्ञानात्तृतीयलिङ्गपरामर्शत्वेन प्रसिद्धा-**

देवानुऽमितिः। तृतीयत्त्वमिति चेत् प्रथमं दृष्टान्ते धूमज्ञानं ततो व्याप्तिज्ञानं ततस्तद्विशिष्टपक्षधर्मताज्ञानमित्येवं रूपेणेति गृहाण। तृतीयत्वं प्रायिकमित्युक्तं न तु तेन रूपेण हेतुत्वं गौरवाद्व्यभिचाराच्चेति ध्येयम् ॥

एवं व्याप्यतावच्छेदकरूपेण पक्षधर्मताज्ञानस्यव्याप्तिज्ञानसहकारित्वे नैयायिकमतमुपसहरति । तस्मादित्यादिना । तृतीयत्व परामर्शस्य तृतीयज्ञानत्व । तेन रूपेण तृतीयज्ञानत्वरूपेण । ननु प्रामाणिक गौरव न दोषायेत्यत आह व्यभिचाराच्चेति। यत्रादौ धूमदर्शनसमय एव धूमो वह्निव्याप्य इतिज्ञान ततो वन्हिव्याप्यधूमवानिति परामर्शस्तत्र व्यभिचारादित्यर्थः । अत्रेदं प्रतिभाति । साध्यनिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयत्वेन हेतुतावच्छेदकावच्छिन्नपक्षधर्मनिष्टप्रकारतानिरूपितधर्मिविशेष्यताकनिश्चयत्वेन च तदुत्तरानुमिति प्रति कारणत्वमिति तज्ज्ञानद्वयमेक वेति मीमासकमत तन्न रम्य। यत्र व्याप्त्यवच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताको व्याप्त्य शे निर्धार्मितावच्छेदको वन्हिव्याप्यवानितिनिश्चयस्तत्रानुमित्यपलापापत्तेः। तस्मात्पर्वतत्वावच्छिन्नोदश्यकवन्हिविधेयकानुमितित्वावच्छिन्न प्रति वन्हिव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन हेतुत्वमिति। नन्विदमसङ्गतं तथा हि तत्तद्धेतुभेदेन व्याप्यत्वस्याननुगतत्वात्तेन रूपेण हेतु विशिष्य धूमादिघटितव्याप्यत्वेन हेतुतायां वह्विव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयमन्तरेणापि वन्हिव्याप्यालोकत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यकनिश्चयादपि पर्वतविशेष्यकवन्हिविधेयकानुमितेर्जायमानत्वाद्व्यभिचार इति चेत्। अत्र वैशेषिकाः वन्हिव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिवह्निव्याप्यधू-

मवान्पर्वत इति निश्चयत्वेन कारणता वन्हिर्व्याप्यधूमपर्वतत्वोभयनिष्ठध-र्मितावच्छेदकीयविषयतानिरूपितवन्हिनिष्ठविधेयताशालिवन्हिव्याप्यधू-मवान्पर्वतो वन्हिमानित्येतादृशानुमितित्वेन कार्यता एव वन्हिव्याप्यालो-कत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिवन्हिव्या-प्यालोकवान् पर्वत इति निश्चयत्वेन कारणता वह्निव्याप्यलोकपर्वतत्वोभ-यनिष्ठधर्मितावच्छेदकीयविषयितानिरूपितवन्हिनिष्ठविधेयताख्यविषय-ताशालिवन्हिव्याप्यालोकवान्पर्वतो वन्हिमानित्येतादृशानुमितित्वेन कार्य-तेति लिङ्गोपहितलैङ्गिकभानमावश्यकम् । न च तादृशपरामर्शस्य कार्यता-वच्छेदक धूमवान्पर्वतो वन्हिमानित्येतादृशानुमितितत्वमस्तु किं व्याप्त्य-शप्रवेशेनेति वाच्यम् । व्याप्तेरनन्तत्वेनेकतरव्याप्तिप्रवेशेऽपरव्याप्तिघटित-परामर्शादेकतरव्याप्तिघटितपरामर्श विनापि तादृशानुमितेर्जायमानत्वा-द्व्यभिचारः स्यात् तथा च या व्याप्तिः परामर्श निवेशनीया सैव व्याप्तिरनु-मितावपीति नोक्तदोषः । ननु तथापि वन्हिव्याप्यधूमपर्वतत्वोभयनिष्ठध-र्मितावच्छेदकीयविषयतानिरूपितवन्हिविष्ठविधेयताशालिन्या वन्हिव्या-प्यधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नधर्मितावच्छेदकविषय-ताशालिनिश्चयरूपपरामर्शजन्याया वह्निव्याप्यालोकत्वावच्छिन्नप्रकारता-निरूपितवन्हिव्याप्यधूमपर्वतत्वोभयधर्मितावच्छेदकीयविषयताशालिनि-श्चयरूपपरामर्षजन्याया वन्हिव्याप्यधूमवान्पर्वतो वह्निव्याप्यालोकवान्व-न्हिमानित्याकारिकाया वह्न्यनुमितो व्यभिचार इति चेन्न । तत्र कार्यताव-च्छेदकविलक्षणविषयताप्रवेशेन व्यभिचाराभावात् तथा हि तादृशविषय-ताशालिवन्हिव्याप्यधूमवानित्येतादृशपरामर्षस्य वन्हिव्याप्यधूमपर्वतत्वो-भयपर्याप्तोद्देश्यतावच्छेदकीयविषयतानिरूपितवन्हिनिष्ठविधेयताशाल्यनु-मितित्व कार्यतावच्छेदक एव तादृशविषयताशालिवन्हिव्याप्यालोकवा-न्पर्वत इति परामर्षरूपनिश्चयस्य वन्हिव्याप्यालोकपर्वतत्वोभयपर्याप्तध-र्मितावच्छेदकीयविषयतानिरूपितवन्हिनिष्ठविधेयताशाल्यनुमितित्व का-र्यतावच्छेदक यत्र निरुक्तविषयताशालिवह्निव्याप्यधूमवान्पर्वतो वन्हिव्या-प्यालोकवानितिपरामर्षस्तस्य कार्यतावच्छेदक वन्हिव्याप्यधूमपर्वतत्वव.

न्हिव्याप्यालोकैतत्त्रितयपर्याप्तधर्मितावच्छेदकीयविषयतानिरूपितवन्हिनिष्ठविधेयताशाल्यनुमितित्व कार्यतावच्छेदकमिति न व्यभिचारः। इत्थं च यत्र वन्हिव्याप्यधूमवान्पर्वतो वन्हिव्याप्यालोकवानिति समूहालम्बनात्मको धूमालोकयो. परामर्षस्तेन परामर्षेण वन्हिव्याप्यधूमवान्पर्वतो वन्हिमान्वन्हिव्याप्यालोकवान्पर्वतो वन्हिमानित्याकारिकानुमितिस्तत्र वन्हिव्याप्यधूमपर्वतत्वोभयपर्याप्ताया वन्हिव्याप्यालोकपर्वतत्वोभयपर्याप्ताया धर्मितावच्छेदकीयविषयतायाः सत्वात्तस्यापि सग्रह इत्याहुस्तदपरे न क्षमन्ते। तथा हि। यत्र पर्वतो वह्न्यभाववानिति बाधबुद्धिस्ततो वन्हिव्याप्यधूमवानित्यलौकिकः परामर्षस्ततो लौकिकसन्निकर्षवशाद्वन्हिव्याप्यधूमाभाववानिति बाधनिश्चयः लौकिकस्याप्रतिबाध्यत्वात्ततस्तेन परामर्शेनानुमितिर्जन्यते तस्या अनुमितेरसग्रहस्तत्र प्रतिबन्धकवशाद्धूमस्याभानेन धूमपर्वतत्वोभयधर्मितावच्छेदकीयविषयताविरहादिति। किं च धूमलिङ्गकस्थले धूमालोकादिलिङ्गभेदेन परामर्षघटकीभूतव्याप्तेरनन्तत्वेन तत्र व्यभिचारतादवस्थ्यादनुमितिपरामर्षयोः कार्यकारणभावस्यानतत्वमिति। अथ निरुक्तकार्यकारणभावरीत्या लिङ्गोपहितलैङ्गिक न ब्रूमः किन्तु प्रत्यक्षवदनुमितावप्युपस्थितयावत्पदार्थविषयत्व तदतिमन्द तथा हि। व्यापकं विधेयतया व्यापकतावच्छेदक विधेयतावच्छेदकतया पर्वतादिक पक्षतया पर्वतत्वादिक पक्षतावच्छेदकतया भासते एतदतिरिक्त च लाघवोपनीत भासते ईश्वरानुमाने नित्यत्वमिव कृतौ। तथा च साध्यव्याप्यहेतुभाने नियामकाभाव इति लाघवादव्यवहितोत्तरत्वसम्बन्धेन तादृशपरामर्षवदनुमितित्वमेव कार्यतावच्छेदकमुच्यता तथा हि। वन्हिव्याप्यधूमप्रकारकपर्वतनिश्चयत्वेन कारणत्व स्वाव्यवहितोत्तरोत्पत्तिकत्वेन सम्बन्धेन तादृशपरामर्षवत्पर्वतत्वावच्छिन्नोद्देश्यकवन्हिविधेयकानुमितत्वेन कार्यता एवमालोकादावपि बोध्यम्। स्वाव्यवहितोत्तरत्व च स्वध्वसाधिकरणसमयध्वसानधिकरणत्वे सति स्वाधिकरणसमयध्वसाधिकरणत्वं। अत्र, सत्यन्तेन चतुर्थक्षणाना निरासः। स्वाधिकरणेत्यनेन पूर्वक्षणाना निरासः। इत्थ च विनश्यदवस्थपरामर्षेण तृतीयक्ष-

णोत्पत्तिकानुमितेरपि संग्रहः । निरुक्ताव्यवहितोत्तरत्वस्य द्वितीयतृतीय क्षणसाधारण्याद् एवमपेक्षाबुध्यात्मकपरामर्शेण चतुर्थक्षणोत्पादितानुमिते-रपि संग्रहस्तत्र स्वपदेनापेक्षाबुध्यात्मकपरामर्शस्य ग्रहणात् । मैत्रस्य तादृ-शपरामर्शोत्तरं पुरुषान्तरीयतादृशपरामर्शाजन्याया तत्कालीनान्यलिङ्गका-नुमितौ व्यभिचारः । समवायेन पुरुषान्तरे धूमलिङ्गकपरामर्शाभावादव्य-वहितोत्तरोत्पत्तिकत्वेति । तच्चैकाधिकरणावच्छेदेन स्वाव्यवहितोत्तरो-त्पत्तिकत्वरूपं विवक्षितमिति नोक्तदोषः । न च कार्यतावच्छेदकेऽनुमि-तित्वप्रवेशो व्यर्थ इति वाच्यम् । तस्य व्यभिचारवारकत्वात् तथा हि । यत्र परामर्शाव्यवहितोत्तरक्षणे आत्ममनःसंयोगो जातस्तत्र तादृशसम्बन्धेन परामर्शवत्वस्य सत्वे समवायेन तत्रात्ममनोयोगाश्रये मनसि परामर्शाभावा-द्व्यभिचार इति । परामर्शत्वं चानुमितिजनकतावच्छेदकतया सिद्धो मानस-त्वव्याप्यो जातिविशेषः । एतेन चाक्षुषत्वादिना जातिसङ्कर इति परा-स्तम् । यत्र चाक्षुषादिपरामर्शस्तत्र तदनन्तरं मानसपरामर्शस्वीकारात् । क्षणनिर्णयस्य शपथनिर्णेयतया सर्वत्र मानसपरामर्शादेवानुमितिः । न च सर्वत्र स्मृतित्वव्याप्यत्वमेव स्वीक्रियत इति सर्वत्र स्मरणात्मकपरामर्शादे-वानुमितिरिति वाच्यम् । तत्तदुद्बोधकानां तत्तत्स्मरणात्मकपरामर्शं प्रति हेतुत्वकल्पने गौरवात् । न चैव भक्तित्वश्रद्धात्वाभ्यां जातिसङ्करः तयोर्मान-सत्वस्वीकारादिति वाच्यम् । भक्तिश्रद्धात्मकपरामर्शे मानाभावेन भक्तित्व-श्रद्धात्वयोः परामर्शत्वेन सममेकत्र वृत्तित्वाभावात्तयोर्जातित्वे मानाभा-वाच्चेति । आहार्यपरामर्शादनुमितेरभावादनाहार्यत्वं परामर्शे देयं । एव-मप्रामाण्यग्रहाभावविशिष्टत्वमपि देयं । अन्यथा परामर्शं इदं ज्ञानं व्याप्य-भाववद्धेतुविषयकमिति ज्ञानादनुमित्यापत्तिः । अप्रामाण्यग्रहाणां वैशिष्ट्यं च न विषयतया मैत्रीयतत्तदप्रामाण्यग्रहविषयाच्चैत्रीयपरामर्शादनुमित्य-नुत्पत्त्यापत्तेस्तथा च तत्पुरुषीयानुमितौ विषयतासम्बन्धेन तत्पुरुषीयतत्त-दप्रामाण्यग्रहाभावविशिष्टपरामर्शत्वेन हेतुतेति कार्यकारणभावकल्पने गौरवं तथापि समवायसम्बन्धावच्छिन्नतत्तदप्रामाण्यग्रहाभावानामात्म-निष्ठानां कूटस्य सामानाधिकरण्यं प्रत्यासत्त्या वैशिष्ट्यं परामर्शे वाच्यम् ।

न च शरीरावच्छेदेन तत्तदप्रामाण्यग्रहसत्त्वेपि स्तम्भाद्यवच्छेदेन तदात्मनि तत्तदप्रामाण्यग्रहाभावाना सत्वादनुमितिप्रसङ्ग इति वाच्यम् । निरवच्छिन्नविशेषणतया तदभावानामात्मनिष्ठत्वस्य विवक्षितत्वादिति सङ्क्षेपः ॥

**सोऽयं परामर्शो नानुमितेः करणं व्यापाराभावात् । नापि परामृष्यमाणं लिङ्गं परामर्शव्यापारकं । भूतभाविभ्यां लिङ्गाभ्यामनुमित्यजननापत्तेः अनन्यथासिद्धनियतपूर्ववर्त्ति हि कारणं । किन्तु व्याप्तिज्ञानं साध्यज्ञानं लिङ्गज्ञानं जन्यज्ञानमात्रं वा परामर्शव्यापारकं । न चातिप्रसङ्गः व्यापारेण तन्निरासात् । ज्ञानपदं च सविषयकमात्रपरं तेन न स्मरणात्मकपरामर्शस्थले व्यभिचारः तत्र व्याप्तिविषयकसंस्कारस्य परामर्शव्यापारकस्य करणत्वात् पूर्वानुभव एव वा तत्र करणमिति संक्षेपः ।**

अथ परामर्शस्य कारणत्वे सिद्धे करणत्वमपि तस्यैव कथ्यतामित्यत आह सोयमिति । व्यापारेति । तथा च व्यापारवत्कारणं करणमिति भावः । ननु तर्हि परामर्शव्यापारकं ज्ञायमानलिङ्गमेव करणमस्तु न तु लिङ्गज्ञानं द्रव्यं पृथिवीत्वादित्यादौ ज्ञानस्य हेतुत्वकल्पने गौरवादित्यत आह नापीति कारणत्वलक्षणे ऽव्यवहितत्वांशस्याविवक्षितत्वान्नष्टलिङ्गस्य परामर्शद्वारानुमितिजनने बाधकाभावादत उक्तं भावीति । भाविनः पूर्ववृत्तित्वाभावादिति भावः । ननु भाविलिङ्गस्य पूर्ववृत्तित्वाभावे का क्षतिरित्यत आह अनन्यथेति । पूर्ववर्त्तिकारणतावच्छेदकावच्छिन्नकारणसत्वस्यैव कार्योत्पत्तिनियामकत्वम् । एवं च

भाविनः पूर्ववृत्तित्वाभावादतीतलिङ्गस्य पूर्ववृत्तित्वेपि विद्यमानत्वाभावाच्च तस्मादनुमितिरिरिति भावः । तर्ह्यनुमितौ किं कारणमित्यत आह किंत्विति साध्यहेत्वोर्नानात्वेप्येकसाध्यहेतुस्थलेपि व्याप्तेर्नानात्वादेकव्याप्तिविषयकज्ञानोपादाने व्याप्त्यन्तरविषयकज्ञानमादाय व्यभिचार इत्यत आह साध्यज्ञानमिति । यद्वा व्याप्तेर्बहुपदार्थघटितत्वादाह साध्येति अनुमितेरपि साध्यज्ञानात्मकत्वात्कारणत्वं तस्येत्यत आह । लिङ्गेति । लिङ्गस्य व्याप्त्याश्रयत्वेन गौरवस्तत्वाल्लाघवादाह । जन्यज्ञानेति । नित्यस्य स्वरूपयोग्यस्य फलावश्यभाव इति नियमादीश्वरस्यानुमितिः स्यादिति तद्वारणाय जन्येत्युक्तं इदं तु प्रथमादिकल्पेपि बोध्यम् । नन्वेवं घटज्ञानादिसत्वे पि वन्ह्यनुमितिः स्यादत आह परामर्शेति । तत्र वन्हिपरामर्षाभावादिति भावः । तदेव शङ्कते । न चेति । अतिप्रसङ्गः । घटज्ञानाद्वह्न्यनुमितिःस्यादित्यतिप्रसङ्गः । तन्निरासात् । अतिप्रसङ्गनिरासात्, । ननु व्याप्तिज्ञानस्य कारणत्वाभावे विशेषणज्ञानरूपकारणाभावात्कथं परामर्षरूपं विशिष्टबोध इति चेन्न वयं व्याप्तिज्ञानं कारणमिति न ब्रूमः । किं तु व्याप्तिज्ञानत्वं न कारणतावच्छेदकं गौरवात् । अपि तु ज्ञानत्वमेवेति न दोषलेशोऽपि । ननु यत्र व्याप्तिज्ञानं ततस्तत्संस्कारः कालान्तरे स्मरणात्मकपरामर्षस्तत्र ज्ञानाभावाद्व्यभिचार इत्यत आह । ज्ञानपदमिति । सविषयकत्वं तु ज्ञानेच्छाकृतिद्वेषसंस्काराणामेव बोध्यम् । ननु सविषयत्वेन कारणत्वे मानाभावस्तदुक्तं शिरोमणिचरणारविन्दैः । इच्छादितः संस्काराच्चानुमितेरनुदयादित्यत आह पूर्वानुभव एवेति अत्रायं सङ्क्षेपार्थः । अनुमितौ मन एव कारणं । न चानुमितेर्मनः साधारणकारणताकज्ञानत्वान्मानसत्वापत्तिरिति वाच्यम् । चिकीर्षासाधारणमनःसाधारणकारणकत्वस्य यथा न मानसत्वप्रयोजकत्वं तथा मनः साधारणकारणकज्ञानत्वस्यापि मानसत्वप्रयोजकत्वाभावात् । तर्हि मानसत्वे किं प्रयोजकमिति चेत् । मानसत्वस्य नित्यत्वेन प्रयोजकाभावात् । मानसत्वावच्छिन्नोत्पत्तौ किं नियामकमिति चेत् चाक्षुषाद्यनुमित्याद्यसाधारणसामग्र्यभावविशिष्टज्ञानजनकसामग्र्या एव प्रयोजकत्वादिति ।

तर्हि मनोरूपकारणतौल्ये कथमनुमितिमानसयोर्वैजात्यमिति चेत् सामग्रीवैलक्षण्यात् । तथापीन्द्रियकरणकज्ञानस्य प्रत्यक्षत्वात्कथ प्रमाणविभाग इति चेत् । क्रियावैजात्या करणवैजात्यस्य विवक्षितत्वात् । तथा चानुमितिकरणत्वादिना भेदः । एव चैकस्योभयत्रकरणत्वेप्युपाधिभेदात्पाचकपाठकादिवद् भेद इति सक्षेपः ।

**तच्चानुमानं त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् तत्र केवलान्वयिसाध्यकानुमानं केवलान्वयि तत्र यो धर्मः सर्वत्र वर्तते स केवलान्वयी यथाऽभिधेयत्वज्ञेयत्वप्रमेयत्वादिः । अभिधेयत्वं भगवदिच्छारूपशब्दशक्तिविषयत्वं तच्च सर्वत्रैव वर्त्तते सर्वस्यैव भगवदिच्छाविषयत्वाद् वस्तुपदशक्यत्वाच्च । एवं ज्ञेयत्वं ज्ञानविषयत्वं तच्च सर्वत्रैवास्ति सर्वस्यैव भगवज्ज्ञानविषयत्वात् । एवं प्रमेत्वं प्रमाविषयत्वं तच्च सर्वत्रैव वर्तते सर्वस्यैव भगवत्प्रमाविषयत्वात् ।**

तच्चानुमान निरुक्तानुमानं, । तत्र तेषु मध्ये विपक्षस्य सिध्यसिद्धिव्याघातादसद्विपक्ष केवलान्वयीति लक्षणविरहात्स्वय लक्षणमाह केवलान्वयिसाध्यकेति केवलान्वयित्वस्य हेतुविशेषणत्वे वाच्य धूमादित्यादेः सग्रहो न स्याद् अत साध्यकमित्युक्त ॥ लक्षणघटक केवलान्वयित्व किमित्यत आह तत्र यो धर्म इति ॥ तत्र लक्षणे सर्वत्रेति । यस्यात्यन्ताभावः कुत्रापि नास्तीत्यर्थः । तथा चात्यन्ताभावाप्रतियोगित्व केवलान्वयिलक्षणमिति तात्पर्यार्थः । भगवदिति । अस्माच्छब्दादयमर्थो बोद्धव्य ईदृशी या भगवदिच्छा तद्रूपा या शब्दशक्तिस्तद्विषयत्वमित्यर्थः

तथापि तादृशविषयत्वस्य केवलान्वयित्वे किं मानमित्यत आह तच्चे-ति । कुत इत्यत आह सर्वस्यैवेति । ननु सर्वस्य भगवदिच्छाविषयत्वेपि तत्तत्पदार्थस्य तत्तच्छब्दशक्तिविषयत्वात्सर्वस्य कीदृशेच्छाशब्दशक्तिविषय-त्वमित्याकाङ्क्षायामाह वस्तुत्वेति । शक्यत्व शक्तिविषयत्व अयं भावः । अभिधेयत्वमभिधाविषयत्व अभिधा शब्दशक्तिः । एवं च शब्दशक्तिविष-यत्व सर्वस्य सिद्धम् ॥

**अत्र केचित् । यत्र साध्यनिश्चयोऽस्ति तत्रानु-मितेरनुत्पत्तेः पक्षतानुमितेरङ्गं सा च साध्यवत्वेन सन्दिह्यमानत्वं न च मेयत्वेन संशयो भवितुमर्हति व्यतिरेककोटेरप्रसिद्धेरतः कथमिदमनुमानमिति तन्न । सिसाधयिषाविरहविशिष्टसाध्यनिश्चयाभावो हि प-क्षता सा चेहाप्यस्ति न तु संशयस्तेन विनाप्यनुमि-तेरानुभविकत्वात् साध्यनिश्चये सत्यप्यनुमित्सायां सत्यामनुमितेरुत्पत्तेस्तत्र पक्षतासम्पत्तये विशिष्टा-न्तं तत्र सिसाधयिषासहितसाध्यनिश्चयोऽस्ति न तु तद्विरहसहित इति संक्षेपः ॥**

केवलान्वय्यनुमान दूषयितुकामस्य मीमासकस्य मतं दूषयितुमाह अत्र केचिदित्यादिना यत्र महानसादौ सा पक्षता । व्यतिरेकेति । अत्र प्रमेयत्वसन्देहः प्रमेयत्वविषयकः प्रमेयत्वाभावविषयकश्चेति प्रमेयत्वा-भावरूपव्यतिरेककोटेरप्रसिद्धेरित्यर्थः । इद केवलान्वयिसाधक, सिसाध-यिषेति । सिसाधयिषाविरहविशिष्टो यः साध्यनिश्चयः तदभावः पक्षते-त्यर्थः । एव च साध्यनिश्चये सत्यपि यत्र सिसाधयिषा तत्र तद्विरहवि-शिष्टसिद्ध्यभावस्य सत्वात्पक्षता यत्र च न साध्यनिश्चयः सिसाधयिषा-पि न तत्रापि विशिष्टाभावस्य सत्वात्पक्षतेति । सिसाधयिषा तु प्रकृत-

साध्यतावच्छेदकावच्छिन्नसाध्यविशिष्टप्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविषयत्वप्रकारिका अनुमितिविषयिणीच्छा अत्र पर्वतो वन्हिमानिति सिद्धिसत्वे तेजः सध्यकपर्वतपक्षकानुमितिर्जायतामितीच्छायामपि पर्वतो वन्हिमानित्यनुमितिः स्यादतः साध्यतावच्छेदकावच्छिन्नेति । पाषाणमये वह्न्यनुमितिर्जायतामितीच्छायामपि पर्वतो वह्निमानिति सिद्धिसत्वे पर्वतो वन्हिमानित्यनुमितिः स्यादतः पक्षतावच्छेदकावच्छिन्नेति । सिद्धिसत्वे यत्किञ्चिज्ज्ञान जायतां प्रत्यक्षाद्व्यतिरिक्त ज्ञान जायतामितीच्छायामपि वन्हिव्याप्यधूमवान्पर्वतो वन्हिमानिति सिध्यात्मकपरामर्षे सत्यनुमित्युत्पत्तेस्तादृशेच्छाया उत्तेजकत्वमित्येवमननुगम इति अत्रोच्यते । साध्यनिश्चये सति यादृशेच्छासत्वे ऽनुमितिस्तादृशेच्छाविरहसमुदायविशिष्टसाध्यनिश्चयाभावः पक्षतेत्यनुगमान्न क्षतिः । अथ पक्षतावच्छेदकसामानाधिकरण्येनैकत्र पर्वते साध्यसिद्धावनुमित्सामन्तरेण यदि पर्वतत्वधर्मितावच्छेदिकानुमितिरनुभवसिद्धा त दा तद्धर्मितावच्छेदककसाध्यनिश्चयस्तद्धर्मितावच्छेदककानुमितौ विरोधी वाच्यः । यदि च तत्र नानुमितिस्तदा पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति सिद्धिमात्र विरोधि । तत्सामानाधिकरण्येनानुमितेरनुदयात् । पक्षतावच्छेदकावच्छेदेनानुमितिं प्रत्यवच्छेदकावच्छेदेन सिद्धिः प्रतिबन्धिका । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितेरुत्पत्तेः । अत्र साध्यतावच्छेदकसम्बन्धमात्रपर्याप्तससर्गताकपक्षतावच्छेदकविशिष्टविशेष्यकानुमितौ साध्यतावच्छेदकसम्बन्धमात्रपर्याप्तससर्गताकपक्षतावच्छेदकविशिष्टविशेष्यकसाध्यसिद्धिः प्रतिबन्धिका इयं तु पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यतावच्छेदकसम्बन्धपर्याप्तसंसर्गताकपक्षतावाच्छेदकविशिष्टपक्षविशेष्यकानुमितावपि प्रतिबन्धिका इय चावच्छेदकावच्छेदे नानुमितिरिति सक्षेपः । इहापि प्रमेयत्वादिसाध्यकानुमितावपि विशिष्टान्तस्य कृत्यमाह साध्येति । सक्षेप इति । अत्राय सक्षेपार्थः । अनुमितिं प्रति पक्षतायाः केन रूपेण कारणत्व । न तावत्समवायसम्बन्धावच्छिन्नप्रतियोगिताकात्मनि

resembling the unfelt touch of a passing straw,—this fact being assumed on the strength of the effects perceived"

*Reply* Then in the case of the cheat also, we could assume the perception of the object, on the strength of his desire to speak of it, as we find that unless a man has perceived an object, he has no desire to speak of it

*Objection* "But at the time that he is going to cheat, the person has had no perception of the object"

*Reply* That may be, but it is possible that he may have a remembrance of it, as all that the cheat does is to speak of something that he has perceived before, as something else, and hence his desire to speak of it is distinctly a product of its recollection of it, and through that recollection, it may also be said to be due to his previous perception of that object, and as such there is no want of concomitance between *perception* and *desire to speak*

Even such *desire to speak* as is due to a wrong perception, is indirectly the product of a correct perception, and perception is always concomitant with the object perceived, hence the existence and utterance of a word must be accepted as proving the existence of the object expressed by it If it were not so, when a sentence would be heard, the hearer would not have any idea of the objects spoken of thereby, and all that he would be conscious of would be the *desire to speak* on the part of the speaker, and as this cognition would not serve any useful purpose, all verbal usage would become impossible Nor would there be any ground for deciding as to the victory or defeat of disputants, as the desire to speak would be equal in both, and as such judged by that contention alone, both would be equally right in their disquisitions

**Page 133]** It has been declared by some that the Dimension is nothing apart from the substance, as so long as the substance is not perceived we have no idea of the Dimension

But this is not true, because we often find that when a substance is seen from a distance, its particular dimension is not

known, and hence it is that even a large substance is mistaken for a small one

Dimension having been thus proved to exist the author now proceeds to describe its various kinds, *Tat chaturvidham &c* He next points out the way in which it is of four kinds *Anu &c* The square or other shapes of things are due to the particular arrangements of constituent molecules, and they do not constitute so many different kinds of Dimension

*Objection* "The same may be said of Length &c, also"

*Reply* Not so, because even when we do not perceive the arrangement of the parts of an object at a great distance from us, we do have distinct notions of its Length &c

*Objection* "Well Sir, the dimension of the Diad must be minute, as there is no cause in it of the production of any larger Dimension, then again the Dimension of the atom must be smaller than that of the Diad,—as the Dimension of the cause is always found to be smaller than that of its effect, and hence the Dimension of the atom must be totally different from that of the Diad Thus also the Dimension of the *Ākāça* reaching up to the highest upward limit is wholly different from that of the jar and other substances, and then we have the long and short Dimensions, and thus there are *Six* dimensions (1 Minute atomic, 2 Minute Diadic, 3 Large ordinary, 4 Largest, 5 Long and 6 Short), why then should it be said of *four* kinds only?

In reply to this the author says *Tatra &c* That is to say, from among these four Dimensions, the *Large* is of two kinds—Eternal and Transient The Eternal Large Dimension is that found in *Ākāça*, Time, Space and Self, it is this that is called '*paramamahattva*,' "greatest largeness,' and the Transient Large Dimension belongs to the Triad and other substances, and not to *Ākāça* &c

As the Large Dimension, so the Minute Dimension also is of two kinds—Eternal and Transient In both cases the particle '*cha*' is added with a view to deny the existence of any other

kind of Largeness or Minuteness The eternal Minute Dimension belongs to the Atom and the Minds, as in these there are no causes for either producing or destroying the Dimensions. By '*Pārimāndaly*' is meant the smallest dimension possible The transient Minute Dimension belongs to the Diad alone, and to nothing else

The sense of all this is that the Dimension of the atom is only one form of the *Minute* Dimension, and the 'Largest Dimension' is only a form of the *Large* Dimension. If it were not so then it would not be qualified by the word 'parama' The word '*Mahat*' 'Large' is applied to that Dimension which helped by colour, renders its substratum perceptible, and that which is incapable of making its substratum perceptible is the 'Anu', 'Minute' From this it does not follow that the Triad also is *Minute*, because it is perceptible, its perceptibility being inferred from the fact of its being made up of material causes, like the jar, in fact it is that composite substance which, though itself perceptible, has its constituent particles such as are not perceptible As for the Dimension of the *Ākāçā*, even though it is not perceptible, yet it is 'Large', because its extension is larger than that of the Dimension of the Diad (which is the outermost limit of the *Minute*),—like that of the jar

**Page 134** ] *Objection* "It has been said above that the transient Minute Dimension belongs to the Diad alone but this is not quite correct, as we find the lotus, the āmalaka and the Bēl spoken of in terms denoting that one is *minuter* than the other (which would show that the minute Dimension belongs to these substances also)"

To this the author replies—*In the lotus &c*—That is to say, the use of the word 'minute' with regard to the Āmalaka must be regarded as secondary, or figurative, being based upon the fact of absence in the Lotus of the *Largeness* of the *Bēl* The word '*bhākta*' is derived from '*bhakti*', 'division' *i e*, the 'possession of something as common between two things,' hence,

'Similarity,' and that which is due to, or based upon mere similarity, is '*bhākta*' or 'secondary' Similarly the absence of the *largeness* of the *Āmalaka* in the Lotus, leads to this latter being spoken of as 'minute'—this minuteness thus being only comparative Absolute minuteness (transient) however exists in the Diad alone, and in this, therefore, is a total absence of *Largeness* The *largeness* existing in the Bēl is absent in the Āmalaka, and hence the application of the word 'minute' to this latter is also only indirect or figurative

The author next proceeds to show the peculiarities *Length* and *Shortness* *Dīrghahrasvatve &c* These two qualities inhere respectively in the same substances as the produced (non-eternal) Largeness and Minuteness That is to say, in a substance where the Largeness is produced, as in the Triad, the Length is also produced, and in a substance wherein Minuteness is produced, we have *shortness* also produced Some people say that the *atom* being a *parimandala,* it has no *Shortness*, and that *Ākāça* being all-pervading, it has no *Length*, others hold that like the usage of 'Extreme Atom' and 'Greatest Largeness', we also find the usage of 'extreme shortness' and 'extreme length', and hence it must be admitted that the former belongs to the Atom, and the latter to *Ākāça* ,—the argument being stated thus *Ākāça* is the substratum of *Length,* because it is the substratum of *Largeness,* like the pillar &c, and again, the Atom is the substratum of *shortness*, because it is the substratum of the *minuteness,* like the Diad

*Question* "If *shortness* is co-substrate with *produced minuteness,* then how is it that we have the quality spoken of as residing in other things?"

*Answer* *Samit &c* That is to say, though in reality, all such things as the piece of fuel, sugarcane and bamboo &c are in reality possessed of *Length,* yet they are spoken of as 'short', the epithet being applied to them secondarily, on account of the absence, in the sugarcane, of the lengthy dimension possessed by the bamboo, and so forth, and so also with the piece of wood as compared to the sugarcane It is only the Diad

that is absolutely *short*, as therein *Length* is wholly absent, and hence the sugarcane comes to be spoken of as 'short', on account of the *absence in it of the length of the bamboo*

*Objection* "Why should not the application of the epithet 'short' to these substances be regarded as direct and true ?"

It is not so regarded, for the simple reason that that same thing is found to be possessed of *Length* as compared with something else, and certainly one and the same thing could not *in reality,* be both *long* and *short*

*Objection* "In that case we might regard the epithet 'long' as applied secondarily, and that of 'short' as real"

*Reply* We do not find any cause for the production of the usage of 'long'

*Objection* "Then why should not we regard all usage of 'short' as indirect and unreal ?"

*Reply* Not so, When the principal or direct thing is possible there can be no possibility of the secondary or indirect

The author now proceeds to show the cause of that Dimension which is *produced,* not eternal *Anityam &c* The four kinds of transient Dimension, viz, Long Short, Large and Minute—originates from the aggregations of Numbers and Dimensions He proceeds to explain how they are produced from aggregations of number The Diad is produced by two atoms, being called 'two atoms,' and when three of these Diads combine, the number 'three,' made up of the unities inhering in each of the Diads, is produced in them through the intervention of the Divine will, and this number ('three') produces, in the Triad, which is a product of three Diads, *Largeness* and *Length,* simultaneously with the production of its Colour &c The word '*iti*' is aded with a view to preclude the cause of the Large Dimension, and the word '*ādi*' in '*Tryanukādi*' is meant to include the *Quarternary* and other products

**Page 135]** *Question* How do you know that the Dimension of the Triad &c, has for its immaterial cause, the plurality of number inhering in the component Diads ?"

*Answer* By seeing that no other cause is possible For instance, the said dimension could not be brought about by such qualities of the Diads as Colour, Taste, Odour, Singularity, Separateness, Gravity, Fluidity and Viscidity, as all these whenever productive are found to be productive only of like properties, and hence if the minute dimension of the Diads was to produce the Dimension in the Triad, then the Dimension of this latter also would be *minute* only and not *large*, as a Dimension always produces its own like As a matter of fact however, we find that the Triad is endowed with *largeness*, as is evinced by the fact of its being composed of many component particles like the jar Nor could any effect be produced without an adequate immaterial cause, and we have owned elsewhere that when two products are made up of parts of equal dimensions, if the number of such parts be different in the two, that difference makes a difference in the dimensions of the products, and it is for this reason that in the case in question we regard Number to be the required cause

We might have regarded the conjunctions of the Diad to be the cause of the Largeness of the Triad, but then too, all that we could say, would be that the conjunction of *many* component particles is the cause, and thus by distinguishing the *known* (*prāpta*) from the *unknown*, we would arrive at the same conclusion,—that it is *manyness* or *multiplicity* that is the cause of the Dimension

Then again, that number Three which is dependent upon the will of God, could be destroyed, only at the destruction of the unseen potency that holds it intact, and its destruction could not be due to the destruction of its substratum, as the will of God (which is its substratum) is eternal

The author next proceeds to explain how *Largeness* is produced out of *Largeness Dvibahubhih &c* In a product produced our of two and many component particles, the Largeness is produced by the largenesses of the components Thus then, in a case where the product is made up of two *large* particles not combining into a single aggregate (but merely combining to-

gether), the production of the largeness of that product is by the largenesses of these two component particles, as in this case we have neither plurality of Number nor an Aggregation In cases however where the product is made up of many component particles, the largeness of the product is due to the largenesses of these particles, and not to the plurality of Number In a case where made up of an equal *number* of particles, but the particles in them are minute while those in the other large,—we find a distinct difference in the Dimensions of the two things, and this would not be possible if the Dimensions were due solely to *number*, as the number of particles in both is exactly the same But in a case where two things are made up of particles of the same Dimensions, but the number of particles in one is larger than that in the other, and hence there is a distinct difference in their dimensions,—in such cases Number must also be regarded as a cause of Dimension, otherwise the difference would be inapplicable in the case in question In a case where the products are made up of an *equal Number* of particles, *of the same size*, the production of Largeness must be taken as due to both Number and Dimension, as each of these singly has been found to have the power of producing Largeness, and in this latter case we do not perceive any difference in the powers of the two, both being found to be equally capable of producing the largeness This is the explanation offered by some people, others hold that Dimension alone is the cause, as long as we can find an homogeneous cause for an effect, it is not right to accept a heterogeneous cause.

**Page 136 ]** The author next proceeds to explain *Aggregation* '*Prachaya*' or 'Aggregation' is a peculiar kind of loose conjunction or combination, giving rise to particular products When two lumps of cotton go to make up a single Double Lump, it is an *aggregation* that is present, it stands in need of productive conjunctions or contacts in both of the original lumps, or of the mutual intercontacts among the component particles of both those lumps, and by means of these the said *aggregation* produces the largeness in the Double Lump In a case where the contact of the two lumps is itself loose, and

the contacts of their respective component particles are also loose, then, on the two lumps producing a product, we find a dimension greater than that of the substance that might be produced by the firm contacts of the two lumps with their component particles also in close adhesion, and in this case the cause of the largeness produced lies in the loose contact of the two lumps as depending upon the loose combination of the component particles of those lumps In a case however where the contact of the two lumps is loose, and the mutual contacts of the component particles are also loose,—but the constituents of the lumps are not loose,—then, in that case, in the substance produced out of these two lumps, we find a largeness greater than that the substance produced by a firm contact of the two lumps which too have their component particles in close adhesion, and this leads us to conclude that in such cases the cause of the largeness lies in the loose contact of the lumps depending upon the mutual contacts of the component particles of both

*Question* "How is it that in the instances just cited you do not accept the Largeness to be due to Plurality and Largeness, which have been proved above to have the power of producing it?"

*Answer It cannot be due to any Pluralities or Largenessess* That is to say, in a case where the cognition of a particular dimension is recognised as being due to Aggregation, we cannot regard Plurality and Largeness as the cause—and the reason for this lies in the fact of there being a difference of dimensions in two things made up of equal numbers of component particles of equal dimensions and weights If Number were the only cause, then there would be no difference between two things, both of which are made up of equal number of component particles, even though the compact of particles in one were looser than that in the other (but as a matter of fact this latter circumstance is found to make a difference), as the number in both would be exactly the same. Similarly if Largeness were the

शसादावचि। उद ईत्। उदीचः। उदीचा। उदग्भ्यामित्यादि। समः समि। सम्यङ्। सम्यञ्चौ। सम्यञ्चः। समीचः। समीचा। सहस्य सध्रिः। सध्र्यङ्। तिरसस्तिर्यलोपे। तिर्यङ्। तिर्यञ्चौ। तिर्यञ्चः। तिर्यञ्चम्। तिर्यञ्चौ। तिरश्चः। तिरश्चा। तिर्यग्भ्यामित्यादि। पूजार्थत्वे तु नाञ्चेः पूजायामिति नलोपनिषेधादलुप्तनकारत्वान्न नुम्। प्राङ्। प्राञ्चौ। प्राञ्चः। नलोपाभावादकारलोपो न। प्राञ्चः। प्राञ्चा। प्राङ्भ्याम्। प्राङ्क्षु। प्राङ्क्षु। प्राङ्षु। एवं पूजार्थे प्रत्यङादयः।

गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम्॥
स्वमसुप्सु नव षट् भादौ षट्के स्युस्त्रीणि जश्शसोः।
चत्वारि शेषे दशके रूपाणीति विभावय॥

तथाहि। गामञ्चतीति विग्रहे क्विन् गतौ नलोपः। अवङ् स्फोटायनस्येत्यवङ्। गवाक्। गवाग्। सर्वत्र विभाषेति प्रकृतिभावे। गोअक्। गोअग्। पूर्वरूपे। गोक्। गोग्। पूजायां संयोगान्तलोपे नस्य कुत्वेन ङः। गवाङ्। गोअङ्। गोङ्। अम्यप्येतान्येव नव। औङः शी। भत्वादच इत्यल्लोपः। गोची। पूजायां तु। गवाञ्ची। गोअञ्ची। गोञ्ची। जश्शसोः शिः। शेः सर्वनामस्थानत्वान्नुम्। गवाञ्चि। गोअञ्चि। गोञ्चि। गतिपूजनयोस्त्रीण्येव। गोचा। गवाञ्चा। गोअञ्चा। गोञ्चा। गवाग्भ्याम्। गोअग्भ्याम्। गोग्भ्याम्। गवाङ्भ्याम्। गोअङ्भ्याम्। गोङ्भ्यामित्यादि। सुपि तु ङान्तानां पक्षे ङ्णोः कुगिति कुक्। गवाङ्क्षु। गोअङ्क्षु। गोङ्क्षु। गवाङ्षु। गोअङ्षु। गोङ्षु। गवाक्षु। गोअक्षु। गोक्षु। न चेह चयो द्वितीया इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम्। चर्त्वस्यासिद्धत्वात्। कुक्पक्षे तु

तस्यासिद्धत्वाज्जश्त्वाभावे पक्षे द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव ॥

जह्यमेषां द्विर्वचनानुनासिकविकल्पनात् ।
रूपाण्यश्वादिभूतानि ५२७ भवन्तीति मनीषिभि' ॥

प्रकृतमनुसरामः। निरूपपदाद्युजेः क्विन् । युजेरसमासे इति नुम्। संयोगान्तस्य लोपः । नस्य क्विन्प्रत्ययस्येति कुत्वेनानुनासिको ङकारः । युङ् । नश्चापदान्तस्येति नुमोऽनुस्वारः । परसवर्णः । तस्यासिद्धत्वाच्चो'कुरिति कुत्व न। युञ्जौ । युञ्जः । युजः । युजा। युग्भ्यामित्यादि । क्रुञ्च कौटिल्याल्पीभावयोः । अस्मात्क्विन् । नलोपाभावो निपात्यते । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुङ्भ्यामित्यादि ॥

**त्यदादिषु दृशो ऽनालोचने कञ् च । ३ । २ । ६० ॥**

त्यदादिषूपपदेष्वज्ञानार्थाद् दृशेर्धातोः कञ् स्याच्चात्क्विन् ॥ तादृक् । यादृक्। तादृशः । यादृशः । अनालोचने किम् । त पश्यतीति तद्दर्शः । कर्मण्यण् ॥ समानान्ययोश्चेति वाच्यम् ॥ * ॥ सदृक् । सदृशः । अन्यादृक् । अन्यादृश ॥ क्सोऽपि वाच्यः ॥ * ॥ तादृक्षः । सदृक्षः । अन्यादृक्षः ॥

**सत्सूद्विषद्रुहदुहयुजविदभिदछिदजिनीराजामुपसर्गे ऽपि क्विप् । ३ । २ । ६१ ॥**

एभ्य क्विप् स्यात् उपसर्गे सत्यसति च सुप्युपपदे ॥ द्युसत्। उपनिषत्। अण्डसू' । प्रसूः । मित्रद्विट् । प्रद्विट्। मित्रध्रुक्। प्रध्रुक्। गोधुक् । प्रधुक् । अश्वयुक् । प्रयुक् । सुयुक् । क्विन्प्रत्ययस्येति कुत्वस्यासिद्धत्वाच्चोः कुरिति कुत्वम् । वेदवित् । निवित् । काष्ठभित् । प्रभित्। रज्जुच्छित्। प्रच्छित्। शत्रुजित्। प्रजित्। सेनानीः।

प्रणीः। अग्रणीः। ग्रामणीः। कथमत्र णत्वम्। स एषां ग्रामणीरिति निर्देशज्ञापकसिद्धादग्रग्रामाभ्यां नयतेर्णो वाच्य इति वचनात्। तच्च नीरूपप्रत्ययविषयम्। तेन कर्मण्यणि ग्रामनाय इत्यत्र न। विश्वाराट्। सम्राट्॥

**भजो ण्विः। ३। २। ६२॥**

सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात्॥ अंशभाक्। प्रभाक्।

**छन्दसि सहः। ३। २। ६३॥**

ण्विः स्यात्। पृतनाषाट्॥

**वहश्च। ३। २। ६४॥**

प्राग्वत्॥ दित्यवाट्। योगविभाग उत्तरार्थः॥

**कव्यपुरीषपुरीष्येषु ञ्युट्। ३। २। ६५॥**

एषु वहेर्ञ्युट् स्याच्छन्दसि॥ कव्यवाहनः। पुरीषवाहनः। पुरीष्यवाहनः॥

**हव्ये ऽनन्तःपादम्। ३। २। ६६॥**

अग्निर्नो हव्यवाहन। अग्निश्च हव्यवाहनः। पादमध्ये तु वहश्चेति ण्विरेव। हव्यवाडग्निरजरः पिता न.॥

**जनसनखनक्रमगमो विट्। ३। २। ६७॥**

विड्वनोरित्यात्वम्। अब्जाः। गोजाः। गोषा इन्द्रो नृषा असि। सनोतेरन इति षत्वम्। इयं शुष्मेभिर्बिसखा इवारुजत्। आदधि क्राः शवसा पञ्च कृष्टीः। अग्रेगाः॥

**अदो ऽनन्ने। ३। २। ६८॥**

छन्दसीति निवृत्तम् । विट् स्यात् ॥ आममत्ति आमात् । सस्यात् । अनन्ने किम् । अन्नादः ॥

## क्रव्ये च । ३ । २ । ६९ ॥

अदेर्विट् ॥ पूर्वेण सिद्धे वचनमणबाधनार्थम् । क्रव्यात् । आममांसभक्षकः । कथ तर्हि क्रव्यादोऽस्रप आशर इति । पक्कमांसे उपपदे ऽण् । उपपदस्य क्रव्यादेशः पृषोदरादित्वात् ॥

## दुहः कब् घश्च । ३ । २ । ७० ॥

कामदुघा ॥

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् । ३ । २ । ७१ ॥

श्वेतवहादीनां डस्पदस्येति वक्तव्यम् ॥ * ॥ यत्र पदत्वं भावि तत्र ण्विनो ऽपवादो डस् वक्तव्य इत्यर्थः । श्वेतवाहः । श्वेतवाहौ । श्वेतवाह. । श्वेतवोभ्याम् । उक्थानि उक्थैर्वा शंसति उक्थशा यजमान । नलोपो निपात्यते । उक्थशासौ । उक्थशासः । पुरो दाश्यते दीयते पुरोडाः ॥

## अवे यजः । ३ । २ । ७२ ॥

अवयाः । अवयाजौ । अवयाजः ॥

## विजुपे छन्दसि । ३ । २ । ७३ ॥

उपे उपपदे यजेर्विच् ॥ उपयट् । छन्दोग्रहणं ब्राह्मणार्थम् । किमर्थं पुनरिदमुच्यते यावताऽन्येभ्योऽपि दृश्यन्ते इति यजेरपि विच् सिद्धः । एवं तर्हि नियमार्थमेतत् । उपयजश्छन्दस्येव न भाषाया-मिति वृत्तिः ॥

## आतो मनिन्क्वनिब्वनिपश्च । ३ । २ । ७४ ॥

सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युश्चाद्विच्च ॥ सुदामा । सुधीवा । सुपीवा । भूरिदावा । घृतपावा । विच् । कीलालपाः ॥

## अन्येभ्योऽपि दृश्यन्ते । ३ । २ । ७५ ॥

छन्दसीति निवृत्तम् । मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ॥ शॄ । सुशर्मा । प्रातरित्वा । विजायत इति विजावा । ओणृ । अवावा । विच् । रोट् । रेट् । सुगण् ॥

## क्विप् च । ३ । २ । ७६ ॥

अयमपि दृश्यते ॥ सत्सूद्विषेति त्वस्यैव प्रपञ्चः । उखास्रत् । पर्णध्वत् । वाहभ्रट् । अन्तरिति णत्वम् । हे प्राण् । शास इदितीत्वम् । मित्राणि शास्तीति मित्रशीः । आशासः क्वावितीत्वम् । आशीः । इत्वोत्वे । गीः । पूः । इस्मन्त्रन्क्विषु चेति ह्रस्वः । तनुच्छत् । अनुनासिकस्य क्वीति दीर्घः । मोनो धातोरिति नत्वम् । प्रतान् । प्रशान् । च्छ्वोरित्यूठ् । अक्षद्यूः । ज्वरत्वरेत्यूठ् । जूः । जुरौ । जुरः । तूः । सूः । ऊठ् । वृद्धिः । जनानवतीति जनौः । जनावौ । जनावः । मूः । मुवौ । मुवः । सुमूः । सुम्वौ । सुम्वः । राल्लोपः । मुर्छा । मूः । मुरौ । मुरः । धुर्वी । धूः । गम क्वावित्यनुनासिकलोपः । अङ्गगत् । गमादीनामित्युक्तेरिहापि । परीतत् । सयत् । सुनत् । ऊङ् च गमादीनामित्युक्तेरग्रेगूः । अग्रेभ्रूः ॥

## स्थः क च । ३ । २ । ७७ ॥

चात्क्विप् । शंस्थः । शंस्थाः ॥ शमिधातोरित्यचं बाधितुं सूत्रम् ॥

## सुप्यजातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ ॥

अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये ॥ उष्णभोजी । शीतभोजी । अजातौ किम् । ब्राह्मणानामन्त्रयिता । ताच्छील्ये किम् । उष्णं भुङ्क्ते कदाचित् । इह वृत्तिकारेण सुपीति वर्तमाने पुनः सुब्ग्रहणमुपसर्गभिन्ने एव सुपि णिनिर्यथा स्यादित्यर्थमिति व्याख्याय उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानमिति पठित्वा उदासारिण्यः प्रत्यासारिण्य इत्युदाहृतम् । हरदत्तमाधवादिभिश्च तदेवानुसृतम् । एतच्च भाष्यविरोधादुपेक्ष्यम् । उक्तं हि भाष्ये सुपीत्यनुवर्तमाने पुनः सुब्ग्रहणं किमर्थं अनुपसर्ग इत्येव तदभूत् । इदं सुप्मात्रे यथा स्यात् । उदासारिण्यः । प्रत्यासारिण्य इति । प्रसिद्धश्चोपसर्गेऽपि णिनिः । स बभूवोपजीविनाम् । अनुयायिवर्ग । पतत्यधो धाम विसारि । न वञ्चनीया प्रभवोऽनुजीविभिरित्यादौ ॥ साधुकारिण्युपसंख्यानम् ॥ * ॥ ब्रह्मणि वदः ॥ * ॥ अताच्छील्यार्थं वार्तिकद्वयम् । करोतिरत्र सर्वधात्वर्थानुवादकः । साधुकारी । साधुदायी । ब्रह्मवादी ॥

## कर्तर्युपमाने । ३ । २ । ७९ ॥

णिनिः स्यात् ॥ उपपदार्थः कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । ध्वांक्षरावी । अताच्छील्यार्थं जात्यर्थञ्च सूत्रम् । कर्तरि किम् । अपूपानिव भक्षयति माषान् । उपमाने किम् । उष्ट्रः क्रोशति ॥

## व्रते । ३ । २ । ८० ॥

सुप्युपपदे व्रते गम्ये णिनिः स्यात् ॥ स्थण्डिलशायी ॥

## बहुलमाभीक्ष्ण्ये । ३ । २ । ८१ ॥

पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः स्यात् ॥ क्षीरपायिण उशीनराः ॥

**मनः। ३। २। ८२॥**

सुपि मन्यतेर्णिनिः स्यात् ॥ दर्शनीयमानी। बहुलग्रहणानुवृत्तेर्मन्यतेर्ग्रहणं न मनुतेः। उत्तरसूत्रे हि खश्प्रत्यये विकरणकृतो विशेषः स्यात् ॥

**आत्ममाने खश्च। ३। २। ८३॥**

स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् चाण्णिनिः ॥ यद्यपि वासरूपविधिना लभ्यत एव णिनिस्तथाप्यविच्छेदाय समुच्चीयते। तेन करणे यज इत्यादौ णिनिरेवानुवर्तते न तु खश्। पण्डितमात्मानं मन्यते पण्डितमन्यः। पण्डितमानी। आत्ममाने किम्। दर्शनीयमानी देवदत्तो यज्ञदत्तस्य ॥

**भूते। ३। २। ८४॥**

अधिकारोऽयम्। वर्तमाने लडिति यावत् ॥

**करणे यजः। ३। २। ८५॥**

करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात्कर्तरि॥ सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी। भूते किम्। अग्निष्टोमेन यजति॥

**कर्मणि हनः। ३। २। ८६॥**

पितृव्यघाती। कर्मणीत्येतत्सहे चेति यावदधिक्रियते॥

**ब्रह्मभ्रूणवृत्रेषु क्विप्। ३। २। ८७॥**

एषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात् ॥ ब्रह्महा। भ्रूणहा। वृत्रहा। क्विप् चेत्येव सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव हन्तेर्भू-

न्यस्मिन्नुपपदे पुरुषं हतवानिति धातुनियमः । ब्रह्मादिषु हन्तेरेव नान्यस्मात् ब्रह्माधीतवानित्युपपदनियमः । ब्रह्मादिषु हन्तेर्भूत एव नान्यस्मिन्काले ब्रह्माणं हन्ति हनिष्यति वेति प्रत्ययनियमः । ब्रह्मादिषु हन्तेर्भूते क्विबेव नान्यः प्रत्यय इति कालनियमः । एवं चतुर्विधोऽत्र नियम इति काशिका । विनिगमनाविरहादिति तदाशयः । तत्र ब्रह्मादिष्वेव हन्तेरिति धातुनियमे भूते इत्याश्रयणात्कालान्तरे उपपदान्तरेऽपि भवत्येव । पुरुषं हन्ति हनिष्यति वा पुरुषहा । हरिहयोरिह योगविचक्षणाः । ब्रह्मादिषु हन्तेरेवेत्युपपदे नियमेऽपि भूते इत्याश्रयणात्कालान्तरे धात्वन्तरादपि भवत्येव । वृत्रं जयति जेष्यति वा वृत्रजित् । भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिष्वित्युक्तेः पुरुषहा । अरिहेति प्राग्वत् । भूते क्विबेवेति कालनियमेऽपि उपपदान्तरे भूते प्रत्ययान्तरं भवत्येव । पितृव्यघातीति । सोपपदश्च प्रत्ययो नियमेन व्यवर्त्यते । निष्ठा तु भवत्येव । वृत्रं हतवानिति । ब्रह्मादिष्वेव क्विबेवेति द्विविधो नियम इति भाष्यम् । श्रुत्युपस्थितोपपदप्रत्यययोरुपरोधापेक्षया प्रकरणलक्षणजघन्यप्रमाणोपस्थितधातुकालयोरेवोपरोधस्य न्याय्यत्वादिति तदाशयः ॥

## बहुलं छन्दसि । ३ । २ । ८८ ॥

पूर्वेण नियमादप्राप्तं क्विप् विधीयते । उपपदान्तरेऽपि हन्तेर्बहुलं क्विप्स्यात् । यो मातृहा पितृहा । न च भवति । अमित्रघातः ॥

## सुकर्मपापमन्त्रपुण्येषु कृञः । ३ । २ । ८९ ॥

सुकर्मादिषु कृञः क्विप् स्यात् ॥ त्रिविधोऽत्र नियम इति काशिका । धातुनियमस्त्विह नेष्यत इति तद्भावः । सुकृत् । कर्मकृत् ।

पापकृत् । मन्त्रकृत् । पुण्यकृत् । क्विबेवेति नियमात्कर्म कृतवानित्यत्राण् न । कृञ एवेति नियमान्मन्त्रमधीतवान् मन्त्राध्यायः । अत्र न क्विप् । भूत एवेति नियमान्मन्त्रं करोति करिष्यति वेति विवक्षाया न क्विप् । स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप् । शास्त्रकृत् । भाष्यकृत् ॥

### सोमे सुञः । ३ । २ । ९० ॥

सोमसुत् ॥ चतुर्विधोऽत्र नियम इति काशिका । एवमुत्तरसूत्रेऽपि ॥

### अग्नौ चेः । ३ । २ । ९१ ॥

अग्निचित् ॥

### कर्मण्यग्न्याख्यायाम् । ३ । २ । ९२ ॥

कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् स्यादग्न्याधारस्थलविशेषस्याख्यायाम् ॥ श्येन इव चितः श्येनचित् ॥

### कर्मणीनि विक्रियः । ३ । २ । ९३ ॥

कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात् ॥ कुत्सितग्रहणं कर्तव्यम् ॥ * ॥ सोमविक्रयी । घृतविक्रयी । नेह । धान्यविक्रायः ॥

### दृशेः क्वनिप् । ३ । २ । ९४ ॥

कर्मणि भूत इत्येव ॥ पारं दृष्टवान् पारदृश्वा । अन्येभ्योऽपि दृश्यन्त इति क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरनिवृत्त्यर्थम् ॥

### राजनि युधि कृञः । ३ । २ । ९५ ॥

क्वनिप् स्यात् ॥ युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा । राजकृत्वा ॥

**सहे च । ३ । २ । ९६ ॥**

कर्मणीति निवृत्तम् । सहयुध्वा । सहकृत्वा ॥

**सप्तम्यां जनेर्डः । ३ । २ । ९७ ॥**

सरसि जातं सरसिजम् । मन्दुरायां जातो मन्दुरजः । ङ्याप्योरिति ह्रस्वः ॥

**पञ्चम्यामजातौ । ३ । २ । ९८ ॥**

जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात् ॥ संस्कारजः । अदृष्टजः । अजातौ किम् । अश्वाज्जातः ॥

**उपसर्गे च संज्ञायाम् । ३ । २ । ९९ ॥**

प्रजा स्यात्सन्ततौ जने ॥

**अनौ कर्मणि । ३ । २ । १०० ॥**

अनुपूर्वाज्जने. कर्मण्युपपदे ड' स्यात् ॥ पुमांसमनुरुध्य जाता पुमनुजा ॥

**अन्येष्वपि दृश्यते । ३ । २ । १०१ ॥**

अन्येष्वप्युपपदेषु जनेर्डः स्यात् ॥ न जात' अज' । द्विर्जातः द्विजः । ब्राह्मणजः । अनु जातः अनुजः । अपिशब्दः सर्वोपाधिव्यभिचारार्थ. । तेन धात्वन्तरादपि कारकान्तरेऽपि क्वचित् । परितः खाता परिखा ॥

**निष्ठा । ३ । २ । १०२ ॥**

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् ॥ तत्र 'तयोरेवेति भावकर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । उक्ताविति । स्नातं मया । स्तुतस्त्वया विष्णुः । विष्णुर्विश्वं कृतवान् ॥ आदिकर्मणि निष्ठा वक्तव्या ॥ * ॥ प्रकृतः कटं देवदत्तः । प्रकृतवान् कटं देवदत्तः । आदिकर्मणि क्तः कर्तरि चेति कर्तरि क्तः ॥

## सुयजोर्ङ्वनिप् । ३ । २ । १०३ ॥

सुनोतेर्यजेश्च ङ्वनिप् स्यात् ॥ सुत्वा सुत्वानौ । यज्वा । यज्वानौ ।

## जीर्यतेरतृन् । ३ । २ । १०४ ॥

भूते इत्येव ॥ जरन् । जरन्तौ । जरन्तः । वासरूपन्यायेन निष्ठाऽपि । जीर्णः । जीर्णवान् ॥

## छन्दसि लिट् । ३ । २ । १०५ ॥

भूतसामान्ये ॥ अहं सूर्यमुभयतो ददर्श । अहं द्यावापृथिवी आततान । ननु छन्दसि लुङ्लङ्लिट इति सामान्येन लिट् विहित एव । धातुसम्बन्धे स विधिरयन्त्वविशेषेण ॥

## लिटः कानज्वा । ३ । २ । १०६ ॥

## क्वसुश्च । ३ । २ । १०७ ॥

छन्दसि लिटः कानच्क्वसू वा स्तः ॥ चक्राणा वृष्णिम् । यो नो अग्ने अररिवां अघायुः । रा दाने लिट् क्वसुः । वस्वेकाजाद्घसामित्यादन्तत्वादिट् । ततो नञ्समासः । इह भूतसामान्ये छन्दसि लिटो विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम् । कवयस्तु बहुलं प्रयुञ्जते । तं तस्थिवांसं नगरोपकण्ठे, श्रेयांसि सर्वाण्यधिजग्मुषस्ते, इत्यादि ॥

## भाषायां सदवसश्रुवः । ३ । २ । १०८ ॥

सदादिभ्यो भूतसामान्ये भाषायां लिड् वा स्यात् तस्य नित्य क्वसु ॥ निषेदुषीमासनबन्धधीरः । उपसेदिवान् कौत्सः पाणिनिम् । अध्यूषुषस्तामभवज्जनस्य । अनूषिवान् कौत्सः पाणिनिम् । उपशुश्रुवान् कौत्सः पाणिनिम् । व्याख्यानाद्वाग्रहणमेतद्विधेयलिटैव सम्बध्यते । तेन पक्षे लुङादि । छन्दसीत्यस्य निवृत्यैव सिद्धे भाषाग्रहणं सर्वत्र प्रवृत्यर्थम् । तेनानद्यतने लङ् । परोक्षे लिडित्येतद्विषयेऽप्यस्य प्रवृत्तिः । अस्य लिटो वैकल्पिकत्वात्पक्षे तयोः प्रवृत्तौ तिङां श्रवणमिति दिक् ॥ उपेयिवान् । उपेयुषः स्वामपि मूर्तिमग्र्याम् । उपेयुषी । उपेत्यविवक्षितम् । ईयिवान् । समीयिवान् । नञ्पूर्वादश्नातेः क्वसुरिडभावश्च । अनाश्वान् । धृतजयधृतेरनाशुष इति भारविः । अनुपूर्वाद्वचेः कर्तरि कानच् । वेदस्यानुवचनं कृतवाननूचानः ॥

## लुङ् । ३ । २ । १०९ ॥

भूतार्थे धातोर्लुङ् स्यात् ॥ अकार्षीत् । अहार्षीत् ॥ वसेर्लुङ् रात्रिशेषे जागरणसन्तताविति वक्तव्यम् ॥ * ॥ रात्रिशेषे प्रस्थित पान्थं कश्चित्पृच्छति क्व भवानुषित इति । स आह । अमुत्रावत्स मिति । अमुत्रावसमिति प्राप्नोति । जागरणसन्ततौ किम् । यो हि मुहूर्तमपि स्वपिति तत्रामुत्रावसमित्येव ॥

## अनद्यतने लङ् । ३ । २ । ११० ॥

बहुव्रीहिनिर्देशोऽयम् । अविद्यमानाद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥ अकरोत् । अहरत् । बहुव्रीहिनिर्देशः किम् । अद्य ह्योऽभुक्ष्महीति व्यामिश्रे माभूत् । प्रसज्यप्रतिषेधे तु भूतसामान्ये स्यात् ।

नन्वेवमद्यतनेऽपि लङ् प्राप्नोति। न ह्यद्यतनेऽद्यतनो विद्यत इति चेन्न। व्यपदेशिवद्भावेन सिद्धेः॥ परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः॥ *॥ अननुभूतत्वात्परोक्षोऽपि प्रत्यक्षयोग्यतामात्राश्रयेण दर्शनविषय इति विरोधाभावः। अरुणद्यवनः साकेतम्। अरुणद्यवनो माध्यमिकान्। तुल्यकालोऽत्र प्रयोक्ता। परोक्षे किम्। उदगादादित्यः। लोकविज्ञाते किम्। चकार कटं देवदत्तः। प्रयोक्तुर्दर्शनविषये किम्। जघान कंसं किल वासुदेवः। न हीदानींतनप्रयोक्तुर्दर्शनयोग्योऽपि कंसवधः॥

## अभिज्ञावचने लृट्। ३। २। १११॥

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात्॥ लङोऽपवादः। स्मरसि कृष्ण गोकुले वत्स्यामः। एवं बुध्यसे चेतयसे इत्यादियोगेऽपि। तेषां प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवात्॥

## न यदि। ३। २। ११२॥

यद्योगे उक्तं न॥ अभिजानासि कृष्ण यद्वने अभुंज्महि॥

## विभाषा साकाङ्क्षे। ३। २। ११३॥

उक्तविषये लृट् वा स्यात् लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः॥ स्मरसि कृष्ण वने वत्स्यामः। तत्र गाश्चारयिष्यामः। वासो लक्षणं चारणं लक्ष्यम्। पक्षे लङ्। यच्छब्दयोगेऽपि नयदीति बाधित्वा परत्वाद्विकल्पः॥

## परोक्षे लिट्। ३। २। ११४॥

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्॥ चकार। जहार। उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्। सुप्तोऽहं किल विललाप।

बहु जगद पुरस्तात्तस्य मत्ता किलाहम् । अत्यन्तापह्नवे लिड् वक्तव्यः ॥ * ॥ अपरोक्षार्थमिदम् । कलिङ्गेष्ववात्सीः । नाहं कलिङ्गान् जगाम ॥

**हशश्वतोर्लङ् च । ३ । २ । ११५ ॥**

अनयोरुपपदयोर्लिड्विषये लङ् स्याच्चाल्लिट् ॥ इति हाकरोच्चकार वा ॥

**प्रश्ने चासन्नकाले । ३ । २ । ११६ ॥**

प्रष्टव्य. प्रश्नः । आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्त. ॥ अगच्छत् किम् । जघान किम् । अनासन्ने तु कंस जघान किम् ॥

**लट् स्मे । ३ । २ । ११७ ॥**

लिटोऽपवादः ॥ यजति स्म युधिष्ठिरः ॥

**अपरोक्षे च । ३ । २ । ११८ ॥**

भूतानद्यतने लट् स्यात्स्मयोगे ॥ एवं स्म पिता ब्रवीति ॥

**ननौ पृष्टप्रतिवचने । ३ । २ । ११९ ॥**

अनद्यतने परोक्ष इति निवृत्तम् । पूर्वत्रापरोक्षग्रहणेन परोक्षाधिकारो निवर्त्यते । तेनैव चानद्यतनानुवृत्तिरपि ज्ञाप्यते । यस्मात् परोक्षानद्यतनयोः प्रकृतत्वेऽन्यतरनिवृत्तिर्यत्नेन क्रियमाणा द्वितीयस्यानुवृत्तिमनुमापयति । इह तु परोक्षग्रहणस्यापरोक्षग्रहणस्य च निवृत्त्या तत्सहचरितानद्यतनग्रहणस्यापि निवृत्तेस्सूचितत्वात् भूते लट् स्यात् । अकार्षीः किम् । ननु करोमि भोः । अयं च येननाप्राप्तिन्यायेन लुङो बाधकः । परत्वेन लङ्लिटोः ॥

## नन्वोर्विभाषा । ३ । २ । १२० ॥

पक्षे यथाप्राप्तम् । अकार्षीः किम् । न करोमि नाकार्षम् । अहं नु करोमि । अहं न्वकार्षम् ॥

## पुरि लुङ् चास्मे । ३ । २ । १२१ ॥

अनद्यतनग्रहणं मण्डूकप्लुत्याऽनुवर्तते । लुङ्ग्रहणाच्चापकात् । यदि हि भूतमात्रे विधिः स्यात्तदा नन्वोर्विभाषेत्यतो विभाषाग्रहणानुवृत्त्या विकल्पेन लटो विधानात्पक्षे लुङ् भविष्यतीति किं लुङ्ग्रहणेन । अनद्यतनग्रहणानुवृत्तौ तु लुङ्ग्रहणमन्तरेण पक्षे लुङ् न लभ्यते । लङा बाधितत्वात् । पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् चाल्लट् न तु स्मयोगे । पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । अस्मे किम् । यजति स्म पुरा ॥

## वर्तमाने लट् । ३ । २ । १२२ ॥

वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् ॥ पचति । पठति ॥

## लटः शतृशानचावप्रथमासमानाधिकरणे । ३ ।२।१२३॥

अप्रथमान्तेन सामानाधिकरण्ये सतीत्यर्थः । शबादि । पचन्तं चैत्रं पश्य । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् । तेन प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् ब्राह्मणः ॥ माङ्याक्रोशे इति वाच्यम् ॥ * ॥ मा जीवन् । माङि लुङिति प्राप्ते एतद्वचनसामर्थ्याल्लट् ॥

## सम्बोधने च । ३ । २ । १२४ ॥

प्रथमासमानाधिकरणार्थ आरम्भः । हे पचन् । हे पचमान ॥

**लक्षणहेत्वोः क्रियायाः । ३ । २ । १२५ ॥**

परिचायके हेतौ चार्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्त. । शयाना भुञ्जते यवनाः । अर्जयन्वसति । हरिं पश्यन् मुच्यते । हेतु. फल कारणञ्च ॥

**तौ सत् । ३ । २ । १२६ ॥**

तौ शतृशानचौ सत्संज्ञौ स्तः ॥ सत्प्रदेशाः पूरणगुणसुहितार्थसदित्यादयः ॥

**पूङ्यजोः शानन् । ३ । २ । १२७ ॥**

वर्तमाने ॥ पवमानः । यजमानः ॥

**ताच्छील्यवयोवचनशक्तिषु चानश् । ३ । २ । १२८ ॥**

एषु द्योत्येषु कर्तरि चानश् ॥ भोगं भुञ्जानः । वयोवचने । कवचं बिभ्राणः । शक्तौ । शत्रुं निघ्नानः ॥

**इङ्धार्योः शत्रकृच्छ्रिणि । ३ । २ । १२९ ॥**

आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि । अधीयन् । धारयन् । अकृच्छ्रिणि किम् । कृच्छ्रेणाधीते धारयति ॥

**द्विषोऽमित्रे । ३ । २ । १३० ॥**

द्विषन् शत्रुः । अमित्रे किम् । द्वेष्टि पतिं भार्या ॥

**सुञो यज्ञसंयोगे । ३ । २ । १३१ ॥**

सर्वे सुन्वन्तः ॥ सर्वे यजमानाः सत्त्रिण एवमुच्यन्ते । यज्ञसंयोगे किम् । सुनोति सुराम् ॥

**अर्हः प्रशंसायाम् । ३ । २ । १३२ ॥**

पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत् ।
सप्तमीं वामऊरौ तु अष्टमीं दक्षिणे तथा ॥
नवमीं नाभिमध्ये तु दशमीं हृदये तथा ।
एकादशीं करमध्ये द्वादशीं वामबाहुके ॥
त्रयोदशीं दक्षिणे तु तथैवास्ये चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव विन्यसेत् मूर्ध्नि षोडशीम् ॥
यथा देहे तथा देवे न्यासं कृत्वा विधानतः ।
न्यासेन तु भवेत्सोऽपि स्वयमेव जनार्दनः ॥
एवं न्यासविधिं कृत्वा पाद्याद्यङ्गं समाचरेत् ।
पूर्वयावाहयेद्देवमासनं तु द्वितीयया ॥
पाद्यं तृतीयया चैव चतुर्थ्यार्घ्यं प्रदापयेत् ।
पञ्चम्याचमनं दद्यात् षष्ठ्या स्नानं समाचरेत् ॥
सप्तम्या तु ततो वासोऽप्यष्टम्या चोपवीतकम् ।
नवम्या गन्धमेव तु दशम्या पुष्पकं तथा ॥
एकादश्या तथा धूपं द्वादश्या दीपमेव हि ।
नैवेद्यं तु त्रयोदश्या नमस्कारं चतुर्दशी ॥
प्रदक्षिणं पञ्चदशी वर्जने षोडशी तथा ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं तथा ॥
हुत्वा षोडशभिर्मन्त्रैः षोडशाज्यस्य चाहुतीः ।
पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि षोडश ॥
तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमुत्तमम् ।
षण्मासात्सिद्धिमाप्नोति ह्येवमेव समर्चयन्निति ॥

ननु शालग्रामादावावाहनविसर्जनयोरभावात् कथं षोडशोपचाराः कथं वा षोडशर्चविनियोगस्तत्र

शालग्रामार्चने नैव आवाहनविसर्जने ।
शालग्रामे हि भगवानाविर्भूतः सदा हरिः ॥

इति स्कान्दवाक्यात् । प्रतिमास्थानेष्वप्स्वग्नावावाहनविसर्जनवर्जं सर्वं समानमिति बौधायनस्मरणाच्चेति चेत् । सत्यम् । तयोः स्थण्डिलादिविषयत्वात् । तथा च भागवते ।

उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ।
अस्थिराया विकल्पः स्यात्स्थण्डिले च भवेद्वयमिति ॥

ऋग्विनियोगस्तु तत्स्थानापन्नपुष्पाञ्जलौ ।

तथा च मन्त्रराजानुष्टुब्विधाने ।

आवाहनऋचा दद्यात्पूर्वं पुष्पाञ्जलिं हरेः ।
तस्यैवोन्मुखतांप्राप्त्यै यागे चोद्वासने ऋचा ॥
अन्ते पुष्पाञ्जलिं दद्याद्यागसम्पूर्तिसिद्धय इति ।

तथा स्नानमपि प्रतिमादिभिन्नविषयं । तदाह व्यासः ।

प्रतिमापटयन्त्राणां नित्यं स्नानं न कारयेत् ।
कारयेत्पर्वदिवसे यथा मलनिवारणमिति ॥

वस्त्रोपवीतालङ्काराणां न प्रतिदिनमपूर्वत्वनियमः । अभ्युक्षणाच्छुद्धेदपरं तु दिने दिन इति तत्त्वसागरसंहितास्मरणात् । उपवीतालङ्कारयोश्च वस्त्रसमानत्वात् ।

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठन्ति देवताः ।
न निर्माल्यं भवेत्तावद्वस्त्रालङ्कारभूषणम् ॥

इति विद्याकरस्मरणाच्च । अपरं तदेव प्रतिदिनं प्रोक्षणाच्छुद्धेदित्यर्थः । शालग्रामेण सह लिङ्गपूजने न शिवनिर्माल्यदोषः ।

तथा स्कान्दे ।

अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामस्य संसर्गात्सर्वं याति पवित्रतामिति ॥

अथ वैश्वदेवविधिः ।

स च स्वशाखोक्तेतिकर्त्तव्यतया कर्तव्यः । तदाह व्यासः

वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं ततः ।
संस्कृतान्नैर्हि विविधैर्हविष्यव्यञ्जनान्वितैः ॥
तैरेवान्नैर्बलिं दद्याच्छेषमाप्लाव्य वारिणा ।
कृतापसव्यः स्वधया सर्वं दक्षिणतो हरेदिति ॥

ततो देवार्चनानन्तरमित्यर्थ । व्यञ्जन तत्र घृत न तु क्षारादि "जुहुयात्सर्पिषाभ्यक्त तैलक्षारविवर्जितमिति" तेनैवाभिधानात् । स च गृह्य लौकिके वाग्नौ कार्य. ।

शालाग्नौ लौकिके वापि जले भूम्यामथापि वा ।
वैश्वदेवस्तु कर्तव्यो देवयज्ञः स वै स्मृतः ॥

इतिकूर्मस्मरणात् । अत्र गृह्यलौकिकाग्न्योरैच्छिको विकल्पः ।

औपासने तु होतव्य शालाग्नौ वा विजानता ।
विकल्पस्त्विच्छया कार्यो नास्त्येवात्र व्यवस्थितिः ॥

इति शौनकस्मरणात् । शालाग्निरत्र लौकिकजातकर्मादिसिध्यर्थ यो व्याहृतिभिराहृतः । "सोऽग्निः पौरुष इत्युक्तः शालाग्निर्लौकिकस्तथे"ति तेन परिभाषणात् ।

ननु शालाग्नौ वा पचेदन्न लौकिके वापि नित्यशः । यस्मिन्नग्नौ पचेदन्न तस्मिन् होमो विधीयत इत्याङ्गिरसा पाकव्यवस्थयैव होमव्यवस्थाभिधानात्कथमैच्छिको विकल्प इति चेत् । मैवम् । अमावास्यायां शान्तिकर्म कुर्वीतेत्यादिना आश्वलायनेन पचनाग्नेर्नियमितत्वेनाग्न्यन्तराप्राप्त्यैव तच्छाखीयान् प्रत्यस्य व्यवस्थापकत्वाभावात् । एतेनैव जातीयकान्यन्यान्यपि वाक्यानि व्याख्यातानि । सूत्रस्यासाधारणकर्मस्वरूपनिर्वाहकमन्त्रेतिकर्तव्यताप्रतिपादनेनाभ्यर्हितत्वात् । अत एवाह देवलः ।

मन्वादयः प्रयोक्तारो धर्मशास्त्रस्य कीर्तिताः ।
तत्प्रयुक्तप्रयोक्तारो गृह्यकाराः स्वमन्त्रत इति ॥

न चैषा निर्विशेषत्वम् । छन्दोगकात्यायनादिसूत्रपरिशिष्टसमानार्थतया तत्र सम्बन्धात् । अत एव वैश्वदेवमित्युपक्रम्य यज्ञत्रयमुक्त व्यासादिभिः । तत्र होमो देवयज्ञो बलिर्भूतयज्ञः स्वधाकारः पितृयज्ञः ।

अत्र केचित् । स्वधाकारेणैव पितृयज्ञसिद्धेरन्वह नित्यश्राद्धार्थ ब्राह्मणभोजन न कार्यमेककार्यत्वादिति । तदपरे न सहन्ते तथा हि पितृभ्य इति सामान्योपादानाद्दिव्यपितृदेवताकमिद निनयन तत्र च जीव-

त्पितृकस्याप्यधिकारो निषेधाभावाद्वैश्वदेवविधिना वैश्वदेवशब्दोपात्तदेवभूतपितृयज्ञानां विधानाच्च। नित्यश्राद्धं तु मानुषपितृदेवताकम्।

नित्यश्राद्धं तु यन्नाम दैवहीनं तदुच्यते।
तत्तु षाट्पुरुषं ज्ञेयं दक्षिणापिण्डवर्जितम्॥

इति वचनात्। तथा च देवताभेदाच्च निनयनेन श्राद्धसिद्धिः। किं च यदि निनयनमात्रेण नित्यश्राद्धसिद्धिः स्यात्तर्हि ऋग्विधाने कर्मद्वयाकरणे पृथक्प्रायश्चित्तविधानं नोपपद्येत तथा हि

यस्त्रिंशति जपेत्सूक्तं त्रिवारं तु यदा द्विजः।
वैश्वदेवं विना भुङ्क्ते तदा पापात्स मुच्यत इति॥

तथा।

आर्चवत्रं जपेन्मन्त्रं दशवारं तदा द्विजः।
नित्यश्राद्धं यदा न्यूनं कुरुते नात्र संशय इति॥

वैश्वदेवशब्देन कर्मत्रयमुच्यत इत्युक्तमेवेति। तच्चिन्त्यम्।

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा॥

इति कात्यायनेन त्रयाणामपि पितृयज्ञत्वोपदेशादन्यतरेणापि तत्सिद्धेः।

यत्तु पृथक्प्रायश्चित्तविधानं तन्नित्यश्राद्धवैगुण्ये न त्वकरणे न्यूनपदेन वैगुण्यस्यैवाभिधानात्। अकरणे तु पूर्वोक्तमेवेति तस्मात्सुष्ठूक्तं स्वधाकारेणैव पितृयज्ञसिद्धेर्नित्यश्राद्धार्थं ब्राह्मणभोजनं नावश्यकमिति। अत एव देवलस्तस्य यथाश्राद्धमनेककालतामाह।

एतेन विधिना श्राद्धं कुर्यात्संवत्सरे सकृत्।
त्रिश्चतुर्वा यथा श्राद्धं मासे मासे दिने दिने इति।

एवं दर्शश्राद्धमप्यशक्तैः संवत्सरमध्ये सकृदेव कार्यम्। "मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकमि"त्याश्वलायनस्मरणात्। स चायं वैश्वदेवः सिद्धस्य हविष्यस्य तु जुहुयादित्यनेनान्नसंस्कारस्तानेतान् यज्ञानहरहः कुर्वीते"त्यनेन पुरुषसंस्कारश्चेति। यत्तूभयरूपतायाः परस्परविरोधो

यथा अन्नसंस्कारत्वे ह्यन्नस्य प्राधान्य वैश्वदेवस्य गुणता पुरुषार्थत्वे तु तद्विपर्ययस्तथाचैकस्यैव गुणत्वं प्रधानत्व च विरुद्धमिति तत्संयोगपृथक्त्व-न्यायेनैव परिहृतम् । यथा एकस्यैव दध्नः क्रत्वर्थत्वे गुणत्व क्रतोश्च प्राधान्य पुरुषार्थत्वे तु विपर्यय इति । यच्चान्नसस्कारत्वपक्षे प्रतिपाक-मावृत्तिः स्यात् "प्रतिप्रधान गुणावृत्तिरिति" न्यायात् । तत्पुरुषार्थत्वेऽपि तुल्यम् । प्रतिपुरुषमावृत्तिप्रसङ्गात् । अथ यद्येकस्मिन्काले बहुधान्न पच्येत गृहपतिर्महानसादेवैन कुर्वीतेति गोभिलादिवाक्यात्तन्निवृत्तिस्तर्हि यद्ये-कस्मिन्काले पुनः पुनरन्न पच्यत सकृदेव बलि कुर्वीतेत्यस्यैव पूर्ववाक्या-त्तन्निवृत्तिरपि प्रतीयताम् । किञ्च ।

वैश्वदेवमपि प्रोक्त पूर्वैरेव मनीषिभि ।
अन्नस्य चात्मनश्चैव सस्कारार्थं तदिष्यते ॥

इति शौनकेनोभयार्थत्वस्य स्पष्टीकरणात्क्व विचारावसरः । तच्च सायंप्रातः कर्तव्यम् । "अथ सायप्रातःसिद्धस्य हविष्यस्य जुहुयादि"-त्याश्वलायनस्मरणात् । सायप्रातःकरणाशक्तौ प्रातरेव द्विरावृत्त्या सह वा कार्यं यथोक्त तेनैव ।

प्रातरेव द्विरावृत्त्य कुर्याद्वा सह तद्द्विजः ।
साय वा द्विज भुञ्जीयाच्च हुत्वा ज्ञात्वपि स्वयमिति ॥

अथातिथ्यम् । तदेव च मनुष्ययज्ञः । नृयज्ञोऽतिथिपूजनमिति कात्यायनस्मरणात् । यद्ब्राह्मणेभ्योऽन्न ददाति स मनुष्ययज्ञः सन्तिष्ठत इति श्रवणाच्च ।

तत्र भोजनीयस्यातिथेर्लक्षणमाह ।

**इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।**
**सम्प्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥ ४० ॥**

इष्टः सख्यादिः "भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवा-नि"ति याज्ञवल्क्यस्मरणात् । द्वेष्योपादान तु ।

काममभ्यर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्त भवति प्रेत्य निष्फलम् ॥

इति मनूक्तनिन्दापरिहाराय। तथैव मूर्खोपादानमपि । "नष्टाशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते । दीयमान रुदत्यन्नं किं मया दुष्कृत कृतमि"ति स्मृत्यन्तरोक्तनिन्दापरिहाराय। पण्डितः सदसद्विवेककुशलः ।

श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥

इति मनुस्मरणात् । अत्र वैश्वदेवशब्देन देवभूतपितृयज्ञा उच्यन्ते । "तस्माद्देवपितृभूतेभ्यो दत्त्वोदीतेतागोदहनादि"ति हारीतस्मरणात् । तेषामन्ते घटिकापादमात्रे काले 'मुहूर्त्तस्याष्टम भाग निरीक्ष्यो ह्यतिथिर्भवेदि"ति मार्कण्डेयस्मरणात्। सम्प्राप्त समागतस्तथा च तस्मिन् काले समागमनमेवातिथिलक्षण नेतरद्विद्यादीत्युक्त भवति । सङ्क्रम्यते अनेन सङ्क्रमः स्वर्गस्य सङ्क्रमः स्वर्गसङ्क्रम. स्वर्गप्राप्तिहेतुरिति यावत् । तथाचाश्वमेधिके ।

क्षुत्पिपासाश्रमार्त्ताय देशकालागताय च ।
सत्कृत्यान्नं प्रदातव्य यज्ञस्य फलमिच्छतेति ॥

तस्यैव लक्षणान्तरमाह ।

**दूराध्वोपगतं श्रान्तं वैश्वदेव उपस्थितम् ।**
**अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥४१॥**

दूरश्चासावध्वा च दूराध्वा तस्मादुपागत श्रान्त क्षुत्तृष्णाश्रमकर्षितम् ।

आदूरादाशया प्राप्तः क्षुत्तृष्णाश्रमकर्षितः ।
यः पूज्यतेऽतिथिः सम्यगपूर्वः क्रतुरेव स ॥

इति व्यासस्मरणात् । आदूरादतिदूरादाङोऽतिशयार्थत्वात् । वैश्वदेव उपक्रम्यमाणे न वैश्वदेवान्ते सम्प्राप्तो वैश्वदेवान्त इत्यनेन पौनरुक्त्यात् ।

मध्याह्ने समये चैव वैश्वदेवे हुतेऽपि च ।
अतिथिस्त्वेव सम्प्राप्तपासुपाद समागतम् ॥

इत्यादिपुराणे वैश्वदेवोपक्रमकालस्य मध्याह्नस्य वैश्वदेवान्तात्पृथगुपादानाच्च । एतेन वैश्वदेवान्तात्कालान्तरमतिथ्यागमने पूर्वावधित्वेनेदमुक्तं नातः पूर्वमागतोऽतिथिर्भवति किं तु वैश्वदेवकालागत एवेति

तदुक्तम् । भविष्यत्पुराणे ।

अचिन्त्यमानो नाहूतो वैश्वदेवमुपागतः ।
अतिथिं तं विजानीयान्न पुनः पूर्वमागतमिति ॥

लक्षणान्तरकरणे बीजमाह ।

**नैकग्रामीणमतिथिं संगृह्णीत कदा च न ।**
**अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते ॥ ४२ ॥**

एकग्रामे भव ऐकग्रामीणस्तमतिथिं न विद्यते तिथिर्यस्यासावतिथिस्तं कदापि न संगृह्णीयात् यतोऽतिथिशब्दप्रवृत्तिनिमित्तमनित्यागतत्वं तेन तिथिविशेषे नियतागमने हि नातिथित्वम् । तिथिशब्दः पर्वोत्सवयोरप्युपलक्षणम् । तथा च यमः ।

तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना ।
सोऽतिथिः सर्वभूतानां शेषानभ्यागतान्विदुरिति ॥

तिथिर्दीपालिकाप्रतिपदादिः । पर्व होलाकापूर्णिमादि । उत्सवो विवाहादिस्तत्र यो नियमेन लिप्सयाभ्यागच्छति सोऽभ्यागतोऽन्यथातिथिरिति । अनेनेष्टादीनामैकग्रामीणत्वस्यापि सम्भवान्न तथातिथित्वं यथा दूराध्वोपगतस्येत्युक्तम् । लक्षणद्वयकरणं तूत्तराभावे पूर्वस्याप्यस्त्वित्येतदर्थम् ।

इदानीं आगतेऽतिथौ यत्कर्तव्यं तदाह ।

**अतिथिं तत्र सम्प्राप्तं पूजयेत् स्वागतादिना ।**
**तथासनप्रदानेन पादप्रक्षालनेन च ॥ ४३ ॥**

यत्र भार्या वाग्नयो वा विद्यन्ते तत्र सम्प्राप्तमतिथिं पूजयेद् "परस्थितगृहे विद्याद्भार्या यत्राग्नयोऽपि वेति" मनुस्मरणात् । स्वागतं तत्प्रश्नः आदिशब्देनार्घ्यादीनां ग्रहणम् । तदाह हारीतः "स तस्य स्वागतमर्घ्यं

पाद्याचमनीयमासन च प्रदद्यादिति"। तथाशब्देनाभिगमन समुच्चीयते "तस्मादतिथिमायान्तमभिगच्छेत्कृताञ्जलिरिति" वायवीयात्। आसन वृष्याादि तस्य प्रकर्षेण विनयादिना दानेन, पादयोः प्रक्षेप्त्रेन मलश्रमापहेन क्षालनेन चकाराादभ्यञ्जनेन पूजयेच्चार्घ्यपाद्येन पादाभ्यञ्जनभोजनैरिति वायवीयात्।

किञ्च।

**श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च।**
**गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही॥ ४४॥**

श्रद्धया आस्तिक्येन चकाराद्भक्त्या च।

पथि श्रान्तमविज्ञातमतिथिं क्षुत्पिपासितम्॥
यो न पूजयते भक्त्या तमाहुर्ब्रह्मघातकम्।

इति व्यासस्मरणात्। प्रश्नोत्तरयोः समाहारः प्रश्नोत्तर प्रिय च तत्प्रश्नोत्तरं च तेन स्वागतप्रश्नात्पृथगुपादानमन्येष्वपि प्रश्नोत्तरेषु प्रियत्वविधानार्थं चकाराच्चक्षुर्मनसोरपि दानेन। "चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृतामिति" व्यासस्मरणात्। गच्छतश्च स्वसीमावध्यनुगमनेन "अतिथिं श्रोत्रियं तृप्तमासीमान्तमनुव्रजेदिति" योगिस्मरणात्। एतेन व्यस्तेन समस्तेन वा गृहस्थोऽतिथेः प्रीतिमुत्पादयेच्च शास्त्रार्थमात्रानुष्ठानेन कृतार्थो भवेत्।

येन येन च तुष्येत नित्यमेव तथातिथिः।
अप्यात्मनः प्रदानेन तत्तत्कुर्याद्विचक्षणः॥ इतिब्राह्मात्।

अतिथेः प्रीत्यनुत्पादने प्रत्यवायमाह।

**अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते।**
**पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च॥ ४५॥**

यस्य गृहात् भार्याग्निर्निवासस्थानादुक्तलक्षणोऽतिथिर्भग्नाशस्सत्काराशारहितः परावर्तते तस्य पितरः पञ्चदशवर्षाणि तत्कृते श्राद्धादौ नाश्नन्ति चकारादन्नयोऽपि।

तदुक्तं दानधर्मे ।

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
पितरस्तस्य देवाश्च अग्नयश्च तथैव च ॥
निराशाः प्रतिगच्छन्ति अतिथेरप्रतिग्रहादिति ।

किञ्च ।

**काष्ठभारसहस्रेण घृतकुम्भशतेन च ।**
**अतिथिर्यस्य भग्नाशः तस्य होमो निरर्थकः ॥ ४६ ॥**

यस्यातिथिर्भग्नाशस्तस्य काष्ठभारसहस्रेण घृतकुम्भशतेन च कृतोऽपि होमो यज्ञादौ निरर्थको भवति । तदुक्तमाश्वमेधिके ।

पाकयज्ञैर्महायज्ञैः सोमसंस्थाभिरेव च ।
ये यजन्ति न चार्चन्ति गृहेऽप्यतिथिमागतम् ॥
तेषां यशोऽभिकामानां दत्त मिष्टं च यद्भवेत् ।
वृथा भवति तत्सर्वमाशया ह्यतिथेर्हतमिति ॥

एवं वचनद्वयेनातिथ्यर्चनाभावे देवपितृकर्मणोर्नैरर्थक्योक्त्या सर्वधर्मक्षय उक्तो भवति । तथा चाश्वलायनः ।

अनर्चितोऽतिथिस्तस्मै दत्वा दुष्कृतमात्मनः ।
गृहिणो तत्कृतान्धर्मान् सर्वानादाय गच्छतीति ॥

इदानीमतिथिसत्कारे फलप्रशंसामाह ।

**सुक्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनम् ।**
**सुक्षेत्रे च सुपात्रे च ह्युप्तं तन्न विनश्यति ॥ ४७ ॥**

यथा सुक्षेत्रे बीजवापः कर्तव्य इति लोकप्रसिद्धिस्तथा सुपात्रे धनं देयमित्यपि शास्त्रसिद्धान्तः । दृष्टान्तदार्ष्टान्तिकयोरवैशम्यमुपपादयति हि यतः सुक्षेत्रे सुपात्रे वोप्तं न विनश्यति महाफलं भवतीत्यर्थः । सुक्षेत्रदृष्टान्तो ब्राह्मणस्यापि सुक्षेत्रत्वप्रतिपादनाय । तथा च दानधर्मे ।

ब्राह्मणो हि महद्भूतं क्षेत्रभूतं युधिष्ठिर ।
उप्यते तत्र यद्बीजं तद्धि पुण्यफलं महदिति ॥

श्रद्धयाऽतिथिं पूजयेदित्युक्तं तत्र श्रद्धादिस्वरूपमाह ।

**न पृच्छेद्गोत्रचरणे न स्वाध्यायं श्रुतं तथा ।**
**हृदये कल्पयेद्देवं सर्वदेवमयो हि सः ॥ ४८ ॥**

गोत्रं वंशप्रवर्तकं महर्षिसम्बन्धः चरणं कठबाष्कलादिचरणव्यूहप्रसिद्धम् । तत्त्वाचारः । स्वाध्यायः शाखाविशेषः । श्रुतं मीमांसाव्याकरणादि तथाशब्देन देशनामकुलानां ग्रहणम् । अत एव यमः ।

न पृच्छेद्गोत्रचरणे देशं नाम कुलं श्रुतम् ।
अध्वनोऽभ्यागतं विप्रं भोजनार्थमुपस्थितमिति ॥

अतिथेरिदं न पृच्छेत् । एकेनैव निषेधेनार्थसिद्धौ निषेधान्तरोपादानमतिथेरपि तच्छंसननिषेधार्थम् । तथा च विष्णुः ।

देशं गोत्रं कुलं विद्यामन्नार्थं यो निवेदयेत् ।
वैवस्वतेषु धर्मेषु वान्ताशी स प्रकीर्तितः ॥ इति ।

न केवलं गोत्रादिप्रश्नवर्जनं किं तु हृदि देवत्वेनापि भावनीयः । तथा च वैष्णवे ।

स्वाध्यायगोत्रचरणमपृष्ट्वा च तथा कुलम् ।
हिरण्यगर्भबुध्या तं मन्यताभ्यागतं गृही ॥
तादृशभावनायां हेतुमाह । "यतोऽसौ सर्वदेवमय" इति ।

तदुक्तं पुराणसारे ।

धाता प्रजापतिः शुक्रो वन्हिर्वसुगणो यमः ।
प्रविश्यातिथिमेवैते भुञ्जतेऽन्नं द्विजोत्तम ॥ इति ।

एवमुत्तरपूर्वाभ्यामर्द्धाभ्यां भक्तिश्रद्धयोः स्वरूपमुपवर्णितं न तु वास्तवः प्रश्नाभावः तथा सति जात्याद्यज्ञानेनातिथ्यतारतम्यं न स्यात् ।

यथाह मनुः ।

आसनावसथौ शय्यामनुव्रज्यामुपासनम् ।
उत्तमे तूत्तमं कुर्याद्धीने हीनं समे सममिति ॥

यत्तु ।

देशं नाम कुलं विद्यां पृष्ट्वा पात्रं प्रयच्छति ।
न स तत्फलमाप्नोति दत्त्वा स्वर्गं न गच्छति ॥

इति यमस्मरणं तदपि विद्यादिपुरस्कारेण पूज्यत्वनिराकरणपरम् । अत एव वायवीये ।

न हि विद्यादयस्तस्मिन् पात्रता हेतवः स्मृताः ।
केवलेनातिथित्वेन स भवेत्पङ्क्तिपावनः ॥ इति ।

यदुक्तमनित्यागमनेनातिथित्वमिति तस्य क्वचिदपवादमाह ।

**अपूर्वः सुव्रती विप्रो ह्यपूर्वश्चातिथिस्तथा ।**
**वेदाभ्यासरतो नित्यं त्रयोऽपूर्वे दिने दिने ॥ ४६ ॥**

सुव्रती ब्रह्मचारी "सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च"ति योगिस्मरणात् । स पूर्वोऽप्यपूर्व एव विप्रोऽप्यपूर्वो विप्रो विद्यावान् ।

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया वापि विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

इति स्मरणात् । वेदाभ्यासरतोऽपि तथा अपूर्व एव वेदस्य प्रणवप्रतिपाद्यस्य परब्रह्मणोऽभ्यासरतो निरन्तरं परिशीलनं नित्यं तन्निष्ठः

न वेदं वेदमित्याहुर्वेद्यं नाम परं पदम् ।
तत्पदाभ्यासनिरतो वेदाभ्यासरतो मतः ॥

इति स्मृत्यन्तरोक्तलक्षणोपपन्नश्च । एते त्रयो दिने दिने प्रत्यहमागता अप्यपूर्वे अपूर्ववदर्चनीयाः । पुनरपूर्वे इति नित्यार्चनाय समुदायानुवादः । त्रय इति प्रचयशिष्टसंख्यानुवादो न परिसंख्या तेन अग्निहोत्रमखकृतोरपि प्राप्तिः । तदाह बृहत्पराशरः ।

यतिव्रत्यग्निहोत्री च तथा च मखकृद्द्विजः ।
सदैतेऽतिथयः प्रोक्ता अपूर्वाश्च दिने दिने इति ।

यत्तु

व्रती यतिर्वैकरात्रं निवसन्नुच्यतेऽतिथिः ।
यस्मादनित्यं वसति तस्मात्तमतिथिं विदुः ।

इति यमस्मरणं तद्यतिधर्मकथनाय "अनित्या वसति वसेदिति" वसिष्ठवचनात् । यत्त्वतिथिदृष्टान्तेन यतिव्रतिनोरप्यत्र पूज्यतोच्यत इति । तन्न । त्रयोपूर्वे इति वाक्यशेषासङ्गतेः । अतिथिभोजनाशक्तौ भिक्षादान विधास्यति ।

तत्र वैश्वदेवात्प्रागागते भिक्षुके कथमित्यत आह ।

**वैश्वदेवे तु सम्प्राप्ते भिक्षुके गृहमागते ।**
**उद्धृत्य वैश्वदेवार्थं भिक्षुकं तु विसर्जयेत् ॥ ५० ॥**

वैश्वदेवे सम्प्राप्त प्रसक्ते अकृत इति यावत् । भिक्षुके भिक्षावृत्तौ

ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुका स्मृताः ॥

इति व्यासोक्तान्यतमे समागते वैश्वदेवार्थं वैश्वदेवोपयुक्तमन्नमुद्धृत्य पात्रान्तरे पृथक्कृत्य अवशिष्टादन्नाद्भिक्षा दत्वा भिक्षुक विसर्जयेत् ।

तदुक्त नृसिंहपुराणे ।

अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षा दत्वा विसर्जयेदिति ॥

अत्रातिथिभोजनप्रत्याम्नायस्य भिक्षादानस्य वैश्वदेवात् प्राक्करणेऽपि मनुष्ययज्ञसिद्धेर्न तदन्ते पुनरनुष्ठानमित्युक्त्या क्रमविशेषाभिधानेन वैश्वदेवान्त इतिपाठक्रमबाधात् । यथा दर्शपूर्णमासयोर्हविरभिवासनोत्तरकालमाम्नाताया वेदेः पूर्वेद्युरमावास्याया "वेदिं करोती"त्यनेनापकर्षात् पाठक्रमबाधः पौर्णमास्या तु पाठक्रम एव बाधकाभावात् तद्वदिहापि वैश्वदेवात् प्रागागते भिक्षौ श्रुत्या क्रमविशेषाभिधानात्पाठक्रमबाधोऽन्यत्र तु स एवेति । न च देवतापकर्षन्यायेन वैश्वदेवस्याप्यपकर्षः यथोक्तन्यायस्य तदपवादकत्वात् । उद्धृत्येत्यनेन वैश्वदेवस्य क्रमान्तरविधानाच्चेति ।

भिक्षुविशेषप्रत्याख्याने प्रत्यवायविशेषमाह ।

**यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।**
**तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥५१॥**

यतिब्रह्मचारिणोर्भिक्षामदत्वा भुञ्जानो वक्ष्यमाणलक्षणचान्द्रायणं चरेत्तयोः पक्वान्नस्वामित्वात् । अत्र पक्वान्नस्वामिनोरपाचकतयाऽनतिक्रमणीयत्वमुक्तमतस्तदतिक्रमेणान्यभोजनेऽपि प्रत्यवायस्तदवस्थ एव । तथा च यमः ।

अपचन्तमतिक्रम्य पचन्त यस्तु भोजयेत् ।
औष्ट्रिकाणां भजेद्योनिं वर्षाणामधिकं शतमिति ॥

इदानीमतिथिभोजनाशक्तस्य भिक्षादाननियममाह ।

**दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम् ।**
**इच्छया च ततो दद्याद्विभवे सत्यवारितम् ॥ ५२ ॥**

परिव्राट् यतिः ब्रह्मचारिणामिति बहुवचनेन पूर्ववाक्योक्तयोर्यतिव्रतिनोर्म्मध्यस्थस्य विप्रस्य ग्रहणं तेन यतिविप्रव्रतिना भिक्षात्रयं दद्यादेव

तदाह मार्क्कण्डेयः ॥

भोजनं हन्तकारं वाप्यग्रं भिक्षामथापि वा ।
अदत्वा नैव भोक्तव्यं यथाविभवमात्मन इति ॥

भिक्षा च ग्रासमात्रा ।

ग्रासमात्रा भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ॥
अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते ॥ इति मनुस्मरणात् ।

नेयं परिसङ्ख्या विभवे सतीच्छयाऽवारितं दद्यात्तदाह कूर्मः ॥

भिक्षां वै भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ।
दद्यादन्नं यथाशक्ति ह्यर्थिभ्यो लोभवर्जित इति ॥

यतिभिक्षादाने प्रकारमाह ।

**यतिहस्ते जलं दद्याद्भैक्ष्यं दद्यात्पुनर्जलम् ।**
**तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ ५३ ॥**

यतेर्भिक्षादाने आद्यन्तयोर्हस्ते जलं दद्यात्ततश्च भैक्ष्यजलयोर्मेरुसागरतुल्यता भवति ।

इदानीं राज्ञोऽप्यातिथ्यमाह ।

**यस्य छत्रं हयश्चैव कुञ्जरारोहमृद्धिमत् ।**
**ऐन्द्रस्थानमुपासीत तस्मात्तं न विचारयेत् ॥ ५४ ॥**

छत्रमातपवारणं, हयोऽश्वः, चकाराद्वालव्यजने आरुह्यतेऽस्मिन्नित्यारोहो रथशिबिकादिः कुञ्जरश्चारोहश्च तयोस्समाहारः कुञ्जरारोहं सेनाङ्गत्वादेकवद्भावः, ऋद्धिमद्राष्ट्रं ऐन्द्रदैवत्यं स्थानमासनं सिंहासनमिति यावत् तस्येन्द्रदैवत्यत्वात् । यस्येदं सर्वं तमुपासीत पूर्वोक्तस्वागतादिप्रश्नेन परिचरेत् लघुना राजपदेन तमनुपपाद्याय यद्विशेषणैस्तल्लक्षणं तत्क्षत्रियातिरिक्तस्यापि तद्गुणवतः पूज्यत्वप्रतिपादनाय राजानः शूद्रभूयिष्ठा इत्यादिना कलौ राज्ञां शूद्रभूयिष्ठत्वाभिधानात् । अत एवाह भगवान् ।

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवमिति ॥

तस्माद्राज्ञः सकाशादात्मानं न निवारयेन्न परिचरणरहितं कुर्यादिति ।

यदुक्तं "वैश्वदेवे तु सम्प्राप्ते" इति तत्रोपपत्तिमाह ।

**वैश्वदेवकृतं पापं शक्तो भिक्षुर्व्यपोहितुम् ।**
**नहि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति ॥५५॥**

तस्मादेव कृतत्वमत्रान्वेति प्रथममकृतेन वैश्वदेवेन कृतं पापं पूजितो भिक्षुर्व्यपोहितुं शक्नोति तस्य सर्वदेवमयत्वात् । अपूजितेन भिक्षुकेण कृतान्दोषान् प्राक्कृतोऽपि वैश्वदेवो न व्यपोहति । तस्य होमो निरर्थक इति प्रागुक्तेः ।

प्रणया कर्मवाक्यादस्य नित्यत्वं पूर्वमुक्तं तत्र वैश्वदेवस्य तन्निर्वाहायाकरणे प्रत्यवायमाह ।

**अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजाधमाः ।**
**सर्वे ते निष्फला ज्ञेया पतन्ति नरकेऽशुचौ ॥ ५६ ॥**

ये द्विजाधमाः द्विजेषु त्रैवर्णिकेषु अधमा वैश्वदेवमकृत्वैव भुञ्जते ते निष्फलास्तत्कर्मणः फलभाजो न भवन्तीति ज्ञेयम् । यद्वा द्विजाः त्रैवर्णिकाः अधमाः शूद्राश्च तेषामपि "नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेदिति" योगिना पञ्चयज्ञविधानात् । न तावन्मात्रमेव किन्त्वशुचौ नरके पतन्ति ।

वैश्वदेवातिथ्ययोरकरणे प्रत्यवायान्तरमाह ।

**वैश्वदेवविहीना ये आतिथ्येन बहिष्कृताः ।**
**सर्वे ते नरकं यान्ति काकयोनिं व्रजन्ति च ॥ ५७ ॥**

ये वैश्वदेवरहितास्सन्त आतिथ्येनापि रहितास्ते सर्वे रौरवादिनरकमनुभूय काकयोनिं व्रजन्ति । एवमन्यत्रापि कल्पनीयम् ।

तदाह व्यासः ।

पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥ इति ।

अतिथित्वेन स्तुवन्नन्यानपि भोजनीयानाह ।

**पापी वा यदि चण्डालो विप्रघ्नः पितृघातकः ।**
**वैश्वदेवे तु सम्प्राप्तः सोऽतिथिः स्वर्गसङ्क्रमः ॥५८॥**

पापी गोवधाद्युपपातकी, चाण्डालो ब्राह्मण्यां शूद्रादुत्पन्नः, विप्रघ्नो ब्रह्महा पितृघातको मातापित्रोः प्रमापकः, यदि वा शब्दाभ्यां शत्रुश्वपाकयोरपि ग्रहणम् ॥

चाण्डालो वा श्वपाको वा शत्रुर्वा पितृघातकः ।
देशकाले ह्युपगतो भरणीयो मतो मम ॥

इति विष्णुधर्मोत्तरात् । एषामन्यतमो वैश्वदेवे वैश्वदेवकाले सम्प्राप्तोऽतिथिरतिथिवदन्नेन पूजनीयो नत्वशेषातिथ्यभाक् ।

तदुक्तमाश्वमेधिके ।

चाण्डालो वा श्वपाको वा काले यः कश्चिदागतः ।
अन्नेन पूजनीयश्च परत्र हितमिच्छता ॥ इति ।

सोऽपि स्वर्गप्राप्तिहेतुरिति ।

इदानीं भोजनविधिधर्मानाह ।

**यो वेष्टितशिरा भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः ।**
**वामपादकरः स्थित्वा तद्वै रक्षांसि भुञ्जते ॥ ५६ ॥**

य पुमानुष्णीषादिना वेष्टितशिरा यश्च दक्षिणदिङ्मुखो यश्च वामपादे करमारोप्य यश्च स्थित्वा भुङ्क्ते तत्सर्वं रक्षांसि भुञ्जते । वेष्टितशिरस्कत्व तूत्सङ्गकृतभाजनैकवस्त्रनग्नसोपानत्कादीनामुपलक्षणम् ।

तदुक्त ब्राह्मे ।

न वेष्टितशिराश्चापि नोत्सङ्गकृतभाजनः ।
नैकवस्त्रो दृष्टमध्यः सोपानत्कः सपादुक इति ॥

दृष्टमध्यो नग्न दक्षिणाभिमुखत्व विदिङ्मुखस्याप्युपलक्षणं ।

तथा च कौर्मे ।

यो भुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते विदिङ्मुखः ।
सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरमिति ॥

एतेन परिशेषतो दिक्त्रयाभिमुखत्वमुक्तम् । तदाह गोभिलः ।

प्राङ्मुखावस्थितो विप्रः प्रतीच्या वा यथासुखम् ।
उत्तर पितृकार्ये तु दक्षिण तु विवर्जयेत् ॥ इति ।

स चाय दक्षिणमुखत्वनिषेधो नित्यभोजनविषयः काम्ये तु ।

आयुष्य प्राङमुखो भुङ्क्ते यशस्य दक्षिणामुखः ।
श्रिय प्रत्यङ्मुखो भुङ्क्ते ऋत भुङ्क्ते ह्युदङ्मुखः ॥

इति मानवे तद्विधानात् । वामपादकरत्व प्रसारितपादस्याप्युपलक्षणम् ।

न प्रसारितपादस्तु पादारोपितपाणिमान् ।
न बह्वासनसस्थश्च न च पर्यङ्कमास्थितः ॥ इति स्मरणात् ।

स्थितत्व यानाद्यारूढस्याप्युपलक्षणम् ।

गजाश्वरथयानोष्ट्रमास्थितो नैव भक्षयेत् ।
श्मशानात्यन्तरस्थो वा देवालयगतोऽपि वा ॥
शयनस्थो न भुञ्जीत न पाणिस्थ न चासने ॥ इति ब्राह्मात् ।

अर्हन्निह भवान् पूजाम् । प्रशंसायां किम् । अर्हति चोरो वधम् ॥

**आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु । ३ । २ । १३३ ॥**

भ्राजभासेति क्विपमभिव्याप्य वक्ष्यमाणा प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥

**तृन् । ३ । २ । १३४ ॥**

कर्ता कटान् ॥ तद्धर्मणि । मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम् । तत्साधुकारिणि । कर्ता खेटम् । तृन्विधावृत्विक्षु चानुपसर्गस्येति वक्तव्यम् ॥ * ॥ अताच्छील्यार्थमिदम् । होता । पोता । नेष्टा । णेष्ट, नेष्ट, एष्ट, प्रेष्ट, गतावित्यत्र पठितो नेषतिरयम् । अनुपसर्गस्य किम् । प्रतिहर्ता । प्रशास्ता । तृजेव भवति । तृन्तृचौ शास्ति चदादिभ्यः संज्ञायां चानिटावित्युणादिपठितेन । स्वरे च विशेषः । तृनि तादौ च निति कृत्यताविति गतेः प्रकृतिस्वरो भवति । तृचि कृत्स्वरः ॥ त्विषेर्दैवतायामकारश्चोपधाया अनिट्त्वञ्च ॥ * ॥ त्वष्टा । त्विषेः स्वत एवानिट्त्वादनिट्त्वञ्चेति उक्तस्य वक्ष्यमाणस्य च सर्वस्योपसंख्यानस्य शेषः ॥ क्षदेश्च नियुक्ते ॥ * ॥ क्षत्ता क्वचिदधिकृत उच्यते । क्षदिः सौत्रो धातुः शक्लीकरणे भक्षणे च । अनुदात्तेत् । वृक्ष्ये च क्षदानमिति मन्त्रात् । उक्षाणं वा वेहतं वा क्षदन्ते इति ब्राह्मणाच्च ॥ छन्दसि तृच्च ॥ * ॥ चात्तृन् । क्षत्तृभ्यः संग्रहीतृभ्यः । क्षत्तृभ्यः संग्रहीतृभ्यः । स्वरे विशेषः ॥

**अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् । ३ । २ । १३५ ॥**

अलङ्करिष्णुरित्यादि ॥

**णेश्छन्दसि । ३ । २ । १३६ ॥**

वीरुध. पारयिष्णव: ॥

**भुवश्च । ३ । २ । १३७ ॥**

छन्दसीत्येव । भविष्णु । कथ तर्हि जगत्प्रभोरप्रभविष्णु वैष्णवमिति । निरङ्कुशा कवय: । चकारोऽनुक्तसमुच्चयार्थ. । भ्राजिष्णुरिति वृत्ति: । एवं क्षयिष्णु. । नैतद्भाष्ये दृष्टम् ॥

**ग्लाजिस्थश्च ग्स्नुः । ३ । २ । १३८ ॥**

छन्दसीति निवृत्तम् ॥ गिदयं न तु कित् । तेन स्थ ईत्व न । ग्लास्नु: । गित्वान्न गुण । जिष्णु: । स्थास्नु । चाद्भुव. । अयुक. क्तितीत्यत्र गकारप्रश्लेषान्नेट् । भूष्णु ॥ * ॥ दशेश्छन्दस्युपसंख्यानम् ॥ * ॥ दक्ष्णव. पशव ॥

**त्रसिगृधिधृषिक्षिपेः क्नुः । ३ । २ । १३९ ॥**

त्रस्नु. । गृध्नु । धृष्णु: । क्षिप्नु ॥

**शमित्यष्टाभ्यो घिनुण् । ३ । २ । १४० ॥**

उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शमिनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्प: । न चैव शमिनावित्यादौ नुम्प्रसङ्ग: । झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । ह्रस्वाभावे पुंवत्वं तु न । संज्ञापूरण्योश्चेति निषेधात् । नोदात्तोपदेशस्येति वृद्धिनिषेध: । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उत्पूर्वान्मदेरलङ्कृञादिसूत्रेणेष्णुज्युक्त । वासरूपविधिना घिनुणपि । उन्मादी । ताच्छीलिकेषु वासरूपविधिर्नास्तीति तु प्रायिकम् ॥

**संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च । ३ । २ । १४१ ॥**

घिनुण् स्यात् ॥ संपर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । सञ्ज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ॥

**वौ कषलसकत्थस्रम्भः । ३ । २ । १४२ ॥**

विकाषी । विलासी । विकत्थी । विस्रम्भी ॥

**अपे च लषः । ३ । २ । १४३ ॥**

चाद्वौ ॥ अपलाषी । विलाषी ॥

**प्रे लपसृद्रुमथवदवसः । ३ । २ । १४४ ॥**

प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ॥

**निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् । ३ । ३ । १४५ ॥**

पञ्चम्यर्थे प्रथमा । एभ्यो वुञ् स्यात् ॥ निन्दकः । हिंसकः । केचित्तु विनाशीति ण्यन्तमेव पठन्ति । विनाशकः । परिक्षेपकः । परिराटकः । परिवादिर्ण्यन्तः । परिवादकः । व्याभाषकः । असूयतिः कण्ड्वादियगन्तः । असूयकः । असूयतिभिन्नेभ्यो ण्वुला सिद्धे

वुञ्वचनं ज्ञापकं तच्छीलादिषु वासरूपन्यायेन तृजादयो नेति । असूयतेस्तु णवुलि प्रत्ययात्पूर्वमुदात्त वुञि त्वादिरुदात्त इति विशेषः ॥

## देविक्रुशोश्चोपसर्गे । ३ । २ । १४६ ॥

आदेवकः । आक्रोशकः । उपसर्गे किम् । देवयिता । क्रोष्टा ॥

## चलनशब्दार्थादकर्मकाद्युच् । ३ । २ । १४७ ॥

चलनार्थाच्छब्दार्थाच्च युच् स्यात् ॥ चलनः । चोपनः । कम्पनः । शब्दनः । रवणः । अकर्मकात्किम् । पठिता विद्याम् ॥

## अनुदात्तेतश्च हलादेः । ३ । २ । १४८ ॥

अकर्मकाद्युच् । वर्तनः । वर्धनः । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । आदिग्रहणं किम् । जुगुप्सनः । अकर्मकात्किम् । वसिता वस्त्रम् ॥

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । ३ । २ । १४९ ॥

जु इति सौत्रो धातुः गतौ वेगे च । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्द्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः । पूर्वेण सिद्धे पदिग्रहणं लषपतपदेत्युकञा बाधा माभूदिति । तेन ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति ज्ञाप्यते । तेनालङ्कृञस्तृन्न । न च सकर्मकार्थे तद्दिति वाच्यम् । अनभिधानादनेनसकर्मकादविधानात् ॥

## क्रुधमण्डार्थेभ्यश्च । ३ । २ । १५० ॥

क्रोधनः । रोषणः । मण्डनः । भूषणः ॥

**न यः । ३ । २ । १५१ ॥**

यकारान्ताद्युच् न ॥ क्नूयिता । क्ष्मायिता । क्नूयी शब्दे । क्ष्मायी विधूनने ॥

**सूददीपदीक्षश्च । ३ । २ । १५२ ॥**

युच् न ॥ अनुदात्तेत इति प्राप्तः प्रतिषिध्यते । सूदिता । दीपिता । दीक्षिता । नमिकम्पीति रेण युचो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति ताच्छीलिकेषु परस्परं वासरूपविधिर्नास्तीति प्रायिकमिति । तेन कम्रा कमना युवतिः । कम्प्रा कम्पना शाखा । गमेर्लषपतपदे त्युकञ्विषये तृन्नपि । गन्ता । गामुकः । वौ कषलसेति घिनुणविषये युजपि । विकत्थी विकत्थन इत्यादि सिध्यति । यदि सूदेर्युच् न कथं मधुसूदनः । नन्द्यादिः ॥

**लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ।३। २। १५३॥**

लाषुकः । पातुकः । पादुकः । स्थायुकः । भावुकः । वर्षुकः । घातुकः । कामुकः । गामुकः । शारुकः ॥

**जल्पभिक्षकुट्टलुंटवृङः षाकन् । ३ । २ । १५४ ॥**

जल्पाकः । भिक्षाकः । कुट्टाकः । लुंटाकः । वराकः । वराकी ॥

**प्रजोरिनिः । ३ । २ । १५५ ॥**

प्रजवी । प्रजविनौ । प्रजविनः ॥

**जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च । ३ । २ । १५६ ॥**

जयी । दरी । क्षयी । अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ॥

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् । ३ । २ । १५८ ॥**

आद्यास्त्रयश्चुरादावदन्ताः । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तत्पूर्वो द्रा तदो नान्तत्वं निपात्यते । तन्द्रालुः । श्रत्पूर्वो डुधाञ् । श्रद्धालुः ॥ शीङो वाच्यः ॥ * ॥ शयालुः ॥

**दाधेट्सिशदसदो रुः । ३ । २ । १५९ ॥**

दारुः । धारुः । सेरुः । शद्रुः । सद्रुः ॥

**सृघस्यदः क्मरच् । ३ । २ । १६० ॥**

सृमरः । घस्मरः । अद्मरः ॥

**भञ्जभासमिदो घुरच् । ३ । २ । १६१ ॥**

भङ्गुरः । भासुरः । मेदुरः ॥

**विदिभिदिच्छिदेः कुरच् । ३ । २ । १६२ ॥**

विदुरः । भिदुरम् । छिदुरम् ॥

**इणनशजिसर्तिभ्यः क्वरप् । ३ । २ । १६३ ॥**

इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः ॥

**गत्वरश्च । ३ । २ । १६४ ॥**

गमेरनुनासिकलोपो निपात्यते । गत्वरी ॥

**जागुरूकः । ३ । २ । १६५ ॥**

जागर्तेरूकः स्यात् ॥ जागरूकः ॥

**यजजपदशां यङः । ३ । २ । १६५ ॥**

एभ्यो यङन्तेभ्य ऊकः स्यात् ॥ दशामिति भाविना नलोपेन निर्देशः । यायजूकः । जञ्जपूकः । दन्दशूकः ॥

**नमिकम्पिस्म्यजसकमहिंसदीपो रः । ३ । २ । १६६ ॥**

नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते । अजस्रम् । सन्ततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ॥

**सनाशंसभिक्ष उः । ३ । २ । १६७ ॥**

चिकीर्षुः । आशंसुः । भिक्षुः ॥

**विन्दुरिच्छुः । ३ । २ । १६८ ॥**

वेत्तेर्नुम् इषेश्छत्वञ्च निपात्यते ॥ वेत्ति तच्छीलो विन्दुः । इच्छति तच्छीलो इच्छुः ॥

**क्याच्छन्दसि । ३ । २ । १६९ ॥**

देवान् जिगाति सुम्नयुः । छन्दसि किम् । पुत्रीयिता ॥

**आदृगमहनजनः किकिनौ लिट् च । ३ । २ । १७० ॥**

आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत् । बभ्रिर्वज्रम् । पपिः सोमम् । ददिर्गाः । जग्मिर्युवा । जघ्निर्वृत्रममित्रियम् । जज्ञिः । किकिनावुत्सर्गश्छन्दसि वक्तव्यौ सदादिभ्यो दर्शनात् ॥ * ॥ सेदिः । नेमिः । तरतेर्गिरतेश्च बहुलं छन्दसीत्युत्वे । मित्रावरुणौ ततुरिः । दूरे ह्यध्वा जगुरिः । एतदर्थमेव कित्करणम् ऋच्छत्यृतामिति गुणनिषेधार्थम् । अन्यथा लिड्वद्भावेन सिद्धे किं तेन ॥ भाषायां धाञ्कृसृगमिजनिनमिभ्यः ॥ * ॥ दधिः । चक्रिः । सस्रिः । जग्मिः । जज्ञिः । नेमिः । सासहिवावहिचाच-

लीपापतीनामुपसख्यानम् ॥ * ॥ यङन्तेभ्य: सहृत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते ॥

**स्वपितृषोर्नजिङ् । ३ । २ । १७१ ॥**

छन्दसीति निवृत्तम् । स्वप्नक् । तृष्णाक् । तृष्णाजौ । तृष्णाज: । धृषेश्चेति वाच्यमिति काशिका । धृष्णाक् ॥

**शृवन्द्योरारुः । ३ । २ । १७२ ॥**

शरारु: । वन्दारु: ॥

**भियः क्रुक्लुकनौ । ३ । २ । १७३ ॥**

भीरु: । भीलुक: ॥ क्रुकन्नपि वाच्य: ॥ * ॥ भीरुक: ॥

**स्थेशभासपिसकसो वरच् । ३ । २ । १७४ ॥**

स्थावर: । ईश्वर: । भास्वर: । पेस्वर: । कस्वर: ॥

**यश्च यङः । ३ । २ । १७५ ॥**

यातेर्यङन्ताद्वरच् स्यात् ॥ अतो लोप: । तस्य यलोप प्रति स्थानिवत्वनिषेधाल्लोपोव्योर्वलीति यलोप: । अल्लोपस्य स्थानिवत्वमाश्रित्याऽऽतोलोपे प्राप्ते वरे लुप्त न स्थानिवत् ॥ यायावर: ॥

**भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् । ३ । २ । १७६ ॥**

विभ्राट् ॥ भा । भासौ । राल्लोप: । धू: । धुरौ । विद्युत् । ऊर्क् । पू: । पुरौ । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घ: । जू: । जुवौ । जुव: । ग्रावशब्दस्य धातुना समास. सूत्रे निपात्यते । तत: क्विप् । ग्रावस्तुत् ॥

**अन्येभ्योऽपि दृश्यते । ३ । २ । १७७ ॥**

क्विप् ॥ छित् । भिद् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः । क्वचिदसम्प्रसारणम् । क्वचिद्द्वे । क्वचिद्धस्व । तथा च वार्तिकम् ॥ क्विब् वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च ॥*॥ क्विब्वचीत्यादिना उणादिसूत्रेण केषाञ्चित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम् । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः ॥ द्युतिगमिजुहोतीनां द्वे च ॥ * ॥ दृशिग्रहणादभ्याससञ्ज्ञा । दिद्युत् । जगत् । जुहोतेर्दीर्घश्च ॥ * ॥ जुहूः । दॄ भये अस्य ह्रस्वश्च ॥ * ॥ दीर्यतीति ददृत् ॥ ध्यायतेः सम्प्रसारणञ्च ॥ * ॥ धीः ॥

## भुवः संज्ञान्तरयोः । ३ । २ । १७८ ॥

मित्रभूर्नाम कश्चित् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ॥

## विप्रसंभ्यो ड्वसंज्ञायाम् । ३ । २ । १७९ ॥

एभ्यो भुवो डुः स्यात् न तु सञ्ज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । सम्भुर्जनिता । संज्ञायां तु विभूर्नाम कश्चित् । मितद्र्वादिभ्य उपसंख्यानम् ॥ * ॥ मितं द्रवतीति मितद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भवतिः ॥

## धः कर्मणि ष्ट्रन् । ३ । २ । १८० ॥

धेटो धाञश्च कर्मण्यर्थे ष्ट्रन्स्यात् ॥ धात्री जनन्यामलकीव सुमत्युपमातृषु ॥

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे । ३ । २ । १८१ ॥

दाबादेः ष्ट्रन्स्यात् करणेऽर्थे ॥ दात्यनेन दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ॥

**हलसूकरयोः पुवः । ३ । २ । १८२ ॥**

पूङ्पूञोः करणे ष्ट्रन्स्यात् तच्चेत्करणं हलसूकरयोरवयवः ॥ हलस्य सूकरस्य वा पोत्रं मुखमित्यर्थः ॥

**अर्तिलूधूसूखनसहचर इत्रः । ३ । २ । १८३ ॥**

अरित्रम् । लवित्रम् । धूइति कुटादिरेव गृह्यते । निरनुबन्धकत्वात् । अत एव गाङ्कुटेति ङित्वाद् गुणनिषेधे उवङ् । धुवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

**पुवः संज्ञायाम् । ३ । २ । १८४ ॥**

पवित्रम् । येनाज्येन उत्पूयते यच्चानामिकावेष्टनम् ।

**कर्तरि चर्षिदेवतयोः । ३ । २ । १८५ ॥**

पुव इत्र. स्यात् ॥ ऋषिदेवतयोर्यथासङ्ख्य सम्बन्धः । ऋषौ करणे देवताया कर्तरि । ऋषिर्वेदमन्त्रः । तदुक्तमृषिणेति दर्शनात् । पूयतेऽनेनेति पवित्रम् । पावमान्यादि सूक्तम् । देवतायाम् । अग्निः पवित्र स मा पुनातु । वर्तमाने लडित्यतो वर्तमाने इत्यधिकृत्य ॥

**ञीतः क्तः । ३ । २ । १८६ ॥**

ञिष्विदा । ष्विण्णः । ञिइन्धी । इद्धः ॥

**मतिबुद्धिपूजार्थेभ्यश्च । ३ । २ । १८७ ॥**

मतिरिहेच्छा । बुद्धेः पृथगुपादानात् । राज्ञां मत इष्टः । तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्चितः । चकारोऽनुक्तसमुच्चयार्थः ॥

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथा क्रान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृत पूर्ववत् स्मृत ॥

कष्टशब्दो भविष्यति काले । अमृतशब्दः पूर्ववद्वर्तमाने इत्यर्थः । तथा सुप्तः शयितः प्राशितः लिप्त तृप्तः इत्यादि वर्तमाने द्रष्टव्यम् ॥

इति श्रीव्याकरणदीपिकायां वृत्तौ तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ॥



## अथ तृतीयाध्यायस्य तृतीयः पादः।

---

### उणादयो बहुलम्। ३। ३। १॥

संज्ञायामित्यनुवर्त्तते। एते वर्तमाने संज्ञायां बहुलं स्युः॥

कृवापाजिमिस्वदिसाध्यशूभ्य उण्॥

करोतीति कारुः शिल्पी कारकश्च। आतो युक्। वातीति वायुः। पायुर्गुदम्। जयत्यभिभवति रोगानिति जायुरौषधम्। मिनोति प्रक्षिपति ऊष्माणमिति मायुः पित्तम्। स्वादुः। साध्नोति परकार्यं साधुः। अश्नुते आशु शीघ्रम्। आशुर्व्रीहिः पाटलः स्यात्। बहुलग्रहणात्केचिदविहिता अप्यूह्याः। तद्यथा ऋषेरलजुक्तः शङ्केर-प्यूह्यते। शंकुलेति दर्शनात्। किञ्च फिडफिड्डौ क्वापि न विहितौ। अतैरूह्येते। ऋफिडः ऋफिड्ड इति।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।

कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥

अनादिप्रयुक्तास्वेव न तु सर्वत्रेत्याहुः। धातुरूपाणि प्रसि-द्धान्यर्त्यादीनि प्रत्ययाः फिडादय. । कार्यात् गुणप्रतिषेधादिकात् अनुबन्धं ककारादिकं विद्यात्। तेन फिडफिड्डौ क्तितावूह्याविति भावः। अनूबन्धमित्यत्र उपसर्गस्य घञीति दीर्घ.। एतदुणादिषु शास्त्रे शासितव्यमित्यर्थः॥

### भूतेऽपि दृश्यन्ते। ३। ३। २॥

वृत्त तदिति वर्त्म । भसितं भस्म । दृशिग्रहणं प्रयोगानुसारार्थम् ॥

## भविष्यति गम्यादयः । ३ । ३ । ३ ॥

गमी ग्रामम् । आगामी । प्रस्थायी । प्रतियोधी । प्रतिबोधी । प्रतियायी । प्रतियोगी । भावी । अनद्यतने उपसङ्ख्यानम् ॥ * ॥ श्वो गमी ग्रामम् । भविष्यतीत्यनुवर्तमाने ॥

## यावत्पुरानिपातयोर्लट् । ३ । ३ । ४ ॥

यावद् भुङ्क्ते । पुरा भुङ्क्ते । निपातावेतौ निश्चयं द्योतयत । निपातयोः किम् । यावद्दास्यते तावद्भोक्ष्यते । करणभूतया पुरा यास्यति । ननूदाहृते ऽस्यावकाशः । लुटस्तु श्वःकर्तेत्यादौ । यावत् श्वो भुङ्क्ते पुरा श्वो भुङ्क्ते इत्यादावुभयोः प्राप्तौ परत्वाल्लुट् स्यादिष्यते तु लट् स कथमिति चेदुच्यते । अनद्यतने लुडित्यत्र यावत्पुरेत्यादीनि लिङ्चोर्ध्वेत्यन्तानि सूत्राण्यनुवर्तन्ते तेन लुड्विषयेऽपि अस्य नित्यमितरेषान्तु पक्षे प्रवृत्तिर्भवति ॥

## विभाषा कदाकर्ह्योः । ३ । ३ । ५ ॥

भविष्यति लट् स्यात् ॥ कदा कर्हि वा भुङ्क्ते । भोक्ष्यते । भोक्ता वा । ननु कर्हिशब्दोऽयमनद्यतनविषयः । अनद्यतने र्हिलन्यतरस्यामिति किमोर्हिलिति व्युत्पादनात् । ततश्च तद्योगे लुटैव भाव्य । न तु लृटा । तत्कथमुदाहृयते कर्हि भोक्ष्यत इति । अत्राहुः । भविष्यत्सामान्ये भोक्ष्यत इति व्युत्पाद्य कर्हिशब्देन सम्बन्ध्यत इति ॥

## किंवृत्ते लिप्सायाम् । ३ । ३ । ६ ॥

भविष्यति वा लट् स्यात् ॥ कं कतरं कतमं वा भोजयसि

भोजयिष्यसि भोजयितासि वा ॥ लिप्सायां किम् । कः पाटलिपुत्र गमिष्यति ॥

## लिप्स्यमानसिद्धौ च । ३ । ३ । ७ ॥

लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लट् स्यात् ॥ अकिंवृत्तार्थोऽयमारम्भः । योऽन्नं ददाति दास्यति दाता वा स स्वर्गं याति यास्यति याता वा ॥

## लोडर्थलक्षणे च । ३ । ३ । ८ ॥

लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्तमानाद्धातोर्भविष्यति लट् वा स्यात् ॥ कृष्णश्चेद्भुङ्क्ते त्व गाश्चारय । पक्षे लृङ्लृटौ ॥

## लिङ् चोर्ध्वमौहूर्तिके । ३ । ३ । ९ ॥

ऊर्ध्वं मुहूर्ताद्भव ऊर्ध्वमौहूर्तिकः । निपातनात्समासः । उत्तरपदवृद्धिश्च । उर्ध्वमौहूर्तिके भविष्यति लोडर्थलक्षणे वर्तमानाद्धातोर्लिङ्लटौ वा स्तः ॥ मुहूर्तादुपरि उपाध्यायश्चेदागच्छेत् आगच्छति आगमिष्यति आगन्ता वा अथ त्वं छन्दोऽधीष्व ॥

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् । ३ । ३ । १० ॥

क्रियार्थायां क्रियायामुपपदे भविष्यदर्थे धातोरेतौ स्तः ॥ मान्तत्वादव्ययत्वम् । अव्ययकृतो भावे इति वचनाद्भावे तुमुन् । ण्वुल् तु कर्तरि । प्रकृत्यर्थस्य उद्देश्यत्वन्तु प्रत्ययद्योत्यम् । तच्च संसर्गः प्रकारो वा मतभेदेन । लिङ्विधौ भाष्ये विध्यादीनां वाच्यत्वमितिपक्षस्याप्युक्ततया तद्रीत्या इहोद्देश्यत्व प्रत्ययार्थं । प्रकृत्युपपदार्थयोः समानकर्तृकत्वमपीहाभिधानबललभ्य. प्रयोगोपाधिः । तुमुन्प्रकृत्यर्थस्तु उपपदार्थं प्रति विशेषणम् । ण्वुलि तु प्रकृत्यर्थो ण्वुलर्थ ण्वुलर्थस्तु कारकद्वारा उपपदार्थं विशेषणम् । कृष्णं द्रष्टुं याति ।

कृष्णाकर्मकभविष्यद्दर्शनार्थमित्यर्थः । कृष्णां दर्शको याति । कृष्णाकर्मकभविष्यद्दर्शनकर्तृकर्तृक दर्शनोद्देश्यकञ्च यानमित्यर्थः । अत्र वासरूपेण तृजादयो न । पुनर्ण्वुलुक्तेः । तेन कर्ता व्रजति विक्षिपो व्रजतीत्यादि न प्रयुज्यते । क्रियार्थक्रियोपपदको लृट् तु विधानसामर्थ्याद्भवतीति करिष्यामीति व्रजतीत्यादि निर्बाधम् । क्रियायां किम् । भिक्षिष्ये इत्यस्य जटाः । इह भिक्षार्था जटास्ताश्च द्रव्यं न तु क्रिया । भिक्षितुं जटा इति प्रयोगस्तु धारयत्यध्याहारेण योज्यः । क्रियार्थायां किम् । धावतस्ते पतिष्यति दण्डः । अस्त्यत्र धावनक्रिया न त्वसौ दण्डपातनार्था । धावनं हि दण्डपतने हेतुर्न तूद्देश्यमुद्देशेन तादर्थ्यं विवक्ष्यते न हेतुत्वमात्रेण ॥

**भाववचनाश्च । ३ । ३ । ११ ॥**

भावे इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थाया क्रियायां भविष्यति स्युः ॥ क्रियार्थोपपदे विशेषविहितेन तुमुना स्वविषये घञादीना बाधे प्राप्ते वचनम् । यागाय याति । अथ भावे इत्येतावतैव भावे ये विहितास्ते ततोऽन्यत्रापीत्यर्थेन सिद्धे वचनग्रहणं किमर्थम् । वाचका यथा स्युः । कथञ्च ते वाचका भवन्ति । याभ्यः प्रकृतिभ्यो येन विशेषेण ये प्रत्यया विहितास्ते यदि ताभ्यस्तथैव भवन्ति नासामञ्जस्येनेति ॥

**अण् कर्मणि च । ३ । ३ । १२ ॥**

कर्मण्युपपदे क्रियार्थाया क्रियाया चोपपदे भविष्यत्यण् स्यात् ॥ कर्मण्यणिति सामान्यविहितोऽप्यण् वासरूपविधेरभावात् ण्वुला बाधितोऽतः पुनर्विधीयमानो ण्वुलोऽपवादः । काण्डलावो व्रजति । परत्वादयं कादीन्बाधते । तेनापवादविषयेऽपि भवत्येव । कम्बलदायो व्रजति ॥

## लृट् शेषे च । ३ । ३ । १३ ॥

भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायामसत्यां सत्याञ्च ॥ करिष्यति । हरिष्यति । सत्यां खल्वपि । करिष्यामीति व्रजति । हरिष्यामीति व्रजति ॥

## लृटः सद्वा । ३ । ३ । १४ ॥

व्यवस्थितविभाषेयम् । तेन अप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य । करिष्यतोऽपत्यं कारिष्यतः । करिष्यद्भक्तिः । हे करिष्यन् । अर्जयिष्यन् वसति । प्रथमासमानाधिकरणेऽपि क्वचित् । करिष्यति । करिष्यन् ॥

## अनद्यतने लुट् । ३ । ३ । १५ ॥

योगविभागः कर्त्तव्यः । अनद्यतने लृटः सत्सञ्ज्ञौ भवतः । श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । एतदेव ज्ञापयति भवत्यनद्यतने लृडिति यदयमनद्यतने लृटः सत्सञ्ज्ञौ शास्ति । ततो लुट् ॥ भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ॥ लृटोऽपवादः । श्वः कर्त्ता । श्वो भोक्ता । अनद्यतन इति बहुव्रीहिनिर्देशः । तेन व्यामिश्रे न भवति । अद्य श्वो वा गमिष्यतीति ॥ परिदेवने श्वस्तनी भविष्यन्त्या अर्थे इति वक्तव्यम् ॥ * ॥ श्वस्तनी लुटः सञ्ज्ञा । भविष्यतीति लृटः । इयं नु कदा गन्ता या एवं पादौ निदधाति । अयं नु कदाऽध्येता य एवमनभियुक्तः । अद्यतनविषयमेतत्प्रयोगद्वयम् ॥

## पदरुजविशस्पृशो घञ् । ३ । ३ । १६ ॥

भविष्यतीति निवृत्तम् । पद्यतेऽसौ पादः । करणस्य च कर्तृ-

XIV

[1]अथर्ष्यशृङ्गो राजानं पुनरेवाभ्यभाषत ।
[2]इष्टिं तेऽन्यां करिष्यामि पुत्रीयां पुत्रकाम्यया ॥ १ ॥
[3]ततः प्रचक्रमे कर्तुमिष्टिं कामसमृद्धये ।
तस्य राज्ञो हितान्वेषी विभाण्डकसुतो वशी ॥ २ ॥
[4]तत्र देवाः सगन्धर्वाः सिद्धाश्च मुनिभिः सह ।
भागप्रतिग्रहार्थं वै पूर्वमेव समागताः ॥ ३ ॥
[5]ब्रह्मा सुरेश्वरः स्थाणुस्तथा नारायणः प्रभुः ।
चत्वारो लोकपालाश्च देवतानाञ्च मातरः ॥ ४ ॥
यक्षास्तथैव सर्वे तु देवाश्च सहितास्तथा ।
इन्द्रश्च भगवान् साक्षान्मरुद्गणवृतः प्रभुः ॥ ५ ॥
अश्वमेधे महायज्ञे राज्ञस्तस्य महात्मनः ।
तस्य भागार्थिनो देवानागतान् सोऽभ्य[6]भाषत ॥ ६ ॥
अयं राजा दशरथः पुत्रार्थी तप्तवांस्तपः ।
इष्टवानश्वमेधेन भवतः श्रद्धयान्वितः ॥ ७ ॥
इष्टिञ्च [7]पुत्रकामार्था पुनः कर्तुं समुद्यतः ।

1 For this Sl B XV 1 2 मेधावी तु ततो ध्यात्वा स किंचिदिदमुत्तर । लब्धसञ्ज्ञस्ततस्त तु वेदज्ञो नृपमब्रवोत ॥ इष्टिं तेऽह करिष्यामि पुत्रीया पुत्र कारणात । अथर्वशिरसिप्रोक्तैर्मन्त्रै सिद्धा विधानत ॥ 2 P has यज्ञ &c as an alternative 3 For this Sl B 3 तत प्राक्रमदिष्टि ता पुत्रीया पुत्र कारणात । जुहावाग्नौ च तेजस्वी मन्त्रदृष्टेन कर्मणा ॥ 4 For this Sl B 4 ततो देवा सगधर्वा सिद्धाश्च परमर्षय । भावप्रतिग्रहार्थं वै समवेता यथाविधि ॥ Before this Sl of our text P has the line—दीप्ताग्नावजुहोद्धव्य विधि-दृष्टेन कर्मणा । 5 This, and the following 7 Slokas are wanting in B 6 G 6 यावत 7 G. 8 पुत्रकामोऽन्या &c

तदस्य पुत्रकामस्य प्रसादं कर्त्तुमर्हथ ॥ ८ ॥
अभियाचे स वः सर्वानस्यार्थेऽहं कृताञ्जलिः ।
भवेयुरस्य चत्वारः पुत्रास्त्रैलोक्यविश्रुताः ॥ ९ ॥
[1]तं तथेत्यब्रुवन् देवा ऋषिपुत्रं कृताञ्जलिम् ।
माननीयोऽसि नो विप्र राजा चैव विशेषतः ॥१०॥
प्राप्स्यते परमं काम[2]मेतं दिष्ट्या नराधिपः ।
इत्युक्त्वान्तर्हिता देवास्ततः शक्रपुरोगमाः ॥ ११ ॥
[3]तं दृष्ट्वा विधिवत् ख्यातं क्रियमाणं महर्षिणा ।
[4]उपेत्य लोककर्तारं प्रजापतिमिदं वचः ॥ १२ ॥
ऊचुः प्राञ्जलयः सर्वे ब्रह्माणं वरदन्तथा ।
[5]त्वत्प्रदिष्टवरो ब्रह्मन् रावणो नाम राक्षसः ॥ १३ ॥
सर्वान्नो बाधते दर्पान्महर्षींश्च [6]तपोधनान् ।
[7]त्वया ह्यस्य वरो दत्तः प्रीतेन भगवन् पुरा ॥ १४ ॥
देवदानवयक्षाणामवध्योऽसीति कामतः ।
मानयन्तश्च ते वाक्यं सर्वमस्य सहामहे ॥ १५ ॥

1 G 10 ते &c but P has त &c 2 G 11 मेतयेष्ट्रा &c but P has मेतदिष्ट्या &c 3 For this line G 11 ता दृष्ट्वा विधिवद्दीक्षा क्रियमाणा महर्षिणा । P agrees with our text, but has marginal corrections agreeing with G For the whole Sl and the first line of the next Sl B 5 ता समेत्य यथान्याय तस्मिन्सदसि देवता. । अब्रुवँल्लोककर्त्तार ब्रह्माणा वचन तत ॥ 4 P उत्पत्य &c 5 For this and the following line B 6 भगवस्त्वत्प्रसादेन रावणो नाम राक्षस । सर्वान्नो बाधते वीर्याच्छासितु त न शक्नुम ॥ 6 G 14 तपोरतान, but P has तपोधनान, 7 For this line, and the following Sl B 7 त्वया तस्मै वरो दत्त प्रीतेन (a) भगवस्तदा । मानयन्तश्च त नित्य सर्वं तस्य क्षमामहे ॥ (a) V has भगवन पुरा

[1]स बाधयति लोकांस्त्रीन् विहिंसन् राक्षसाधिपः ॥
[2]देवर्षियक्षगन्धर्वानसुरान् मानवांश्च सः ॥ १६ ॥
अन्यायतः पीडयति वरदानेन दर्पितः ।
[3]न तत्र सूर्यस्तपति न भयाद्वाति मारुतः ॥ १७ ॥
नाग्निर्ज्वलति वै तत्र यत्र तिष्ठति रावणः ।
[4]जलोर्मिमाली तं दृष्ट्वा समुद्रोऽपि [5]चकम्पते ॥१८॥
नष्टो वैश्रवणस्त्यक्त्वा लङ्कां तद्वीर्यपीडितः ।
तस्मान्नः पाहि भगवन् रावणाल्लोकरावणात् ॥ १९ ॥
उपायं तद्वधार्थाय स्रष्टुमर्हसि कामद ।
[6]इति विज्ञापितो देवैर्ध्यात्वा ब्रह्मेदमब्रवीत् ॥२०॥
हन्तायं विहितस्तस्य वधोपायो दुरात्मनः ।
[7]तेन देवर्षिगन्धर्वयक्षराक्षसपन्नगैः ॥ २१ ॥

---

1 For this Sl and the following line B 8 9 उद्वेजयति लोका-स्त्रोनुच्छ्रितान्दृष्टि दुर्म्मति । शक्र त्रिदशराजान प्रधर्षयितुमिच्छति ॥ ऋषोन्यक्षान्सगंधर्वान्ब्राह्मणानसुरास्तदा । अतिक्रामति दुर्धर्षा वरदानेन मोहितः ॥ 2 P देवर्षिनिष &c 3 For this and the following 5 lines, B 10-11 नैन सूर्य. प्रतपति पार्श्वे वाति न मारुत । चलोर्मिमाली त दृष्ट्वा समुद्रोऽपि न कम्पते ॥ तन्महचो भय तस्माद्राक्षसाद घोरदर्शनात । वधार्थं तस्य भगवन्नुपाय कर्त्तुमर्हसि ॥ 4. G 18 महोर्मिमालो &c, but P has जलोर्मिमाली &c 5 G प्रकम्पते, P न कम्पते 6 For this, and the following line, B 12 एवमुक्त सुरै सर्वैश्चिन्तयित्वा ततोऽब्रवीत । हन्ताय विदितस्तस्य वधोपायो दुरात्मन ॥ 7 For this, and the following 5 lines, B 13 15 तेन गन्धर्वयक्षाणा देवताना च रक्षसा । अवध्योऽस्मीति वागुक्ता तथेत्युक्त च तन्मया ॥ नाकीर्त्तयदवज्ञानात्तद्रक्षो मानुषास्तदा । तस्मात्स मानुषाद्वध्यो मृत्युर्नान्योऽस्य विद्यते ॥ एतच्छ्रुत्वा प्रिय वाक्य ब्रह्मणा समुदाहृत । देवा महर्षयः सर्वे प्रहृष्टास्तेऽभवस्तदा ॥

अवध्यः स्यामिति प्रोक्तं तथेत्युक्तं च तन्मया ।
[1]अवज्ञाय तु तद्रक्षो मानुषान् नान्वकीर्तयत् ॥ २२ ॥
तस्मात् स मानुषेणैव वध्यः पापो भविष्यति ।
इति श्रुत्वा हितं वाक्यं ब्रह्मणा समुदाहृतम् ॥ २३ ॥
देवाः शक्रपुरोगास्ते हर्षिताः सर्वतोऽभवन् ।
[2]एतस्मिन्नन्तरे विष्णु[3]स्तत्रागाद्भगवान् स्वयम् ॥ २४ ॥
ब्रह्मणा [4]मनसा ध्यातस्तद्वधायामितद्युतिः ॥
अब्रवीत्तं ततो ब्रह्मा विष्णुं [5]सुरगणैः सह ॥ २५ ॥
आर्त्तानामसि लोकानामार्त्तिहा मधुसूदन ।
याचामहेऽ[6]तस्त्वामार्त्ताः शरणं नो भवाच्युत ॥ २६ ॥
ब्रूत किं करवाणीति विष्णुस्तानब्रवीद्वचः ।
इति तस्य वचः श्रुत्वा पुनरूचुरिदं सुराः ॥ २७ ॥
[7]राजा दशरथो नाम तप्तवान् सुमहत्तपः ।
इष्टवांश्चाश्वमेधेन प्रजाकामः स चाप्रजः ॥ २८ ॥

---

1 P अवज्ञया च &c 2 For this line, and the following 3 Slokas B 16 18 एतस्मिन्नन्तरे विष्णुरुपयातो महाद्युति । शङ्खचक्रगदापाणि पीतवासा जगत्पति ॥ वैनतेयं समारुह्य भास्करस्तोयदे यथा । तप्तहाटककेयूरो वन्द्यमान सुरोत्तमै ॥ ब्रह्मणा च समागत्य तत्र तस्थौ समाहित । तमब्रुवन सुरा सर्वे तमभिष्टूय सन्नता. ॥ (a) V has भास्कर तोयदो यथा. 3 P स्तत्रायाद् &c 4 P has समनुध्यात &c, and मनसा ध्यात &c as alternatives 5 G 25 देवगणै &c, but P has सुरगणैः &c 6 P has ऽतस्त्वामार्त्ता &c, and त्वमार्त्ताना &c as alternatives 7 For this, and the following Slokas to the end of the Chapter B 19 34, त्वां नियोक्ष्यामहे विष्णो लोकाना हितकाम्यया । राज्ञो दशरथस्य त्वमयोध्याधिपते र्विभो ॥ धर्मज्ञस्य वदान्यस्य महर्षिसमतेजस. । अस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च ॥ विष्णो पुत्रत्वमागच्छ कृत्वात्मान चतुर्विध । तत्र त्व मानुषो भूत्वा प्रवृद्ध

धर्मशीलो गुणश्लाघी सत्यवादी दृढव्रतः ।
अस्मन्नियोगात्त्वं विष्णो तस्य पुत्रत्वमाप्नुहि ॥ २९ ॥
तस्य भार्यासु तिसृषु श्रीकल्पासु जनार्दन ।
चतुर्द्धांशं विभज्य त्वं प्रादुर्भवितुमर्हसि ॥ ३० ॥
स नियुक्तस्तथा देवैः साक्षान्नारायणः प्रभुः ।
[1]तानुवाच ततो देवानिदं वचनमर्थवत् ॥ ३१ ॥
किं मया तत्र कर्त्तव्यं प्रादुर्भूतेन व. सुराः ।
[2]कार्यं कुतो वापि भयं युष्माकमिदमीदृशम् ॥ ३२ ॥
इति श्रुत्वा वचस्तस्य विष्णोरूचुरिदं सुराः ।
राक्षसान्नो भयं विष्णो रावणाल्लोकरावणात् ॥ ३३ ॥

---

लोककटक ॥ अवध्य दैवतैर्विष्णो समरे जहि रावण । स हि देवान सगधर्वान सिद्धाश्च ऋषिसत्तमान् ॥ राक्षसो रावणो मूर्खो वीर्योद्रेकेण बाधते । ऋषयश्च ततस्तेन गधर्वाप्सरसस्तथा ॥ क्रोडन्तो नन्दनवने रौद्रेण विनिपातिता । वधार्थ वयमायातास्तस्य वै मुनिभि सह ॥ सिद्धगधर्वयक्षाश्च ततस्त्वा शरण गता । त्व गति परमा देव सर्वेषा न परतप ॥ वधाय देवशत्रुणा नृणा लोके मन कुरु । एवस्तुतस्तु देवेशो विष्णुस्त्रिदश पुङ्गव ॥ पितामहपुरोगास्तान्सर्वलोकनमस्कृत । अब्रवीत्त्रिदशान सर्वान समेतान् धर्मसहितान् ॥ भय त्यजत भद्र वो हितार्थ युधि रावण । सपुत्रपौत्र सामात्य समन्त्रि ज्ञातिबान्धव ॥ हत्वा क्रूर दुराधर्ष देवर्षीणा भयावह । दशवर्षसहस्राणि दशवर्षशतानि च ॥ वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमा । एव दत्वा वर देवो देवाना विष्णुरात्मवान् ॥ मानुष्ये चितयामास जन्मभूमिमथात्मन । तत पद्मपलाशाक्ष कृत्वात्मान चतुर्विध ॥ पितर रोचयामास तदा दशरथ नृप । ततो देवर्षिगधर्वा सरुद्रा· साप्सरोगणा ॥ स्तुतिभिर्दिव्यरूपाभिस्तुष्टुवुर्मधुसूदनम ॥

तमुद्धत रावणमुग्रतेजस । प्रवृद्धदर्प त्रिदशेश्वरद्विष ॥
विरावण साधुतपस्विकटक । तपस्विनामुद्धरत भयावह ॥
तमेव हत्वा सबल सबान्धव । विरावण रावणमुग्रपौरुष ॥
स्वर्लोकमागच्छ गतज्वरश्चिर । सुरेंद्रगुप्त गतदोषकल्मष ॥

1 P इत्युवाच &c    2 P जात &c

मानुषीं तनुमास्थाय समुद्धर्तुं त्वमर्हसि ।
त्वत्तोहि नान्यस्तं पापं शक्तो हन्तुं दिवौकसाम् ॥३४॥
[1]सदीर्घं तप्तवान् कालं तपोऽत्युग्रमरिन्दम ।
[2]येनायं परितुष्टोऽस्य बभूव प्रपितामहः ॥ ३५ ॥
ततोऽस्मै प्रददौ तुष्टो वरदो भगवान् पुरा ।
[3]अभयं सर्वभूतेभ्यो वर्जयित्वा तु मानुषान् ॥ ३६ ॥
ततो दत्तवरस्यैवं तस्य नान्यत्र मानुषात् ।
वधाद्भयमतश्चैनं गत्वा मानुषतां जहि ॥ ३७ ॥
स हि देवर्षिगन्धर्वांस्तपः सिद्धांश्च मानुषान् ।
वरदानबलोन्मत्तो बाधते राक्षसाधमः ॥ ३८ ॥
यज्ञहा ब्रह्महा चैव ब्रह्मद्विट् पुरुषादकः ।
अवध्यो वरदानेन रावणो लोककण्टकः ॥ ३९ ॥
तेनाक्रान्ता नृपतयः सरथाः सहकुञ्जराः ।
हता विप्रद्रुताश्चान्ये प्राद्रवन्त दिशो दश ॥ ४० ॥
भक्षिता ऋषयश्चैव तथैवाप्सरसां गणाः ।
दृप्तः सप्त सदा लोकान् क्रीडन्निव स बाधते ॥ ४१ ॥
तस्मात्तस्य वधो दृष्टो मनुष्येभ्यः परन्तप ।
अवज्ञाताः पुरा तेन वरदादेन मानवाः ॥ ४२ ॥

---

1 P दीर्घं सन्तप्तवान काल &c  2. G 35 तेनाय &c, but P has येनाय &c  3 P has the following Sloka on the margin, to be read between this, and the following Sloka —एवमस्माद्दूरं प्राप्तः स राक्षस पति प्रभो। तस्मात्तस्य वधो दृष्टो मानुषेभ्य सुरद्विष ॥

[1]तमुल्वणं रावणमुग्रतेजसं
प्रवृद्धदर्पं त्रिदशेश्वरद्विषम् ।
विरावणं सर्वतपस्विकण्टकं
मनुष्यतामेत्य निहन्तुमर्हसि ॥ ४३ ॥

आदिकाण्डे रावणवधोपायः ॥

---

## XV

[2]इत्युक्तो भगवान् देवैर्विष्णुर्लोक[3]पितामहः ।
पितरं रोचयामास ततो दशरथं नृपम् ॥ १ ॥
[4]स चाप्यपुत्रो नृपतिस्तस्मिन् काले महामनाः ।
[5]अयजद्वाजिमेधेन पुत्रेप्सुररिमर्दनः ॥ २ ॥

---

1 G 43 तमुद्धत &c, but P has तमुल्वण &c  2 For this Sl B XVI 18 ततो नारायणो विष्णुर्नियुक्त सुरसत्तमै । जानन्नपि सुरानेव श्लक्ष्ण वचनमब्रवीत ॥ उपाय को वधे तस्य राक्षसाधिपते सुरा । यमह त समास्थाय निहन्यामृषिकण्टकम ॥ एवमुक्ता सुरा सर्वे प्रत्यूचुर्विष्णुमव्ययम । मानुष रूपमास्थाय रावण जहि सयुगे ॥ स हि तेपे तपस्तीव्र दीर्घकालमरिंदम । येन तुष्टोऽभवद्ब्रह्मा लोककृल्लोकपूर्वज ॥ सन्तुष्ट प्रददौ तस्मै राक्षसाय वर प्रभु । नानाविधेभ्यो भूतेभ्यो भय नान्यत्र मानुषात् ॥ अवज्ञाता. पुरा तेन वरदाने हि मानवा । एव पितामहात्तस्माद्वरदानेन गर्वितः ॥ उत्सादयति लोकांस्त्रीन स्त्रियश्चा(a)प्युपकर्षति । तस्मात्तस्य वधो दृष्टो मानुषेभ्य परन्तप ॥ इत्येतद्वचन श्रुत्वा सुराणा विष्णुरात्मवान । पितर रोचयामास तदा दशरथ नृप ॥ (a) V and S have प्यपकर्षन्ति । It may be remarked here that most of these Slokas in B agree in sense, if not in wording, to some Slokas of the last part of the last Chapter of our text  3 G 1 नमस्कृत, but P has पितामह  4 For this Sl B 9 स चाप्यपुत्रो नृपतिस्तस्मिन्काले महाद्युति । अयजत्पुत्रियामिष्टि पुत्रेप्सुररिसूदन ।  5 G 2 अयजत्पुत्रियामिष्टि पुत्रेप्सुररिसूदन, but P agrees with our text  Between this and the next line B 10. स कृत्वा निश्चय विष्णुरामन्त्र्य च पितामह

[1]तत्रास्य यजमानस्य पावकादद्भुत[2]द्युति ।
[3]उद्भूतं सुमहद्भूतं प्रदीप्तानलसन्निभम् ॥ ३ ॥
[4]कृष्णाजिनधरं कृष्णं हरित्श्मश्रुजटाधरम् ।
पद्मरक्तान्तनयनं मेघदुन्दुभिनिस्वनम् ॥ ४ ॥
शुभलक्षणसम्पन्नं दिव्याभरणभूषितम् ।
शैलशृङ्गसमुत्सेधं [5]सिंहोदरकटीक्षणम् ॥ ५ ॥
[6]काञ्चनीं पिहितां दोर्भ्यां परिगृह्याद्भुतोपमाम् ।
दिव्यपायससम्पूर्णां पात्रीं पत्नीमिव प्रियाम् ॥ ६ ॥
[7]तमृष्यशृङ्गं प्रोवाच भूतमुत्पन्नमद्भुतम् ।
प्राजापत्यं विद्धि मां त्वं भूतमभ्यागतं द्विज ॥ ७ ॥
[8]इमां पात्रीं मया दत्तां प्राप्य राज्ञे प्रयच्छ[9]तु ।

---

अन्तर्धानगतो देवै पूज्यमानो महर्षिभि. ॥ 1 For this Sl B 11 ततो वै यजमानस्य पावकादतुलप्रभ । प्रादुर्भूत महद्भूत महावीर्यं महाबल ॥ 2 G 3 प्रभ, but P has द्युति 3 G प्रादुर्भूत महद्भूत but P agrees with our text 4 For this Sl B 12 कृष्ण रक्ताम्बरधर रक्तास्य दुदुभिस्वन । स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धज ॥ 5 B 13 दृप्तशार्दूलविक्रम ॥ Between this, and the next Sl of our text B (14) has the line दिवाकरसमाकार दीप्तानलशिखोपम, S further has—सिंहस्कंध महाबाहुमगदद्वयशोभित ॥ तारांविकृत कल्पेन हारेणोरसि राजित । ताराधिपतिकल्पैश्च दंतै परमशोभित ॥ ज्वलन्निव च तेजोभिर्दीपयन्निव च श्रिया । 6 For this Sl B 14 15 तप्तजाम्बूनदमयी राजतान्तपरिच्छदा ॥ दिव्यपायससपूर्णा पात्री पत्नीमिव प्रिया । प्रगृह्य विपुला दोर्भ्या स्वय मायामयीमिव ॥ 7 G 7 तदृष्य &c, but P has तमृष्य &c For this Sl B 16 समवेक्ष्याब्रवीद्वाक्यमिद दशरथ नृप । प्राजापत्य नर विद्धि मामिहाभ्यागत नृप ॥ 8 For this, and the following Sl B 17 तत पर तदा राजा प्रत्युवाच कृताञ्जलि । भगवन स्वागत तेऽस्तु किमह करवाणि ते ॥ 9 G 8 वै, P च. Between the two lines of this Sloka G (8-9) has the

तमुवाच ततो धीमान् ऋष्यशृङ्गो द्विजर्षभः ॥ ८ ॥
प्रयच्छ राज्ञे पात्री त्वं स्वयमेवाद्भुतामिति ।
ऋष्यशृङ्गवचः श्रुत्वा प्राजापत्यो [1]महीपतिः ॥ ९ ॥
[2]प्रोवाचेक्ष्वाकुदायादं परया स्वरसम्पदा ।
प्रीतस्तेऽहं महाराज सर्वामृत[3]रसोद्भवाम् ॥ १० ॥
प्रयच्छामि गृहाण त्वमिक्ष्वाकुकुलनन्दन ।
प्रतिगृह्य च तां राजा शिरसा प्रणतोऽब्रवीत् ॥ ११ ॥
भगवन् किमनेनाहं करवाणीति वै तदा ।
तमब्रवीत् ततो [4]भूतं प्राजापत्यं तदा नृपम् ॥ १२ ॥
स्विष्टस्य ते नरपते व्युष्टिरेषा मयोद्धृता ।
इदं [5]त्वं नरशार्दूल पायसं देवनिर्मितम् ॥ १३ ॥
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्द्धनम् ।
प्रयच्छ धर्मपत्नीभ्यः प्राश्नीतेति नराधिप ॥ १४ ॥
ताभ्यस्त्वं प्राप्स्यसे प्रीतिं यदर्थस्तेऽयमुद्यमः ।

---

lines :—इदं दशरथार्थाय निर्दिष्टं पायसं मया ॥ पुत्रीयं धर्मपत्नीनां प्राश्यमेतत् प्रयच्छ तु । these are, however, wanting in P  1 G 10 महाद्युतिः. 2 For this Sl and the following 9 lines B 18-20 अथो पुनरिदं वाक्यं प्राजापत्यो नरोऽब्रवीत् । राजन्नर्चयता देवानद्य प्राप्तमिदं त्वया ॥ इदं तु नृपशार्दूल पायसं देवनिर्मितं । प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्द्धनं ॥ भार्याणामनुरूपाणां मश्नीतेति प्रयच्छ वै । तासु त्वं लप्स्यसे पुत्रान् यदर्थं यजसे नृप ॥  3 G 11 रसोद्भवं, P has रसोद्भवां and रसोपमां as alternatives  4 G 13 भूयः प्राजापत्यस्तदा &c, but P agrees with our text  5 G 14 तु &c, but P has त्वं &c

[1]वाढमि[2]त्येव नृपतिस्तद्वचः [3]प्रतिगृह्य सः ॥ १५ ॥
अब्रवीत् तन्महद्भूतं श्रेष्ठमात्महितं वचः ।
ततस्तदद्भुतं भूतं दत्त्वा तद्दिव्यमुत्तमम् ॥ १६ ॥
राज्ञे दशरथायाथ तत्रैवान्तरधीयत ।
[4]ततो दशरथः प्राप्य तद्दिव्यं देवनिर्म्मितम् ॥ १७ ॥
[5]बभूव परमः प्रीतः प्राप्य वित्तमिवाधनः ।
[6]सोऽन्तःपुरं प्रविश्याथ कौशल्यामिदमब्रवीत् ॥ १८ ॥
पुत्रीयं पायसं देवि [7]प्राशनं हितमात्मनः ।
[8]इत्युक्त्वा प्रददौ तस्यै हविषोऽर्धं नराधिपः ॥ १९ ॥
स्वयमेव समं कृत्वा भागं [9]भागचतुष्टयम् ।
अर्धादर्धं ददौ चापि कैकेय्यै स नराधिपः ॥ २० ॥

---

1 For this, and the following 3 lines B 21 24 तथेति नृपति प्रीत शिरसा प्रतिगृह्य ता । पात्री देवान्नसम्पूर्णां देवदत्ता हिरण्मयी ॥ अभिवाद्य च तदभूतमद्भुत प्रियदर्शन । मुदा परमया युक्तश्चकाराभिप्रदक्षिण ॥ ततो दशरथ प्राप्य पायस देवनिर्म्मित । बभूव परमप्रीत प्राप्य वित्तमिवाधन ॥ ततस्तद दभुतप्रख्य भूत परमभास्वर । सवर्त्तयित्वा तत्कर्म तत्रैवान्तरधीयत ॥ 2 G 16 त्येव &c but P has त्येव &c 3 G प्रतिपूज्य स, but P has प्रतिगृह्य स 4 For this, and the following line, B 25 हर्षरश्मि भिरुद्योत तस्यान्तःपुरमाबभौ । शारदस्याभिरामस्य चन्द्रस्येव नभोऽशुभि ॥ 5 This line is wanting in P 6 For this, and the following line B 26 सोन्त पुर प्रविश्यैव कौसल्यामिदमब्रवीत। पायस प्रतिगृह्णीष्व पुत्रीय त्विदमात्मन । 7 G 20 प्राशेद &c 8 For this line, and the following 2 Slokas B 27 29 कौसल्यायै नरपति पायसार्ध ददौ तदा । अर्धादर्धं ददौ चापि सुमित्रायै नराधिप ॥ कैकेय्यै चावशिष्टार्ध ददौ पुत्रार्थकारणात । प्रददौ चावशिष्टार्ध पाय सस्यामृतोपम अनुचिन्त्य सुमित्रायै पुनरेव महामति । एव तासा ददौ राजा भार्याणा पायस पृथक ॥ 9 P XVI भागवतावर

चतुर्भागं द्विधा कृत्वा सुमित्रायै ददौ तदा ।
प्रददौ चावशिष्टं तत् पायसं देवनिर्मितम् ॥
अनुचिन्त्य सुमित्रायै पुनरेव नराधिपः ॥ २१ ॥

[1]ततो हविः प्राश्य तदुत्तमं स्त्रियः
स्वयं नृपेण प्रतिपादितं मुदा ।
हुताशनादित्यसमानतेजसः
क्रमेण गर्भानुपलेभिरे शुभान् ॥ २२ ॥

[2]ततः स राजा समुपेत्य ताः स्त्रियः
प्ररूढगर्भाः परितुष्टमानसः ।
बभूव [3]हृष्टः सुकृती यथा दिवं
समीक्ष्य योगप्रसृतेन चेतसा ॥ २३ ॥

आदिकाण्डे पायसोत्पत्तिः ॥

---

## XVI

[4]समाप्तेऽथ क्रतौ तस्मिन् वाजिमेधे [5]यथाक्रमम् ।
हविर्भागानवाप्येष्टान् जग्मुर्देवा [6]यथागतम् ॥ १ ॥

---

1 For this Sl B 30-31 (a) ताश्चैव पायस प्राप्य नरेंद्रस्योत्तमा स्त्रिय । समान मेनिरे सर्वा प्रहर्षोदितचेतस. ॥ ततस्तु ता प्राश्य तमुत्तमस्त्रियो । महीपतेरुत्तमपायस पृथक् ॥ हुताशनादित्यसमानतेजसो । ऽचिरेण गर्भान् प्रतिपेदिरे तदा ॥ (a) V and S have ताश्चैव &c 2 For this Sl B 32 ततस्तु राजा प्रतिवीक्ष्य ता स्त्रिय । प्ररूढगर्भा प्रतिलब्धमानस. ॥ बभूव हृष्टस्त्रिदिवे यथा हरि· । सुरेन्द्रसिद्धर्षिगणाभिपूजित· ॥ 3. P तुष्ट &c 4 For this Sl B XVIII 1 निर्वृत्ते तु क्रतौ तस्मिन हयमेधे महात्मन । प्रतिगृह्यामरा भागान प्रतिजग्मुर्यथागत ॥ 5 G 1 महाद्भुते, but P has यथाक्रमम् 6 G 1 यथाक्रमम, but P has यथागत

[1]ऋषयश्च महात्मानः प्रतिजग्मुः सुपूजिताः ।
राजानश्चैव ये तत्र कृतावासन् समागताः ॥ १ ॥
तदानींताननुज्ञातुं सर्वानेव प्रचक्रमे ।
प्रीतियुक्तेन मनसा राजा दशरथस्तदा ॥ ३ ॥
स्वं स्वं राष्ट्रं यथाकामं गच्छन्तु मनुजाधिपाः ।
प्रीतोऽहमस्मि भद्रं वः स्वस्ति प्राप्नुत माचिरम् ॥ ४ ॥
सर्वे भवन्तः पश्यन्तु कार्यं विषयरक्षणम् ।
भ्रष्टो हि विषयाद्राजा मृतकल्पः प्रदृश्यते ॥ ५ ॥
तस्मात् स्वविषये रक्षा कर्त्तव्या भूतिमिच्छता ।
यज्ञैर्नावाप्यते स्वर्गो रक्षणात् प्राप्यते यथा ॥ ६ ॥
यथा हि पुरुषः कुर्याच्छरीरे यत्नमुत्तमम् ।
वसनाद्यैरुपायैस्तु तथा राज्ये नराधिपः ॥ ७ ॥
अनागतविधानं च कर्त्तव्यं विषये नृपैः ।
आगमश्चापि कर्त्तव्यस्तथा दोषो न जायते ॥ ८ ॥
[2]एवं समादिशद्राज्ञो राजा श्रुत्वा च तं नृपाः ।
अन्योन्यं संविदं कृत्वा प्रयाताः सर्वतो दिशः ॥ ९ ॥
[3]समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।

1 This, and the following 6 Slokas are wanting in B 2 For this Sl B 3 यथार्हं पूजितास्तेन राज्ञा (a) च पृथिवीश्वराः । मुदिताः प्रययुर्देशान् प्रणम्य मुनिपुङ्गवं ॥ a V has वै &c 3 For this, and the following Sl B 2 समाप्तदीक्षानियमः पत्नीगणसमन्वितः । प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ and B 4-5 श्रीमता गच्छता तेषा स्वपुराणि पुरात्तत । बलानि राज्ञा शुभाणि प्रहृष्टानि चकाशिरे ॥ गतेषु पृथिवीशेषु राजा

सम्प्रहृष्टमना भूत्वा राजा दशरथस्तदा ॥ १० ॥
गतेषु पार्थिवेन्द्रेषु सभृत्यबलवाहनः ।
प्रविवेश पुरीं श्रीमान् पुरस्कृत्य द्विजोत्तमान् ॥ ११ ॥

आदिकाण्डे राजसप्रेषण नाम ॥

---

## XVII

[1]ततः कालस्य महत ऋष्यशृङ्गः सुपूजितः ।
प्रययौ शान्तया सार्द्धं ब्राह्मणैश्च कृतात्मभिः ॥ १ ॥
अन्वीयमानो राज्ञा वै सानुयात्रेण धीमता ।
वशिष्ठेन च धीरेण तथा पौरजनेन च ॥ २ ॥
यानेन महता शान्ता कम्बलावततेन च ।
गोभिः श्वेतैः [2]सुयुक्तेन प्रेष्यवर्गान्वितेन च ॥ ३ ॥
संगृह्य रत्नं सुबहु मणिरत्नमजाविकम् ।
विविधैश्चाप्यलङ्कारैर्भूषिता श्रीरिवापरा ॥ ४ ॥
मुदा परमयोपेता प्रययौ वरवर्णिनी ।
भर्त्तारमनु[3]संरक्ता पौलोमीव पुरन्दरम् ॥ ५ ॥
उषित्वा सुख[4]वासं सा सर्वकामैः सुपूजिता ।
लालिता ज्ञातिभिश्चापि तथा स्त्रीभिश्च सर्वशः॥ ६ ॥

---

दशरथः पुनः । प्रविवेश पुरी श्रीमान पुरस्कृत्य द्विजोत्तमान ॥ 1. For this, and the following 20 Slokas B XVIII. 6 शान्तया प्रययौ साधमृष्यशृगः सुपूजित । अनुगम्यमानो राज्ञा च सानुयात्रेण धीमता ॥ 2 G 3 प्रव &c, but P. has सु &c 3 P सयुक्ता &c 4 P सवास &c

आविता वनवासं च भर्त्रा [1]सह शुभानना ।
तमेव मन्यते साधु तथापि [2]सुखिनी सती ॥ ७ ॥
सान्तःपुरो नृपश्चापि सोऽन्वगच्छन्महा[3]व्रतम् ।
ऋषिपुत्रं महाभागं शान्ताञ्चैवात्मजां शुभाम् ॥ ८ ॥
ऋषिपुत्रस्य वचनात् ततो वासे प्रकल्पिते ।
[4]सुखवासाः स्म गच्छन्ती सर्वकामैः सुपूजिताः ॥ ९ ॥
ततोऽभिगम्य राजानमृषिपुत्रः प्रतापवान् ।
समनुज्ञापयामास निवर्त्तस्व नृपेति तम् ॥ १० ॥
ऋषिपुत्रवचः श्रुत्वा राजा सान्तःपुरस्तदा ।
उच्चैः प्ररुदितस्तत्र वचनं चेदमब्रवीत् ॥ ११ ॥
कैाशल्यां च सुमित्रां च कैकेयीं च [5]यशस्विनीं ।
सर्वाः सुदृष्टां कुरुत शान्तां दुर्लभदर्शनाम् ॥ १२ ॥
तत आलिङ्ग्य ताः सर्वाः शान्तां [6]बाष्पाविलेक्षणाम्
ऊचुः स्वस्त्ययनान्यस्य सभार्यस्य द्विजस्य ताः ॥ १३ ॥
वायुश्चाग्निश्च सोमश्च पृथिवी [7]सविता दिशः ।
वने रक्षन्तु सततं त्वां भर्तृव्रतचारिणीम् ॥ १४ ॥
श्वशुरः पूजनीयस्ते स हि मान्यो विशेषतः ।
पूजाभिरनुकूलाभिरग्निशुश्रूषणादिभिः ॥ १५ ॥

---

1. G 7 साध &c but P has साच &c 2 G 7 सुखिता &c 3 P व्रतः 4 P has सुखवासा॰ स्म and सुखमावास्य as alternatives 5 P has यशस्विनीं and तपस्विनी as alternatives 6 G 13 बाष्पाविलेक्षणाः, but P. has बाष्पाविलेक्षणाम 7 G 14. सरितो &c, but P has सविता &c

भर्त्ता च पूजनीयस्ते सर्वावस्थास्वनिन्दिते ।
प्रियवादेन रहसि भर्त्ता स्त्रीणां हि दैवतम् ॥ १६ ॥
प्रेषयिष्यति राजा [1]च कुशलार्थं [2]तवावले ।
ब्राह्मणान्नित्यशः पुत्रि [3]सोत्सुका भूः कदाच[4]न ॥ १७ ॥
एवं शान्तां समाश्वास्य मूर्ध्न्युपाघ्राय चासकृत् ।
न्यवर्त्तन्तः ततः सर्वाः स्त्रियो राज्ञा प्रचोदिताः॥१८॥
प्रदक्षिणं द्विजश्रेष्ठं कृत्वा राजा सवीर्यवान् ।
व्यादिशत् सैनिकान् कांश्चिदृष्यशृङ्गाय धीमते ॥१९॥
[5]अभिवाद्य स राजानमुवाच द्विजसत्तमः ।
स्वस्ति तेऽस्तु महाराज धर्मेणाराधय प्रजाः ॥ २० ॥
[6]एवमुक्त्वा स राजानं ययावृषिसुतस्तदा ।
अदृश्यस्तु यदा विप्रस्तदा राजा न्यवर्तत ॥ २१ ॥
[7]प्रविष्ट[8]स्तु पुरीं राजा नागरैश्चाभिनन्दितः ।
न्यवसत्तत्र मुदितः पुत्रजन्मप्रतीक्षकः ॥ २२ ॥
[9]ऋष्यशृङ्गोऽपि तेजस्वी प्रययौ क्रमशस्तदा ।

1 G 17 तु &c but P has च &c 2 G तवालये, but P has तवावले 3 G सोत्सुका &c but P has सोत्सुका &c 4 P has कदाचन and कदापि मा as alternatives 5 Between this and the next Sloka P reads the Sloka व्यवहारेषु ते धर्मं कर्त्तव्यो हृदि निश्चयः । धर्माश्रमेषु सर्वेषु रणेषु पुरुषर्षभ ॥ 6 Between the 2 lines of this Sloka P reads the line सोऽपि तमनुवव्राज स्थितो निश्चलचक्षुषा । 7 For this Sl. B. XVIII 7 एव विसृज्य तान् सर्वान राजा सपूर्णमानस । उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ 8 G 22 श्च &c 9 This, and the following Slokas, to the end of this Chapter, are wanting in B.

लोमपादस्य नगरीं चम्पां चम्पकमालिनीम् ॥ २३ ॥
श्रुत्वैव लोमपादोऽपि तमायान्तमृषिं तदा ।
सब्राह्मणः सहामात्यः प्रत्युद्गम्य तमब्रवीत् ॥ २४ ॥
स्वागतं ते द्विजश्रेष्ठ दिष्ट्यासि कुशली मुने ।
इहागतो [1]महाबाहो सभार्यः सपरिच्छदः ॥ २५ ॥
पिता ते कुशली ब्रह्मन् प्राहिणोन्नित्य[2]शश्च सः ।
कुशलार्थं तव विभो सभार्यस्य विशेषतः ॥ २६ ॥
स्वलङ्कृतं च नगरं कारयामास बुद्धिमान् ।
पूजार्थमृष्यशृङ्गस्य राजा हृष्टेन चेतसा ॥ २७ ॥
ऋष्यशृङ्गः प्रहृष्टस्तु सह राज्ञा पुरोत्तमम् ।
पुरोहितेन सत्कृत्य पूजितः प्रविवेश ह ॥ २८ ॥
एवं स न्यवसत् तत्र द्विजपुत्रः प्रतापवान् ।
राज्ञा सान्तःपुरेणैव पूज्यमानो यथाक्रमम् ॥ २९ ॥

आदिकाण्डे ऋष्यशृङ्गप्रतिगमनम् ॥

---

XVIII

ऋष्यशृङ्गे तु संप्राप्ते राजा ब्राह्मणमब्रवीत् ।
ऋषेर्गच्छ समीपं त्वं निवेदय च सुव्रतम् ॥ १ ॥
आगतं परमोदारमृष्यशृङ्गं दुरासदम् ।
ऋषये सुव्रताय त्वं काश्यपायात्मसंभवम् ॥ २ ॥

---

1 G 25 महाभाग &c but P has महाबाहो &c 2 P ...मेव सः

त्वविवक्षा बोध्या । रुजतीति रोगः । विशतीति वेशः ॥ स्पृश उपतापे इति वक्तव्यम् ॥ * ॥ उपतापो रोगः । स्पृशतीति स्पर्शो व्याधिविशेष । अन्यत्र पचाद्यच् । स्पर्शो देवदत्तः । स्वरे विशेषः ।

## सृ स्थिरे । ३ । ३ । १७ ॥

सृ इति लुप्तविभक्तिकम् । सर्तेः स्थिरे कर्तरि घञ् स्यात् ॥ स्थिर इति कालान्तरस्थायी पदार्थ उच्यते । स चिरं तिष्ठन् कालान्तरं सरतीति धात्वर्थस्य कर्ता युज्यते । सरति कालान्तरमिति सारः । चन्दनसारः । खदिरसारः । स्थिरे किम् । सर्ता । सरकः ॥ व्याधिमत्स्यबलेष्विति वक्तव्यम् ॥ * ॥ अस्थिरार्थं वचनम् । अतीसारो व्याधि. । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थ. । विविधं सरतीति विसारो मत्स्यः । एकदेशस्थत्वाभावादस्थिरत्वम् । सारयति चेष्टयतीति सारो बलम् । बलवान्हि चेष्टते । अथ कथं सारं सारङ्गलोचनेति । न्याय्यत्वेन बलत्वोपचारात् । अर्द्धर्चादित्वात् क्लीबत्वम् ।

## भावे । ३ । ३ । १८ ॥

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् ॥ पाकः । पाकौ । पाकाः ॥

## अकर्तरि च कारके संज्ञायाम् । ३ । ३ । १९ ॥

कर्तृभिन्ने कारके घञ् स्यात् ॥ रज्यतेऽनेनेति राग । रज्जत्यस्मिन् रङ्ग । प्रास्यत इति प्रासः । अकर्तरि किम् । मिषत्यसौ मेषः । अच् । संज्ञायां किम् । कृत कट । संज्ञायामिति प्रायिकम् । को भवता लाभो लब्धः । को भवता दायो दत्तः । इत उत्तरं भावे अकर्तरि कारके इति कृत्यल्युटो बहुलमिति यावद्द्वयमप्यनुवर्तते ॥

## परिमाणाख्यायां सर्वेभ्यः । ३ । ३ । २० ॥

परिमाणं परिच्छित्तिः । तस्या आख्या उक्तिस्तत्रेत्यर्थः । परिच्छित्तिश्च प्रत्ययार्थस्य । सा चैकादिशब्दैरुदाहरणेषु द्रष्टव्या । घञ् स्यात् ॥ अजपोर्बाधनार्थमिदम् । एकस्तण्डुलनिचायः । निचीयते राशीक्रियत इति निचाय । एरच् प्राप्तः । एकस्तण्डुलनिश्चायः । ग्रहवृदृइत्यप् प्राप्तः । द्वौ शूर्पनिष्पावौ । निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पाव. । शूर्पेणेति करणतृतीयान्तस्य कर्तृकरणे कृतेति समास । यद्यप्यत्र निरभ्यो. पूल्वोरिति सिध्यति तथाप्ययं सर्वापवादत्वान्न्याय्यः । एकः कारः । द्वौ कारौ । त्रय काराः । कॄ विक्षेपे । कर्मणि घञ् । विक्षिप्तो धान्यादिराशि. कारः । ऋदोरप् प्राप्त. । इह प्रकृत्याश्रय एवापवादो बाध्यते न त्वर्थाश्रय । सर्वेभ्य इति पञ्चमीनिर्देशात् । तेनेह न । एका तिलोच्छ्रिति. । कर्मणि भावे वा क्तिन् । ऊर्ध्वीकृतो राशीकृत इत्यर्थः । सर्वेभ्य इत्यनुक्तौ तु स्त्रियां क्तिनपि बाध्येत । दारजारौ कर्तरि णिलुक् च ॥ * ॥ दारयन्ति दाराः । जरयन्ति जाराः ॥

## इङश्च । ३ । ३ । २१ ॥

घञ् स्यात् ॥ अचोऽपवादः । उपेत्यस्मादधीयते उपाध्याय ॥ अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ॥ * ॥ उपाध्याया । उपाध्यायी । घञनुक्रमणमजपोर्विषये अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानमितिवचनात् । पूर्वसूत्रे सर्वेभ्य इत्यनेन तत्प्रत्याख्याने तु सजातीयत्वात्प्रकृत्याश्रयस्यैवाचो घञा बाधकेन भाव्य न त्वर्थाश्रयस्यापि क्तिन इति वचनमिदम् ॥ शॄ वायुवर्णनिवृतेषु ॥ * ॥ शॄ इत्यविभक्तिको निर्देशः । ऋदोरबिति प्राप्ते वचनम् । शारो वायुः ।

करणे घञ्। शारो वर्णः। चित्रीकरणमिह धात्वर्थः। निव्रियते आव्रियतेऽनेनेति निवृतमावरणम्। बाहुलकात्करणे क्तः। गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः। अकृतप्रावरण इत्यर्थः। प्रदक्षिणप्रसव्यगामिना शाराणामित्यत्र त्वत एव वार्तिकप्रयोगादक्षेष्वपि घञित्याहुः॥

**उपसर्गे रुवः। ३। ३। २२॥**

घञ्॥ सराव। उपसर्गे किम्। रवः॥

**समि युद्रुदुवः। ३। ३। २३॥**

सम्पूयते मिश्रीक्रियते गुडादिभिरिति संपावः। पिष्टविकारोऽपूपविशेषः। सन्द्राव। सन्दावः। समि किम्। यवः। द्रवः॥

**श्रिणीभुवोऽनुपसर्गे। ३। ३। २४॥**

श्रायः। नायः। भावः। अनुपसर्गे किम्। प्रश्रय। प्रणयः। प्रभवः। कथ प्रभावो राज्ञ इति। प्रकृष्टो भाव इति प्रादिसमासः। कथं राज्ञो नय इति। बाहुलकात्॥

**वौ क्षुश्रुवः। ३। ३। २५॥**

विक्षाव। विश्राव। वौ किम्। क्षव। श्रवः॥

**अवोदोर्नियः। ३। ३। २६॥**

अवनायः। अधोनयनम्। उन्नायः। ऊर्ध्वनयनम्। कथमुन्नय उत्प्रेक्षेति। बाहुलकात्॥

**प्रे द्रुस्तुस्रुवः। ३। ३। २७॥**

प्रद्रावः। प्रस्तावः। प्रस्राव। प्रे किम्। द्रवः। स्तवः। स्रवः॥

## निरभ्योः पूल्वोः । ३ । ३ । २८ ॥

निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः ॥ अभिलावः । निरभ्योः किम् । यव । लवः ॥

## उन्योर्ग्रः । ३ । ३ । २९ ॥

उद्गारः । निगारः । उन्योः किम् । गरः ॥

## कॄ धान्ये । ३ । ३ । ३० ॥

कॄइत्यस्माद्धान्यविषयकविक्षेपार्थप्रतिपादकादुन्योर्घञ् स्यात् ॥ उत्कारो निकारो धान्यस्य । विक्षेप इत्यर्थः । धान्ये किम् । भिक्षोत्करः ॥

## यज्ञे समि स्तुवः । ३ । ३ । ३१ ॥

यज्ञविषये प्रयोगे सपूर्वात्स्तौतेर्घञ् अधिकरणे ॥ ल्युट् प्राप्तः । समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगाः स देशः संस्तावः । यज्ञे किम् । संस्तवः परिचयः ।

## प्रे स्त्रोऽयज्ञे । ३ । ३ । ३२ ॥

अयज्ञे इति च्छेदः । यज्ञे इति प्रकृतत्वात् । प्रस्तारः । अयज्ञे किम् । बर्हिषः प्रस्तरो मुष्टिविशेषः ॥

## प्रथने वावशब्दे । ३ । ३ । ३३ ॥

विपूर्वात्स्तृणातेर्घञ् अशब्दविषये प्रथने । पटस्य विस्तारः । तिर्यगायतिरित्यर्थः । प्रथने किम् । तृणविस्तरः । अशब्दे किम् । ग्रन्थविस्तरः ॥

## छन्दोनाम्नि च । ३ । ३ । ३४ ॥

घञ् स्यात् ॥ स्त्र इत्यनुवर्तते । शब्दविषयत्वाद्वचनमप्राप्ते वचनम् । विष्टारपङ्क्तिश्छन्दः । विष्टारबृहतीछन्दः । प्रस्तारपङ्क्ति-

श्छन्दः । विस्तीर्यन्ते ऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः । विष्टारपङ्क्तिशब्दश्छन्दसो नाम । न तु घञन्तमेव । तत्तु अवयवत्वेन वर्तते । छन्दोनाम्नीत्यधिकरणे सप्तम्येषा । छन्दश्चेह वृत्तम् । यस्य गायत्र्यादयो विशेषा न तु वेदः । नामग्रहणात् ॥

## उदि ग्रहः । ३ । ३ । ३५ ॥

घञ् स्यात् ॥ ग्रहवृदृनिश्चिगमश्चेति प्राप्तस्यापोऽपवादः । उद्ग्राहः ॥

## समि मुष्टौ । ३ । ३ । ३६ ॥

मुष्टिविषयकार्थवृत्तेर्ग्रह इत्यर्थः । मुष्टिरङ्गुलिसन्निवेशविशेषः । अहो मल्लस्य सङ्ग्राहः । दृढमुष्टिताख्यायते । मुष्टौ किम् । द्रव्यस्य सङ्ग्रहः ॥ उद्ग्राभनिग्राभौ च छन्दसि स्रुगुद्यमननिपातनयोः ॥ * ॥ उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ॥

## परिन्योर्नीणोर्द्यूताभ्रेषयोः । ३ । ३ । ३७ ॥

परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूते ऽभ्रेषे च विषये ॥ पदार्थानामनपचारो यथाप्राप्तस्य च करणमभ्रेषः । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताभ्रेषयोः किम् । परिणयो विवाहः । न्ययो नाशः ॥

## परावनुपात्यय इणः । ३ । ३ । ३८ ॥

क्रमप्राप्तस्यानतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् । कालस्य विपर्ययः । अतिपात इत्यर्थः ॥

## व्युपयोः शेतेः पर्याये । ३ । ३ । ३९ ॥

तव विशायः । तव राजोपशायः । तव राजसमीपशयनस्य पर्याय इत्यर्थः । पर्याये किम् । विशयः । सशयः । उपशयः । समीपशयनम् ॥

## हस्तादाने चेरस्तेये । ३ । ३ । ४० ॥

हस्तादाने इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम् । वृक्षाग्रस्थाना फलानां यष्ट्या प्रचयं करोति । अस्तेये किम् । पुष्पप्रचयश्चौर्येण ॥

## निवासचितिशरीरोपसमाधानेष्वादेश्च कः । ३ । ३ । ४१ ॥

निवसत्यस्मिन्निति निवासः । एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशीकरण तच्च धात्वर्थ । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । निवासे । काशीनिकायः । निवासदेश इत्यर्थः । चितौ । आकायमग्निं चिन्वीत । आचीयतेऽस्मिन्नग्न्यादि । अधिकरणे घञ् । अग्निं स्थलविशेषं चिन्वीत चयनेन निष्पादयेदिति अत्यर्थः । शरीरे । चीयतेऽस्मिन्नस्थ्यादिकमिति काय । समूहे । गोमयनिकायः । भावे घञ् ॥ एषु किम् । चयः । काष्ठ महान् काष्ठनिचय. । बहुत्वमत्र विवक्षित नोपसमाधानम् । च क इति वक्तव्ये आदेरित्युक्तिर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनःपुना राशीकरणमित्यर्थ ॥

## सङ्घे चानौत्तराधर्ये । ३ । ३ । ४२ ॥

चेर्घञ् आदेश्च कः ॥ भिक्षुनिकायः । प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये किम् । सूकरनिचयः । स्तनपानाय यदोत्तराधरभावेन सूकराः शेरते तदेदं प्रत्युदाहरणम् । यदा तु भिक्षुव-

त्पृथगेवावतिष्ठन्ते तदेहापि भवत्येव घञ् । सद्ब्रे किम् । ज्ञानकर्मसमुच्चयः ॥

## कर्मव्यतिहारे णच् स्त्रियाम् । ३ । ३ । ४३ ॥

अत्र वर्तमानाद्धातोः स्त्रीलिङ्गे भावे णच् ॥ कर्तृवर्जिते कारके तु न भवत्यनभिधानादित्याहु । चकारो विशेषणार्थो णचः स्त्रियामञिति । न कर्मव्यतिहारे इति निषेधादैज् न । व्यावक्रोशी । व्यावहासी । स्त्रिया किम् । व्यतिपाकः । स्त्र्यधिकारत्वाभावाद्वासरूपेण व्यावक्रुष्टिरपि । येननाप्राप्तिन्यायेनास्य क्तिन्मात्रबाधकत्वेऽपि क्तिनो बाधकविषयेऽपि क्वचिदिष्यते । व्यावचोरी । व्यावचर्ची । ण्यासश्रन्थो युच् प्राप्त । व्यात्युक्षी । गुरोश्च हल इत्यः प्राप्तः । इह तु न भवति किन्त्वकार एव । व्यतीक्षा । व्यतीहा । तदेतद्वैचित्र्य न्यायतो दुर्लभमपि कृत्यल्युटो बहुलमिति बाहुलकेन समर्थनीयम् ॥

## अभिविधौ भाव इनुण् । ३ । ३ । ४४ ॥

अणिनुण् । आदिवृद्धिः । इनण्यनपत्ये । सारावीण वर्तते । समन्ताच्छब्द इत्यर्थः । स्वभावतश्चेदमणिनुणन्त नपुंसकम् । अभिविधौ किम् । सरावः । भावे इत्यनुवर्तमाने शब्दशक्तिस्वाभाव्याद्भावे एव इनुणलाभात्कारके तदप्रवृत्तौ च पुनर्भावग्रहणं मध्येऽपवादन्यायेनास्य घञ्मात्रबाधकत्वे प्राप्तेऽपि बाध्यसामान्यचिन्तयोभयोरपि बाधे सिद्धे वासरूपेण पक्षप्राप्तयोरपि तयोर्बाधनार्थम् । ल्युटा तु समावेश इष्यते । बाहुलकात् । संरवणम् ॥

## आक्रोशे ऽवन्योर्ग्रहः । ३ । ३ । ४५ ॥

अव नि एतयोर्ग्रहेर्घञ् स्यात् शापे ॥ अवग्राहस्ते भूयात् ।

अभिभव इत्यर्थः । निग्राहस्ते भूयात् । बाध इत्यर्थः । आक्रोशे किम् । अवग्रहः पदस्य । निग्रहश्चोरस्य ॥

**प्रे लिप्सायाम् । ३ । ३ । ४६ ॥**

पात्रप्रग्राहेण चरति भिक्षुः । लिप्सायां किम् । प्रग्रहो देवदत्तस्य । प्रकृष्टो ऽभिनिवेश इत्यर्थः ॥

**परौ यज्ञे । ३ । ३ । ४७ ॥**

यज्ञविषय चेत्प्रत्ययान्तस्याभिधेयमित्यर्थः । उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् । यज्ञे किम् । परिग्रहो देवदत्तस्य ॥

**नौ वृ धान्ये । ३ । ३ । ४८ ॥**

वृ इति लुप्तपञ्चमीकम् । नीवाराः । धान्ये किम् । निवरा कन्या । क्तिन्विषयेऽपि ग्रहवृदृ इत्यादिना बाहुलकात्कर्मण्यप् । प्रवरा सेतिवत् ॥

**उदि श्रयतियौतिपूद्रुवः । ३ । ३ । ४९ ॥**

उच्छ्रायः । उद्याव । उत्पावः । उद्द्रावः । कथं पतनान्ताः समुच्छ्रया इति । बाहुलकात् ॥

**विभाषा ऽङि रुप्लुवोः । ३ । ३ । ५० ॥**

आरावः । आरवः । आप्लावः । आप्लवः ॥

**अवे ग्रहो वर्षप्रतिबन्धे । ३ । ३ । ५१ ॥**

विभाषेति वर्तते । अवग्राहाः । अवग्रहाः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य ॥

**प्रे वणिजाम् । ३ । ३ । ५२ ॥**

प्रे ग्रहेर्घञ् वा वणिजां सम्बन्धी चेत्प्रत्ययार्थः । तुलासूत्र-मिति यावत् । तुलाप्रग्राहेण चरति । तुलाप्रग्रहेण ॥

**रश्मौ च । ३ । ३ । ५३ ॥**

प्रग्राहः । रथादिषु युक्तानामश्वादीनां संयमनार्था रज्जुः ॥

**वृणोतेराच्छादने । ३ । ३ । ५४ ॥**

विभाषा प्रे इत्येव । प्रवारः । प्रवरः । आच्छादने किम् प्रवरो गौः ॥

**परौ भुवोऽवज्ञाने । ३ । ३ । ५५ ॥**

विभाषेत्येव । परिभावः । परिभवः । अवज्ञाने किम् । सर्वतो भवनं परिभवः ॥

**एरच् । ३ । ३ । ५६ ॥**

घञोऽपवादः । चकारस्याग्घञित्यत्र विशेषणार्थः । चयः । जयः । भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् ॥ * ॥ परत्वाद्धि क्तल्युटौ प्राप्तौ । तथा च पूर्वविप्रतिषेधोऽयं फलितः । एवञ्च वासरूपन्यायो नास्त्यनपवादत्वात् । भयम् । वर्षम् । वृषभो वर्षणादिति भाष्यकारप्रयोगाद्वर्षेर्बाहुलकात् ल्युडपीति कैयटादयः । कल्प्यादिभ्यो नेति वक्तव्यम् ॥ * ॥ कल्पः । अर्थः । मन्त्रः । ण्यन्तेभ्योऽचि प्रतिषिद्धे घञ् । एरजण्यन्तानामिति तु वचनमनार्षमिति कैयटः । जवसवौ छन्दसि वाच्यौ ॥ * ॥ ऊर्वोरस्तु मे जवः । देवस्य सवितुः सवे । अपि प्राप्ते अज्वचनम् । स्वरे विशेषः ॥

**ऋदोरप् । ३ । ३ । ५७ ॥**

घञोऽपवाद: । कर: । गर: । यव: । स्तव: । लव: । पव: । दकारो मुखसुखार्थ: ॥

**ग्रहवृद्दनिश्चिगमश्च । ३ । ३ । ५८ ॥**

अप् स्यात् ॥ घञचोरपवाद । ग्रह: । वर: । दर: । निश्चय: । कृदुत्तरपदप्रकृतिस्वरेणेदं मध्योदात्तम् । थाथादिस्वरस्तु नाच । अचैव सिद्धे ऽब्विधानसामर्थ्यात् । अस्तेये चास्मादपोऽनिष्टत्वेन हस्तादाने चेरिति घञ्बाधनार्थं न तत् । गम: । वशिरण्योरुपसङ्ख्यानम् ॥ * ॥ घञ् प्राप्त: । वशन वश: । रणन्ति शब्दायन्तेऽस्मिन् रण: सग्राम: । घञर्थे कविधान स्थास्नापाव्यधिहनियुध्यर्थम् ॥ * ॥ भाव कर्तृवर्जितञ्च कारक घञर्थ: । प्रतिष्ठन्तेऽस्मिन्धान्यानि प्रस्थ: । प्रस्नान्त्यस्मिन्प्रस्न: । प्रपिबन्त्यत्यस्या प्रपा । विघ्नन्त्यस्मिन्विघ्न: । आविध्यन्त्येननाविधम् । आयुध्यन्तेऽनेनायुधम् ॥

**उपसर्गेऽद: । ३ । ३ । ५९ ॥**

अप् स्यात् ॥ प्रघस: । व्यद्यते इति विघस: । वैश्वदेवावशिष्टमन्नम् । उपसर्गे किम् । घास । शष्पं बालतृण घास इत्यमर. ॥

**नौ ण च । ३ । ३ । ६० ॥**

नौ उपपदे अदेर्ण स्यादप् च ॥ न्याद: । निघस: ॥

**व्यधजपोरनुपसर्गे । ३ । ३ । ६१ ॥**

अप् स्यात् । व्यध. । जप: । उपसर्गे तु आव्याध: । उपजापो मन्त्रभेद: ॥

**स्वनहसोर्वा । ३ । ३ । ६२ ॥**

अप् पक्षे घञ् ॥ स्वन । स्वानः । हसः । हासः । अनुपसर्गे इत्येव । प्रस्वानः । प्रहास ॥

**यमः समुपनिविषु च । ३ । ३ । ६३ ॥**

एष्वनुपसर्गे च यमेरप् वा । संयमः । संयाम । उपयमः । उपयामः । नियमः । नियाम । वियमः । वियामः । यमः । याम ॥

**नौ गदनदपठस्वनः । ३ । ३ । ६४ ॥**

अप् वा स्यात् ॥ निगदः । निगादः । निनद । निनाद । निपठः । निपाठ । निस्वनः । निस्वानः ॥

**क्वणो वीणायाञ्च । ३ । ३ । ६५ ॥**

नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् ॥ वीणाग्रहणं प्राद्यर्थम् । निक्वणः । निक्वाण । क्वणः । क्वाणः । वीणायां तु प्रक्वणः । प्रक्वाण ॥

**नित्यं पणः परिमाणे । ३ । ३ । ६६ ॥**

अप् स्यात् ॥ मूलकपणः । शाकपणः । व्यवहारार्थम् मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् । पाणः ॥

**मदोऽनुपसर्गे । ३ । ३ । ६७ ॥**

धनमदः । उपसर्गे तु उन्मादः ॥

**प्रमदसंमदौ हर्षे । ३ । ३ । ६८ ॥**

हर्षे किम् । प्रमादः । सम्मादः ॥

**समुदोरजः पशुषु । ३ । ३ । ६९ ॥**

सम्पूर्वोऽजिः समुदाये उत्पूर्वश्च प्रेरणे । तस्मात्पशुविषयकादप् स्यात् । अघञपोरित्युक्तेर्वीभावो न । समजः पशूनां सङ्घः । उदजः पशूनां प्रेरणम् । पशुषु किम् । समाजो ब्राम्हणानाम् । उदाजः क्षत्रियाणाम् ॥

## अक्षेषु ग्लहः । ३ । ३ । ७० ॥

अक्षशब्देन देवन लक्ष्यते । तत्र यत्पणरूपेण ग्राह्यं तत्र ग्लह इति निपात्यते ॥ अक्षस्य ग्लहः । व्यात्युक्षीमभिसरणग्लहामदीव्यन् । अक्षेषु किम् । पादस्य ग्रह ॥

## प्रजने सर्तेः । ३ । ३ । ७१ ॥

प्रजनः प्रथमगर्भग्रहणमिति वृत्ति. । प्रथमं द्वितीयादिकं । वेत्यत्र नाग्रह इत्येके । गवामुपसरः । कथमवसरः प्रसर इति । अधिकरणे पुंसि सञ्ज्ञायामिति घः ॥

## ह्वः सम्प्रसारणञ्च न्यभ्युपविषु । ३ । ३ । ७२ ॥

निहवः । अभिहवः । उपहवः । एषु किम् । प्रह्वायः ॥

## आङि युद्धे । ३ । ३ । ७३ ॥

आह्वयते ऽस्मिन्नित्याहवः । युद्धे किम् । आह्वायः ॥

## निपानमाहावः । ३ । ३ । ७४ ॥

आङ्पूर्वस्य ह्वयते सम्प्रसारणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः । आहावस्तु निपानं स्यादुपकूपजलाशये ॥

## भावे ऽनुपसर्गस्य । ३ । ३ । ७५ ॥

अनुपसर्गस्य ह्वयते सम्प्रसारणमप् च स्याद्भावे ॥ हवः । भावग्रहणमकर्तरि च कारके इत्यस्य निरासार्थम् ॥

**हनश्च वधः । ३ । ३ । ७६ ॥**

अनुपसर्गाद्धन्तेर्भावे अप् स्याद्वधादेशश्च ॥ स चान्तोदात्तो निपात्यते । तेनोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वम् । वधेन दस्युम् । चाद् घञ् । घातः ॥

**मूर्तौ घनः । ३ । ३ । ७७ ॥**

मूर्तिः काठिन्यं तस्मिन्नभिधेये हन्तेरप् स्याद् घनश्चादेशः ॥ अभ्रघनः । कथं सैन्धवघनमानयेति । धर्मशब्देन धर्मी लक्ष्यते ॥

**अन्तर्घनो देशे । ३ । ३ । ७८ ॥**

वाहीकग्रामविशेषस्य सञ्ज्ञेयम् । अन्तर्घण इति पाठान्तरम् ।

**अगारैकदेशे प्रघणः प्रघाणश्च । ३ । ३ । ७९ ॥**

द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्चेत्याहुः । तत्र बाह्ये प्रकोष्ठे निपातनमिदम् । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यत इति प्रघणः । कर्मण्यप् पक्षे वृद्धिः । अमरस्तु प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके इत्याह ॥

**उद्घनोऽत्याधानम् । ३ । ३ । ८० ॥**

अत्याधानमुपरिस्थापनम् । यस्मिन्काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः । अधिकरणेऽप् ॥

**अपघनोऽङ्गम् । ३ । ३ । ८१ ॥**

अङ्गं शरीरावयवः । स चेह न सर्वः किन्तु पाणिः पादश्चेत्याहुः । करणेऽप् । अपघातोऽन्यः ॥

**करणेऽयोविद्रुषु । ३ । ३ । ८२ ॥**

एषु हन्तेः करणेऽप् स्याद् घनादेशश्च ॥ अयो हन्यते

ऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । पूर्वपदात्संज्ञायामिति णत्वम् । सङ्घेषा कुठारस्य । द्रुर्वृक्षः ॥

**स्तम्बे क च । ३ । ३ । ८३ ॥**

स्तम्बे उपपदे हन्तेः करणे क स्यादप् च । अप्यक्षे घनादेशश्च । स्तम्बघ्नः । स्तम्बघन । करणे इत्येव । स्तम्बघातः ॥

**परौ घः । ३ । ३ । ८४ ॥**

परौ हन्तेरप् स्यात्करणे घशब्दश्चादेश ॥ परिहन्यते ऽनेनेति परिघ. । पलिघः ॥

**उपघ्न आश्रये । ३ । ३ । ८५ ॥**

उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च ॥ आश्रयशब्देन सामीप्य लक्ष्यते । पर्वतेनोपहन्यते सामीप्येन गम्यत इति पर्वतोपघ्नः ॥

**सङ्घोद्घौ गणप्रशंसयोः । ३ । ३ । ८६ ॥**

सहननं सङ्घः ॥ भावेऽप् । उद्धन्यते उत्कृष्टो ज्ञायत इत्युद्घः । कर्मण्यप् । गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने ॥

**निघो निमितम् । ३ । ३ । ८७ ॥**

समन्तान्मितं निमितम् । निर्विशेष हन्यन्ते ज्ञायन्ते इति निघा वृक्षाः । समारोहपरिणाहा इत्यर्थः ।

**ड्वितः क्त्रिः । ३ । ३ । ८८ ॥**

अयं भावे एव स्वभावात् । क्त्रेर्मप्नित्यमित्येकयोगत्वे नित्यग्रहणान्निवृत्ते इत्यधिकारान्निवृत्तार्थस्य विवक्षायां वाक्यवारणेऽपि तदविवक्षायामपि वाक्यवारणार्थकनित्यमितियोगविभागसामर्थ्यादर्थविशेषानादरेणैव क्त्रिमब्विषयः । अत एव क्त्यून्तेन न विग्रहः ।

डुपचष् पाके । पाकेन निर्वृत्तम्पक्त्रिमम् । डुवप् । उप्त्रिमम् । डुकृञ् । कृत्रिमम् ॥

## ट्वितोऽथुच् । ३ । ३ । ८९ ॥

अयमपि स्वभावाद्भावे एव ॥ टुवेपृ । वेपथुः । श्वयथुः ॥

## यजयाचयतविच्छप्रच्छरक्षो नङ् । ३ । ३ । ९० ॥

भावे ऽकर्तरि च कारके इति वर्तते । यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । प्रश्ने चासन्नेति ज्ञापकान्न सम्प्रसारणम् । ङित्वन्तु विश्न इत्यत्र गुणनिषेधार्थम् । रक्ष्णः ॥

## स्वपो नन् । ३ । ३ । ९१ ॥

स्वप्नः ॥

## उपसर्गे घोः किः । ३ । ३ । ९२ ॥

प्रधिः । अन्तर्द्धिः । उपाधीयतेऽनेनेत्युपाधिः ॥

## कर्मण्यधिकरणे च । ३ । ३ । ९३ ॥

कर्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे ॥ अधिकरणग्रहणमर्थान्तरनिरासार्थम् । चकारः प्रत्ययानुकर्षणार्थः । जलानि धीयन्तेऽस्मिन् जलधिः ॥

## स्त्रियां क्तिन् । ३ । ३ । ९४ ॥

स्त्रीलिङ्गे भावादौ क्तिन् स्यात् ॥ घञोऽपवादः । अजपौ तु परत्वाद्बाधते । कृतिः । भक्तिः । चूर्तिः । प्रफुल्तिः । तितुत्रेति नेट् । ति चेत्युत्वम् । चितिः । स्तुतिः । ऋल्वादिभ्यः क्तिनो निष्ठावद्भावान्नत्वम् । कीर्णिः । गीर्णिः । लूनिः । धूनिः । पूनिः । स्त्रियामित्यधिकारः कृत्यल्युट इति यावत् ॥ श्रुयजीषिस्तुभ्यः करणे ॥ * ॥ श्रूयते ऽनया श्रुतिः । यजेरिषेश्च इष्टिः । स्तुतिः ।

परत्वात् ल्युट् प्राप्तः । ग्लाज्याहाभ्यो निः ॥ * ॥ ग्लानिः । ज्यानिः । हानिः ॥ सम्पदादिभ्यः क्विप् ॥ * ॥ सम्पत् । विपत् । प्रतिपत् । आपत् । परिषत् । क्तिन्नपीष्यते बाहुलकात् । सम्पत्तिर्विपत्तिरित्यादि ॥

## स्थागापापचो भावे । ३ । ३ । ९५ ॥

क्तिन् स्यात् ॥ स्थादिभ्य आतश्चोपसर्गे इति पचेस्तु षित्त्वात्प्राप्तस्याङो ऽपवादः । पुरस्तादपवादन्यायात् । न तु विभाषाख्यानेति यवुलिङोः । तेन का त्वं स्थापिका कां त्वं स्थापिमित्यपि । प्रस्थितिः । उपस्थितिः । सङ्गीतिः । सम्पीतिः । पक्तिः । कथमवस्था संस्थेति । व्यवस्थायामिति ज्ञापकात् । भावग्रहणमर्थान्तरनिरासार्थम् ॥

## मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः । ३ । ३ । ९६ ॥

वृषादिभ्यः क्तिन् स्यात्स चोदात्तः ॥ वृष्टिं दिवः सुम्नमिष्टये । पचात्यक्तीरुतः । इयं तेन व्यसी मतिः । वित्तिः । भूतिः । अग्न आयाहि वीतये । राती स्यामो भयासः ॥

## ऊतियूतिजूतिसातिहेतिकीर्तयश्च । ३ । ३ । ९७ ॥

अवतेर्ज्वरत्वरेत्यूठ् ॥ ऊतिः । स्वरार्थं वचनम् । उदात्त इति हि वर्तते । यूतिः । जूतिः । अनयोर्दीर्घत्वञ्च निपात्यते । स्यतेः सातिः । इत्वाभावो निपात्यते । सनोतेर्वा जनसनेत्यात्वे कृते स्वरार्थं निपातनम् । हन्तेर्हिनोतेर्वा हेतिः । कीर्तयतेःकीर्तिः । अत्र ण्यासेति युच् प्राप्तः ॥

## व्रजयजोर्भावे क्यप् । ३ । ३ । ९८ ॥

उदात्त इत्येव । पित्करणन्तूत्तरत्र तुगर्थम् । क्तिनोऽपवादः ।
व्रज्या । इज्या ॥

**संज्ञायां समजनिषदनिपतमनविदषुञ्-शीङ्भृञिणः । ३ । ३ । ९९ ॥**

समजादिभ्यः स्त्रियां भावादौ क्यप् स्यात्स चोदात्तः सञ्ज्ञायाम् ॥ घञपोः प्रतिषेधे क्यप उपसङ्ख्यानाद्वीभावो न । समजन्त्यस्यामिति समज्या सभा । निषीदन्त्यस्यां निषद्या आपणः । निपतन्त्यस्यामिति निपत्या पिच्छिला भूमि । मन्यतेऽनयेति मन्या गलपार्श्वशिरा । तया हि क्रुद्धो ज्ञायते । विदन्त्यनया विद्या । सुत्या अभिषवः । शय्या । भृत्या । भरणम् । ईयतेऽनया इत्या शिबिका । सञ्ज्ञायां किम् । मतिः । आसुतिः । भृतिः ॥

**कृञः श च । ३ । ३ । १०० ॥**

कृञ इति योगविभागः ॥ कृञः क्यप् स्यात् । कृत्या । श च । चात्क्तिन् । क्रिया । कृतिः ॥

**इच्छा । ३ । ३ । १०१ ॥**

इषेर्भावे एव शो यगभावश्च निपात्यते ॥ इच्छा । परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम् ॥ * ॥ शो यक् च निपात्यते । परिचर्या पूजा । परिसर्या परिसरणम् । अच गुणोऽपि । मृग अन्वेषणे । चुरादावदन्तः । अतो लोपाभावोऽपि । शे यकि णिलोपः । मृगया । अटतेः शे यकि टयशब्दस्य द्वित्वं पूर्वभागे यकारनिवृत्तिर्दीर्घश्च । हलादिः शेषस्तु नास्ति । षाष्ठे द्वित्वे धातुद्वित्वे वा अभ्याससञ्ज्ञास्वीकारात् । इह च तदुभयाभावात् । अटाट्या । यदा तु यङन्ताद्प्रत्ययादित्यकारस्तदा अतो लोपे यलोपे च अटाटेति बोध्यम् ॥

जागर्तेरकारो वा ॥ * ॥ पक्षे श. । जागरा । जागर्या । सार्वधातुके यक् । जाग्रो विचिण्णलिति गुण. ॥

## अः प्रत्ययात् । ३ । ३ । १०२ ॥

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् ॥ चिकीर्षा । पुत्रकाम्या ॥

## गुरोश्च हलः । ३ । ३ । १०३ ॥

गुरुमतो हलन्तात् स्त्रियामकार' स्यात् ॥ ईहा । ऊहा । गुरोः किम् । भक्ति । हल किम् । नीति । निष्ठाया सेट इति वक्तव्यम् ॥ * ॥ नेह । आप्तिः । तितुत्रेति नेट् । दीप्तिः । स्रस्तिः । ध्वस्तिः । अपचितिः । चायतेरपचितश्चेति निष्ठायामिडभावस्यापि निपातनात् । ल्हाद इति योगविभागात् क्तिनि ह्रस्व । प्रल्हत्तिः । स्फायो । स्फाति. । स्फीतिकाम इति तु प्रामादिकम् । क्तान्ताद्वा-त्वर्थे णिचि अच इरिति वा समाधेयम् । केचित्तु स्त्रियां क्तिनित्य-चाबादिभ्यश्चेत्येवोपसङ्ख्यते । तदप्येतेन फलैक्याय गुरोश्च हल इति प्राप्तिस्थले निष्ठायामनिड्विषयकमेव बोध्यम् ॥

## षिद्भिदादिभ्योऽङ् । ३ । ३ । १०४ ॥

षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् ॥ जॄष् । जरा । त्रपूष् । त्रपा । कथ प्रेक्षोपलब्धिश्चिरित्यमर । षित्वादङि लभेत्येव ह्युचितम् । सत्यम् । अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेरिति भाष्यवार्तिकप्रयोगाद्बाहुलकाद्वा क्तिन्नपि बोध्यः । एतेन त्रप्तिरुपास्तिरित्यादयोऽपि व्याख्याताः । भिदा । विदारणे एवायम् । भित्तिरन्या । छिदा । द्वैधीकरणे । अन्यत्र छित्तिः । छिद्रम् । आरा शस्त्र्यामेव । आर्तिरन्या । आङोऽर्तेश्चोपसर्गादृतिधाताविति वृद्धिः । धारा प्रपाते ।

धृतिरन्या । आराहाराकाराताराधारेति पञ्चसु ऋदृशोऽङीति गुणे दीर्घत्व निपात्यते । गुहा दर्य्योषधिविशेषयोः । गूढिरन्या । मृजा । क्रपे' सम्प्रसारणञ्च ॥ * ॥ कृपा ॥

**चिन्तिपूजिकथिकुम्बिचर्चश्च । ३ । ३ । १०५ ॥**

अङ् स्यात् ॥ युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ॥

**आतश्चोपसर्गे । ३ । ३ । १०६ ॥**

अङ् स्यात् ॥ क्तिनोऽपवादः । प्रदा । उपदा । श्रदन्तरोरुपसर्गवद्वृत्ति' । श्रद्धा । अन्तर्द्धा ॥

**ण्यासश्रन्थो युच् । ३ । ३ । १०७ ॥**

अकारस्यापवादः ॥ कारणा । हारणा । आसना । श्रन्थना । घट्टिवन्दिविदिभ्यश्चेति वक्तव्यम् ॥ * ॥ घट्टना । वन्दना । वेदना । इषेरनिच्छार्थस्य ॥ * ॥ अन्वेषणा ॥ परेर्वा ॥ * ॥ पर्येषणा । परीष्टिः ॥

**रोगाख्यायां ण्वुल् बहुलम् । ३ । ३ । १०८ ॥**

प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न । शिरोर्त्ति' । अर्द हिंसायाम् । तितुत्रेति नेट् ॥ धात्वर्थनिर्देशे ण्वुल् वक्तव्यः ॥ * ॥ आसिका । शायिका । इक्श्तिपौ धातुनिर्देशे ॥ * ॥ धातुनिर्देशोऽनुकरणम् । विदिः । भिदिः । पचिः । पचतिः । उपसर्गात्सुनोतिसुवति,ध्यायतेः सम्प्रसारणञ्चेत्यादिनिर्देशादकर्तृवाचिन्यपि परे शबादयः । एवमभावकर्मवाचिन्यपि क्वचिदाक् । विभाषा लीयतेरिति यथा । शित्वसामर्थ्यादिति तु न युक्तम् । पिबतिर्ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्वस्य चरितार्थत्वात् । बहुलमित्यनुवृत्त्या क्वचिन्न । गुप्तिज्किद्भ्यः सन् । वर्णात्कारः ॥ * ॥ निर्देशे

इत्येव । वर्णानुकरणादित्यर्थः । आकारः । ककार । वर्णादुच्चार्यमाणादित्यर्थे तु अकार इत्यादावेव स्यान्न तु ककार इत्यादौ । संघातस्योच्चारणात् । अनुकार्यन्त्विह वर्णमात्रम् । अकारस्योच्चारणार्थत्वात् कथ तर्हि एवकारश्चकार इत्यादि । अत्राहुः । क्वचित् संघातादपि । वषट्कार इति सूत्रनिर्देशात् । सर्वे चकाराः प्रत्याख्यायन्ते इति भाष्याद्बहुलवचनाच्चेति । इह कारप्रत्ययस्य धातोरविहितत्वेऽपि अधिकारबलात्कृत्सञ्ज्ञा । तेन कृदन्तत्वात्प्रातिपदिकत्वम् । प्रयोजनाभावान्न ककारस्येत्सञ्ज्ञा । आर्द्धधातुकसञ्ज्ञाभावान्नेट् । अस्य त्वावित्यादौ न प्रत्ययो बाहुलकादेव । रादिफः ॥ * ॥ रेफः । वासरूपविधिना कारोऽपि । रकारादीनि नामानीति । मत्वर्थाच्छः ॥ * ॥ अतद्धितपरत्वादभत्वाच्च यस्येतिलोपाप्राप्तेर्बहुलवचनादकारलोपः । मत्वर्थीयः । प्रातिपदिकत्व तु कृदन्तत्वात्पूर्ववद्बोध्यम् । बहुलकान्नेह । तसौ मत्वर्थे । बाहुलकादेव मतुबर्थादपि । शैषिकान्मतुबर्थीयादिति । अन्ये तु नैतत्कृदन्त किन्तु मतुबर्थे भव इति विगृह्य गहादित्वाच्छे तद्धितान्तमेवेत्याहुः । इणजादिभ्यः ॥ * ॥ धात्वर्थनिर्देशे ॥ ण्वुलोऽपवादोऽयम् । एवमग्रेऽपि । आजिः ॥ बाहुलकादजेर्वीभावे न । आतिः । आदिः । इञ् वपादिभ्य ॥ * ॥ वापिः । वासिः । वादिः । स्वरे भेदः । इक् कृष्यादिभ्य ॥ * ॥ कृषिः । किरिः । गिरिः ॥

## संज्ञायाम् । ३ । ३ । १०९ ॥

अथ धातोर्ण्वुल् ॥ उद्दालकपुष्पभञ्जिका । उद्दालकः श्लेष्मातकः तस्य पुष्पाणि भज्यन्ते यस्यां क्रीडायां सा तथा ॥

## विभाषा ऽऽख्यानपरिप्रश्नयोरिञ् च । ३ । ३ । ११० ॥

पूर्वं परिप्रश्नः पश्चादाख्यानम् । सूत्रे त्वल्पाच्तरत्वात्पूर्वं निपातः । परिप्रश्ने आख्याने च गम्ये इञ् स्याच्चाण्वुल् ॥ विभाषेत्युक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वा । सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम् । एवं गणिं गणिकां गणनां । पाचिं पाचिकां पचां पक्तिम् । आख्यानपरिप्रश्नयोः किम् । कृतिरित्याद्येव ॥

## पर्यायार्हर्णोत्पत्तिषु ण्वुच् । ३ । ३ । १११ ॥

पर्यायः परिपाटी क्रमः । अर्हणमर्हो योग्यता । पर्यायादिषु द्योत्येषु ण्वुच् वा स्यात् ॥ भवत आसिका शायिका अग्रगामिका । अर्हे । भवानिक्षुभक्षिकामर्हति । ऋणे । इक्षुभक्षिकां मे धारयसि । उत्पत्तौ । इक्षुभक्षिकामुदपादि ॥

## आक्रोशे नञ्यनिः । ३ । ३ । ११२ ॥

विभाषेति निवृत्तम् । नञि उपपदेऽनिः स्यादाक्रोशे गम्ये ॥ अजीवनिस्ते शठ भूयात् । अप्रयाणिः ॥

## कृत्यल्युटो बहुलम् । ३ । ३ । ११३ ॥

भावेऽकर्तरि कारके चेति निवृत्तम् । स्नात्यनेन स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः । राज्ञा भुज्यते राजभोजनाः शालयः । कृत्यल्युट इत्येव सूत्रमस्तु । यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात् । एवंच बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थम् । पादाभ्यां ह्रियते पादहारकः । कर्मणि ण्वुल् ॥

## नपुंसके भावे क्तः । ३ । ३ । ११४ ॥

## ल्युट् च । ३ । ३ । ११५ ॥

हसितम् । हसनम् । योगविभाग उत्तरार्थः ॥

**कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् । ३ । ३ । ११६॥**

येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन्कर्मण्युपपदे ल्युट् स्यात् ॥ पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । पयःपानं सुखम् । कर्तुरिति किम् । गुरोः स्नापनं सुखम् । नेह गुरुः कर्ता किन्तु कर्म । सुखमिति किम् । कण्टकानां मर्दनं दुःखम् ।

**करणाधिकरणयोश्च । ३ । ३ । ११७ ॥**

ल्युट् स्यात् ॥ घञोऽपवादः । अजपौ स्त्रीप्रत्ययाश्च परत्वाद्बाधते । इध्मप्रव्रश्चनः कुठारः । गोदोहनी स्थाली । खलः प्राक्करणाधिकरणयोरित्यधिकारः ॥

**पुंसि संज्ञायां घः प्रायेण । ३ । ३ । ११८ ॥**

दन्ताश्छाद्यन्ते ऽनेन दन्तच्छदः । आ एत्य कुर्वन्ति व्यवहारमस्मिन्नित्याकरः । उत्पत्तिस्थानम् ॥

**गोचरसंचरवहव्रजव्यजापणनिगमाश्च । ३ । ३ । ११९ ॥**

घान्ता निपात्यन्ते ॥ हलश्चेति वक्ष्यमाणस्य घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । संचरते ऽनेन संचरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजः । व्यजस्तालवृन्तम् । निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः ॥ चात्कषो निकषः ॥

**अवे तॄस्त्रोर्घञ् । ३ । ३ । १२० ॥**

अवतारः कूपादेः । अवस्तारो जवनिका ॥

**हलश्च । ३ । ३ । १२१ ॥**

हलन्ताद्घञ् स्यात् ॥ वादः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः । विमार्गः समूहनी ॥

## अध्यायन्यायोद्यावसंहाराश्च। ३। ३। १२२॥

अहलन्तार्थ आरंभः। अधीयतेऽस्मिन्नध्यायः॥ नियन्ति उद्युवन्ति संहरन्ति अनेनेति विग्रहः। अवहाराधारावायानामुपसंख्यानम्॥ * ॥ अवह्रियन्ते आध्रियन्ते आ एत्य वयन्त्यस्मिन्निति विग्रहः। आवाये वेञ आत्वे कृते आतो युगिति युक्॥

## उदंको ऽनुदके। ३। ३। १२३॥

उत्पूर्वादंचतेर्घञ् स्यान्न तूदके॥ हलश्चेति सिद्धे उदकप्रतिषेधार्थं वचनम्। घृतमुच्यते उद्ध्रियते ऽस्मिन्निति घृतोदकः। चर्ममयं भाण्डम्। अनुदके किम्। उदकोदंचनः। घः कस्मान्न प्रत्युदाह्रियते विशेषाभावात्। घञ्यपि हि थाथादिस्वरेणान्तोदात्त एव॥

## जालमानायः। ३। ३। १२४॥

आनीयन्ते मत्स्यादयो ऽनेनेत्यानायः। जालमिति किम्। आनयः॥ आनयन इति ल्युट् केश्चित्प्रत्युदाह्रियते॥

## खनो घ च। ३। ३। १२५॥

चाद्घञ्। आखनः। आखानः। खनोऽघ् इति वक्तव्ये घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम्। तेन भगः पदमित्यादि। खनेर्डडरेकेकवका वाच्याः॥ * ॥ आखः। आखरः। आखनिकः। आखनिकवकः। एते खनित्रवचनाः॥

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्। ३। ३। १२६॥

करणाधिकरणयोः पुंसि संज्ञायामिति निवृत्तम्। एषु सुखदुःखार्थेषूपपदेषु खल् स्यात्॥ तयोरेवेति भावे कर्मणि च। कृच्छ्रे। दुष्करः कटो भवता। अकृच्छ्रे। ईषत्करः। सुकरः। ईषत्करा सुकरे-

त्यादावपि परत्वात्खलेव । तथा च वार्तिकम् । अजब्भ्यां स्त्रीखलना. स्त्रियाः खलनौ विप्रतिषेधेनेति । ईषदादिषु किम् । कृच्छ्रेण कार्यम् । कृच्छ्रेत्यादि किम् । ईषत्कार्यम् । अल्पमित्यर्थः । खित्त्वमुत्तरार्थमुमर्थम् ॥

**कर्तृकर्मणोश्च भूकृञोः । ३ । ३ । १२७ ॥**

कर्तृकर्मणोरीषदादिषु चोपपदेषु भूकृञो खल् स्यात् ॥ यथासंख्यं नेष्यते । कर्तृकर्मणी च धातोरव्यवधानेन प्रयोज्ये । ईषदादयस्तु ततः प्राक् । कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् ॥ * ॥ खित्त्वान्मुम् । अनाढ्येन आढ्येन दुःखेन भूयते दुराढ्यम्भवम् । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । दुराढ्यंकरः । स्वाढ्यंकरः । च्व्यर्थयोः किम् । आढ्येन सुभूयते ॥

**आतो युच् । ३ । ३ । १२८ ॥**

खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ॥

**छन्दसि गत्यर्थेभ्यः । ३ । ३ । १२९ ॥**

ईषदादिषु युच् ॥ सूपसदनोऽग्निः । सूपसदनमन्तरिक्षम् ॥

**अन्येभ्योऽपि दृश्यते । ३ । ३ । १३० ॥**

छन्दसीत्येव । अगत्यर्थ आरम्भः । सुदोहनामकृणोद्ब्रह्मणे गाम् । भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः ॥ * ॥ दुःशासनः । दुर्योधन । दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः ॥

**वर्तमानसामीप्ये वर्तमानवद्वा । ३ । ३ । १३१ ॥**

समीपमेव सामीप्यम् । स्वार्थे ष्यञ् । वर्तमाने लडित्यारभ्य उणादयो बहुलमिति यावत् येनोपाधिना प्रत्यया उक्तास्ते तथैव

वर्तमानसमीपे भूते भविष्यति च वा स्युः ॥ कदाऽऽगतोसि । अयमागच्छामि । आगच्छन्तमेव मा विद्धि । अयमागमम् । कदा गमिष्यसि । एष गच्छामि । गच्छन्तमेव मां विद्धि । गमिष्यामि वा। वर्तमाना इत्येतावतैव वर्तमानकालविहितप्रत्ययानां सिद्धौ वत्करणमुपाधीनामपि लाभार्थम् । एषोऽस्मि पवमान. । यजमानः । अलङ्करिष्णुः । प्रजनिष्णुः ॥

**आशंसायां भूतवच्च । ३ । ३ । १३२ ॥**

वर्तमानसामीप्ये इति नानुवर्तते । आशंसा अभिमतार्थवाञ्छा । सा वर्तमानापि विषयस्य भविष्यत्वात् भविष्यति काले आशसाया विषये अर्थात् आशस्यमानक्रियावचनाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यया वा स्युः ॥ देवश्चेदवर्षीत् वर्षति वर्षिष्यति वा । धान्यमवाप्स्म वपामो वप्स्यामो वा । सामान्यातिदेशे विशेषानतिदेशः । तेन लङ्लिटौ न । आशसायां किम् । वर्षिष्यति ॥

**क्षिप्रवचने लृट् । ३ । ३ । १३३ ॥**

क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात् ॥ वृष्टिश्चेत्क्षिप्रमाशु त्वरित वा यास्यति शीघ्र वप्स्यामः । नेति वक्तव्ये लृट्ग्रहण लुटोऽपि विषये यथा स्यात् । श्वः शीघ्र वप्स्यामः ॥

**आशंसावचने लिङ् । ३ । ३ । १३४ ॥**

आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्न भूतवन्नापि वर्तमानवत् ॥ अस्याशसायामित्येतदपवादत्वात् । गुरुश्चेदुपेयादाशसे युक्तोऽधीयीय । क्षिप्रवचने लृटोऽपि परत्वादयमेव । गुरुश्चेदुपेयादाशंसे क्षिप्रमधीयीय ॥

**नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः । ३ । ३ । १३५ ॥**

क्रियायाः सातत्ये सामीप्ये च लङ्लुटौ न ॥ यावज्जीवमन्नमदाद्दास्यति वा । सामीप्य तुल्यजातीयेन व्यवधानम् । येय पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित । सोमेनायष्ट । येयममावास्याऽऽगामिनी तस्यामग्नीनाधास्यते । सोमेन यक्ष्यते । कैयटोपाध्यायास्तु वत्करणमनद्यतनविशेषविहितानामपि प्रतिषेधार्थमन्यथा नानद्यतन इत्येव ब्रूयात् । तेन परोक्षे लिट् हशश्वतोर्लङ् च, लट् स्मे, पुरि लुङ् चास्मे, इत्येतत्सूत्रविहिता अपि प्रत्यया प्रतिषिध्यन्त इत्याहुः ॥

**भविष्यति मर्यादावचनेऽवरस्मिन् । ३ । ३ । १३६ ॥**

भविष्यति काले मर्यादोक्ताववरस्मिन्प्रविभागेऽनद्यतनवन्न ॥ योयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवर कौशाम्ब्यास्तत्र सक्तून्पास्यामः ॥

**कालविभागे चानहोरात्राणाम् । ३ । ३ । १३७ ॥**

पूर्वसूत्र सर्वमनुवर्तते । अहोरात्रसम्बन्धिनि विभागे प्रतिषेधार्थमिदम् । योगविभाग उत्तरार्थः । योऽय सवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणा किम् । योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राध्येतास्महे ॥

**परस्मिन्विभाषा । ३ । ३ । १३८ ॥**

अवरस्मिन्वर्जं पूर्वसूत्रद्वयमनुवर्तते । अप्राप्तविभाषेयम् । योऽयं वत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे । अध्येतास्महे ॥

**लिङ्निमित्ते लृङ् क्रियातिपत्तौ । ३ । ३ । १३९ ॥**

हेतुहेतुमद्भावादि लिङ्निमित्त तत्र भविष्यत्यर्थे लृङ्

स्यात् क्रियाय अनिष्पत्तौ गम्यमानायाम् ॥ सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् ॥

**भूते च । ३ । ३ । १४० ॥**

पूर्वसूत्र सम्पूर्णमनुवर्तते ॥

**वोताप्योः । ३ । ३ । १४१ ॥**

वा आ उताप्योः । उताप्योरित्यतः प्राक् भूते लिङ्निमित्ते लृङ् वेत्यधिक्रियते ॥ पूर्वसूत्रं तूताप्योरित्यादौ प्रवर्तते इति विवेकः ॥

**गर्हायां लडपिजात्वोः । ३ । ३ । १४२ ॥**

आभ्या योगे लट् स्यात्कालत्रये गर्हायाम् ॥ लुङादीन्परत्वादयं बाधते । अपि जाया त्यजसि, जातु गणिकामाधत्से गर्हितमेतत् ॥

**विभाषा कथमि लिङ् च । ३ । ३ । १४३ ॥**

गर्हायामित्येव । कालत्रये लिङ् चाल्लट् ॥ कथ धर्मं त्यजेः । त्यजसि वा । पक्षे कालत्रये लकार. । अत्र भविष्यति नित्य लृङ् । भूते वा । कथ नाम तत्र भवान् धर्ममत्यक्ष्यत् ॥

**किंवृत्ते लिङ्लृटौ । ३ । ३ । १४४ ॥**

गर्हायामित्येव ॥ विभाषा तु नानुवर्तते । कः कतर. कतमो वा हरिं निन्देत् निन्दिष्यति वा । लृङ् प्राग्वत् ॥

**अनवक्लृप्त्यमर्षयोरकिंवृत्ते ऽपि । ३ । ३ । १४५ ॥**

गर्हायामिति निवृत्तम् ॥ अनवक्लृप्तिरसम्भावना । अमर्षाऽक्षमा । न सम्भावयामि न मर्षये वा भवान्हरिं निन्देन्निन्दिष्यति वा । कः कतर' कतमो वा हरिं निन्देन्निन्दिष्यति वा । लृङ् प्राग्वत् ॥

## किङ्किलास्त्यर्थेषु लृट् । ३ । ३ । १४६ ॥

अनवक्लृप्त्यमर्षयोरित्येतद्गर्हायाञ्चेति यावदनुवर्तते । किङ्किलेति समुदायः क्रोधद्योतक उपपदम् । अस्त्यर्थाः अस्तिभवतिविद्यतयः । लिङोऽपवाद । न श्रद्दधे न मर्षये वा किङ्किल त्व शूद्रान्न भोक्ष्यसे । अस्ति भवति विद्यते वा शूद्रो गमिष्यसि । अत्र लृङ् न ॥

## जातुयदोर्लिङ् । ३ । ३ । १४७ ॥

यदायद्योरुपसंख्यानम् ॥ * ॥ लृटोऽपवादः । जातु यद् यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि न मर्षयामि । लृङ् प्राग्वत् ॥

## यच्चयत्रयोः । ३ । ३ । १४८ ॥

यच्च यत्र वेत्येवं कुर्यान्न श्रद्दधे न मर्षयामि । लृङ् प्राग्वत् ॥

## गर्हायाञ्च । ३ । ३ । १४९ ॥

अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात् ॥ विभाषा कथमि लिङ् च किंवृत्ते लिङ्लृटावित्येतौ तु परत्वाद्बाधते । यच्च यत्र वा त्व शूद्र याजयेः । अन्याय्य तत् । लृङ् प्राग्वत् ॥

## चित्रीकरणे च । ३ । ३ । १५० ॥

सर्वलकारापवाद ॥ यच्च यत्र वा त्व शूद्र याजयेः । आश्चर्यमेतत् । लृङ् प्राग्वत् ॥

## शेषे लृडयदौ । ३ । ३ । १५१ ॥

यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट्

स्यात् । सर्वलकारापवादः । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । अयदौ किम् । आश्चर्यं यदि सोऽधीयीत ॥

उताप्योः समर्थयोर्लिङ् । ३ । ३ । १५२ ॥

सर्वलकारापवादः ॥ बाढमित्यर्थेऽनयोस्तुल्यार्थता । उताभि वा हन्यादद्य हरिः । समर्थयोः किम् । उत दण्डः पतिष्यति । अपि धास्यति द्वारम् । प्रश्नः प्रच्छादनञ्च गम्यते । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ् ॥

कामप्रवेदनेऽकच्चिति । ३ । ३ । १५३ ॥

स्वाभिप्रायाविष्करणे लिङ् स्यान्न तु कच्चिति ॥ सर्वलकारापवादः । कामो मे भुञ्जीत भवान् । अकच्चितीति किम् । कच्चिज्जीवति ॥

सम्भावनेऽलमिति चेत्सिद्धाप्रयोगे । ३ । ३ । १५४ ॥

अलमर्थोऽत्र प्रौढिः । सम्भवने इति अलमिति च प्रथमया सप्तम्या च विपरिणम्यते । सम्भावनेऽर्थे लिङ् स्यात्तच्चेत्सम्भावनमलमिति अलमि सिद्धाप्रयोगे सति ॥ अपि गिरिं शिरसा भिन्द्यात् । सिद्धाप्रयोगे किम् । अल कृष्णो हस्तिने हनिष्यति ॥

विभाषा धातौ सम्भावनवचनेऽयदि । ३ । ३ । १५५ ॥

पूर्वसूत्रमनुवर्तते । सम्भावनार्थे धातुषूपदेषु उक्तेऽर्थे लिङ् वा स्यान्न तु यच्छब्दे ॥ पूर्वेण नित्ये प्राप्ते वचनम् । सम्भावयामि भुञ्जीत भोक्ष्यते वा भवान् । अयदि किम् । सम्भावयामि यद्भुञ्जीथास्त्वम् ॥

हेतुहेतुमतोर्लिङ् । ३ । ३ । १५६ ॥

वा स्यात् ॥ कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नस्यति चेत्सुखं यास्यति । लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणाद्भविष्यत्येवेष्यते । नेह । हन्तीति पलायते । अथेह सद्विधि कस्मान्न भवति । लक्षणहेत्वोः क्रियाया इत्यत्र नन्वोर्विभाषेत्यतो विभाषानुवर्तनाद्व्यवस्थितविभाषाश्रयणादिति स्पष्टमेव भाष्यकैयटयोः ॥

**इच्छार्थेषु लिङ्लोटौ । ३ । ३ । १५७ ॥**

इच्छामि भुञ्जीत भुङ्क्तां वा भवान् । एवं कामये प्रार्थये इत्यादियोगे बोध्यम् । कामप्रवेदने इति वक्तव्यम् ॥* ॥ नेह । करोति ॥

**समानकर्तृकेषु तुमुन् । । ३ । ३ । १५८ ॥**

अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन्स्यात् ॥ इच्छति भोक्तुं वष्टि वाञ्छति वा । अत्र हि भोजनविषयिणीच्छा प्रतीयते न तु भोजनार्था ॥

**लिङ् च । ३ । ३ । १५९ ॥**

समानकर्तृकेष्विच्छार्थेषूपपदेषु लिङ् स्यात् । भुञ्जीयेतीच्छति ॥

**इच्छार्थेभ्यो विभाषा वर्तमाने । ३ । ३ । १६० ॥**

लिङ् स्यात् ॥ पक्षे लट् । इच्छेत् । इच्छति । कामयेत ।

**निधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् । ३ । ३ । १६१ ॥**

एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात् ॥ विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं नियोगकरणं आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा ।

अधीष्टं सत्कारपूर्वको व्यापारः। प्रवर्तनायां लिङ्। चतुर्णां पृथगुपादानं प्रपञ्चार्थम्। विधौ तावत्। यजेत्। निमन्त्रणे। इह भुञ्जीत भवान्। आमन्त्रणे। इह आसीत। अधीष्टे। पुत्रमध्यापयेद्भवान्। सम्प्रश्ने। किं भो वेदमधीयीत उत तर्कम्। प्रार्थने भो भोजनं लभेत्॥

**लोट् च। ३। ३। १६२॥**

विध्यादिष्वर्थेषु धातोर्लोट् स्यात्॥ पूर्वादाहृतेष्वेव लोडप्यूह्यः॥

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च। ३। ३। १६३॥**

प्रैषो विधिः। अतिसर्गः कामचारानुज्ञा॥ भवता यष्टव्यम्। त्वया गन्तव्यम्। गमनीयं। गम्यम्। भवान् यजताम्। चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम्। अथ किमर्थं प्रैषादिषु कृत्या विधीयन्ते। यावता सामान्येन भावकर्मणोर्विहिता एव ते ते प्रैषादिष्वन्यत्र च भविष्यन्तीति। एवं तर्हीह लोटा बाधा माभूदिति पुनः कृत्यविधिः स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्नेति ज्ञापयति। तेन क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धम्।

**लिङ् चोर्ध्वमौहूर्तिके। ३। ३। १६४॥**

प्रैषादयोऽनुवर्तन्ते। मुहूर्तादूर्ध्वं यजेत यजतां यष्टव्यम्।

**स्मे लोट्। ३। ३। १६५॥**

पूर्वसूत्रस्य विषये॥ लिङ्कृत्यानाञ्चापवादः। ऊर्ध्वं मुहूर्ताद्यजतां स्म॥

**अधीष्टे च। ३। ३। १६६॥**

स्मे उपपदे अधीष्टे लोट् स्यात् । लिङोऽपवादः । त्वं स्म अध्यापय ॥

**कालसमयवेलासु तुमुन् । ३ । ३ । १६७ ॥**

पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन् स्यात् ॥ कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते । तेनेह न । भूतानि कालः पचतीति वार्ता ॥

**लिङ्यदि । ३ । ३ । १६८ ॥**

यच्छब्दे उपपदे लिङ् । कालः समयो वेला वा यद्भुञ्जीत भवान् ॥

**अर्हे कृत्यतृचश्च । ३ । ३ । १६९ ॥**

चाल्लिङ् ॥ स्तोतुमर्हः स्तुत्यः । स्तुतिकर्म । स्तोता । स्तुतिकर्ता । त्वं कन्या वहेः । लिङा बाधा माभूदिति कृत्यतृचोर्विधिः ॥

**आवश्यकाधमर्ण्ययोर्णिनिः । ३ । ३ । १७० ॥**

अवश्यभावः आवश्यकम् । अवश्यकारी । शतदायी ॥

**कृत्याश्च । ३ । ३ । १७१ ॥**

आवश्यकाधमर्ण्ययोरित्येव । अवश्य हरिः सेव्यः । शतं देयम् । णिनिना बाधा माभूदिति कृत्यविधिः । कर्तरि णिनिर्भावकर्मणोः कृत्यास्तत्र कुतो बाधप्रसङ्गः । केचिदाहुः । भव्यगेयादयः कर्तृवचनाः कृत्यास्त इहोदाहरणमिति ॥

**शकि लिङ् च । ३ । ३ । १७२ ॥**

शक्तौ लिङ् स्यात् ॥ चात्कृत्याः । भारं त्वं वहेः । वोढुं

॥ श्रीगणेशाय नमः ॥

# अथ सिद्धान्तशिरोमणौ-

## ग्रहगणिताध्यायो

वासनाभाष्य—वासनावार्त्तिक—मरीच्यादिसहितः।

———o———

जयति जगति गूढानन्धकारे पदार्थान्
 जनघनघृणयाऽय व्यञ्जयन्नात्मभाभिः।
विमलितमनसा सद्वासनाभ्यासयोगै-
 रपि च परमतत्त्वं योगिनां भानुरेकः ॥

जयति सर्वोत्कर्षेण वर्त्तते। कः। अय भानुः सूर्यः। किंविशिष्टः। एकः अद्वितीयः। किं कुर्वन्। व्यञ्जयन् प्रकाशयन्। कान्। पदार्थान्। काभिः। आत्मभाभिः स्वदीप्तिभिः। क्व। जगति। किंविशिष्टान् पदार्थान्। गूढान् अदृश्यान्। कस्मिन् सति। अन्धकारे सति। कया हेतुभूतया। जनघनघृणया। घना चासौ घृणा च घनघृणा जनानां घनघृणा जनघनघृणा तयेत्यर्थः। न केवलं घटपटादीन् पदार्थान् व्यञ्जयन्। अपि च परमतत्त्वं परं ब्रह्म। केषाम्। योगिनाम्। कथम्भूतम्। कलुषितमनोभावादज्ञानरूपेण तमसा अतिगूढम्। किंविशिष्टानां योगिनाम्। विमलितमनसां निर्मलीकृतचेतसाम्। कैः। सद्वासनाभ्यासयोगैः। सतो ब्रह्मणो वासना सद्वासना तस्या अभ्यासयोगास्तैरमलीकृतचेतसां योगिनां परमतत्त्वं व्यञ्जयन्नेको रविरिव राजते।

अथ निजकृतशास्त्रे तत्प्रसादात् पदार्थान्
 शिशुजनघृणयाऽह व्यञ्जयाम्यत्र गूढान्।

विमलितमनसा सद्वासनाभ्यासयोगै-
हृदि भवति यथैषा तत्त्वभूतार्थबोधः ॥
वासनाऽवगतिर्गोलानभिज्ञस्य न जायते ।
व्याख्याताः प्रथमं तेन गोले या विषमोक्तयः ॥

तत्रादौ तावदभीष्टदेवतां मनोवाक्कायैर्नमस्कृत्य तस्याः सकाशादभीष्टार्थस्याशसनमाह ।

**यत्र त्रातुमिदं जगज्जलजिनीबन्धौ समभ्युद्गते**
**ध्वान्तध्वंसविधौ विधौतविनमन्निःशेषदोषोच्चये ।**
**वर्त्तन्ते क्रतवः शतक्रतुमुखा दीव्यन्ति देवा दिवि**
**द्राङ्नः सूक्तिमुचं व्यनक्तु स गिरं गीर्वाणवन्द्यो रविः ॥१॥**

**वा. भा.**—व्यनक्तु प्रकाशयतु । कः । सः । स कः । रवि सूर्यः । काम् । गिरं वाचम् । केषाम् । नः अस्माकम् । किंविशिष्टां वाचम् । सूक्तिमुचं सूक्ति मुञ्चतीति सूक्तिमुक् तां सूक्तिमुचम् । कथम् । द्राक् झटिति । किंविशिष्टो रवि । गीर्वाणवन्द्यः । गीर्वाणा देवास्तैर्वन्द्य इति गीर्वाणवन्द्यः । पुनः किंविशिष्टो रविः । यत्र यस्मिन्रवाविद जगत् त्रातु रक्षितु निशि मृतपतितमिवोत्थापयितु समभ्युद्गतेऽस्या पृथिव्या समभितः समन्तादुद्गते सति वर्त्तन्ते प्रवर्त्तन्ते । के क्रतवः । यज्ञाः पञ्च महायज्ञा दर्शपौर्णमासयागज्योतिष्टोमादयः । यत्र यत्र यदा यदा स भगवानुदेति तत्र तत्र तदा तदा यज्ञाः प्रवर्त्तन्त इत्यर्थः । समभ्युद्गत इत्येव वदताऽऽचार्येणोदितहोमिनामेव पक्षोऽङ्गीकृत इति नाशङ्कनीयम् । यतोऽनुदितहोमिनामभ्युदयात् प्रागासन्न एव यागकाल इति भावः । न केवल यज्ञाः प्रवर्त्तन्ते । अत एव कारणाद्दीव्यन्ति च क्रीडावन्तो द्योतन्ते । क्व । दिवि स्वर्गे । के । देवाः । किंविशिष्टाः । शतक्रतुमुखा इन्द्रादयः । यतस्ते यज्ञाशभुजः । पुनः किंविशिष्टे रवौ । ध्वान्तध्वंसविधौ । ध्वान्तमन्धकारस्तस्य ध्वंसं विदधातीति ध्वान्तध्वंसविधिस्तस्मिन् । पुनः किंविशिष्टे । विधौतविनमन्निःशेषदोषोच्चये । विधौतः प्रक्षालितो विनमतां प्रणतानां निःशेषदोषो-

च्चयः सकलपापसमूहो येन असौ विधौतविनम्रचित्तः शेषदोषोच्चयस्तस्मिन् । पुनः किंविशिष्टे । जलजिनीबन्धौ कमलिनीबन्धौ । अत्र जलजिनीशब्देन कुमुदिन्यपि गृह्यते । यतस्तामपि चन्द्रबिम्बसंक्रान्तैः स्वरश्मिभिरेवोल्लासयतीति । एवं जलजस्थलजादीनां त्रैलोक्योदरवर्त्तिनामुपकारप्रकृतिः स गिरं दिशतु । अहो एवंविशिष्टादपि भगवतः सूर्यात् किं वाङ्मात्रस्याशासनं कृतम् । सत्यं तदप्युच्यते । इह हि कवीनां काव्यरचनोद्यतानां सद्वाक्यप्रवृत्तिरेवाभीष्टमिति भावः ॥ १ ॥

**वा. वा.**—यस्मात् सर्वमिदं जगत् समुदितं स्वोत्सृष्टभूतैः पुरं
कृत्वा तत्र निविश्य मानसगुणान् स्वस्मिन् वृथा मन्यते ।
स्वाज्ञानादिव बद्धमुक्त इति यं वेदा निषेधावधिं
ब्रह्मेत्याह न वेद कश्चिदपि यं प्रेमास्पदं तं भजे ॥
गङ्गाधरायामितविक्रमाय त्र्यक्षाय शर्वाय दिगम्बराय ।
त्रिशूलहस्ताय नमः शिवाय सुरेन्द्रवन्द्याय जटाधराय ॥
नमामि लक्ष्मीपतिमिन्द्रवन्द्यमुपेन्द्रमिन्द्रावरजं चतुर्भुजम् ।
गदारथाङ्गाब्जसुशङ्खहस्तं सुपर्णपृष्ठोपरिगं वरप्रदम् ॥
यां मूलप्रकृतिं जगाद कपिलो वेदान्तिनो यां महा-
मायामित्यपरे हरस्य गृहिणीं त्रैलोक्यरक्षाकरीम् ।
भक्तापद्विनिवारिणीं सुरगणैर्वन्द्यामनिन्द्यां जगद्-
वन्द्यां तां प्रणमामि विश्वजननीं वेदैर्विमृग्यां पराम् ॥
यद्भावः खगभादिके जलमये संमूर्च्छिता भास्वरा
ध्वान्तं तत् क्षपयन्ति नैशमनिशं यः सर्वदा भासते ।
कालात्मा खलु कालकृत् समयदिग्देशस्य यो व्यञ्जक-
स्तस्मै चन्द्रतनोः क्षयोपचययोः कर्त्रे सवित्रे नमः ॥
लम्बोदरं विघ्नविनाशनाय गजाननं नौमि परावरेशम् ।
यः कर्मकाले स्मरणेन सद्यः कार्यस्य सिद्धिं विदधाति पुंसाम् ॥
यस्याः प्रसादमासाद्य जडो याति बुधार्यताम् ।

ब्राह्मी जयति सा वाणी वीणापुस्तकधारिणी ॥
निजतातस्य कृष्णस्य कृत्वा पादाम्बुजं हृदि ।
शास्त्रं वितृष्यतोऽधीत्य वक्ष्येऽपूर्वां सुवासनाम् ॥
सिद्धान्तवासनाभाष्यममितार्थं मिताक्षरम् ।
व्याख्यायते नृसिंहेन गणकानन्ददहेतवे ॥
विधाय सूर्यसिद्धान्तवासनाभाष्यमुत्तमम् ।
वासनावार्तिकं कर्तुमुद्यतोऽस्मि शिरोमणेः ॥

अथ शाण्डिल्यमुनिवरगोत्रावतंसः कुम्भोद्भवालङ्कृतदिगङ्गनाभरणसर्वस्वः सह्यकुलाचलाश्रित-जडविड नगरनिवासेन पविचित्रितदण्डकारण्यो नानामखार्जितपुण्यो याज्ञिकानामग्रणीर्यजुःशाखिनामुपाध्यायः सांवत्सराणामाचार्यः काव्यनाटकालङ्कारविदामध्यापयिता धीवृद्धिदोपायकर्त्ता ब्रह्मतुल्यवसिष्ठतुल्यसर्वतोभद्रादियन्त्रनिर्माता महाराष्ट्राणामाश्रयो महेश्वराचार्यनन्दनः परमकारुणिकः श्रीभास्कराचार्यः श्रीधरब्रह्मगुप्त-लल्ल-चतुर्वेदाचार्यनिर्मितापारगणितार्णवविचारवारिरिङ्गत्सन्देहसन्दोहग्राहगृहीतानुद्दिधीर्षुः सिद्धान्तशिरोमणिं प्रणिनाय । तत्र प्रत्यूहव्यूहविध्वंसकामो ग्रन्थसमाप्तिप्रचयगमनार्थं छात्रव्रातशिक्षायै मङ्गलमाचरति ।

पितामहवसिष्ठसोमरोमकपौलिशादिभ्यः पूर्वगणितशास्त्रप्रणेतृत्वाद्विवस्वतः प्रसादात् कस्य विद्वचनेय प्रादुर्भविष्यतीति सूर्यसिद्धान्तोक्तिश्रवणाच्च रवेर्वाणाशंसनं युक्तम् । स रविर्नः गिरं व्यनक्तु । स कः । यत्रेति । यस्मिन् समभ्युद्गते क्रतवो वर्त्तन्ते प्रवर्त्तन्ते । अत्राचार्येणोदितहोमिनामेव पक्षोऽङ्गीकृत इति वदता भाष्यकारेण यज्ञपरः क्रतुशब्दो होमपरो व्याख्यातः । अस्ति होमे यागपदाभिधेयं सर्वम् । देवतामुद्दिश्य द्रव्यत्यागः किल यागः स एव प्रक्षेपाधिको होम इति । 'यजति चोदितं कर्म जुहोति नाप्यनुद्यमानं दृष्टं किमुतात्र'–इति न कश्चिद्दोषः । 'उदिते जुहोति अनुदिते जुहोति'–इति अग्निहोत्रहोमस्यैव सूर्योदये प्रवृत्तिर्दृश्य-

ते । अग्निहोत्रं कुर्वाणा बहवो दृश्यन्त इति कर्तृबाहुल्याभिप्रायं क्रतव इति बहुवचनम् । कर्मभेदकप्रमाणानां शब्दान्तराभ्यासासंज्ञाविधिगुणसंख्या-नाम्नामभावात् प्रत्यभिज्ञातस्य कर्मण एकत्वात् । यद्वा क्रतुशब्देन पञ्च महायज्ञा गृह्यन्ते । शतक्रतुमुखा देवा दिवि स्वर्गे दीव्यन्ति तदंशभागित्वात् । अशिनः समुदयेऽशाना क्रीडा समुचितैव । अथ वा क्रत्वंशभागित्वात् क्रीडन्ति । यद्यपि श्रूयमाणा देवता कर्मस्वरूपनिष्पादयित्री कर्मणोऽङ्गभूता न प्रधानत्वं प्रतिपद्यते तथाऽपि कर्मणो जडत्वेन फलदातृत्वासम्भवाच्चेतनाधिष्ठितस्य कर्मणः फलदातृत्वसम्भवाच्चास्ति कर्माधिष्ठाता देवः प्रधानः । तस्य प्रीतिसम्पादकं कर्मेति क्रीडा युक्तैव । इन्द्रादयोऽपि तदंशाः । अतो न किञ्चिद्विरुद्धम् ॥ १ ॥

**मरीचिः**—प्रातर्बोधितपद्मपत्रविकसन्नेत्रो नवीनाम्बुद-
श्यामः पीतदुकूलशोभिततनुः श्रीवत्समुद्रान्वितः ।
वंशीवादनतत्परो रविसुतातीरोपगो नैचकी—
गोपीभिः परिवेष्टितो मम मनस्यास्तां रमावल्लभः ॥

यः पूरयत्यनुदिनं प्रणतस्य कामान् स्वान्तःस्थितान् सकलविघ्नचयं निरस्य ।
सिन्दूरपूरपरिपूरितकुम्भयुग्मो भूयान्मुदे गणपतिर्गजराजवक्त्रः ॥

या भारती सर्वबुधावलीनां मुखाब्जरङ्गे नटनं करोति ।
सा मे मुखे वास्तुविधिं करोतु वस्तु सदाऽलङ्कृतिभूषिताङ्गी ॥

यो बोधयत्यनुदिनं विबुधारविन्दं तत्पूर्वपक्षरजनीतिमिरं निरस्य ।
ज्योतिर्विभावनविधेस्तु निदानभूतं श्रीमद्वराहमिहिरं मिहिरं च वन्दे ॥

येनाधायि कुतूहलादतितमां पारे सुधाम्भोनिधेः
प्रौढाहङ्कृतिवादिवारणगणत्यक्कारढक्कारवः ।
ज्योतिःशास्त्रदुरन्तकाननमहासञ्चारपञ्चाननं
तं चातुर्यकलाकलापकुशलं श्रीभास्करं भावये ॥

गौरीभर्तुर्भजनकलया नीतकालः पितृव्यः
श्रीमद्रामो निखिलविषये लब्धबुद्धिप्रकाशः ।

ज्योतिस्तर्कानलकवलने मूलभूतश्चकोरः
कृष्णभ्राता जयति नितरां मल्लुरार्यैर्यवर्यः ॥

सिद्धान्ताम्बुजबोधनैकमिहिरस्त्रिस्कन्धपारङ्गमो
न्याये नीतमतिः कवित्वकरणे साक्षात् पुराणो मुनिः ।
आम्नायप्रतिपादितार्थघटनाविख्यातसारस्वतो
विष्णुः कृष्णगुरुर्जयत्यतितरां श्रीमद्गणेशाप्तधीः ॥

यः श्रीकृष्णपदाम्बुजाहितमतिः सिद्धान्तवारां निधेः
पोतः श्री–जहँगीर–भूमितिलकस्यानन्यविश्वासभूः ।
षट्शास्त्रेषु कृतश्रमोऽखिलगुरुर्मान्यो वदान्यो विदां
श्रीकृष्णः किमु वर्णनीयविभवः श्रीकृष्ण एवापरः ॥

श्रीरङ्गनाथाभिधतातपादाः कृष्णानुजाः श्रीकमलाधिपास्ते ।
त्रिस्कन्धपारङ्गमरङ्गमल्ला बल्लालजा भूमितले जयन्ति ॥

नारायणो गणितशास्त्रकलाकलापः
श्रीसेवितः सकलशास्त्रसरोजभृङ्गः ।
दैवज्ञकृष्णगुरुपादरतो गुरुर्मे
स्मायां जयत्यखिलपण्डितवन्द्यपादः ॥

मुनीश्वरापराख्येन विश्वरूपेण गुम्फ्यते ।
बुद्धिशाखे मरीच्यर्थं सत्सिद्धान्तशिरोमणिः ॥

अत्रोपपत्तिविषये तु मया यदुक्तं
तत् सर्वमेव परिभावितमस्ति मन्ये ।
मान्यान् प्रणम्य विहिताञ्जलिरेष याचे
सद्भिस्तथाऽपि परिभाव्य विशोधनीयम् ॥

ग्रन्थारम्भे विशिष्टशिष्टाचारानुमितश्रुतिबोधितनिर्विघ्नप्रारिप्सित-समाप्तिकारणं मङ्गलमाशीरूपं नमस्काररूपं च शिष्यशिक्षायै निबध्नाति ।

यत्र त्रातुमिदम्–इति ।

सः बुद्धिस्थत्वेन प्रसिद्धः । रविः सकलद्वीपदीपः । नः अस्माकम् ।

द्राक् शीघ्रम्। गिरं वाचम् । व्यनक्तु प्रकाशयतु ददात्वित्यर्थः । ननु सिद्धेच्छाविरहाद्यद्यस्य नास्ति तत् तस्येच्छाविषयमित्यस्य नियमाद्रागभावाद्रागाशमनम् । तच्चायुक्तम् । अन्यथा शब्दप्रयोगरूपकारणाभावाद्ग्रन्थारम्भोद्योगः कथमत आह । सूक्तिमुचर्मिति सुयुक्तियुक्ताम् । तथा च ग्रन्थकरणे युक्तियुक्तवाक् यदि स्फुरति तदैव ग्रन्थो भवति न तु केवलया वाचेति विशिष्टावागाशसन युक्तमिति भावः । एतेन वागभावाद्रागाशंमनमपि न सम्भवति शब्दप्रयोगाधीनत्वात् तेनाशसनवद्दृश्लोकोऽप्यन्यस्येति निरस्तम् । विलक्षणाशसनसत्त्वात् प्रसिद्धत्व विवृणोति । यत्रेति । यस्मिन् रवौ इद दृश्य जगत् त्रैलोक्य त्रातु रक्षितु निशि मृतपतितमिवोत्थापयितु समभ्युद्गते क्षितिजोर्ध्वं सम्पूर्णमण्डले निर्गते सति क्रतवो यज्ञा ज्योतिष्टोमेति सत्रादयः। वर्त्तन्ते प्रवर्त्तन्ते भवन्तीत्यर्थः । यज्ञाद्यारम्भे रात्रेर्निषिद्धत्वात् । सूर्योदयमूलदिने तद्विधानमिति भावः । सम्प्रदायविदस्तु यस्मिन् देशे यदा सूर्योदयस्तस्मिन् देशे तदैव दर्शपौर्णमासादियागाः प्रवर्त्तन्ते । 'उदिते जुहोति'—इत्युक्तत्वात् । यद्यपि जुहोतीत्यनेनाग्निहोत्रादिकं सूर्योदये भवतीति । तथाऽपि होमस्य क्रतुशब्दवाच्यत्वात् देवतामुद्दिश्य द्रव्यत्यागस्य यागस्य तत्र सत्त्वात् अग्निहोत्र कुर्वाणा बहव इति कर्त्तृबाहुल्याभिप्राय क्रतव इति बहुवचनम् । न च सूर्योदयप्रागभावेऽपि अग्निहोत्रादिक भवति—'अनुदिते जुहोति'—इत्युक्तत्वात् । कथमिदमुक्तमिति वाच्यम्। सूर्योदयासन्नपूर्वप्रागभावकाले सूर्योदयाधीने तद्विधानात् उदितहोमपक्षाङ्गीकाराद्वा न क्षतिरित्याहुः। अत एव दिवि स्वर्गे शतक्रतुमुखा इन्द्रादयो देवा दीव्यन्ति क्रीडन्ति यज्ञाशभोक्तृत्वात् । न च दीव्यन्तीति देवा इति व्युत्पत्त्या दीव्यन्तीति गतार्थमिति वाच्यम् । विशिष्टवाचकानां पदाना विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वात् रूढेर्योगापहारकत्वाच्च । एतेन ज्योतिष्टोमादियज्ञेषु प्रवृत्तेषु यज्ञभागभुजोऽत्रादिसम्पत्त्या तर्पयन्ति । अतो जगत्त्राण विनाऽर्कोदय न भवतीत्यपि परम्परया दर्शितम् । नन्वेतस्याभीष्टदाने शक्त्यभावात् कथमेतदत आह । गीर्वाणवन्द्य इति देवैर्नमस्करणीयः । तदुक्तम् * ।

* वराहमिहिरेण 'स्वल्पजातके' मङ्गलपरत्वेन ।

"यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलोऽपि ।
कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः" इति ॥

एवं च सूर्योदये सति यज्ञास्तैस्ते भुक्त्वाऽऽनन्दवन्तो भवन्तीति सूर्यः परम्परया देवक्रीडाया कारणम् । तथा च यस्मादुपकारो जातस्तस्य नमस्कारः क्रियत एवेति देववन्द्यत्वादनर्हो न भवतीति भावः । एतेन मनुष्याणां सूर्यं परमाराध्य इति सूचितम् । ननु युक्तियुक्तवागुपज्ञानमज्ञानसत्त्वे कथं स्याद्विरुद्धत्वादत आह । ध्वान्तध्वंसविधाविति । ध्वान्तस्यान्धकारस्य ध्वंसो नाशः । तं विदधातीति ध्वान्तध्वंसविधिः । तस्मिन् ध्वान्तध्वंसविधौ । तथा च यः सकलत्रैलोक्यस्थितपदार्थचाक्षुषप्रत्यक्षप्रतिबन्धकान्धकारध्वंसं करोति सोऽज्ञानान्धकारं ममाप्येकदेशस्य विनाश्य विशिष्टवागुपज्ञानं दास्यत्येवैवं च ध्वान्तमिव ध्वान्तमज्ञानान्धकारं तद्ध्वंसविधावित्यर्थः । एतेन सूर्यस्य प्रारिप्सितसमाप्तिविघ्नध्वंसकत्वं सूचितम् । तेन विघ्नपतित्वाद्विघ्ननिवारणासाधारणकारणं गणेशस्यैव नत्यादिमङ्गलं युक्तं नार्कस्येति दूषणं परास्तम् । नन्वयं देववन्द्यत्वाद्देवानामेवाभीष्टं ददाति तत्कथमुक्तमत आह । विधौतविनम्रनिःशेषदोषोच्चय इति । विधौतः प्रक्षालितः विनमता नमस्कारकर्तॄणां निःशेषदोषोच्चयः समग्रपापसमूहो येनासौ तस्मिन्निति । तथाचायं भक्तस्याभीष्टं ददाति न तु देवानामेव । तेन मत्कृतभक्तिप्रणामान्ममाप्यभीष्टं दास्यतीति भावः । ननु 'ज्ञानमिच्छेन्महेश्वरात्'—इत्युक्तत्वाद्विशिष्टवागाशंसनं सूर्यात् कथम् । 'आरोग्यं भास्करादिच्छेत्'—इत्युक्तत्वात् तस्मादारोग्याशंसनं युक्तमिति चेन्न । 'ईश्वरात् ज्ञानमिच्छेत्'—इत्युक्तत्वात् सूर्याज्ज्योतिःशास्त्रेश्वराद्युक्तम् । न चेश्वरस्यैव ज्योतिःशास्त्रेश्वरत्वं जगत्कर्तृत्वादिति वाच्यम् । 'सूर्यो ज्योतिषां श्रेष्ठः' इत्यादिवेदप्रमाणात् सूर्यस्य नक्षत्रादिप्रतिपादकज्योतिःशास्त्रेश्वरत्वात् । स्वयं न्यूनत्वरूपारोग्यार्थं वा सूर्यादभ्यर्थितं वाग्ज्ञानम् । यद्वा सूर्ये नमस्कृते ब्रह्मविष्णुमहेशा नमस्कृता भवन्तीति युक्तं त्रयीमयत्वात् । तदुक्तम् * ।

* आदित्यहृदयनाम्नि सूर्यस्तवे ।

"नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने" इति ॥

अत्र स्वोदयकाले निद्रितं जगत् सचेतनं करोतीति ब्रह्मरूपत्वम् । ततो भोजनादिना जगतः स्थितिरिति विष्णुरूपत्वम् । स्वास्तकाले जगतो निद्रारूपसंहारं करोतीति महेश्वररूपत्वम् । अतस्त्रयीमयत्वम् । अत एव सत्त्वरजस्तमोलक्षणत्रिगुणात्मत्वमिति वदन्ति । तथा चैकस्य जगत्प्रसूतिस्थितिनाशहेतुत्वं नासम्भवतीत्यर्थः ।

एतदुक्तम् ।

"विकलितं सकलं गुरुनिद्रया सपदि जागरयन् करमुद्रया ।
जनयतीव जगद्दिननायकः समुदयन्विधिरूपतयाऽनया ॥
मध्यन्दिने तद्विविधैरुपायैः पानीयपानादनादनार्त्तम् ।
संतर्पयन् विश्वमनन्तशक्तिरनन्तरूपेण दिनाधिनाथः ॥
सायंसमये संवृतसकलार्थं जगदिदं भानुः ।
निद्रामिषादकस्माच्छङ्कररूपेण संहरति"–इति ॥

पितामहसोमवसिष्ठरोमकपौलिशादिभ्यः पूर्वगणितशास्त्रप्रणेतृत्वाद्विवस्वतः प्रसादात् कस्य चिद्वचनेयं प्रादुर्भविष्यतीति सूर्यसिद्धान्तोक्तिश्रवणाच्च रवेर्वागाशंसनं युक्तमित्यन्ये । एतेन ज्योतिःशास्त्रेऽखिलकर्तृत्वं सूर्यस्य । अत्र कालस्य मुख्यतया तस्य सूर्याधीनत्वादिति परम्परया दर्शितम् । ननु सूर्यस्य ग्रहत्वाददृष्टानुरूपेण शुभाशुभसूचकत्वं न त्वभीष्टफलदाने शक्तिस्तत्कथं वागाशंसनं सूर्यात् कृतमत आह । जलजिनीबन्धाविति । स्वोदये कमलविकासात् कमलिनीबन्धौ । ननु जलाज्जातं जलजमिति व्युत्पत्त्या स्वोदयकाले कुमुदविकासाभावात् कमलिनीति किं नोक्तं साधारण्येन जलजिनीति कथमुक्तमिति चेन्न । चन्द्रोदये कुमुदविकासाच्चन्द्रद्वारा सूर्यस्य कुमुदविकासे हेतुत्वात् । तथा हि 'ग्रहर्क्षाण्यम्बुगोलकाः' इत्युक्त्वाच्चन्द्रस्याम्बुगोलस्य स्वतः किरणाभावात् । 'तेजसां गोलकः सूर्यः'–इत्यु-

क्तत्वात् सूर्यस्य तेजोमयत्वात् सूर्यकिरणसम्पर्काच्चन्द्रस्य किरणवत्त्वात्। विना किरणसंयोगं कुमुदिन्या विकासो न स्यादिति जलजशब्दः कमले रूढोऽस्तीति वा। तथा चाचेतनाया जलजिन्या अकारणबन्धुः स सर्वोपकारी भक्तिप्रणामरूपकारणान्ममाप्यभीष्टार्थं दास्यतीति किं चित्रमिति भावः। यो देववन्द्यः स मनुष्यवन्द्यः सुतरामिति नमस्काररूपं मङ्गलं गीर्वाणवन्द्य इत्यनेन विनमद्भिःशेष इत्याद्यनेन च कृतमिति ध्वनितम्। मङ्गलस्य समाप्तिजनकत्वं विघ्नध्वंसजनकत्वं चेत्यादिविचारो विस्तरभयात् प्रकृतानुपयुक्तत्वाच्च ग्रन्थान्तरे प्रसिद्धत्वाच्च न निरूपितः। इदं पद्यम्।

"सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्"।

इति 'वृत्तरत्नाकरो'-क्तलक्षणाच्छार्दूलविक्रीडितम्। एतज्ज्ञानार्थम्

"सर्वगुर्मो मुखान्तर्लो यरावन्तगलौ सतौ
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः"—इति ॥

गणज्ञानं सर्वत्र ज्ञेयम्।

"संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम्।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" ॥

इति गुरुज्ञानमेतदन्यल्लघुरिति गणोपयुक्तज्ञानम्।

अत्र पूर्वस्थितमगणफलं श्रीः।

"मो भूमिस्त्रिगुरुः श्रियं य उदको पुत्रं ददात्यादिलो
रो मध्ये लघुरग्निमृत्युमनिलो देशाटनं सोऽन्त्यगुः।
तो व्योमान्तलघुर्धनापहरणं जोऽर्को रुजं मध्यगु-
र्भश्चन्द्रो यश उज्ज्वलं मुखगुरुर्नो नाकमायुस्त्रिलः" ॥

इति गणफलसंग्रहश्लोकोक्तत्वादित्यलमेतद्विचारेण ॥ १ ॥

इदानीं पूर्वाचार्याणां प्रशंसनं सविनयमाह।

**कृती जयति जिष्णुजो गणकचक्रचूडामणि-**
**र्जयन्ति ललितोक्तयः प्रथिततन्त्रसद्युक्तयः।**

**वराहमिहिरादयः समवलोक्य येषां कृतीः**
**कृती भवति मादृशोऽप्यतनुतन्त्रबन्धेऽल्पधीः ॥ २ ॥**

**वा. भा.**—स्पष्टार्थमिदम् ॥ २ ॥

**वा. वा.**—गणिताचार्यप्रशंसापूर्वकं साधनभूयस्त्वे फलभूयस्त्वमिति न्यायमाश्रित्य मङ्गलमाचरति कृती—इति ॥ २ ॥

**मरीचिः**—अथ गुरुग्रन्थारम्भे बहुविघ्नसंशयात् पूर्वाचार्यप्रशंसारूपं मङ्गलान्तरं निबध्नाति कृती—इति । जिष्णुजो ब्रह्मगुप्ताचार्यो जयति सर्वोत्कर्षेणास्ति । सर्वोत्कृष्टत्वं कथमत आह । कृतीति कुशलः सर्वशास्त्र इति शेषः । तथा च सर्वशास्त्राध्यापक इत्यर्थः । ततः किं सर्वशास्त्राध्यापकः सर्वपण्डितेभ्य उत्कर्षाभावादत आह । गणकचक्रचूडामणिरिति । ज्योतिर्वित्समूहशिरोमणिः । तद्गुणानिर्वचनात् । एतस्य सर्वोत्कृष्टत्वं पृथूदकस्वामिनैतत्कृतब्रह्मसिद्धान्तटीकायामादौ दर्शितम् ।

"यत् सूक्ष्मं गतिवित्तये व्यरचयं शास्त्रं ग्रहाणामहं
तस्योच्छित्तिरिहास्ति विस्तरभयान्माभूदितीवात्मभूः ।
सङ्क्षिप्तीकरणाय जिष्णुतनयव्याजेन यस्मादभूत्
तस्मादेव च तत्त्वबोधनिपुणास्तं ब्रह्मगुप्तं जगुः" ॥

इति द्वितीयश्लोकेन । अत एव समाप्तपुनरात्तत्वं न दोषः । "अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः" इत्यत्र प्रमाणाधिकत्वस्येव गणकचक्रचूडामणित्वस्य प्रकृतसम्पादकविशेषणत्वात् । अन्वयोपपत्तिमद्वाक्ये विशेषणं समाप्तपुनरात्तमित्यत्र विशेषणपदेन प्रकृतानुपयुक्तविशेषणस्य विवक्षितत्वात् । अन्यात् स्तौति । जयन्तीति । वराहमिहिरादयः । आदिपदाल्लल्लश्रीपतिभट्टार्यभटाचार्यादयः । जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । तेन सर्वोत्कर्षतस्यापेक्षयोत्कर्षस्वीकृत्वान्मानसनमस्कारकरणात् तानहं प्रणतोऽस्मीति लभ्यते । सर्वोत्कृष्टत्वं कुतोऽत आह । ललितोक्तय इति । ललिताः सुन्दर्य उक्तयो युक्तयो वचनानि च येषां ते ।

एतादृशाना सर्वोत्कृष्टत्वं स्वतः सिद्धमिति भावः। एतादृशत्वे किं मानमत आह। प्रथिततन्त्रसद्युक्तय इति। प्रथितानि उक्तानि प्रसिद्धानि तन्त्राणि शास्त्राणि तेषु सत्यः समीचीना युक्तयो विद्यन्ते येषा ते। तथा च पञ्चसिद्धान्तिकादिप्रवरग्रन्थाना सत्त्वादेव प्रमाणमिति भावः। नन्वेषा कठिनत्वेन तज्ज्ञानाशक्यत्वात् सर्वोत्कर्षज्ञान कथ स्यादत आह। समवलोक्येति। एषा वराहमिहिराचार्यादीना कृतीः शास्त्राणि समवलोक्य सम्यक् दृष्ट्वा ज्ञात्वेति यावत्। मादृशो मत्सदृशोऽल्पधीरपि अल्पबुद्धीनामवधिः। अतनुतन्त्रबन्धे महाशास्त्रकरणे कृती समर्थो भवति। सुबुद्धयस्तु सुतरा भवन्तीत्युक्तप्रायम्। तथा च तद्ग्रन्थानां पठनादिना तज्ज्ञान स्यात्। येषा ग्रन्थानामेतादृशः प्रभावस्ते सर्वोत्कर्षेण वर्त्तन्त एवेति किं चित्रमिति भावः। अत्र ग्रन्थे जिष्णुज इत्यनेन ब्रह्मगुप्ताङ्गीकृतागम एव मूलमिति ध्वनितम्। "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु." इति लक्षणात् पृथ्वीवृत्तमिदम्॥ २॥

इदानीमात्मनः कर्त्तृत्वारम्भणीयस्य च सम्बन्धार्थमाह।

**कृत्वा चेतसि भक्तितो निजगुरोः पादारविन्दं ततो**
**लब्ध्वा बोधलवं करोति *सुमतिप्रज्ञासमुल्लासकम्।**
**†सद्वृत्तं ललितोक्तियुक्तममलं लीलावबोधं स्फुटं**
**सत्सिद्धान्तशिरोमणिं सुगणकप्रीत्यै कृती भास्करः॥३॥**

**वा. भा** —इदमपि सुगमम्॥ ३॥

**वा. वा** —निजगुरुचरणारविन्दध्यानपूर्वकं तल्लब्धप्रसादश्चिकीर्षितं प्रतिजानीते कृत्वेति। 'विमतिप्रज्ञा'—इत्यपि पाठः साधीयान् महोत्कर्षाधायकत्वात्। अनेन विशेषणेन मुनिकृतशास्त्राद्विशेषः सूचितः। सद्युक्तिमित्यनेनार्यभटशास्त्राल्ललितोक्तियुक्तमिति वराहादिशास्त्रादमलमिति लल्लश्रीपतिप्रणीतशास्त्राद्बालावबोधमिति ब्रह्मगुप्तशास्त्रात्

---

* सद्युक्तिम्—इति वासनावार्त्तिककारनृसिंहसम्मत. पाठ.।

† विमतिप्रज्ञा—इत्यपि वासनावार्त्तिककारसम्मत पाठः।

स्फुटमिति पितामहादिसिद्धान्ताद्विशेषः सूचितः । एतावता विशेषण-व्यूहेनैतावद्विशेषजिज्ञासुरधिकारीति सूचितम् । एतद्ग्रन्थकरणफलं सुगण-कप्रीतिरित्युक्तम् ॥ ३ ॥

**मरीचिः**—अथ

"सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धकथनाद्यतः ।
तस्मात् सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते ॥
किमेवात्राभिधेयं स्यादिति पृष्टस्तु केन चित् ।
यदि न प्रोच्यते तस्मै फलशून्यं तु तद्भवेत् ॥
सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्य चित् ।
यावत् प्रयोजनं नोक्तं तावत् केन न गृह्यते" ॥

इत्युक्तत्वात् प्रवृत्त्यङ्गविषयप्रयोजनसम्बन्धाधिकारिणः स्वकीर्त्य-नुवृत्तये स्वनाम च प्रदर्शयन् शिष्यावधानार्थं चिकीर्षितं शार्दूलविक्रीडि-तवृत्तेन प्रतिजानीते ।

कृत्वा—इति । भास्करो भास्करशर्मा प्रसिद्धाचार्यः । निजगुरोः गुरुशब्दस्य पितृवाचकत्वात् स्वपितुः । पादारविन्दं पादकमलयोरभेदवर्ण-नप्रसिद्धेः । चेतसि कृत्वा तद्विषयकं ध्यानं कृत्वेत्यर्थः । ननु शिष्टाचारभी-त्याऽऽपाततस्तद्ध्यानं न मनःपूर्वकं तेन साङ्गाद्विहितकर्मणः फलावश्य-म्भावादसाङ्गात् फलसिद्धिः कथमत आह । भक्तित इति । आराध्यत्वेन ज्ञानरूपभक्त्या मनःपूर्वकमेव ध्यानं भवतीति फलसिद्धौ बाधकाभाव इति भावः । ततः पितुः सकाशात् बोधलवं ज्ञानांशं लब्ध्वा प्राप्य ।

"आसीन्महेश्वर इति प्रथितः पृथिव्या-
माचार्यवर्यपदवीं विदुषां प्रयातः ।
लब्ध्वाऽवबोधकलिकां तत एव चक्रे
तज्जेन बीजगणितं लघु भास्करेण" ॥

इति बीजसमाप्तावुक्तत्वात् पिता एव गुरुरिति युक्तोऽर्थः । न तु निजगुरोरित्यस्य यथाश्रुतोऽर्थो गुरोः सकाशादवश्यं ज्ञानप्राप्तेः सत्त्वात् ।

ततो बोधलवमित्यस्य व्यर्थतापत्तेः। सत्सिद्धान्तशिरोमणिं सन्तः समीचीना एव सिद्धान्ताः सिद्धान्तपदार्थनिरूपकग्रन्थानामपि सिद्धान्तपदवाच्यत्वात् तेषां शिरोमणिस्तम्। यथा मणिनाऽन्धकारस्थितपदार्थज्ञाने चाक्षुषज्ञानं भवति तथाऽनेन ग्रन्थेन पूर्वसिद्धान्तान्धकारस्थितगूढपदार्थज्ञानं भवतीति मणित्वम्। मणेः शिरसि स्थापनादस्य शिरोमणित्वं युक्तम्। करोतीत्यत्र करोमीति युक्तम्। नन्वस्य ग्रन्थकरणसामर्थ्याभाव इत्यत आह। क्षतीति कुशलः। ततो लब्ध्वा बोधलवम्। तेन सर्वशास्त्रज्ञ इत्यर्थः। य एतादृशस्तस्य ग्रन्थकर्त्तृत्वं स्वाभाविकमिति भावः। एतेन स्वकपोलकल्पितत्वशङ्का निरस्ता। ननु त्वद्ग्रन्थस्याङ्गीकारं कोऽपि न करोति द्वेषात् तेन त्वत्प्रयासो व्यर्थोऽत आह। सुगणकप्रीत्या इति। सुसाधवो ये गणकाः सिद्धान्तग्रन्थज्ञास्तेषां प्रीतिः सन्तोषस्तदर्थम् "परगुणपरमाणून् पर्वतीकृत्य" इत्यादिस्वभावानां ग्रन्थालोकनेन तद्विशेषज्ञानाच्चमत्कारोत्पत्तेः पुनर्ग्रन्थावलोकने प्रीतिस्ततस्तेषां ग्रन्थाङ्गीकारः स्वतो भवतीत्यत्रापि युक्तिवैचित्र्यदर्शनेन तेषामङ्गीकारो भवत्येवेति भावः। दुष्टानां द्वेषाकुलचित्तानां चमत्काराभावात्। ननु सुगणकानां पूर्वग्रन्थाध्ययनादिना ज्ञानसिद्धेः केवलं विलोकनेनायं ग्रन्थो न तेषां कार्यकरोऽत आह सुमतिप्रज्ञासमुल्लासकमिति। सुमतीनां प्रज्ञायाः समुल्लासकरमित्यर्थः। तथा च ग्रन्थावलोकनेन युक्तिवैचित्र्यदर्शनात् तेषामपि तद्विचारेऽधिकयुक्तिस्फुरणात् बुद्धिप्रसरकरोऽत एव चमत्कारात् प्रीतिरिति भावः। विमतिपाठस्तु प्रामादिकः। ये विमतयस्तेषां प्रज्ञाभावात् स्वरूपासिद्धेः। एतेन विमतिप्रज्ञेत्यपि पाठः साधीयान् महदुत्कर्षाधायकत्वादिति परास्तम्। आर्यभटादिग्रन्थानुरोधादत्रार्याः कृता भविष्यन्ति तास्तु पठने न युक्ता अत आह सद्वृत्तमिति। सन्ति समीचीनानि वृत्तानि शार्दूलविक्रीडितेन्द्रवज्राप्रहर्षिण्यादीनि यत्र तम्। तथा च क्वचिदत्रार्याणां सत्त्वेऽप्यन्यवृत्तानां बहुधा सत्त्वात् पठने युक्तोऽयं ग्रन्थ इति भावः। अत्र द्वितीयपाठे युक्तिराहित्यात् सुमतिप्रज्ञासमुल्लासकः कथमत आह। सद्युक्तमिति। समीचीनयुक्त्यन्वितमित्यर्थः।

तेन युक्तिराहित्याभावाद्युक्तमिति भावः । सद्वृत्तसत्त्वेऽपि पदलालित्या-भावात् पठने न युक्तस्तादृशो द्वितीयपाठाभासोक्तिश्चात आह ललितो-क्तियुक्तमिति । ललिताः सुन्दर्य उक्तयो युक्तयो वचनानि च तद्युक्तमि-त्यर्थः । द्वितीयपाठानुरोधेन सुन्दरशब्दयुक्तमित्यर्थस्तेन न पौनरुक्त्यम् । तथा च पदलालित्याभावाभावादिना युक्तोऽयमिति भावः । नन्वार्यभ-टोक्तशास्त्रवत् सदूषणो भविष्यत्यत आह । अमलमिति । तत्त्वाप्रतिपा-द्ययुक्तिर्मलस्तद्रहित निर्दूषणमित्यर्थः । विचारपूर्वककरणात् । ब्रह्मगुप्तो-क्तसिद्धान्तवद्बहुदुर्बोधो भविष्यतीत्यत आह लीलावबोधमिति । बाला-नामिति शेषः । किञ्चिदुपदेशेनैतज्ज्ञान तेषा भवतीत्यर्थः । ननु तेषा सुगमत्वेऽपि प्रेक्षावतामेतच्चवीनत्वेनापठनात् कथ बोधो भविष्यतीत्यत आह । स्फुटमिति स्पष्टार्थम् । सिद्धान्तेत्यनेन सिद्धान्तोक्तपदार्था विषयाः । सिद्धान्तशिरोमणि करोमीत्यनेन प्रतिपाद्यप्रतिपादकभावलक्षणः सम्ब न्धः । गुरुतरास्तु—'ज्ञातेऽपि विषये वेदबाह्यैर्हेतुकैराधुनिकैः कल्पित न पारम्पर्यागतमिति स्रशयेन नूतनकल्पितमेवेद शास्त्रमिति भ्रमेण वा प्रेक्षा-वन्तः शिष्टा न प्रवर्त्तेरन् । तदर्थं पारम्पर्यसम्बन्धकथनमावश्यकम् । तच्च सिद्धान्तशिरोमणि करोमीत्यनेन कृतमेव । तथा हि सिद्धान्तस्य वक्ष्यमा-णोक्तयुक्त्या ज्यौतिषत्व ततो वक्ष्यमाणविधिना वेदाङ्गत्व वेदाङ्गत्वाद्ब्र-ह्मणः सकाशाद्वसिष्ठादिद्वारा पारम्पर्यागतमित्युक्त भवति । तदुक्त नार-देन । "अस्य शास्त्रस्य सम्बन्धो वेदाङ्गमिति धातृतः" इति'—इति प्राहुः । प्रयोजन च पदार्थतत्त्वज्ञानम् । परम्परयाऽन्यदप्यग्रे वक्ष्यति । तज्जिज्ञा-सुरधिकारी स द्विज एवेत्यग्रे वक्ष्यति । न च विषयादिप्रकृत्यङ्गसत्त्वात् पूर्वसिद्धान्तेष्वेव प्रवृत्तिः किमर्थमत्र प्रवृत्तिर्विशेषाभावादिति वाच्यम् । सद्युक्तमित्यादिविशेषणैः पूर्वग्रन्थेभ्यो विशेषसद्भावसूचनात् । तथा हि-सद्युक्तमित्यार्यभटशास्त्राल्ललितोक्तियुक्तमिति वराहादिशास्त्रादमलमिति लल्लशास्त्राल्लीलावबोधमिति ब्रह्मगुप्तशास्त्रात् स्फुटमिति पितामहशा-स्त्राद्विशेषसूचित इत्येकदेशिनः ॥ ३ ॥

इदानीं ग्रन्थस्यावारम्भकारणं विशिष्टमारम्भे कारणान्तरं पूर्वार्धे-नाभिधायोत्तरार्धेन सुजनगणकान् प्रार्थयन्नाह ।

**कृता यद्यप्याद्यैश्चतुरवचना ग्रन्थरचना**
**तथाऽप्यारब्धेयं तदुदितविशेषान् निगदितुम् ।**
**मया मध्ये मध्ये त इह हि यथास्थाननिहिता**
**विलोक्याऽतः कृत्स्ना सुजनगणकैर्मत्कृतिरपि ॥ ४॥**

**वा. भा**—आद्यैराचार्यैर्यद्यपि चतुरवचना श्लक्ष्णा ग्रन्थरचना कृता तथा-ऽपि मयाऽऽरब्धा। इदमः प्रस्तुतनिर्देशादियमीदृशी चतुरवचना अचतुरव-चना वा। यद्यचतुरवचना तर्हि किमारम्भणीया तदर्थमाह। तदुदितविशे-षान् निगदितुमिति। यत् तैरुदित तत् तदुदित तस्माद्ये विशेषास्ते तदुदितविशेषाः। ये तैर्नोक्ता इत्यर्थः। अथ सुजनान् प्रत्याह। सुज-नाश्च ते गणकाश्च सुजनगणकास्तैरिय मत्कृतिरपि विलोक्या। अपिशब्द समुच्चयार्थे। तेन हे सुजनगणका भवद्भिर्ब्रह्मादीना कृतयः किल विलो-किताः। इदानीं मत्कृतिरपि मदुपरोधेन विलोक्या। यदि विलोक्या तर्हि कृत्स्ना समग्रा। किमिति। हि यस्मात् कारणात् ते विशेषा इहा-स्मिन् ग्रन्थे मया मध्ये मध्ये यथास्थान यथावसरं निहिता निक्षिप्ताः। कृत्स्नग्रन्थविलोकनेन विना सर्वे न ज्ञायन्त इत्यर्थः ॥ ४ ॥

**वा वा.**—नन्वेते विशेषाः सिद्धान्तचूडामणिप्रभृतिष्वपि वर्त्तन्ते कृतमनेन ग्रन्थप्रणयनेनेत्यत आह कृता इति। असङ्गतिप्रलापस्तु प्रेक्षावतामनवधेयो भवतीति यथास्थान एव विशेषा अभिहिता इत्याह मया मध्ये मध्ये-ऽत इह हि यथा स्थाननिहिता इति। विशेषावगतये मत्कृतिर्विलोक्यापि मदुपरोधेन कृत्स्नाऽपि द्रष्टव्येति। सुजनान् प्रार्थयते विलोक्याऽतः कृत्स्ना सुजनगणकैर्मत्कृतिरपि। अत्रापिशब्दो भिन्नक्रमः। विलोक्या मत्कृतिः कृत्स्नाऽपि द्रष्टव्येत्यर्थः ॥ ४ ॥

**मरीचिः**—ननु पूर्वविशेषणविशिष्टैतद्ग्रन्थात् पूर्वग्रन्थोक्तपदार्थानामना-यासेन ज्ञान सम्भवति। एतद्ग्रन्थस्य स्फुटत्वाच्च तदाधिक्यज्ञानमिति पूर्व-

शक्यो वोढव्यः । वहनीयो वाह्य. । लिङा बाधा माभूदिति कृत्योक्तिः । लाघवादनेनैव ज्ञापनसम्भवे प्रैषादिसूत्रे कृत्याश्चेति सुत्यजम् । कृत्याश्चेति सूत्र अर्हे कृत्यतृचोर्ग्रहणं क्तिच् क्तौ चेति क्तग्रहणञ्च ॥

### आशिषि लिङ्लोटौ । ३ । ३ । १७३ ॥

भवानचिरं जीव्यात् जीवतु वा ॥

### क्तिच्क्तौ च संज्ञायाम् । ३ । ३ । १७४ ॥

धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम् ॥ तितुत्रेति नेट् । भवतात् भूति । वन्तिः । तन्तिः । देवा एनं देयासुर्देवदत्तः । क्तिचा बाधा माभूदिति पुनः क्तविधिः ॥

### माङि लुङ् । ३ । ३ । १७५ ॥

सर्वलकारापवादः ॥ मा कार्षी । कथ मा भवतु मा भविष्यतीति । नाय माङ् किन्तु माशब्दः ॥

### स्मोत्तरे लङ् च । ३ । ३ । १७६ ॥

स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ॥ मा स्म करोत् । मा स्म कार्षीत् ॥

इति श्रीव्याकरणदीपिकाया वृत्तौ तृतीयस्याध्यायस्य तृतीयः पादः समाप्त. ॥



# अथ तृतीयाध्यायस्य चतुर्थः पादः ।

---

## धातुसम्बन्धे प्रत्ययाः ।३।४।१॥

धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः ॥ तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्य. प्रत्ययाः । वसन् ददर्श । भूते लट् । अतीतवासकर्तृकर्तृक दर्शनमर्थः । सोमयाज्यस्य पुत्रो भविता । सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृक भवनम् । प्रत्ययाधिकारे पुनः प्रत्ययग्रहणं अधात्वधिकारविहितप्रत्ययानामपि धात्वर्थसम्बन्धे सति कालभेदे साधुत्वं यथा स्यात् । गोमानासीत् । गोमान्भवितेति । न च तदस्यास्तीत्यत्र सङ्ख्यावद्वर्तमानकालोऽविवक्षित इति वाच्यम् । दण्डिनमानयेत्युक्ते ऽतीतदण्डस्याप्यानयनापत्तेः ॥

## क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ।३।४।२॥

पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात् तस्य च हिस्वौ स्तः । तिङामपवादः । तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसञ्ज्ञौ स्तस्तिङ्संज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः ॥ पुरुषैकवचनसञ्ज्ञे तु नानयोरतिदिश्येते । हिस्वविधानसामर्थ्यात् । तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि । आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु ॥

**समुच्चये ऽन्यतरस्याम् । ३ । ४ । ३ ॥**

अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात् ॥

**यथाविध्यनुप्रयोगः पूर्वस्मिन् । ३ । ४ । ४ ॥**

आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः ॥

**समुच्चये सामान्यवचनस्य । ३ । ४ । ५ ॥**

समुच्चये लोड्विधाने सामान्यार्थस्य धातोरनुप्रयोगः स्यात् ॥ अनुप्रयोगाद्यथायथ लडादयस्तिबादयश्च । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः । क्रियासमभिहारे द्वे वाच्ये इति द्वित्वम् । याहि याहीति याति । पुनःपुनरतिशयेन वा यानं ह्यन्तस्यार्थः । एककर्तृकं वर्तमानं यानं यातीत्यस्य । इतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयति । एवं यातः । यान्ति । यासि । याथः । यात यातेति यूयं याथ । याहि याहीत्ययासीत् । यास्यति वा । अधीष्वाधीष्वेत्यधीते । ध्वविषये पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे । समुच्चये तु सक्तून् पिब धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेत्यभ्यवहरते । तध्वमोऽस्तु पिबत खादतेत्यभ्यवहरथः । भुङ्ग्ध्वमास्वादध्वमित्यभ्यवहरध्वे । पक्षे हिस्वौ । अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः । पक्षे सक्तून् पिबति । धानाः खादति । अन्नं भुंक्ते । दाधिकमास्वादते । एतेन ॥

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥

इति व्याख्यातम् । अवस्कन्दनलवनादिरूपा भूतानद्यतन-

नपरोक्षा एककर्तृका अस्वास्थ्या क्रियेत्यर्थात्। इह पुनःपुनश्चस्कन्दे-त्यादिरर्थे इति तु व्याख्यानं भ्रममूलकमेव। द्वितीयसूत्रे क्रियासमभिहार इत्यस्याननुवृत्तेः । लोडन्तद्वित्वापत्तेश्च । पुरीमवस्कन्दे-त्यादि मध्यमपुरुषैकवचनमित्यपि केषाञ्चिद् भ्रम एव । पुरुषवचनसंज्ञे इह नेत्युक्तत्वात् ॥

## छन्दसि लुङ्लङ्लिटः । ३ । ४ । ६ ॥

धात्वर्थानां सम्बन्धे सर्वकालेष्वेते वा स्युः ॥ देवो देवेभिरागमत् । लोडर्थे लुङ् । इदं तेभ्यो करं नमः । कृमृदृरुहिभ्यश्छन्दसीति च्लेरङ् । ऋदृशोऽङि गुणः । लङ् । अग्निमद्य होतारमवृणीतायं यजमानः । लिट् । अद्या ममार । अद्य म्रियत इत्यर्थः । उदाहरणेषु धातुसम्बन्धो मृग्यः ॥

## लिङर्थे लेट् । ३ । ४ । ७ ॥

विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि ॥ प्रण आयूंषि तारिषत् । सुपेशसस्करति जोषिषद्धि ॥

## उपसंवादाशङ्कयोश्च । ३ । ४ । ८ ॥

पणबन्धे आशङ्कायाञ्च लेट् स्यात् छन्दसि ॥ अहमेव पशूनामीशै । उत्तमैकवचनमिट् । टेरेत्वस्य वैतोऽन्यत्रेत्यैः । नेज्जिह्मायन्तो नरकं पताम । स उत्तमस्येति सलोपः । पूर्वेण सिद्धे वचनमिदं न कार्यम् । यस्मादुपसंवादः कर्तव्ये पणबन्धः । यदि मे भवानिदं कुर्यादहमपि ते इदं दद्यामिति । तत्र करणन्तु हेतुर्दानं हेतुमत् । आशङ्काऽपि कारणात्कार्योत्प्रेक्षेति हेतुहेतुमद्भाव इति लिङर्थे एवोपसंवादाशङ्के इति केचित्तावदाहुः । अपरे त्वाहुः । करणमवधिर्दानमवधिमदित्यवध्यवधिमद्भाव एव उपसंवादे प्रतीयते न

तु हेतुहेतुमद्भावः । आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीति । लोकेऽपि लिङ्प्रयोगसिद्धये उपसंवादाशङ्कयोरवश्यवक्तव्यो लिङिति लिङर्थ एवोपसंवादाशङ्के इति ॥

**तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः । ३ । ४ । ९ ॥**

तुमर्थो भावः । कथं ज्ञायते । वचनसामर्थ्यात्तावदयं कर्तुरपकृष्यते । न चान्यस्मिन्नर्थे आदिश्यते । अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति । स्वार्थश्च धातूनां भावः । तत्र छन्दसि धातोः सयादयः स्युः ॥ से । वक्षे रायः । सेन् । ता वामेषे । असे । शरदे जीवसे धाः । असेन् । नित्त्वादाद्युदात्तः । क्से । प्रेषे । कसेन् । गवामिव श्रियसे । अध्यै । अध्यैन् । जठरं पृणध्यै । पक्षे आद्युदात्तः । कध्यै । कध्यैन् । आहुवध्यै । पक्षे नित्स्वरः । शध्यै । राधसः सहमादयध्यै । शध्यैन् । पिबध्यै । तवै । दातवा उ । तवेङ् । सूतवे । तवेन् । कर्तवे ॥

**प्रयै रोहिष्यै अव्यथिष्यै । ३ । ४ । १० ॥**

एते तुमर्थे निपात्यन्ते छन्दसि । प्रयातु रोढुमव्यथितुमित्यर्थः ॥

**दृशे विख्ये च । ३ । ४ । ११ ॥**

द्रष्टुं विख्यातुमित्यर्थः ॥

**शकि णमुल्कमुलौ । ३ । ४ । १२ ॥**

शक्नोतावुपपदे तुमर्थे एतौ स्तश्छन्दसि ॥ विभाजं नाशकत् । अपलुपं नाशकत् । विभक्तुमपलोप्तुमित्यर्थः ॥

ईश्वरे तोसुन्कसुनौ । ३ । ४ । १३ ॥

ईश्वरशब्दे उपपदे इत्यर्थः ॥ ईश्वरो विचरितोः । ईश्वरो विलिखः । विचरितुं विलेखितुमित्यर्थः ॥

कृत्यार्थे तवैकेन्केन्यत्वनः । ३ । ४ । १४ ॥

न म्लेच्छितवै । अवगाहे । दिदृक्षेण्यः । भूर्यस्पष्टकर्त्वम् ॥

अवचक्षे च । ३ । ४ । १५ ॥

रिपुणा नावचक्षे । अवख्यातव्यमित्यर्थः ॥

भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् । ३ । ४ । १६ ॥

कृत्यार्थे इति निवृत्तम् । भावो लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यश्छन्दसि तुमर्थे तोसुन्स्यात् ॥ आसंस्थातोः सीदंति । आसमाप्तेः सीदन्तीत्यर्थः । उदेतोः । अपकर्तोः । प्रवदितोः । प्रचरितोः । होतोः । आतमितोः । काममाविजनितोः संभवाम: ॥

सृपितृदोः कसुन् । ३ । ४ । १७ ॥

भावलक्षणे इत्येव ॥ पुरा क्रूरस्य विसृपो विरप्शिन् । पुर जतृभ्य आतृदः ॥

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा । ३ । ४ । १८ ॥

छन्दसि भावलक्षणे इति निवृत्तम् । प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् ॥ प्राचां ग्रहणं पूजार्थम् । वासरूपेणालं रोदनेनेत्यस्य सिद्धेः । न च क्तल्युडादिषु स निषिद्धः । तेऽपवादभूताः स्वबाध्यं नित्यं बाधंते इति हि तस्यार्थः । इह तु ल्युटोऽपवादः क्त्वेति वैषम्यात् । प्रैषादिषु कृत्यवचनेन स्त्र्यधिकारादूर्ध्वं वासरू-

पविधिः क्वचिन्नेत्यस्य ज्ञापितत्वेऽपीह तदभ्युपगमे बाधकाभावाच्च । अमैवाव्ययेनेति नियमान्नोपपदसमासः । अलं दत्वा । अलं बाले रुदित्वा । पीत्वा खलु । अलखल्वोः किम् । मा कार्षीत् । प्रतिषेधयोः किम् । अलङ्कारः । भावे घञ् ॥

## उदीचां माङो व्यतीहारे । ३ । ४ । १९ ॥

व्यतीहारेऽर्थे माङः क्त्वा स्यात् ॥ अपूर्वकालार्थमिदम् । अपमित्य याचते । अपमाय । उदीचां ग्रहणाद्यथाप्राप्तमपि । याचित्वा अपमयते ॥

## परावरयोगे च । ३ । ४ । २० ॥

परेण पूर्वस्यावरेण परस्य च योगे गम्ये धातोः क्त्वा स्यात् ॥ परावरशब्दयोः सम्बन्धिशब्दत्वाद्यदपेक्षं परावरत्वं गम्यते तयोः परावराभ्या योगो बोध्यः । तत्र यस्य यत्क्रियाद्वारकः सम्बन्धस्तद्वाचकात् क्त्वा । अप्राप्य नदीं पर्वतः । परनदीयोगोऽत्र पर्वतस्य अप्राप्येत्येतद्द्वारको गम्यते । दक्षिणदेशस्थपुरुषकर्तृकनदीकर्मकप्राप्तिप्रागभावविशिष्टदेशस्थ इत्यर्थः । अतिक्रम्य पर्वतं स्थिता नदी । अवरपर्वतयोगोऽत्र नद्या अतिक्रम्येत्येतद्द्वारको गम्यते । दक्षिणदेशस्थकर्तृकपर्वतकर्मकप्राप्तिध्वंसविशिष्टदेशस्थेत्यर्थः ॥

## समानकर्तृकयोः पूर्वकाले । ३ । ४ । २१ ॥

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् ॥ क्त्वा तु अव्ययकृतो भावे इति भावे । तुमर्थे इत्यनुवृत्तेर्वा । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । स्नात्वा भुक्त्वा पीत्वा व्रजति । कथं मुखं व्यादाय स्वपिति, नेत्रे निमील्य हसतीति । व्यादानसम्मीलनोत्तरकालेऽपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया भविष्यति । अथेह

कस्मान्न भवति पूर्वं भुंक्ते पश्चाद्व्रजतीति । पौर्वकालस्य स्वशब्देनोक्ततया धातोः स्वार्थमात्रवृत्तित्वात् । धातोः पूर्वकालविशिष्टक्रियावृत्तितायां सत्या पूर्वकाले द्योत्ये हि क्त्वादिर्विधीयते न तु विषये इति कैयटः । पूर्वशब्दस्यात्र क्रियापौर्वकाल्यवाचित्वादग्रादिसूत्रेणापि न । अग्रादीनां साधनपौर्वकालविषयाणां तत्र ग्रहणात् । तथा विवक्षायां तु पूर्वं भुक्त्वा भोजं वा ततो व्रजतीति क्त्वाणमुलौ भवत एव । आस्यते भोक्तुमित्यत्र तु भुजेरपूर्वकालत्वान्न भवति । आसेस्तु वासरूपेण लट् भवति । यदा त्वासेः क्त्वा भवति तदा भुजेस्तुमुन्न भवति । अनभिधानात् । न ह्यासित्वा भोक्तुमित्याद्यभिधानमस्ति । तुमुनन्तार्थस्य स्वार्थफलकक्रिया प्रति विशेषणत्वनियमात् । क्त्वान्तार्थस्य च स्वोत्तरकालक्रिया प्रति विशेषणत्वनियमात् । न चैतदुभय युगपत्संभवति । तस्माल्लडादय एव भुजेर्भवन्ति । आसित्वा भुङ्क्ते इति । समानकर्तृकयोः किम् । ब्राम्हणस्य भोजने व्रजति देवदत्तः । श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते इत्यादौ तु स्थितस्येत्यादि यथासम्भवमध्याहार्यम् ॥

## आभीक्ष्ण्ये णमुल् च । ३ । ४ । २२ ॥

पौन पुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च ॥ द्वित्वम् । स्मार स्मारं नमति शिवम् । स्मृत्वा स्मृत्वा । वासरूपेण क्त्वः सिद्धावपि विभाषाग्रेडति सूत्रेणोभयोर्विधानाय तदनुवृत्तिः ॥

## न यद्यनाकाङ्क्षे । ३ । ४ । २३ ॥

यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न यत्र पूर्वोत्तरक्रिये तद्वाक्यमपरं नाकाङ्क्षति चेत् ॥ यदयं भुङ्क्ते ततः पठति । इह क्त्वाणमुलौ न । पूर्वकाले यत्प्राप्नोति तन्नेति व्याख्यानेन प्रकरणापेक्षयैव प्रतिषेधोपग-

मात् सूत्रान्तरप्राप्तोऽपि क्त्वा न भवति । अनाकाङ्क्षे किम् । यदयं भुक्त्वा व्रजति ततोऽधीते ॥

## विभाषाग्रेप्रथमपूर्वेषु । ३ । ४ । २४ ॥

अप्राप्तविभाषेयम् । आभीक्ष्ण्ये इति नानुवर्तते । एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः ॥ अग्रे भोजं व्रजति । अग्रे भुक्त्वा । प्रथमं भोजम् । प्रथमं भुक्त्वा । पूर्वं भोजम् । पूर्वं भुक्त्वा । अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वेत्यर्थः । यदि तु अग्रेप्रभृतिभिर्व्रजनादिक्रियापेक्षं भुज्यादेः पूर्वकालत्वमुच्येत तदा क्त्वाणमुलौ न स्यातामेव । ताभ्यां द्योत्यस्य पूर्वकालत्वस्याग्रेप्रभृतिभिरेव निर्णीतत्त्वात् । साधनपौर्वकाल्यविषयाग्राद्युपपदेऽस्य चरितार्थत्वात् । विभाषोक्तेः पक्षे लडादयः । अग्रे भुङ्क्ते ततो व्रजति । ननु च वासरूपेण सिद्धा एव ते । एवं तर्हि क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्नास्तीत्यनेन ज्ञाप्यते । तेनाभीक्ष्ण्ये पौर्वकाल्ये लडादयो न भवन्ति । एतदर्थमेव केवले णमुलि विधीयमाने विभाषोक्तिरभिमतार्थं ज्ञापयितु न प्रभवेदिति क्त्वाप्यनूद्यते । अन्यथा साधनपौर्वकाल्यस्य क्रियाद्वारकत्वेन क्रियापौर्वकाल्यस्यापि सत्वात्समानादिसूत्रेणैव क्त्वः सिद्धो किमनेनापि तद्विधानेन । आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधि. । अग्रे भोजं भोजं व्रजति । भुक्त्वा भुक्त्वा ॥

## कर्मण्याक्रोशे कृञः खमुञ् । ३ । ४ । २५ ॥

कर्मण्युपपदे आक्रोशे गम्ये ॥ चोरङ्कारमाक्रोशति । करोतिरुच्चारणे । चोरशब्दमुच्चार्येत्यर्थः । अनुकरणं चानितीति निपातत्वेनाव्ययत्वेऽपि खित्वसामर्थ्यान्मुम् ॥

## स्वादुमि णमुल् । ३ । ४ । २६ ॥

स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले ॥ भावि-प्रत्ययविषये पूर्वपदे ऽस्य मान्तत्वं निपात्यते । स्वादुङ्कारं भुङ्क्ते । सम्पन्नङ्कारम् । लवणङ्कारम् । सम्पन्नलवणशब्दौ स्वादुपर्यायौ । वास-रूपेण क्त्वापि । निपातनञ्च भावप्रत्ययमात्रविषयकम् । स्वादुं कृत्वा भुङ्क्ते । ननु खमुञेवानुवर्तता किं निपातनेनेति चेन्न । तथा सति हि च्व्यन्तस्थले मुम् न स्यात् । ततश्च अस्वादुं स्वादुं कृत्वा स्वादुङ्कारं भुङ्क्ते इत्यत्र च्वौ चेति दीर्घत्वं सम्पन्नादिषु अस्य च्वावितीत्वं स्वाद्वीं कृत्वा स्वादुङ्कारं भुङ्क्ते इत्यत्र अस्वाद्वीं स्वाद्वीं कृत्वा स्वादुङ्कारं भुङ्क्ते इत्यत्र च वोतो गुणवचनादिति ङीष् च स्यात् । अवश्यञ्चात्तरार्थं णमुल् विधेय इति स्वीकृतेऽपि निपातने इहैव विहित. ॥

## अन्यथैवङ्कथमित्थंसु सिद्धाप्रयोगश्चेत् । ३ । ४ । २७ ॥

एषु कृञो णमुल् स्यात् सिद्धो ऽप्रयोगोऽस्य एवंभूतश्चेत् कृञ् ॥ व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारं एवङ्कारं कथ-ङ्कारं इत्थङ्कारं भुङ्क्ते । इत्थ भुङ्क्ते इत्यर्थ. । सिद्धेति किम् । शिरो ऽन्यथा कृत्वा भुङ्क्ते । वासरूपेण क्त्वापि । अन्यथा कृत्वा चोदित अन्यथा कृत्वा परिहारः । कथ कृत्वा बाधकमित्यादि ॥

## यथातथयोरसूयाप्रतिवचने । ३ । ४ । २८ ॥

कृञः सिद्धाप्रयोगे इत्येव असूयया प्रतिवचने ॥ यथाकार-महं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन ॥

## कर्मणि दृशिविदोः साकल्ये । ३ । ४ । २९ ॥

कर्मण्युपपदे णमुल् स्यात् ॥ कन्यादर्शं वरयति । या याः पश्यति ताः सर्वाः कन्या वरयतीत्यर्थः । ब्राह्मणवेदं भोजयति ।

यं यं ब्राह्मणं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः । साकल्ये किम् । कन्यां दृष्ट्वा वरयति ॥

**यावति विंदजीवोः । ३ । ४ । ३० ॥**

यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीते ॥

**चर्मोदरयोः पूरेः । ३ । ४ । ३१ ॥**

कर्मणीत्येव । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । उदरपूरणविशिष्टा भुजिक्रियेत्यर्थः । इह पूर्वकाले इति न सम्बन्ध्यते असम्भवादप्रतीतेश्च । एवमन्यत्रापि यथासम्भवं बोध्यम् ॥

**वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् । ३ । ४ । ३२ ॥**

कर्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा समुदायेन वर्षप्रमाणे गम्ये ॥ गोष्पदप्रं वृष्टो देवः । गोष्पदपूरम् । अस्येति किम् । उपपदे माभूत् । मूषिकाबिलप्रम् ॥

**चेले क्नोपेः । ३ । ४ । ३३ ॥**

चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल् स्यात् वर्षप्रमाणे गम्ये ॥ चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपम् । वसनक्नोपम् । यथा वर्षणे चेलानि शब्दायन्ते तथा वृष्ट इत्यर्थः ॥

**निमूलसमूलयोः कषः । ३ । ४ । ३४ ॥**

कर्मणीत्येव ॥ कषादिष्वनुप्रयोगं वक्ष्यति । अत्र प्रकरणे पूर्वकाले इति न संबध्यते । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः । एकस्यापि धात्वर्थस्य निमूलादिविशेषणसम्बन्धाद्भेदः । तेन सामान्यविशेषभावेन विशेषणविशेष्यभावः ॥

**शुष्कचूर्णरूक्षेषु पिषः । ३ । ४ । ३५ ॥**

एषु कर्मसु पिषेर्णमुल् स्यात् ॥ शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् ॥

**समूलाकृतजीवेषु हन्कृञ्ग्रहः । ३ । ४ । ३६ ॥**

कर्मणीत्येव । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवतीति जीवः । इगुपधलक्षणः कः । जीवन्तं गृह्णातीत्यर्थः ॥

**करणे हनः । ३ । ४ । ३७ ॥**

पादघातं भूमिं हन्ति । पादेन हन्तीत्यर्थः । असिघातं हन्ति । अहिंसाया पूर्वविप्रतिषेधेन हिंसायां च यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थोऽयं योगः । भिन्नधातुसंबंधे तु हिंसार्थानां चेति वक्ष्यते ॥

**स्नेहने पिषः । ३ । ४ । ३८ ॥**

स्निह्यते येन तस्मिन्करणे पिषेर्णमुल् ॥ उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः ॥

**हस्ते वर्तिग्रहोः । ३ । ४ । ३९ ॥**

हस्तार्थे करणे ॥ हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ॥

**स्वे पुषः । ३ । ४ । ४० ॥**

करणे इत्येव ॥ स्व इत्यर्थग्रहणम् । तेन स्वरूपे पर्याये विशेषे च णमुल् । आत्मात्मीयज्ञातिधनवचनश्च स्वशब्दः । स्वपोषं पुष्णाति । आत्मपोषम् । पितृपोषम् । धनपोषम् । गोपोषम् ॥

**अधिकरणे बन्धः । ३ । ४ । ४१ ॥**

चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः । इह संज्ञायामित्या-

कृष्यते । तेन ग्रामे बद्ध इत्यर्थे ग्रामबन्ध बद्ध इत्यपि नेवेति स्पष्टं भाष्यकैयटयोः ॥

## संज्ञायाम् । ३ । ४ । ४२ ॥

बध्नातेर्णमुल् सज्ञायाम् ॥ अनधिकरणार्थ आरम्भः । क्रौचबन्धम् । मयूरिकाबन्धम् । अट्टालिकाबन्धम् । बन्धविशेषाणां संज्ञा एताः । भाष्यकारस्तूपमाने कर्मणि चेत्येवमत्र भविष्यतीत्याहुः ॥

## कर्त्रोर्जीवपुरुषयोर्नशिवहोः । ३ । ४ । ४३ ॥

जीवनाशं नश्यति । जीवो नश्यतीत्यर्थ. । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः ॥

## ऊर्ध्वे शुषिपूरोः । ३ । ४ । ४४ ॥

ऊर्ध्वे कर्तरि ॥ ऊर्ध्वशोष शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थ । ऊर्ध्वपूर पूर्यते । ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थ. ॥

## उपमाने कर्मणि च । ३ । ४ । ४५ ॥

चात्कर्तरि । घृतनिधायं निहित जलम् । घृतमिव सुरक्षितमित्यर्थः । अजकनाश नष्टः । अजक इव नष्ट इत्यर्थः ॥

## कषादिषु यथाविध्यनुप्रयोगः । ३ । ४ । ४६ ॥

यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्य इत्यर्थः । तथैवोदाहृतम् ॥

## उपदंशस्तृतीयायाम् । ३ । ४ । ४७ ॥

इतः प्रभृति पूर्वकाल इति सम्बन्ध्यते । तृतीयाप्रभृतीन्यन्यतरस्यामिति वा समासः । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशम् । दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृतीया । यद्यप्युपदशिना

सह न शाब्दः सम्बन्धंस्तथाप्यार्थोऽस्त्येव कर्मत्वात् । एतावतैव सामर्थ्येन प्रत्ययः समासश्च । तृतीयायामिति वचनसामर्थ्यात् । यदि हि तृतीयान्तेन शाब्देऽन्वये सत्येव प्रत्ययो भवेत् तर्हि करणे इत्येव ब्रूयात् । एतेन दशनैरुपदश्य भुङ्क्ते इत्यादौ वचनं चरितार्थमित्यपास्तम् । न च दध्ना सह सक्तून् भुङ्क्ते इत्यर्थे दध्युपदंशमिति सिद्ध्यर्थं तदिति वाच्यम् । उपपदशब्दनिरूपितकर्मत्वनिमित्तद्वितीयाया एव युक्तत्वात् । उपपदविभक्तेरिति न्यायात् ॥

## हिंसार्थानां च समानकर्मकाणाम् । ३ । ४ । ४८ ॥

तृतीयान्ते उपपदे ऽनुप्रयोगधातुना समानकर्मकाद्धिंसार्थाण्णमुल् स्यात् ॥ दण्डोपघातं गाः कालयति । दण्डेनोपघातम् । दण्डताडम् । समानकर्मकाणां किम् । दण्डेन चोरमाहत्य गाः कालयति ॥

## सप्तम्यां चोपपीडरुधकर्षः । ३ । ४ । ४९ ॥

उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् स्यात् ॥ पार्श्वोपपीडं शेते । पार्श्वयोरुपपीडम् । पार्श्वाभ्यामुपपीडम् । व्रजोपरोधम् गाः स्थापयति । व्रजे उपरोधम् । व्रजेन वा । पाण्युपकर्षं धानाः संगृह्णाति । पाणावुपकर्षम् । पाणिनोपकर्षम् ॥

## समासत्तौ । ३ । ४ । ५० ॥

तृतीयासप्तम्योर्धातोर्णमुल् स्यात् सन्निकर्षे गम्यमाने ॥ केशग्राहं युध्यन्ते । केशेषु गृहीत्वा । हस्तग्राहम् । हस्तेन गृहीत्वा । युद्धसंरम्भादत्यन्तं सन्निकृष्यन्ते इत्यर्थः ॥

## प्रमाणे च । ३ । ४ । ५१ ॥

तृतीयासप्तम्योरित्येव । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम् । द्वयोरंगुल्योः समाहारो द्व्यङ्गुलम् । तत्पुरुषस्याङ्गुलेरित्यच्समासान्तः । द्व्यङ्गुलेनोत्कृष्य परिछिद्येत्यर्थः । ह्रस्वः खण्डः खण्डिका॥

## अपादाने परीप्सायाम् । ३ । ४ । ५२ ॥

परीप्सा त्वरा । शय्योत्थाय धावति । शय्याया उत्थायम् । परीप्सायाम् किम् । आसनादुत्थाय गच्छति ॥

## द्वितीयायाञ्च । ३ । ४ । ५३ ॥

परीप्सायामित्येव । यष्टिग्राह युध्यन्ते । लोष्टग्राहम् ॥

## स्वाङ्गेऽध्रुवे । ३ । ४ । ५४ ॥

द्वितीयायामित्येव । अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल् ॥ भ्रूविक्षेप कथयति । भ्रुव विक्षेपम् । अध्रुवे किम् । शिर उत्क्षिप्य । येन विना न जीवन तद् ध्रुव तद्भिन्नमध्रुवम् ।

## परिक्लिश्यमाने च । ३ । ४ । ५५ ॥

सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते धातोर्णमुल् स्यात् ॥ उरः प्रतिपेषं युध्यन्ते । कृत्स्नमुरः पीडयन्त इत्यर्थः । उरोविदारं प्रतिचस्करे नखैः । ध्रुवार्थमिदम् ।

## विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः । ३ । ४ । ५६ ॥

द्वितीयायामित्येव । द्वितीयान्ते उपपदे विश्यादिभ्यो णमुल् स्यात् व्याप्यमाने आसेव्यमाने चार्थे गम्ये ॥ गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः । क्रियायाः पौनःपुन्यमासेवा ।

नित्यवीप्सयोरिति द्वित्वन्तु न भवति। समासेनैव स्वभावतस्तयोरुक्तत्वात्। यद्यप्याभीक्ष्ण्ये णमुलुक्त एव क्त्वानिवृत्तिस्तु नेष्टा तथाप्युपपदसञ्ज्ञार्थमासेवायामिह पुनर्विधिः। गेहानुप्रवेशमास्ते। गेहं गेहमनुप्रवेशम्। गेहमनुप्रवेशमनुप्रवेशम्। एव गेहानुप्रपातं गेहानुस्कन्दम्। असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वम्॥

**अस्यतितृषोः क्रियान्तरे कालेषु। ३। ४। ५७॥**

क्रियामन्तरयति व्यवधत्ते इति क्रियान्तरः। तस्मिन्धात्वर्थे वर्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषूपपदेषु णमुल् स्यात्॥ द्व्यहात्यासं गाः पाययति। द्व्यहमत्यासम्। द्व्यहतर्षम्। द्व्यहतर्षम्। अत्यसनेन तर्षेणेन च गवां पानक्रिया व्यवधीयते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः॥

**नाम्न्यादिशिग्रहोः। ३। ४। ५८॥**

द्वितीयायामित्येव। नामादेशमाचष्टे। नामग्राहमाह्वयति॥

**अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ। ३। ४। ५९॥**

अयथाभिप्रेताख्यानं नाम अप्रियस्य उच्चैः प्रियस्य नीचैः कथनम्। उच्चैःकृत्य। उच्चैः कृत्वा। उच्चैःकारमप्रियमाचष्टे। नीचैः कृत्य। नीचैः कृत्वा। नीचैःकारं प्रियं ब्रूते। वासरूपेण क्त्वासिद्धावपि क्त्वा चेति समासार्थं वचनम्। पुनर्णमुल्ग्रहणमुत्तरत्र द्वयोरप्यनुवृत्त्यर्थम्॥

**तिर्यच्यपवर्गे। ३। ४। ६०॥**

तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्यायाम्।

श्रीगणेशाय नमः ।

# अद्वैतदीपिका ।

## श्रीनृसिंहाश्रमविरचिता ।

## श्रीनारायणाश्रमविरचिताद्वैतदीपिका-विवरणाख्यटीकासहिता ।

(टीकाकारस्य मङ्गलम्)

यज्जिज्ञासा यज्ञदानादिभि स्या-
च्छ्रुत्या मत्या चिन्तया यत्प्रबोधः ॥
यस्मिन् बुद्धे बाध्यते ऽनर्थमूल
त भूमान भावये स्वात्मरूपम् ॥ १ ॥

चेतश्चापलमिन्द्रियार्थविषयं त्यक्त्वा भजस्वाभय
संसारार्णवतारक नरहरे. पादाब्जरेणुप्लवम् ॥
यो ध्यातो दितिजेन्द्रबालकमधः सिन्धोर्गतं पर्वतै-
राक्रान्त सितमुग्रभोगिभिरनायासेन पारे ऽकरोत् ॥ २ ॥

यत्पादसेवा वितनोति पापं पुण्य रिपु मित्रमनेकमेकम् ॥
अणुं महान्त तमचिन्त्यवृत्त श्रीनारसिंह गुरुमानतोऽस्मि ॥ ३ ॥

अबोधवार्तापि न यद्विनेयेष्वथाप्यबुद्ध जगदेव येन ॥
शुद्धस्वरूपामलबोधबाधात् प्रबोधपूर्वाभिधमानतस्तम् ॥ ४ ॥

गणेशान प्रणौमि त्वां गुणान् भणितुमेचमः ॥
यत्ते प्रसादाद्वागीशशर्वाद्याः सफलक्रियाः ॥ ५ ॥

मातर्नमामि तव वाणि पदारविन्द
तीर्थप्रभेदपरिलब्धनिजानुभावम् ॥
गीर्वाणदारकवरीभ्रमरीकुलाढ्य
विद्यामयामलमनोज्ञपरागपाचम् ॥ ६ ॥
अद्वैतदीपमनवद्यपरात्मबोध-
भासाभवप्रमुखमूलतमः प्रमोषम् ॥
सम्प्राप्य दुर्बलदृशोऽपि हि मामकीनाः
श्रेयो भजन्त्विति समुल्लसति प्रयत्नः ॥ ७ ॥

(टीकाकर्तुर्ग्रन्था- प्रारिप्सितस्य प्रकरणस्याविघ्नपरिसमाप्ति-वतारः ।) प्रचयगमनाभ्यां शिष्टाचारपरिपालनाय च प्रकरणप्रतिपाद्याद्वितीयात्मतत्त्वस्य चेतस्याविर्भावप्रार्थनालक्षणं मङ्गलं कुर्वन्नर्थात्प्रकरणस्य सम्बन्धाधिकारिविषयप्रयोजनानि दर्शयति । यस्मादिति ।

(मूलकर्तुर्मङ्गलम् ।)

**यस्मादभूदभवनानुभवात्सुखाब्धे-**
**विश्वं मरीचिमहवारिरसं मुरारेः ॥**
**तस्यालयो निखिललोकसुमङ्गलानां**
**पुण्यं वपुः प्रकटमस्तु ममार्धसिंहम् ॥ १ ॥**

अर्धसिंहं तस्य वपुः स्वरूपं मम प्रकटमस्त्विति सम्बन्धः । मायोपाधिकं बिम्बप्रतिबिम्बात्मकमखण्डचैतन्यं बिम्बभावेनेश्वररूपम् । तदिदमुक्तमर्धसिंहमिति । अर्धेन बिम्बरूपेण सिंहमीश्वराकारमित्यर्थः । अर्थाच्चार्धेन प्रतिबिम्बरूपेण नृशब्दवाच्यं जीवरूपमिति सिद्ध्यति । तथा च श्रुतिः "[1]एष उ एव हि सर्वत्र सर्वदा सर्वात्मा

१ नृसिंहोत्तरतापनीयोपनिषदि । ४ ख ।

सिंहोऽसौ परमेश्वरो ऽसौ हि सर्वत्र सर्वदा सर्वात्मा सन् सर्वमत्ति नृसिंह एवैकल" इति । तस्येति । तच्छन्दापेक्षितमर्थं स्वरूपतटस्थलक्षणाभ्यां दर्शयति । यस्मादिति । न विद्यते भवनं सत्ता अनुभवः स्फुरणं च यस्मादन्यस्य, सोऽभवनानुभवः अद्वितीयः सच्चिद्रूप इति यावत् । तस्मात् सुखाब्धेरपरिमितानन्दादिति यावत् । अनेन सत्यज्ञानानन्दात्मकत्वं ब्रह्मणः स्वरूपलक्षणमुक्तम् । तटस्थलक्षणमाह । विश्वं यस्मादभूदिति । उत्पत्तिस्थितिसंहारहेतुत्वेनाभिन्ननिमित्तोपादानत्वं तटस्थलक्षणमित्यर्थः । ननु ब्रह्मण उपादानत्वे मृदादिवद्विकारित्वेन चिदानन्दरूपत्वं न स्यादित्याशङ्क्य विश्वपरिणामिमायाया एव विकारित्वं ब्रह्मणस्तु मायामयजडप्रपञ्चसत्तास्फूर्तिरूपतयाधिष्ठानत्वेनोपादानत्वमिति न निर्विकारत्वक्षतिरित्यभिप्रेत्य विश्वस्यानिर्वचनीयत्वमाह । मरीचिमरुवारिरसमिति । मरीचियुक्तमरुभूमौ कल्पितं यद्वारि तस्य रसः सत्ता तादृशो रसो यस्य तत्तथा । स्वतः सिद्धलक्षणमप्यधिष्ठानसत्तया सद्भातीति यावत् । तटस्थलक्षणान्तरमाह । मुरारेरिति । मुरशब्दोपलक्षितब्रह्मादिदुर्जयपापिष्ठासुरसहस्रसंहर्तृत्वं परमेश्वरस्यैव स्वेच्छोपात्तलीलाविग्रहस्य सम्भवतीति भवत्येतदपि तटस्थलक्षणम् । अनेन पापफलप्रदत्वमुक्तम् । अन्यदपि तटस्थलक्षणमाह । निखिललोकसुमङ्गलानामालय इति । निखिललोकानां हिरण्यगर्भादिसर्वजन्तूनां यानि सुकृतफलानि तेषामालयो हेतुर्दातेति यावत् । सर्वसुकृतफलप्रदत्वं परमेश्वरस्यैवेति भवत्येतदप्युपलक्षणम् । तदुक्तम् "[१]अज्ञो जन्तुरनीशोऽयमात्मनः सु-

१ भ[illegible]द्गीताटीकायां १८ अध्याये ६१ श्लोके मधुसूदनसरस्वत्युद्धृत श्लोक ।

खदुःखयोः, ईश्वरप्रेरिता गच्छेत्स्वर्गं वा श्वभ्रमेव वा" इति। "[१]फलमत उपपत्तेः" इति च। आलयशब्दस्य नित्यपुल्लिङ्गत्वादालयो वपुरिति न विरुध्यते। प्रायश्चित्तादिकर्तॄणां पापक्षयहेतुरपि परमेश्वर एवेत्याह। पुण्यमिति। पावनं शोधकमिति यावत्। यद्यप्याद्योपलक्षणेन सामान्यतः सर्वमुपात्तं तथापि ब्राह्मणपरिव्राजकन्यायेन पृथगभिधानमिति न पुनरुक्तिदोषः।

(टीकायाम् अनुपगम्।) अत्रोक्तलक्षणलक्षितं ब्रह्म विषयः। निरन्धचतुष्टयनिरतिशयसुखरूपतद्वाप्तिः परमप्रयोजनम्। अर्वाचीनकुतर्कोत्थशङ्कानिवृत्तिरवान्तरप्रयोजनम्। तत्कामोऽधिकारी। यथायोगं सम्बन्धोऽपि द्रष्टव्यः॥ १॥

ननु हिरण्यगर्भादेरपि जगत्कारणत्वं प्राणिकर्मफलदातृत्वं च श्रूयते "[२]विश्वस्य कर्त्ता भुवनस्य गोप्ता" इत्यादौ। तत्कथं परिपूर्णस्येश्वरस्य विश्वविवर्ताधिष्ठानत्वं निखिलमङ्गलायतनत्वं चेति शङ्कायां "[३]यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै" इत्यादि शास्त्रपर्यालोचनया हिरण्यगर्भादीनामपि परमेश्वरप्रसादाधीनमेव ज्ञानैश्वर्यादिशक्तिमत्त्वमवगम्यते। ततश्च स एव स्वेच्छोपात्तश्रीनृसिंहाकारलीलाविग्रहोपलक्षितो मुमुक्षुभिरुपासनीयः। यस्मात् "[४]यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च" इति श्रुतेरिति द्योतयन् तमेव निरतिशयज्ञानैश्वर्यसम्पन्नपरि-

१ ब्रह्मसूत्रम। ३ अ। २ पा। ३८ सू।

२ मुण्डकोपनिषदि १ मु। १ खं। १ क।

३ श्वेताश्वतरोपनिषदि ६ अ०। १८ कं०।

४ नृसिंहोत्तरतापनीयोपनिषदि २ खं। ४ क।

पूर्णसत्यज्ञानानन्दस्वरूपं परमात्मानं पुनरपि प्रार्थयते । यस्येति । यद्वा यथा "[1]सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविज्येते" इति सर्वकामोद्देशेन चोदितयोर्दर्शपूर्णमासयोरावर्तितयोस्तत्तत्फलहेतुत्वमेवं परमात्मस्मरणमपि "[2]स्मृते सकलकल्याणभाजनं यत्र जायते" इत्यादिवचनात्सकलकल्याणहेतुभूतमावर्तितं सद्वाग्देव्यादिप्रसादलभ्यमपि कल्याणं साधयिष्यतीत्यभिप्रायेण तमेव भूमानं चेतसि सन्निधापयति । यस्येति ।

( स्वेष्टदेवताध्यानम् । )

यस्याज्ञावशवर्तिनोऽनुदिवसं
ब्रह्मादिलोकाधिपा
यस्यानन्दशतांशभागिन इमे
शक्रादयो निर्वृताः ॥
तं सत्यानवधिप्रबोधवपुषं
भूमानमाशास्महे
स्वान्ते श्रीनरसिंहमग्रहवतां
दूरं सतामन्तिकम् ॥ २ ॥

यस्य भूम्नः आज्ञातिलङ्घने ऽतिभीता ब्रह्मादयो लोकनाथाः प्रत्यहं स्वस्वकार्येषु वर्तन्त इत्यर्थः । तदुक्तं श्रीभगवता, "[3]लोकानां लोकपालानां मद्भयं कल्पजीविनां ब्रह्मणोऽपि भयं मत्तो द्विपरार्धपरायुष" इति । ननु ब्रह्मा-

१ अधिकरणमालायाम ४ अ । ३ पा । १० अधि ।
२ महाभारते ऽनुशासनपर्वणि विष्णुसहस्रनामाध्याये ।
३ श्रीमद्भागवते ।

ध्यानन्दतारतम्यस्य विषयतरतमभावाधीनतया विषयजन्यत्वं वक्तव्यम् । तथाच नित्यपरमानन्दाभावेनात्मनस्तद्रूपत्वायोगात्तत्प्राप्तिरपुरुषार्थ इत्याशङ्क्य "[1]आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त" इत्यानन्दस्यैव जगत्कारणत्वेन निर्धारितत्वात्तस्योत्पत्त्ययोगाद्ध्याद्यात्मस्वरूपानन्दस्यैव तादृशविषयजन्यान्तःकरणवृत्तितारतम्याधीनाभिव्यक्तितारतम्यमात्रम् "[2]एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेरित्यभिप्रायेणाह । यस्यानन्दशतांशभागिन इति । यस्य परमात्मनः स्वरूपभूतपरमानन्दशतांशाभिव्यक्तिमन्त इन्द्रादयो निर्वृताः कृतार्था वयमित्यभिमन्यन्त इत्यर्थः । षष्ठी च राहोः शिर इतिवदुद्रष्टव्या । आनन्दरूपस्यापि प्रपञ्चवदसत्यत्वे जडत्वे वाऽपुरुषार्थत्वमिति तस्य सत्यज्ञानादिवाक्यसिद्धसदादिरूपत्वमाह । तं सत्यानवधिप्रबोधवपुषमिति । सत्यभूतो निरवधिकोऽपरिच्छिन्नः प्रबोधो वपुः स्वरूपं यस्य तमित्यर्थः । अनवधित्वमुपपादयति । भूमानमिति । "[3]यत्र नान्यत्पश्यति" इत्यादिवाक्याद्द्वितीयसुखस्यैव भूमत्वाभिधानादपरिच्छिन्नत्वमित्यर्थः । आशास्महे । अभीष्टफलसिद्ध्यै ध्यायाम इत्यर्थः । स्वान्ते । हृदि । नन्वद्वितीय आत्मतत्त्वे कथं ध्यातृध्येयभाव इत्याशङ्क्य श्रीनृसिंहाकारविग्रहवतः परमेश्वरस्य कल्पितभेदेन ध्येयत्वमित्यभिप्रायेणाह । श्रीनरसिंहमिति । अग्रहवताम् । मूढानां दूरं दुर्विज्ञेयम् । सताम् । विवेकिनामन्तिकं, प्रत्यगात्मतया भातमेतादृशमात्मतत्त्वम् ॥ २ ॥

---

१ तैत्तिरीयोपनिषदि ३ प्र । ६ खं । १ क० ।
२ बृहदारण्यकोपनिषदि ४ प्र । ३ ब्रा । ३२ कं ।
३ छान्दोग्योपनिषदि ७ प्र । २४ ख । १ क० ।

यत्प्रसादादवगतं तान् गुरून्प्रणमति । यत्पादेति ।

(गुरोर्वन्दनम् ।)

यत्पादरेणुकलिलं सलिलं निपीय
मूकोऽपि मूकयति पण्डितमण्डलानि ॥
सद्भागधेयममितस्वपदप्रबोधं
निर्धूतमोहविभवं गुरुमानतोऽस्मि ॥ ३ ॥

यस्य श्रीगुरोः पादलग्नरेणुभिः कलिलं कर्दमिलं सलिलं पीत्वा तत्पानात्पूर्वं मूर्खोऽपि पश्चात् प्रज्ञावतां सदसि सर्वोत्कर्षेण व्यवहरतीत्यर्थस्तं गुरुमिति द्रष्टव्यम् । सद्भागधेयम् । सतां विवेकवैराग्यादियुक्तानां प्रत्यक्षभूतं परदैवतम् । अमिते अपरिच्छिन्ने स्वपदे स्वस्वरूपे ब्रह्मणि प्रबोधोऽप्रतिबद्धसाक्षात्कारो यस्य तम् । तत्र लिङ्गमाह । निर्धूतमोहविभवमिति । निःशेषं नष्टो मोहस्तद्विभवश्च रागद्वेषादिर्यस्य तं जगन्नाथाश्रमं गुरुं त्रिविधकरणैर्नमामीत्यर्थः ॥ ३ ॥

इदानीं गीर्वाणेन्द्रसरस्वतीसंज्ञकं मन्त्रगुरुं प्रणमति । कल्याणेति ।

(दीक्षागुरोर्वन्दनम् ।)

कल्याणगुणसम्पूर्णं निर्वाणविभवालयम् ॥
गीर्वाणेन्द्रसरस्वत्याश्चरणं शरणं भजे ॥ ४ ॥

कल्याणगुणैः शान्त्यादिगुणयुक्तैः शिष्यैः सम्पूर्णं परिवृतं, सेवितमिति यावत् । निर्वाणविभवयोर्मोक्षाभ्युदययोरालयं कारणम् । गीर्वाणेन्द्रसरस्वतीसंज्ञकस्य गुरोश्चरणं शरणं व्रजामीत्यर्थः ॥ ४ ॥

ग्रन्थकरणसामर्थ्यनिदानं प्रदर्शयन् चिकीर्षितं प्रतिजानीते । श्रीमदिति ।

( ग्रन्थनामनिर्देश. । )

श्रीमद्गुरुपदद्वन्द्वध्याननिर्धूतकल्मषः ॥
कुर्वे तदाज्ञयाद्वैतदीपिकां भेदभेदिनीम् ॥ ५ ॥

गुर्वाज्ञयैवायमारम्भो न ख्यात्याद्युद्देशेनेत्याह । तदाज्ञयैवेति । अद्वैतदीपिकाम् । निरस्तोपप्लवप्रत्यग्ब्रह्मैक्यप्रकाशिकाम् । इयञ्चान्वर्थसंज्ञैवेत्याह । भेदभेदिनीमिति । निखिलभेदनिराकरणे ऽद्वैतात्मतत्त्वप्रतिपादने पटीयसीमित्यर्थः ॥ ५ ॥

उक्तविशेषणविशिष्टग्रन्थकरणप्रतिज्ञया ऽस्मास्वहङ्कारबुद्धिर्न कर्तव्येति द्योतयन् प्रथमपरिच्छेदप्रतिपाद्यमर्थमाह । तत्र श्रेयानिति ।

( साक्षिविवेकप्रतिज्ञा । )

तत्र—
श्रेयान् स्वधर्मो विगुणो ऽपि यस्मा-
दित्यब्रवीत्पार्थसुहृत्सुरेशः ॥
तस्मादहं साक्षिविवेकमादौ
गुरुप्रसादात्प्रकटीकरोमि ॥ ६ ॥

यस्मात्परमहंसानामात्मविचारः परमो धर्मः, यस्माच्च "[१]श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्" इति श्रीकृष्ण एव वैगुण्येऽपि स्वधर्माचरणं श्रेय इत्याह तस्माद्यथामतिमननात्मकस्य धर्मरूपामद्वैतदीपिकां कुर्वे इत्यर्थः । एव-

१ भगवद्गीतायाम् । ३ अ । ३५ श्लो ।

च्चास्यां कृतावन्येषां वैगुण्यबुद्धावप्यर्थवानेव ममायमारम्भः पाण्डित्यप्रकटनभावस्यानुद्देश्यत्वादिति भावः। तत्रापि त्वम्पदार्थविवेकाय संन्यासः सर्वकर्मणामित्यादिवचनात्त्वम्पदार्थे विवेकोद्देशेन च संन्यासस्य कृतत्वात् सर्वेषामप्यहमनुभवप्रसिद्धत्वाच्च त्वंपदार्थस्य तद्विवेक एव प्रथमं क्रियत इत्याह। अहं साक्षिविवेकमिति। तत्राद्वैतदीपिकायामादौ प्रथममहं साक्षिविवेकं प्रकटीकरोमीत्यन्वयः। अहमो ऽहमनुभवविषयाद्दुःखादिधर्मिणः सकाशात्साक्षिणश्चिद्रूपोदासीनजीवस्वरूपस्य विवेकं भेदं गुरुप्रसादबलेन व्यक्तीकरिष्य इत्यर्थः॥ ६॥

(तत्र विप्रतिपत्तिः।) नन्वद्वैतदीपिकां कुर्व इति प्रत्यग्ब्रह्मैक्यस्य व्युत्पाद्यत्वमुक्तं तदयुक्तम्। तस्मिन् जिज्ञासायोगात्। तदयोगश्च धर्मिज्ञानाभावात्। तथाहि—किं विचारात्प्राक् प्रत्यक्षादिप्रमाणात्तदवगम उतागमादथवा स्वप्रकाशत्वेन? नाद्यः, ब्रह्मण औपनिषदत्वेन प्रत्यक्षागोचरत्वात्। न द्वितीयः, विचारात्प्राक् तदयोगादन्यथा विचारवैयर्थ्यात्। न तृतीयः, जिज्ञास्यस्य स्वप्रकाशत्वेनाज्ञातांशाभावेन जिज्ञासायोगादित्याशङ्क्याह। अथेति।

(मूलकर्तुर्ग्रन्थावतरणिका।) **अथाधीतसाङ्गस्वाध्यायस्य साधनचतुष्टयसम्पन्नस्यापातप्रतिपन्नब्रह्मात्मैक्यजिज्ञासोस्तत्प्रतिपादकानि बहूनि वाक्यानि दृश्यन्ते "[1]तत्त्वमसि" "[2]अहं ब्रह्मास्मि" इत्येवमादीनि।**

१ छान्दोग्योपनिषदि ६ प्र। ८ ख। ७ क।
२ बृहदारण्यकोपनिषदि १ प्र। ४ ब्रा। १० कं।

प्रारम्भार्थो ऽथशब्दः ।

(टीकाकारमतेन अयमभिसन्धिः । नित्येनैवाध्ययनविधि-
यन्थावताराशयः ।) नाधीतसाङ्गस्वाध्यायस्य प्राक्कृतसुकृतविशेषपरिपाकवशादिहजन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनेन नित्यनैमित्तिककर्माण्यनुष्ठितवतः शुद्धचित्तस्य पदार्थेषु नित्यानित्यविमर्शतः स्पर्द्धासूयाक्षयिष्णुतादुःखदोषदर्शनेनैहिकामुष्मिकभोगाद्विरक्तस्य शान्त्यादिसाधनसम्पन्नस्य नित्यपुरुषार्थप्रेप्सोरपेक्षितोपायं ब्रह्मात्मैक्यज्ञानमधीतस्वाध्यायादवगतवतो भवति ब्रह्मात्मैक्यजिज्ञासाप्रवृत्तिपर्यन्तता । न च विचारात्प्रागधीतस्वाध्यायानां ब्रह्मावगतौ विचारवैयर्थ्यमिति वाच्यम् । विचारमन्तरेणोत्पन्नस्यानभ्यासदशापन्नजलादिज्ञानवत्सत्तानवधारणात्मकत्वादसम्भावनादिपुरुषापराधप्रतिबद्धत्वाद्वा पुरुषार्थपर्यवसायित्वाभावेन तादृशज्ञानसिद्ध्यर्थं विचारस्यावश्यकत्वात् । न च ब्रह्मणः स्वप्रकाशत्वेनाज्ञातत्वाभावाज्जिज्ञासाऽसम्भवः ? स्वरूपप्रकाशस्याज्ञानाविरोधेन जिज्ञासोपपत्तेरिति । नन्वधीतस्वाध्यायस्यापि जिज्ञासाहेतुभूतब्रह्मात्मैक्यप्रतिपत्तिर्न सम्भवति तद्बोधकाभावात् । न तावत्सत्यादिवाक्यात्तदवगमः । तस्य तत्पदार्थमात्रविषयतया वाक्यार्थागोचरत्वात् । नन्वनन्तपदात्त्रिविधपरिच्छेदराहित्यप्रतिपत्तेर्जीवपराभेदः सिद्ध इति चेत् ? जीवस्य घटादिवद्बाध्यत्वाभ्युपगमे ऽपि ब्रह्मानन्त्योपपत्तेः । न चाधिकारिणो जीवस्यासत्यत्वानुपपत्तिप्रतिसन्धानसहितानन्तपदवद्वाक्यादेतदवगम इति वाच्यम् । अनुपपत्तिप्रतिसन्धानसापेक्षत्वे वाक्यस्य मानान्तरानपेक्षत्वक्षतिप्रसङ्गात् । विचारात्प्राग् जीवस्य सत्यत्वानि-

धारणेनासत्त्वानुपपत्तिप्रतिसन्धानायोगाच्च । नन्वस्तु तत्त्वमस्यादिवाक्यात्तदवगम इति चेत् ? न, विकल्पासहत्वात् । किं तत्त्वमादिवाक्यं सत्यादिवाक्यसमानार्थमुतातिरिक्तार्थम् ? नाद्यः, अस्य वैयर्थ्यापातात् । न द्वितीयः, सत्यादिवाक्यप्रमेयब्रह्मानभिधायकतया कल्पितविषयत्वापातात् । अतो वाक्यार्थे ब्रह्मण्यापातज्ञानासम्भवेन तज्जिज्ञासानुपपत्तेरिति । तत्राह । तत्प्रतिपादकानीति । विचारात् प्राक् ब्रह्मात्मैक्यसंशयाद्यनुकूलापातज्ञानजनकानि, सति तु विचारे संशयादिविरोधिसत्तानिश्चायकप्रमाजनकानीत्यर्थः । अयम्भावः । यद्यपि सत्यादिवाक्यात्तत्वमादिवाक्यमनधिकविषयमुभयोरप्यखण्डार्थत्वात् तथापीदं न व्यर्थं, सर्वज्ञत्वकिञ्चिज्ज्ञत्वाद्युपलक्षितस्वरूपाभेदावगमस्य तद्विषयाज्ञानसंशयविपर्यासनिवर्त्तकस्य तत्तदुपलक्षितोपस्थापकपदयुक्तवाक्यैकसाध्यत्वात् । तत्तेदन्तोपलक्षितदेवदत्तस्वरूपाभेदावगमस्य सोऽयं देवदत्त इति वाक्यैकसाध्यत्ववत् । न च जीवस्वरूपब्रह्माभेदविषयन्यायानुगृहीतसत्यादिवाक्यादेव तादृशीप्रतिपत्तिः सिध्यतीति वाच्यम् । अभेदविषयन्यायानां तत्त्वमादिवाक्याङ्गत्वात् । अन्यथा रात्रिसत्रपितृयज्ञन्यायानुगृहीतोत्पत्तिवाक्यादेव स्वर्गकामाधिकारसिद्धेः स्वर्गकामो यजेतेत्यस्य वैयर्थ्यप्रसङ्गादिति ॥

एवं प्रत्यग्ब्रह्मैक्यजिज्ञासासम्भवात्तद्व्युत्पादनमर्थवदित्युक्तमिदानीं तदुपयोगित्वेन त्वम्पदार्थविवेकः क्रियत इत्यभिप्रेत्य तज्जिज्ञासाहेतुत्वेन वादिविप्रतिपत्तिं दर्शयति ।

(त्वम्पदार्थे तार्किकादिमतम् ।) तत्र त्वंपदार्थं देहेन्द्रियमनोबुद्धिप्राणाव्यतिरिक्तं कर्तृभोक्तृस्वभावं मन्यमानास्तद्विलक्षणब्रह्मात्मैकत्वमात्मनोऽसम्भावयन्तस्तार्किकादयो वाक्यमविवक्षितार्थमन्यपरं वा मन्यन्ते ।

(त्वम्पदार्थे तार्किकादिमतनिरासः ।) तत्र त्वंपदार्थमात्मानं श्रुतिन्यायाभ्यामहमनुभवगोचरात्पृथक्कृत्य तत्साक्षितया प्रदर्शयामः । श्रुतिस्तावच्छान्दोग्ये "[1]अथातोऽहङ्कारादेश" इत्यादिना ऽहङ्कारमुपदिश्य ततोऽन्यात्मानं दर्शयति "[2]अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मा उत्तरत आत्मैवेदं सर्वम्" इति । नन्विदं ब्रह्मविषयमिति चेत्? न, तस्य वाक्योपक्रमे "[3]स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वम्" इति पृथगेव निर्दिष्टत्वात् ॥

तत्रेति । तत्त्वमस्यादिवाक्य इत्यर्थः । ब्रह्मात्मैकत्वमिति । ब्रह्मस्वरूपेणैक्यमित्यर्थः । नन्वध्ययनविधिपरिगृहीतानां

१ छान्दोग्योपनिषदि ७ प्र । २५ खं । १ क ।
२ छान्दोग्योपनिषदि ७ प्र । २५ खं । २ कं ।
३ छान्दोग्योपनिषदि ७ प्र । २५ खं । १ क ।

तत्त्वमादिवाक्यानां कथमङ्गल्यग्रादिवाक्यवदानर्थक्यमित्याशङ्क्य सम्पदाद्युपासनपरत्वं वा भवत्वित्याह। अन्यपरं वेति। एवं विप्रतिपत्तिं प्रदर्श्य तन्निरासार्थं विचार आरभ्यत इत्याह। तत्र त्वं पदार्थमिति। अहमनुभवगोचरात्। दुःखादिधर्मिणोऽहङ्कारात्। तत्साक्षितयेति। अहङ्कारतद्धर्मसाक्षितया सर्वोपप्लवरहितविज्ञानत्वेनेत्यर्थः। श्रुतिन्यायाभ्यामित्युक्तम्। तत्र प्रथमं श्रुतिं दर्शयति। श्रुतिस्तावदिति। नन्वथात आत्मादेश इति श्रुतिः दुःखादिधर्म्यहङ्कारात्मविषयैव किन्न स्यादित्याशङ्क्य तस्याधस्तनवाक्ये उपदिष्टत्वात्तत्साक्षिचिदात्मविषय एवायमुपदेश इत्यभिप्रेत्याह। अथातो ऽहङ्कारादेश इत्यादिना। अहङ्कारमुपदिश्येति। ननु आत्मशब्दस्य ब्रह्मण्यपि सम्भवादथात आत्मादेश इत्युपदेशस्तद्विषय एव। तथा च न जीवस्याहङ्काराद्भेदसिद्धिरिति शङ्कते। नन्विदमिति। भूमाख्यब्रह्मणोऽहङ्कारोपदेशात् प्रागेवोपदिष्टत्वादुत्तरत्र तत्परिग्रहो ऽनुपपन्न इत्याह। न तस्येति॥

नन्वथातो ऽहङ्कारादेश इत्यत्राहङ्कारपदेन न दुःखादिधर्मिण उपदेशः तस्य प्रसिद्धत्वात्। दकारान्तास्मच्छब्दनिष्पन्नाहम्पदमात्रवाच्यत्वाच्च। किन्तु "जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः" इत्यादिस्मृतिष्वहङ्कारपदार्थत्वेन प्रसिद्धो ऽनिरुद्ध एव निर्दिश्यत इत्यभिनवपक्षोत्प्रेक्षकः कश्चित्प्रत्यवतिष्ठत इत्याह। अत्र नवीन इति।

(द्वैतमतेनाहम्पदार्थे विप्रतिपत्तिः.) अत्र नवीनः, नात्र किलाहमर्थो ऽहङ्कारादेश इत्यनेनोच्यते येनाथात आत्मादेश इत्येतत्ततो ऽन्यात्मतत्त्वविषयं

स्यात् । किन्त्वनिरुद्ध एव तस्य स्मृतिष्वहङ्कार इति प्रसिद्धेः । अहमर्थे च जीवे ऽहङ्कारपदाप्रयोगात् । तस्य दकारान्तास्मच्छब्दनिष्पन्नकेवलाहंशब्दवाच्यत्वात् । अहमेवाधस्तादित्यत्रापि मकारान्ताव्ययत्वेनादकारान्तत्वात् । किञ्च न केवलं पृथगुपदेश इत्येतावता भेदः सिध्यति । ब्रह्मात्मनोरपि भेदप्रसङ्गात् । अस्ति हि तयोरपि पृथगुपदेशः । तथापि तयोरभेदे किमपराद्धमहङ्कारात्मनोरभेदेन ॥

नन्वथातो ऽहङ्कारादेश एवेत्युक्त्वा ऽनन्तरम् "[१]अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतो ऽहमुत्तरतो ऽहमेवेदं सर्वम्" इत्यहंशब्दवाच्यस्याहम्प्रत्ययालम्बनस्याभ्यस्यमानत्वादादावपि स एव निर्दिश्यत इति सिद्धान्त्याशयमाशङ्क्याह । अहमेवाधस्तादित्यत्रापीति । अस्मच्छब्दप्रकृतिकस्याहंशब्दस्य प्रयोक्तृवाचकत्वादपौरुषेये च वेदे प्रयोक्तुरभावान्मकारान्ताव्यय एवायमहंशब्दो-ऽस्य च जीवे प्रयोगाभावादुपक्रमानुरोधेनानिरुद्ध एवाभ्यस्यत इति भावः । अङ्गीकृत्याप्यस्याहमर्थपरत्वं पृथगुपदेशमात्रेणाहङ्कारात्मनोर्भेदो न सिध्यतीत्याह । किञ्चेति । न ह्यत्र मुखतो भेदवाचकपदमस्ति । अथशब्दस्यापि प्रकारान्तरेणोपदेशादारम्भार्थत्वे सम्भवति प्रकृतादर्थान्तरपरत्वकल्पकाभावात् । किन्तु पृथगुपदेशान्यथानुपपत्त्या भेदो

१ छान्दोग्योपनिषदि ७ प्र । २५ ख । १ क ।

वक्तव्यः। न चानुपपत्तिरस्ति। त्वन्मते जीवब्रह्मणोः सत्यप्यभेदे स एवाधस्तादात्मैवाधस्तादिति पृथगुपदेशदर्शनादित्यर्थः ॥

नन्वनधिगतार्थबोधकत्वेनार्थवत्वाद्वेदवाक्यानां जीवब्रह्मणोः प्रत्यक्षसिद्धभेदयोः समानस्वभावप्रतिपादनद्वारेणाभेदपरः पृथगुपदेशः, एवञ्चोभयोरपि सार्वात्म्यमप्युपपन्नं भवति। अहङ्कारात्मनोस्त्वभेदस्यैव प्रत्यक्षसिद्धत्वात्तयोर्भेदार्थ एव पृथगुपदेश इति शङ्कते । नन्विति ।

ननु भूमात्मनोर्भेदेन प्रत्यक्षसिद्धयोर्भेदेन व्यपदेश ऐक्यार्थः। द्वयोः सार्वात्म्यायोगात्। अहङ्कारस्य त्वात्मत्वेन प्रत्यक्षसिद्धस्य भेदव्यपदेशो भेदार्थ इति चेत्? नाहमर्थादन्यस्यात्मनो भूमाख्यब्रह्मणो भिन्नत्वेन प्रत्यक्षासिद्धत्वात्तयोरुपदेशो भेदार्थः, अहमर्थस्य तु ब्रह्मभिन्नत्वेन सिद्धस्य व्यपदेश ऐक्यार्थ इति वैपरीत्यापत्तेः। सार्वात्म्यञ्च नेह प्रतिपिपादयिषितम्। स एवाधस्तादहमेवाधस्तादात्मैवाधस्तादित्युपक्रमानुसारेणोपसंहारेऽपि स एवेदं सर्वमित्यादेः सर्वगतत्वपरत्वात्। तस्य च भेदेऽप्यविरोधादिति।

एवं तद्दर्शनायाद्यतीतजीवस्य ब्रह्मापेक्षया भेदेन प्रत्यक्षसिद्धत्वाभावादहमीश्वराद्भिन्न इति प्रत्ययस्य च दुःखादिधर्म्यहङ्कारविषयत्वात्त्वदभिमतजीवेश्वरयोर्भेदार्थस्तयोः पृथगुपदेशः स्यादहमर्थे ईश्वरभेदस्य प्रत्यक्षसिद्ध-

त्वात्तयोस्तत्रभेदार्थः पृथगुपदेशः स्यादिति वैपरीत्यमापद्येतेत्याह। नाहमर्थादन्यस्येति। अस्मिन् पक्षे जीवपरयोर्भेदेन "[1]स एवेदं सर्वम्" "[2]आत्मैवेदं सर्वम्" इत्युभयोः सार्वात्म्यश्रुतिः पीड्येतेत्याशङ्क्य श्रुतेरन्यपरत्वमाह । सार्वात्म्यश्चेति। स एवाधस्तादित्याद्युपक्रमस्य सर्वदेशसम्बन्धाभिधानेन विभुत्वमात्रपरत्वात्स एवेदं सर्वमित्याद्युपसंहारोऽपि वेदोपक्रमाधिकरणन्यायेनोपक्रान्तविभुत्वपरतया नीयत इत्यर्थः । ननु विभुपदार्थयोः परस्परसम्बन्धाभावात् कथं सर्वगतत्वमित्याशङ्क्य सर्वमूर्तद्रव्यसंयोगित्वमेव विभुत्वं, तच्च भेदे ऽपि न विरुद्ध्येतेत्याह । तस्य चेति ॥

अह ङ्कारादेशस्यानिरुद्धविषयत्वनिराकरणाय जीवविषयत्वं सिसाधयिषुः प्रकरणार्थं परिशोधयति। इदं हीत्यादिना ।

(द्वैतमतखण्डनम्) **अत्रेदमभिधीयते। इदं हि प्रकरणं यदज्ञानाच्छोको यज्ज्ञानात्तन्निवृत्तिः स एवात्मा सुखं तदेव च भूमा स च निखिलभेदाभावादात्मेति प्रतिपादयति ॥**

"[3]सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मवित्" इति सोऽहं स्वात्मरूपाज्ञानाच्छोचामि शोचन्तं मां शोकसागरात्स्वात्मतत्त्वोपदेशेन समुत्तारयत्वित्युपक्रमे नारदेनात्मतत्त्वस्यैव

१ छान्दोग्योपनिषदि ७ प्र । २५ ख । १ क ।
२ छान्दोग्योपनिषदि ७ प्र । २५ ख । २ क ।
३ छान्दोग्योपनिषदि ७ प्र । १ ख । ३ क ।

सनत्कुमारम्प्रति पृष्टत्वात्तत्परमेवेदम्प्रकरणमित्याह । यदज्ञानाच्छोक इत्यादिना । दुःखादिधर्म्यात्मज्ञानस्य शोकहेतुत्वात्तद्विलक्षणं सुखात्मज्ञानादेव शोकनिवृत्तिरित्यभिप्रायेणात्मसुखत्वेन निर्दिश्यत इत्याह । स एवात्मा सुखमिति । सुखस्य सातिशयत्वविषयपारतन्त्र्यादिप्रतीतेः कथमात्मरूपत्वमित्याशङ्क्य तस्यान्तःकरणवृत्तिविशेषोपाधिप्रयुक्तत्वात्स्वतोऽपरिमितत्वेन निर्दिश्यत इत्याह । तदेव च भूमेति । भूम्नो लक्षणं चोक्तमित्याह । स चेति । निखिलश्चासौ भेद्यत इति भेदो जडप्रपञ्चस्तदभावस्वरूप इत्यर्थः । आरोपिताभावस्याधिष्ठानव्यतिरेकेण निरूपयितुमशक्यत्वाज्जडप्रपञ्चस्य चित्प्रकाशरूप आत्मनि कल्पितत्वात्तदभावात्मना यत्र नान्यत्पश्यतीत्यादिवाक्यं भूमानं लक्षयतीत्यर्थः ॥

प्रतिज्ञातमर्थं जडप्रपञ्चहेतुत्वेन विशदयति । तरति शोकमात्मविदित्यादिना ।

(प्रतिज्ञातार्थविस्तारः।) "[1]तरति शोकमात्मवित्" इत्युपक्रान्तस्यात्मनो "[2]यः सत्येनातिवदति" इति सत्यशब्देनानुकृष्टस्य तद्विज्ञानसाधनश्रवणाद्युपन्यासपूर्वकं "[3]सुखन्त्वेव विजिज्ञासितव्यम्" इति सुखात्मतयोपन्यस्तस्य "[4]सुखम्भगवो विजिज्ञास" इति जिज्ञासापूर्वकं "[5]यो वै भूमा तत्सुखं

१ छान्दोग्योपनिषदि ७ प्र । १ ख । ३ क ।
२ छान्दोग्योपनिषदि ७ प्र । १६ ख । १ क ।
३ छान्दोग्योपनिषदि ७ प्र । २२ ख । १ क ।
४ छान्दोग्योपनिषदि ७ प्र । २२ ख । १ क ।
५ छान्दोग्योपनिषदि ७ प्र । २३ ख । १ क ।

नाल्पे सुखमस्ति, भूमैव सुखं न परिमितम्" इत्युक्त्वा "[1]भूमानं भगवो विजिज्ञास" इत्याकाङ्क्षामवतार्य "[2]यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति निरस्तनिखिलभेदस्य वस्तुनो भूम्नो लक्षितत्वात्। "[3]अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" इति वस्त्वन्तरपरिच्छिन्नस्याल्पत्वं सङ्कीर्त्य "[4]अथ यदल्पं तन्मर्त्यम्" इति मर्त्यत्वेन "[5]नाल्पे सुखमस्ति" इत्यसुखत्वेन च वस्त्वन्तरपरिच्छिन्नस्य निन्दितत्वाच्च। न च यत्रेति विषयसप्तमी, अन्यत् कर्तृ यन्न पश्यति शृणोति विजानाति वा स भूमेति वाक्यार्थः किं न स्यादिति वाच्यम्। प्रमाणनिषेधे तदभावप्रसङ्गात्। कर्तृनिषेधे चात्मैकत्वमिति सदिष्टसिद्धिः। न च दुर्विज्ञेयत्वमात्रमत्र प्रतिपाद्यम्। तस्यापदार्थत्वादवाक्यार्थत्वात्॥

१ छान्दोग्योपनिषदि ७ प्र । २३ ख । १ क ।
२ छान्दोग्योपनिषदि ७ प्र । २४ ख । १ क ।
३ छान्दोग्योपनिषदि ७ प्र० । २४ ख० । ५ क० ।
४ छान्दोग्योपनिषदि ७ प्र० । २४ ख० । १ क० ।
५ छान्दोग्योपनिषदि ७ प्र० । २२ ख० । १ क० ।

तद्विज्ञानसाधनेति । यद्यपि श्रवणादीनां पुरुषापराधनिरास एवोपक्षयो, वाक्यार्थज्ञानपर्यवसायित्वे तस्य स्वतस्त्वहानेस्तथापि तत्सत्तावधारणात्मकज्ञानेन प्रतिबन्धनिरासकतयावश्यापेक्षणीयत्वाच्छ्रवणादीनां तत्साधनत्वव्यपदेश इति द्रष्टव्यम् । श्रवणाद्युपन्यासपूर्वकमिति । "[1]यदा वै विजानाति" "यदा वै मनुते" इत्यादिनेति शेषः । भूमैव सुखमित्येवकारार्थमाह । न परिमितमिति । यत्र यस्मिन् वस्तुनि अन्यत् भिन्नं कार्यजातं न पश्यतीत्यादिना नामरूपात्मकभेदप्रपञ्चप्रमाणस्य निषिद्धत्वादद्वितीयवस्तुपरमेवेदं प्रकरणमित्याह । इति निरस्तनिखिलभेदस्येति । भिन्नप्रपञ्चस्य परिमितत्वदुःखहेतुत्वाभ्यां निन्दितत्वेन न चाद्वितीयवस्तुपरमिदमित्याह । अथ यत्रान्यत्पश्यतीत्यादिना । ननु यत्र नान्यदिति वाक्ये यत्रेति विषयसप्तम्या कर्मणो निर्दिष्टत्वादन्यदिति कर्तृपरम् । तथा चान्यत्कर्तृ यत्र पश्यतीत्यादिवाक्यार्थे भेदप्रमाणनिषेधानवगमान्नाद्वैतसिद्धिरित्याशङ्क्याह । न च यत्रेति । हेतुमाह । शृणोतीति । अयमर्थः, यत्र नान्यत्पश्यतीत्यत्र नञः किं धातुनान्वयः, प्रत्ययेन वा, अन्यदित्यनेन वा? प्रथमद्वितीययोर्भूम्नि प्रमाणप्रमातृनिषेधेन तदसिद्धिप्रसङ्गादिति । अत्र भावकर्तृसाधनेन प्रमाणपदेन प्रमाप्रमात्रोर्ग्रहणमिति द्रष्टव्यम् । तृतीयं दूषयति । कर्तृनिषेध इति । भूमानं तत्परम्पश्यति तदन्यन्नेत्युक्ते जीवेश्वरभेदनिरासेनात्मैकत्वसिद्धिरित्यर्थः । नन्वस्य वाक्यस्येश्वरदुर्विज्ञेयत्वपरत्वान्नोक्तविकल्पावकाश इत्यत

१ छान्दोग्योपनिषदि ७ प्र० । १६ ख० । १ क० ।
२ छान्दोग्योपनिषदि ७ प्र० । १७ ख० । १ क० ।

आह। न च दुर्विज्ञेयत्वमात्रमिति। प्रधानपदार्थस्यैवेतरपदार्थसंसृष्टस्य वाक्यार्थत्वादत्र च तद्वाचकपदाभावान्न तस्यवाक्यार्थत्वं, लक्षणा च न न्याय्येत्याह । तस्येति ॥

किञ्च प्रमाणाभावप्रयुक्तमीश्वरस्य दुर्विज्ञेयत्वमुत मेयस्वभावप्रयुक्तम् ? आद्ये ऽनिर्वचनीयत्वापातेन घटादितुल्यतया श्रुतिप्रतिपाद्यत्वासम्भव इत्यभिप्रेत्य, द्वितीये प्रत्यग्भिन्ने साकारे लोकप्रवादसिद्धे ब्रह्मणि प्राकृतानामप्यसम्भावनाद्यनुदय इत्याह। त्वदभिमतेति ।

त्वदभिमतब्रह्मणः पामरधीविषयत्वेन दुर्विज्ञेयत्वाभावाच्च। न ह्यीश्वरः शरीरी शङ्खचक्रादिमान् हरिरिति श्रुत्वा पामरा अपि विप्रतिपद्यन्ते। भेदे च विभुमात्रे तस्मिन् यो वै भूमेति भूम्नः सुखत्वप्रतिपादनं न ब्रह्मविषयं स्यात्। कालानिरुद्धादेरपि विभुद्रव्यस्य तव मते सत्त्वात्। सुखमिति सामानाधिकरण्यानुपपत्तेश्च। भेदाभेदस्य च विरुद्धत्वेनानुपपत्तेः "[1]सभगवः कस्मिन्प्रतिष्ठित" इत्यादिना ब्रह्मणोऽप्यधिकरणमस्ति न वेत्याशङ्क्य नाहमेवं ब्रवीमीति "[2]स होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित" इति भेदनिषेधेनात्मनः प्रतिष्ठितत्वनिषेधात् । अन्यथा विभुत्वादप्रतिष्ठित इत्येव च ब्रूयात् ॥

१ छान्दोग्योपनिषदि । ७ प्र० । २४ ख० । १ क० ।

२ स हो वाचेत्युपनिषत्सु पाठ । छान्दोग्योपनिषदि । ७ प्र० । २४ ख० । २ क० ।

न चाशुद्धचित्तसाक्षात्कारायोग्यत्वं तदर्थः। नान्यच्छृणोतीत्यादिवैयर्थ्यप्रसङ्गात्। त्रिशूलादि। चिन्हम्। ब्रह्मणो ऽपि तत्सत्त्वेन भेदिनां भूमवाक्यार्थनिर्णयाभावप्रसङ्गाच्चेति भावः। किञ्च भेदिमते स एवाधस्तादित्यादिवाक्यपर्यालोचनया विभुमात्रस्य भूमशब्दार्थत्वात्तदुद्देशेन सुखत्वविधाने ब्रह्मण एव सुखरूपत्वं त्वदिष्टं न सिद्ध्येदित्याह। भेदे चेति। विवक्षित इति शेषः। तस्मिन् भूमशब्दार्थे विभुमात्रे च विवक्षिते सतीत्यर्थः। ननु निरङ्कुशैश्वर्यस्य भूमपदार्थत्वात्कालानिरुद्धादेश्च तदभावान्नोक्तदोष इत्याशङ्क्य तव मते सुखस्य गुणत्वान्नाभेदाभिधानमुपपद्यत इत्याह। सुखमितीति। न च गुणगुणिनोरभेदस्यापि विद्यमानत्वात्तदुपपत्तिरित्याशङ्क्याह। भेदाभेदस्य चेति। भेदविरुद्धस्याभेदस्य तत्सामानाधिकरण्यानुपपत्तिस्तदविरुद्धस्य त्वभेदे संज्ञायाः पारिभाषिकत्वात् भेदभ्रमनिवर्त्तकप्रमाविषयस्यैवाभेदपदार्थत्वात्तयोश्च नैकत्र सम्भव इति भावः। उत्तरवाक्यपर्यालोचनया ऽपि भेदापवादावगमादद्वैतं ब्रह्मैव भूमशब्दार्थ इत्याह। स भगव इत्यादिना-भगवः हे भगवन् स भूमा कस्मिन्प्रतिष्ठित इति सनत्कुमारम्प्रति नारदप्रश्ने तस्योत्तरं "[1]स्वेमहिम्नि" इति, यद्वि तस्य क्वचित्प्रतिष्ठामिच्छसि तर्ह्यात्मीये माहात्म्ये विभूतौ प्रतिष्ठितो भूमा, यदिवा परमार्थमेव पृच्छसि तर्हि न महिम्नीति महिम्न्यपि न प्रतिष्ठित इति ब्रूमः। क्वचिदप्यनाश्रितो भूमेत्यथः।

१ छान्दोग्योपनिषदि ७ प्र०। २४ ख०। १ कं०।

(गोअश्वमिह इत्यादिछान्दो- ग्यश्रुत्यर्थनिरूपणम् । टी० ।) कथंतर्ह्यप्रतिष्ठितस्य भूम्नः स्वेमहिम्नि प्रतिष्ठोक्तेत्याशङ्कायामाह सनत्कुमारः "गोअश्वमिह" इत्यादि, गवाश्वहस्तिहिरण्यदासभार्याक्षेत्रायतनादिसर्वत्र महिमेति प्रसिद्धम् । तद्वांश्चैत्रो यथा तत्र प्रतिष्ठितो भवति तथानाहमेतत् स्वभिन्नमहिमानमाश्रितो भूमेति ब्रवीमि किन्त्वन्योह्यन्यस्मिन्प्रतिष्ठित इति ब्रवीमीति सहो वा चेति सम्बन्धः । अन्यः खलु लोके ऽन्यस्मिन्प्रतिष्ठितो भवति भूम्नश्च यत्र नान्यत्पश्यतीत्यादिना द्वैतनिषेधपुरःसरमद्वैतसुखात्मतया लक्षितत्वात्तदन्यपदार्थाभावात् स्वेमहिम्नीत्युक्तया निरधिकरणत्वमेवाभिप्रेतमिति श्रुत्यर्थः । विभुत्वस्य भूमत्वे ऽधिकरणप्रश्नोत्तरमन्यथैवस्यादित्याह । अन्यथेति ॥

ननु नियम्ये ऽपि प्रतिष्ठितपदप्रयोगादन्यनियम्यत्वविषयः प्रश्नः, उत्तरमपि तदभावपरमित्याशङ्कास्मिन्नपि पक्षे भेदनिषेधपुरःसरमप्रतिष्ठितत्वाभिधानादद्वैतं भूमशब्दार्थ इत्याह । न चेत्यादिना ।

**न च बलवर्मणि राज्यं प्रतिष्ठितमितिनियम्ये प्रतिष्ठितत्वश्रवणाद्ब्रह्मणोऽन्यनियम्यत्वमात्रं प्रतिषिध्यत इति वाच्यम् । अन्यो ह्यन्यस्मिन्प्रतिष्ठित इति काक्वा ऽन्योन्याभावमात्रस्यैव निषेधात् । उत्तरवाक्ये ऽप्यस्यैव प्रतिपादनाच्च । अतः सजातीयादिभेदशून्य एव भूमा स एव विज्ञेय इति गम्यते ।**

१ छान्दोग्योपनिषदि ७ प्र० । २४ ख० । २ क० ।

( भूम्नोऽनवच्छिन्नवस्तुपरत्वम् )। यद्यपि भूमन् शब्दो भावप्रत्ययान्तोबहुत्ववाचकस्तथाप्यत्राल्पत्वनिवृत्तिलक्षणयानवच्छिन्नवस्तुपरः। अन्यथा तल्लक्षणानुपपत्तेः। तस्य सुखत्वामृतत्वानुपपत्तेश्च। न हि केन चिद्बहुत्वमेव सुखममृतं चेत्यङ्गीकृतं, प्रमाणसिद्धं वा। आत्मासुखमिति तु परमप्रेमास्पदतया "[1]आनन्दोब्रह्म"इत्यादिश्रुत्या च प्रमित इत्यद्वैतब्रह्मप्रकरणे ऽस्मिन्नयमहङ्काराख्यो निरुद्धः स एवाधस्तादित्युपदिष्टभूमाख्यब्रह्मणस्तत्त्वान्तरं सद्व्यपदिश्यते उत तदभिन्न एवाभिन्नप्रकारश्च ?

द्वितीयमात्रशब्दः कार्त्स्न्यवाची स चाधस्तादित्युत्तरवाक्यपर्यालोचनयाप्येवमेवेत्याह। उत्तरवाक्येऽपीति। ननु भूमशब्दस्य "[2]बहोर्लोपो भू च बहोः"इति सूत्रपर्यालोचनया भावार्थप्रत्ययान्तबहुशब्दप्रकृतिकत्वेन बहुत्वसंख्यावाचकत्वात् कथमद्वितीयवस्तुपरत्वमित्याशङ्क्य, बहुत्वसंख्यायाः प्रकृतवाक्यार्थान्वयानुपपत्तेर्लक्षणयाप्यन्वययोग्यवस्तुपरत्वं वक्तव्यमित्याह। यद्यपीत्यादिना। संख्यापरत्वे ऽनुपपत्तिं दर्शयति। अन्यथेति। यत्र नान्यत्प-

१ तैत्तिरीयोपनिषदि ३ प्र० । ६ ख० १ क० ।

२ पाणिनीयसूत्रम ६ अ० । ४ पा० । १५८ सू० ।

श्यतीति वाक्योक्ताऽद्वितीयत्वलक्षणस्य बहुत्वानुपपत्तेरि-
त्यर्थः । किं च भूमपदार्थोद्देशेन सुखत्वामृतत्वाभिधानम-
प्यनुपपन्नं स्यादित्याह । तस्य सुखत्वेति । अनुपपत्तिमेव
स्पष्टयति । न हीति । आत्मनोऽपि सुखरूपत्वं नाङ्गीकृतं,
न च प्रामाणिकमित्याशङ्क्य कैश्चिदङ्गीकृतत्वादनुमानाग-
मप्रमाणसिद्धत्वाच्च नैवमित्याह । आत्मासुखमिति त्वि-
ति । उक्तप्रकारेणाद्वैतवस्तुपरमेवेदं प्रकरणमित्युपसंहरति ।
इत्यद्वैतब्रह्मप्रकरण इति । सतिसप्तमी । एवं स्थिते यदुक्तं
पूर्ववादिना ऽथातोऽहङ्कारादेश इत्यनिरुद्धादेश इति तद्वि
कल्प्य दूषयति । अभिन्नधर्ममिति । अभिन्नप्रकारश्चेति ।
अभिन्नधर्म इत्यर्थः ॥

भूमानं भगवो विजिज्ञास इत्येतदुपरिष्टादहङ्कारं
जिज्ञास इत्यदर्शनेन भूमन्येव जिज्ञासापर्यवसानादजि-
ज्ञासितोऽनिरुद्धो भिन्नतत्त्वतया न प्रतिपाद्य इत्याह ।
अजिज्ञासितस्येति ।

(भूमानिरुद्धयोरैक्ये वैकल्पिकदोषयोजनम् ।) नाद्यः, अजिज्ञासितस्य शेषिभूमोपदेशप्रतिकूलस्य च निर्देशानुपपत्तेः । प्रकरणासमवायायोगाच्च । न द्वितीयः, पृथङ्निर्देशवैयर्थ्यात् । न च भूम्नः सकाशादहङ्काराख्यानिरुद्धस्य भेदभ्रमनिवृत्त्यर्थं पृथगुपदेशः ? अलौकिके अविरुद्धे धर्मिणि प्रतियोगिनि च तथाविधे भूम्नि प्रत्यक्षादितो भेदभ्र-

**मासम्भवात्। अस्तु वा यथाकथञ्चिद्भेदभ्रमस्तथापि नात्र नारायणानिरुद्धयोर्भेदभ्रमनिरासः सम्भवति। उपदेशभेदाद्भेदप्रतीतेः। न चास्मन्मत इवोपदेशभेदेऽपि तुल्यलक्षणनिर्देशात्तन्निवृत्तिः। त्वदभिमतलक्षणस्य सर्वगतस्य भेदेऽप्यविरोधात्। तदुभयोपस्थापकपदाभावाच्च॥**

नन्वनुमानवाक्येऽजिज्ञासितस्य धूमादिलिङ्गस्योपदेशो दृष्ट इत्याशङ्क्य तस्य जिज्ञासितवन्हिप्रतिपत्त्यनुकूलत्वादुपदेशः, इह तु तत्त्वान्तरभूतस्यानिरुद्धस्याद्वितीयभूमप्रतिपत्तिविरुद्धत्वादनुपदेश इत्याह। शेषिभूमेति। वाक्यभेदश्च स्यादित्याह। प्रकरणेति। प्रकरणिनापेक्षितार्थपरत्वं प्रकरणसमवायस्तदयोगादित्यर्थः। अभिन्नो भिन्नधर्मश्चेति पक्षं दूषयन्ति। न द्वितीय इति। ननु सिद्धान्ते यथा भूमात्मनोरभेदेऽपि भेदभ्रमनिरासार्थं पृथगुपदेशोऽर्थवानेवं भूमानिरुद्धयोरपि भेदभ्रमनिरासार्थं पृथगुपदेश इति नेत्याह। न च भूम्नः सकाशादिति। तत्र हेतुमाह। अलौकिक इति। धर्मिप्रतियोगिप्रत्यक्षताया भेदप्रत्यक्षताप्रयोजकत्वाद्धर्मिप्रतियोगिनोर्भूमानिरुद्धयोरतीन्द्रियत्वेनाप्रत्यक्षत्वात्तद्भेदोऽपि न प्रत्यक्षः। नाप्यानुमानिकः। धर्मिग्राहकमानविरोधेनानुमानानुदयात्। तस्माद्भेदभ्रमासम्भवान्न तन्निवृत्त्यर्थं पृथगुपदेश इत्यर्थः। ननु स्मृतौ भूमाहङ्काराद्यपर्यायपदप्रयोगाद्भेदभ्रम इत्याशङ्क्याह। अस्तु वेति। अत्राप्यपर्यायशब्दैरेवोपदेशान्न भेदभ्रमनिवृत्तिरित्याह। तथा-

पीति । उपदेशभेदात् । अपर्यायपदैरुपदेशादित्यर्थः । ननु यथा भूमात्मनोरुपदेशभेदेऽपि तुल्यलक्षणत्वेन परस्परं प्रत्यभिज्ञायमानत्वाद्भेदभ्रमनिवृत्तिस्तवमत, एवं ममापीत्याशङ्क्यास्मन्मते सार्वात्म्यस्योभयलक्षणत्वाद्वस्तुनोऽभेदे तदसम्भवादूभ्रमनिरासो युक्तस्तच्च विभुत्वस्यैव वाक्यार्थत्वेनाङ्गीकारात्तस्य च भेदेऽप्युपपत्तेर्नैवमित्याह । न चास्मदिति । एवं श्रुतावहङ्कारशब्देनानिरुद्धोपस्थितिमङ्गीकृत्य दूषितमिदानीमङ्गीकारं त्यजति । तदुभयेति । नारायणानिरुद्धावुभयपदार्थौ ॥

ननु स्मृतौ भूमाहङ्कारात्मशब्दैर्नारायणानिरुद्धवासुदेवानामवगतत्वाच्छ्रुतावपि तच्छब्दैस्त एव प्रत्यभिज्ञायन्त इति चोदयति । ननु स्मृताविति ।

(नारायणानिरुद्धयोरभेदशङ्का।) **ननु स्मृतौ "अनिरुद्धो हि लोकेऽस्मिन्महानात्मा" इत्युपक्रम्य "सोऽहङ्कार इति प्रोक्तः सर्वतेजोमयो हि स" इत्यनिरुद्धस्याहङ्कारत्वेन निर्देशात् । तथान्यत्रापि "भूमा नारायणाख्यः स्यात्स एवाहङ्कृतिः स्मृतः" "जीवस्यस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः" "अणुरूपोऽपि भगवान्वासुदेवः परो विभुः, आत्मेत्युक्त" इति स्मृतेश्च श्रुतौ पर्यायत्रयेण त एव निर्दिश्यन्त इति चेत् ?**

(तन्निरास) **तन्नाहङ्कारशब्दसाम्येऽपि रूपभेदेना-**

प्रत्यभिज्ञानतया श्रुतिस्मृत्योरेकार्थत्वाभावात् । स्मृतौ हि जीवस्यस्त्वनिरुद्ध इति परिच्छिन्नो ऽहङ्कारः प्रतीयते । श्रुतौ तु "[1]अहमेवेदं सर्वम्" इति सर्वात्मको ऽहङ्कारः । स्मार्तक्रमबाधादप्यात्मादेशो न स्मार्तवासुदेवस्यादेशः । न च स्मृतिमनुसृत्य सर्वात्मत्वश्रुतिपीडा युक्ता । अनाकाङ्क्षितत्वादपि नायं स्मार्तादेशः । अत्र हि "[2]स एवेदं सर्वम्" इति ब्रह्मणः सर्वात्मत्वमुपदिश्यते । न च तत्र भेदनिर्देशो ऽपेक्ष्यते । विरुद्धत्वात् । न च भेदानुवादेन तस्योपाधिकत्वमेवापेक्षितं प्रतिपाद्यत इति युक्तम् । उपाध्यनिर्देशात् । जीवस्तु तया सर्वात्मत्वश्रुत्यापेक्षितः ॥

यूनचैत्रस्य वृद्धचैत्रेण नामसाम्ये ऽपि यथा रूपभेदान्न प्रत्यभिज्ञा एवं श्रौतस्मार्तयोरपीति दूषयति । तन्नाहङ्कारेति । रूपभेदमेव दर्शयति । स्मृतौ हीति । किं च सर्वस्मृतिषु वासुदेवस्य प्रथमपाठात्तृतीय आत्मादेशस्तद्विषयो न भवति । उदाहृतस्मृतिरपि श्रौतक्रमविरुद्धा भवतीत्याह । स्मार्तक्रमेति । अपिशब्देन रूपभेदः समुच्ची-

१ छान्दोग्योपनिषदि ५ प्र० । २ ख० । ६ क० ।

२ छान्दोग्योपनिषदि । ७ प्र० । २५ ख० । १ क० ।

यते । किं च स एवेदं सर्वमित्यादिना श्रूयमाणं सर्वात्मत्वं स्मार्तप्रसिद्ध्यनुसारेणान्यथा नेतुमशक्यम् । विरोधाधिकरणन्यायेन श्रुतिविरोधे स्मार्तस्यानपेक्षत्वादित्याह । न च स्मृतिमिति । एकवाक्यताप्रयोजककाकाङ्क्षायाः स्मार्तार्थे ऽभावान्न तन्निर्देश इत्याह । अनाकाङ्क्षितत्वादिति । अनाकाङ्क्षामेव प्रकटयति । अत्र हीति । ननु स एवेदं सर्वमिति भूम्नः स्वविभूत्यनिरुद्धाद्यात्मकत्वमेवोच्यते । तथा च भिन्नत्वेन प्रसिद्धानामेतेषां कथमेकत्वमिति वीक्षायां भेदानुवादेन तस्यैवौपाधिकत्वमाकाङ्क्षितमुत्तरवाक्ये निर्दिश्यत इत्याशङ्क्य इदं सर्वमिति सर्वनाम्ना प्रसिद्धमात्रपरामर्शान्मैवमित्याह । न च भेदेति । उपाधेरश्रवणाच्च नानिरुद्धभेदस्यौपाधिकत्वमेतदर्थ इत्याह । उपाध्यनिर्देशादिति । तव मते औपाधिकस्यापि परमार्थत्वान्न तत्राप्याकाङ्क्षेति भावः । सिद्धान्ते वा कथमाकाङ्क्षितपरत्वमस्येत्याशङ्क्याह । जीवस्त्विति । अपेक्षित इति । ब्रह्माभेदेनेति शेषः ॥

ननु ब्रह्मणः सर्वात्मत्वश्रुत्यानन्तरं यथा घटाद्युपदेशो नापेक्षितः एवं जीवोपदेशोऽपीत्याशङ्क्य जडस्य ब्रह्मकार्यत्वेनारम्भणाधिकरणन्यायेन तदात्मकत्वमुपपन्नम् । जीवस्य त्वनादेस्तदकार्यस्य ततो भेदेन प्रसिद्धत्वात्सार्वात्म्यश्रुतिरनुपपन्ना स्यात्, तच्चायुक्तम् । तथा च जीवस्य तद्भिन्नलक्षणतया तद्भेदस्यौपाधिकत्वापादनेन तदभेदो वक्तव्य इत्यपेक्षित एव जीवोपदेश इत्याह । अकार्यस्वरूपस्येति ॥

(जीवस्य पृथगुपदेशाज्जीवब्रह्मभेदशङ्कानिरासः ।)

**अकार्यस्वरूपस्य प्रत्यक्षादिसिद्धभेदस्य तस्य ब्रह्मणो भेदे आत्यन्तिक**

एव भेदः स्यादिति ब्रह्मणः सार्वात्म्यश्रुतिरुन्मत्तप्रलापवत्स्यात्, तच्चायुक्तम् । तुल्यसम्प्रदायत्वादिति जीवस्य ब्रह्माभेदं सार्वात्म्यश्रुतिरपेक्ष्यत इति स एव तत्तुल्यलक्षणतयाऽहङ्कारादेश इत्यत्र निर्दिश्यते । अतस्तस्याकाङ्क्षितार्थपरत्वं सिद्ध्यति। आत्मादेश इत्यनेनैव तद्ग्रहणसिद्धौ किमहङ्कारादेशेनेति चेत् न? आत्मा ह्यहम्प्रत्ययविषयः कर्ता भोक्तेति लौकिकैर्निश्चीयत इति तत्रैव प्रथममात्मशब्दाद्बुद्धिः स्यात् । तयोश्च विरुद्धत्वान्नाभेदमवगमयितुं शक्नोति । शक्नोति त्वहं पदार्थं पृथङ्निर्दिश्य ततोऽन्य एवात्मेति प्रतिपादिते जीवपराभेदं प्रतिपादयितुमिति सार्वात्म्यश्रुत्यपेक्षयैवाहमात्मानमादौ निर्दिशति ॥

तुल्येति । वाक्यान्तरसमाननियमाध्ययनवत्त्वादित्यर्थः । स्वमते अपेक्षितपरत्वमुपसंहरति । इति जीवस्येति । एवं तर्ह्यात्मादेशादेवापेक्षितार्थसिद्धेर्मध्ये ऽहङ्कारादेशो व्यर्थः स्यादिति शङ्कते । आत्मादेश इतीति । पूर्वमात्मोपदेशे प्राकृतानामात्मशब्दाद्दुःखादिधर्मिण एव बुद्धिस्थत्वात्तस्य चाभेदायोग्यत्वाच्छ्रुतिरपेक्षितार्थबोधनसमर्था न स्यात् । अहमर्थोपदेशे तु तस्य परिच्छिन्नत्वादनात्मत्वशङ्कायामनन्तरं केवलात्मोपदेशे ऽहन्त्वसमानाधिकरणकर्तृत्वादिकं नात्मधर्म इति निश्चयो भवति । ततश्च जीवे-

श्वराभेदबोधनं सुकरमित्यभिप्रेत्यादावहङ्कारादेश इत्याह । न आत्माह्यहमिति ॥

एवमप्यहमर्थोपदेशानुपपत्तिं शङ्कते । नन्वहङ्कारस्येति ।

(पुनरपि जीवोपदेशानुपपत्तिस्तन्निरासश्च ।) नन्वहङ्कारस्य तदवच्छिन्नचैतन्यस्य वा ऽऽत्मनो भिन्नत्वादसर्वगतत्वाच्च कथं सर्वगतत्वं सर्वात्मत्वं चेति चेत् न, असौ ह्यहङ्कारशब्दो ऽहमिति कृति करणं यस्मिन्नित्यवयववृत्त्यान्तःकरणावच्छिन्नं चैतन्यमभिधत्ते। समुदायशक्तेर्लोके क्वचिदप्यक्लृप्तत्वात्। स्मार्तप्रसिद्धेश्च पौरुषेयतया अपौरुषेयवेदार्थाव्यवस्थापकत्वात्। तथात्वे वा शोकहर्षभयक्रोधलोभमोहस्पृहादयो ऽहङ्कारस्य दृश्यन्ते इत्यादिस्मृतावन्तःकरणावच्छिन्नजीवे एव तत्प्रयोगाच्च। शोकादेः कृतेश्च केवलजडधर्मत्वानुपपत्तेरित्युभयथाप्यन्तःकरणावच्छिन्नचैतन्यमेवाहङ्कारपदार्थः सार्वात्म्यश्रुत्यपेक्षितः प्रकृते ग्राह्यः। तथा च तत्रोपाधिपरिच्छेदात्परिच्छिन्ने तद्भिन्ने च तस्मिन् सर्वगतसर्वात्मब्रह्माभेदप्रतीतिर्न भवतीति दहरपुण्डरीकवेष्टितस्य परमात्मनो "[१]यावा-

[१] छान्दोग्योपानषद । ८ प्र० । १ ख० । ३ क० ।

न्वा अयमकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्युपाधिकृतात्मत्वनिवृत्तिपराकाशोपमोपदेशवदहमर्थस्याप्युपाधिकृतपरिच्छिन्नत्वनिवृत्त्या-वास्तवसर्वात्मत्वादिपरा श्रुतिर्न विरुध्यते। एवं चापेक्षिताहमर्थविषयत्वादहङ्कारादेशस्य न तद्विरुद्धस्मार्तार्थपरत्वं कल्प्यम् ॥

दुःखादिधर्मिणस्तदवच्छिन्नस्य वा ऽहमर्थस्य परिच्छिन्नत्वाद्भिन्नत्वाच्चाहमेवाधस्तादित्यादिनोच्यमानं सर्वगतत्वमहमेवेदं सर्वमिति सर्वात्मत्वं चानुपपन्नमित्यर्थः। अनित्यो घट इत्युक्ते यथा घटपदार्थैकदेशव्यक्तरेवानित्यत्वान्वय एवमहमर्थैकदेशचिदात्मन एव सर्वगतत्वं सर्वात्मत्वं नानुपपन्नमित्यभिप्रायोऽयमुपदेश इति वक्तुमहङ्कारशब्दस्य शबले व्युत्पत्तिं दर्शयति। न असौ ह्यहङ्कारेति। व्यापारः करणशब्दार्थो यस्मिन्नित्यधिकरणसप्तमी। अन्तःकरणावच्छिन्नमिति। केवलस्य जडस्याविकारिचैतन्यस्य वा ज्ञानव्यापारायोगादिति वक्ष्यति। ननु स्मृतावनिरूढे रूढ इत्याशङ्क्याह। स्मार्तेति। स्मार्तप्रसिद्धेर्नियामकत्वमङ्गीकृत्याहमर्थे ऽपि सास्तीत्याह। तथात्वे वेति। जन्ममृत्युश्च नात्मन इति श्लोकशेषः। तत्प्रयोगादिति। अहङ्कारपदप्रयोगादित्यर्थः। कृतेश्चेति। अहमिति कृतिकरणमित्युक्तकृतेरित्यर्थः। व्युत्पत्तिबलात् स्मार्तप्रसिद्धिबलाच्च चिदचिद्ग्रन्थिरेवाहङ्कारशब्दार्थ इत्याह। इत्युभयथापीति। ननु स्मार्तप्रसिद्धेरन्यत्रापि सत्त्वादतः कथं जीवस्यैव परिग्रहस्तत्राह। सार्वात्म्यश्रुत्यपेक्षित

इति। एवं शबलेव्युत्पत्तिं प्रदर्श्य तस्य सर्वगतत्वादिसङ्कीर्तनस्याभिप्रायमाह। तथा चेति। तत्रेति। अहङ्कारादेशवाक्यार्थस्तस्मिन्नहमर्थे उपाध्यवच्छिन्नचैतन्यस्य परिच्छेदादेरवास्तवत्वसिद्धये सर्वगतत्वादिसङ्कीर्तनमिति सदृष्टान्तमाह। दहरपुण्डरीकेति। "[1]ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाश" इति हृदयपुण्डरीकावच्छिन्नस्य परमात्मनो दहरत्वस्य परिच्छिन्नत्वस्य प्रतीतेस्तद्व्यावृत्तये यावान्वायमाकाश इत्युपमोपादीयते। अयं बाह्याकाशो यावान् तावानन्तर्हृदय आकाश इति पुण्डरीकसम्बन्धप्राप्तं दहरत्वं व्यावर्त्यते न त्वाकाशसाम्यं ततोऽपि महत्त्वाद्ब्रह्मणः, एवमत्राप्यवच्छिन्नचैतन्यस्य परिच्छेदादि व्यावर्त्यते सर्वगतत्वादिसङ्कीर्तनमुत्तरवाक्ये तु ब्रह्मसमानस्वभावतया तदैक्यमुच्यत इति श्लिष्टतरमिति भावः। स्मार्तार्थस्य सर्वात्मत्वश्रुतिविरुद्धतयेह न परिग्रह इत्युपसंहरति। एवं चेति। किं चाहमर्थेऽवयववृत्तेरुभयवादिसम्प्रतिपन्नत्वादर्थान्तरे च लोकवेदाप्रसिद्धतया रूढेः कल्प्यत्वात् स्मार्तप्रयोगस्याहङ्काराधिष्ठातर्यनिरूढे लक्षणयाप्युपपत्तेरिह न तस्य वार्तापीति भावः॥

पूर्ववादिना सार्वात्म्यश्रुतेरन्यपरत्वमुक्तमनुवदति दूषयितुम्। यच्चोक्तमिति॥

(सार्वात्म्यश्रुतेरन्यपरत्वखण्डनम् ।)

**यच्चोक्तमस्मिन्वाक्ये न ब्रह्मणः सर्वात्मत्वं प्रतिपिपादयिषितं, किं तु स एवाधस्तादित्युपक्रमानुरोधेन सर्वगतत्वमेव तच्च भेदेऽपि न विरुद्धमिति। तदसत्। अत्र**

१ छान्दोग्योपनिषदि ८ प्र० । १ ख । १ कं० ।

टसिद्ध्यभावः कारणं आत्मनि सिद्धिसत्त्वेऽपि समवायेन सिद्धेरव्याप्यवृत्तितया घटाद्यवच्छेदेनात्मनि सिद्ध्यभावस्य सत्त्वादनुमित्यापत्तिः सिद्धिसत्त्वेऽपि समवायेन सिद्ध्यभावस्य शरीरे सत्त्वादनुमित्यापत्तिश्चोच्यते । अवच्छेदकतासम्बन्धावच्छिन्नसिद्ध्यभावः स्वरूपसम्बन्धेन शरीरनिष्ठतया हेतु । स्वरूपसम्बन्धेन शरीरनिष्ठत्व च सिद्धिसत्त्वेऽपि कालिकसम्बन्धेन शरीरे सिद्ध्यभाववारणाय । अथ समवायसम्बन्धावच्छिन्नसिद्ध्यभावोऽवच्छेदकतासम्बन्धेन शरीरनिष्ठतया कारणमित्येवोच्यतामिति चेत् सिद्धिसत्वे तच्छरीरावच्छेदेनात्मान्तरे सिद्ध्यभावस्य सत्वादनुमित्यापत्तेरिति दिक् ॥

असत्सपक्षः केवलव्यतिरेकी । तत्वं च पक्षातिरिक्तेऽनिश्चितसाध्यसाधनयोः सहचारकत्वं तथा हि पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वाद्यन्नेतरेभ्यो भिद्यते तन्न पृथिवी यथाजलं । न च नेयं पृथिवी तस्मादितरेभ्यो भिद्यत इति व्यतिरेकिलक्षणमुदाहरन्ति । न च पक्षातिरिक्ते जलादौ साध्यसाधनयोः साहचर्यमस्ति निश्चयते वा । न चानिश्चितसाध्यकत्वमेव सम्यक् । घटादौ साध्यस्येतरभेदस्य प्रत्यक्षत एव निश्चितत्वादन्यथा साध्या प्रसिद्धौ तद्घटितव्याप्तिनिरूपणानापत्तेः । न च घटे साध्यनिश्चये तस्य क्व पक्षत्वमिति वाच्यम् । पृथिवीत्वावच्छेदेन साध्यनिश्चयस्यैव तदवच्छेदेन पक्षताविरोधित्वान्नचेह सोऽस्ति सर्वत्र पृथिव्यां तन्निश्चयाभावात् । अत्र च व्यतिरेकसहचाराद्युक्ता व्याप्तिर्गृह्यत इति प्राहुः ॥

असत्सपक्ष इति । निश्चितसाध्यसाधनसहचारवद्भिन्न इत्यर्थः ।

ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यत्रेतरभेदस्य घटे विनिश्चित-त्वाद्घट एव सपक्षः तथा च पृथिवीत्वहेतावव्याप्तिरित्यत आह तत्व चेति पक्षातिरिक्त इति । घटस्य तु पक्षान्तर्गतत्वान्नाव्याप्तिरिति भावः । उपनय दर्शयति । नचनेयमिति । इतरेभ्यो जलादिभ्यो इय पृथिवी न भिद्यत इति नेत्यर्थः । निगमन दर्शय । तस्मादितीति । तस्मात् इत-रभेदव्याप्यपृथिवीत्ववत्वात् । लक्ष्ये लक्षण लापयति । न च पक्षेति पक्षातिरिक्तेत्यस्य कृत्यमाह न चाऽनिश्चितेति । अनिश्चितसाध्यसहचा-रकत्वमित्यर्थ । घटादाविति । तथा च पक्षातिरिक्तेत्यनुदानेऽव्याप्तिरिति भावः । ननु घटादावितरभेद पूर्वं न निश्चित इत्यत आह अन्यथेति । साध्याप्रसिद्धौ इतरभेदरूपसाध्याप्रसिद्धौ तत् साध्य । नन्वेव सन्दिग्धसा-ध्यवत्वरूप पक्षत्व कथ घटे सम्भवतीत्याह न चेति । तथा च पक्षे साध्य-सिद्धौ कथमनुमितिरिति भाव । पृथिवीत्वेति । तथा चात्र पक्षतावच्छेद-कावच्छेदेन साध्यसिद्धेरुद्देश्यत्वादिति भाव. । इह इतरभेदानुमाने स पृथिवीत्वावच्छेदेन इतरभेदनिश्चय । व्यतिरेकव्याप्तिज्ञानजन्यानुमिति-रलीकेत्यभिप्रायवता मतमाह अत्रेति । व्यतिरेकसहचारात् साध्याभाव-हेत्वभावयोः सहचारादित्यर्थः उक्ता व्याप्तिरन्वयव्याप्तिः। अत्र प्राचामय-माशयः । व्यतिरेकव्याप्तिज्ञानमात्रजन्यानुमितौ व्यभिचारः । अन्वयव्या-प्तिरेव मुख्यव्याप्तिपदव्यवहारविषयतया तस्या एवानुमितिकारणत्वात् । न च विनिगमकाभावाद्व्यतिरेकसहचारादेवान्वयव्याप्तिर्गृह्यतामिति वाच्य-म् । साध्याभावहेत्वभावयोर्व्याप्तिग्रहात्साध्यानुमितेरापादयितुमशक्यत्वा-त् । अन्यथा धूमवह्न्योर्व्याप्तिग्रहाद्घटानुमितिरपि कुतो न स्यात् । अथ तद्धे-तुसाध्यभेदेनान्वयव्याप्तेर्भिन्नत्वादेकोपादानेऽपरव्याप्तिज्ञानजन्यानुमिता-वव्याप्तिरिति चेत् । अत्रोच्यते । यावता हेतुसमानाधिकरणेत्यादिनिरु-क्तान्वयव्याप्तिलक्षणवाक्येन निखिलाना हेतूना निखिलाना साध्यानामु-पस्थापनान्निखिलानामन्वयव्याप्तीनामुपस्थापन । एव पक्षपदादिना निखिलानामुपस्थापनमिति निखिलायाः पक्षधर्मतायाः प्रतिपादनेन निखि-

लान्वयिनि लक्षणसमन्वय इति । अथ व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयत्वेनान्वयव्यतिरेकव्याप्त्योरनुगमसम्भवात्तेनैव रूपेणानुमितिकारणत्वे क्व व्यभिचार इति चेन्न । साध्याभावव्यापकाभावप्रतियोगित्वरूपव्याप्तिबुद्धेर्ग्राह्याभावाद्यनवगाहितया व्यभिचारज्ञानप्रतिबन्धकत्वे मानाभावादिति सक्षेप ।

साध्याभावहेत्वभावयोर्व्याप्तिग्रहादनुमितिः । न चान्यव्याप्तिग्रहात्कथमन्यानुमितिरतिप्रसङ्गादिति वाच्यम् । साध्याभावव्यापकाभावप्रतियोगित्वेन पक्षधर्मतानिश्चयः साध्यानुमापक इत्यभ्युपगमादित्यन्ये । उभयादन्यदन्वयव्यतिरेकि यथाप्रसिद्धानुमानमितिसङ्क्षेपः ।

नव्यमतमाह । साध्येति । साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्याप्तिग्रहादनुमितिरित्यर्थ । अतिप्रसङ्गादिति । वन्हिधूमयोर्व्याप्तिग्रहाद्घटानुमिति. स्यादित्यर्थ । पक्षधर्मतानिश्चय. पक्षवृत्तित्वनिश्चयः । एव च स्वाभावव्यापकीभूताभावप्रतियोगित्वेन धूमनिश्चयो वह्न्यनुमापको न तु घटानुमापक इति नातिप्रसङ्ग इति भावः । उभयादन्यत् केवलान्वयिकेवलव्यतिरेकिभिन्न । प्रसिद्धानुमान वन्हिमान्धूमादित्यादि ॥

एवं हेतावभिहिते तदाभासा निरूप्यन्ते। तत्र सव्यभिचारविरुद्धसत्प्रतिपक्षितासिद्धबाधिता हेत्वाभासाः। सव्यभिचारश्च त्रिविधः साधारणासाधारणोऽनुपसंहारी च। तत्र साधारणत्वं साध्यवदन्यवृत्तित्वं यथा धूमवान्वन्हेरित्यत्र धूमवदन्यस्मिन्तप्तायःपिण्डे वन्हिसत्वात् साध्यासमानाधिकरणसमाना-

धिकरणत्वं वा । भवति हि धूमासमानाधिकरणं यद्धूमवदन्यत्वं तत्समानाधिकरणो वन्हिः । साध्यव्यापकीभूताभावप्रतियोगित्वमसाधारणत्वं । इदमेव सपक्षव्यावृत्तत्वं गायन्ति उदाहरणन्तु शब्दो नित्यः शब्दत्वादिति । शब्दत्वं हि नित्यत्वव्यापको यः शब्दत्वाभावस्तत्प्रतियोगि । न चानित्यः शब्दः शब्दत्वादित्यत्राव्याप्तिस्तस्य सद्धेतुत्वादेतज्ज्ञानं चानुमितौ साक्षात्प्रतिबन्धकं व्यतिरेकिसत्प्रतिपक्षरूपत्वात् न चैवं सत्प्रतिपक्षत्वमिति वाच्यम् हेतुभेद एव तस्याङ्गीकारात् कथमस्य व्यतिरेकिणि सत्प्रतिपक्षरूपतेति चेत्कलय शब्दत्वं हि नान्वयी हेतुः क्वचिदपि नित्ये शब्दत्वस्यादृष्टेः किन्तु व्यतिरेकी तथा च नित्यत्वाभावव्यापको यः शब्दत्वाभावस्तत्प्रतियोगितया यथासाध्यं साधयेत्तथाऽनित्यत्वव्यापकीभूताभावप्रतियोगितया साध्याभावमपि साधयेत् । न च द्वयोर्विरुद्धयोरेकत्र निर्णयः किन्तु परस्परप्रतिबन्धकत्वमेवेति द्वयोरेवानिर्णय इति ध्येयम् ।

प्रसङ्गसङ्गत्या हेत्वाभासनिरूपणं प्रतिजानीते एवमिति । यद्वा प्रतिबन्धकीभूताया हेतुजिज्ञासाया निवृत्ताया तदाभासानामवश्यवक्तव्यत्वादवसरसङ्गत्या हेत्वाभासनिरूपणं प्रतिजानीते एवमिति । हेत्वभिधाने हेतुजिज्ञासा निवृत्तेति भाव । तदाभासाः हेत्वाभासाः । तत्र हेत्वाभासे निरूपणीये । सव्यभिचार इति । तथा च सव्यभिचाराद्यन्यत-

मत्व हेत्वाभासत्वमिति सामान्यलक्षणं बोध्यम् । सव्यभिचारं विभजते । सव्यभिचारस्त्रिविध इति । तथा च साध्याभाववद्वृत्तित्वं व्यभिचारस्तद्वान्सव्यभिचार इत्यर्थः । तत्र साधारणं लक्षयति । तत्रेति । साध्यवत्त्वावच्छिन्नान्योन्याभाववद्वृत्तित्वमित्यर्थः तेन वन्हिमत्पर्वतान्यस्मिन्महानसे धूमस्य वृत्तित्वेऽपि न क्षतिः । सव्यभिचारलक्षणान्तरमाह साध्येति । साधारणस्य व्याप्तिज्ञानप्रतिबन्धकतया दूषकत्वं तच्चोभयथापीति भावः । नन्विदं शब्दो नित्यः शब्दत्वादित्यादावसाधारणे गतमत आह साध्येति । असाधारणं लक्षयति साध्यव्यापकेति । साध्यव्यापकीभूतो योऽभावस्तत्प्रतियोगित्वमित्यर्थः । ननु सपक्षव्यावृत्तत्वमसाधारणत्वमिति प्राचाम्प्रवादामङ्गतिरित्यत आह इदमेवेति । व्यापकस्य हेत्वभावस्याभावेन हेतुना व्याप्यस्य साध्यस्याभावः साधनीय इति साध्याभावसाधकत्वेनास्य दूषकत्वमिति । अनित्यत्वसाधकशब्दत्वहेतावव्याप्तिमाशङ्कते न चेति । शब्दे शब्दत्वाभावस्यानित्यत्वव्यापकत्वाभावादनित्यत्वसाधकः शब्दत्वं नासाधारणं किं तु सद्धेतुरित्याह तस्येति । तस्य शब्दत्वस्य । नन्वसाधारणस्य किमनुमितिकारणविघटकत्वेन दोषत्वं किं वानुमितिप्रतिबन्धकत्वेनेत्यत्राह एतदिति । एतज्ज्ञानं असाधारणज्ञानं । व्यतिरेकीति । तथा च सत्प्रतिपक्षस्य यथा साक्षात्प्रतिबन्धकत्वं तथैतस्यापीत्यर्थः । व्यतिरेके सत्प्रतिपक्षरीतिरेषा तथा हि । शब्दो नित्यः शब्दत्वात् । अत्र शब्दस्य व्यतिरेकितया यत्र नित्यत्वाभावस्तत्र शब्दत्वाभावः यथा घटे तथा शब्दोऽनित्यः शब्दत्वादित्यत्र शब्दत्वस्य व्यतिरेकितया यत्रानित्यत्वाभावस्तत्र शब्दत्वाभावो यथा गगनं इति सत्प्रतिपक्ष इति तर्हि सत्प्रतिपक्षात्मकत्वं स्यादिति शङ्कते नचैवमिति । समाधत्ते हेतुभेद इति । सत्प्रतिपक्षे विभिन्नहेतुद्वयं असाधारणे त्वेकं इत्यर्थः । अस्य असाधारणस्य क्वचिदपीति । यत्र शब्दत्वं तत्र नित्यत्वमित्यत्र यथामुकं इति दृष्टान्ताभाव इत्यर्थः । तत्प्रतियोगितया शब्दत्वाभावस्य

शब्दत्वरूपप्रतियोगितया साध्यं नित्यत्वं। साध्याभाव नित्यत्वाभावं। द्वयोर्नित्यत्वानित्यत्वयोः एकत्र शब्दे। परस्परेति नित्यत्वानित्यत्वानुमानाभ्यां नित्यत्वानित्यत्वसिद्धेः प्रतिबन्धादित्यर्थः।

**अवृत्तिसाध्यहेत्वन्यतरत्वमवृत्तिसाध्यकत्वं वा अनुपसंहारित्वं यथा आकाशवान्धूमाद्दिश इत्यादौ साध्यासमानाधिकरणत्वं विरुद्धत्वं यथा गौरश्वत्वादिति यद्यप्यत्रासाधारणत्वमस्ति साधारणत्वं च तथाप्युपाधिभेदाद्भेदः। पक्षे साध्यधीप्रतिबन्धकः परामर्षः सत्प्रतिपक्षः यथा जलमुष्णं स्पर्शवत्वादित्यादौ नेदमुष्णमतेजस्त्वादित्यादि। असिद्धिस्तु व्यभिचाराद्यन्यपरामर्षप्रतिबन्धकतावच्छेदकरूपवत्वं। सा च त्रिविधा स्वरूपासिद्धिराश्रयासिद्धिर्व्याप्यत्वासिद्धिश्चापक्षे हेत्वभावः स्वरूपासिद्धिः यथा घटः पृथिवी पटत्वादित्यत्र घटरूपपक्षे हेत्वभावः पक्षे पक्षतावच्छेदकासिद्धिराश्रयासिद्धिः यथा गगनकमलं सुरभि कमलत्वादित्यत्र कमले पक्षे गगनीयत्वाभावः॥**

अनुपसहारितां लक्षयति अवृत्तीति। अन्यतरत्व तत्तद्भिन्नभिन्नत्वम्। तथा चावृत्तिसाध्यभिन्नत्वे सत्यवृत्तिहेतुभिन्न घटपटादिक तद्भिन्न साध्य हेतुश्चेत्यर्थः। साध्यहेत्वोर्मध्ये चैकमवृत्त्यपेक्षितमिति भावः। अत एव साध्य एवावृत्तित्वमादायाह अवृत्तीति। अवृत्तिहेतुकत्वस्यानुपसहारित्वे व्यतिरेकव्याप्तिज्ञानप्रतिबन्धकतया दूषकत्व न स्यात्। अत आह अवृत्तिसाध्यकत्वमिति। आकाशेति। आकाशवान्धूमादिति साध्यमात्रस्यावृत्तित्वपक्षे। उभयावृत्तित्वपक्षे त्वाकाशवान्दिश इति। हेतुमात्रस्या-

वृत्तित्वपक्षे तु धूमवानाकाशादित्यादि बोध्यम् । तस्य व्यतिरेकव्याप्तिज्ञानप्रतिबन्धकतया दूषकत्वं सामानाधिकरण्याशस्य प्रतिबन्धकत्वं चेति बोध्यम्। विरुद्धं लक्षयति साध्येति । साध्यतावच्छेदकावच्छिन्नसाध्याधिकरणावृत्तित्वावच्छिन्नाभावप्रतियोगित्वमर्थः । नन्वेवं तादृशप्रतियोगिनि साध्यव्यापकाभावप्रतियोगित्वरूपासाधारण्यस्य सत्वात्साध्यवदन्यवृत्तित्वस्य साध्यासमानाधिकरणहेतुसमानाधिकरणत्वरूपसाधारणत्वस्य सत्वादसाधारणत्वं साधारणत्वं च स्यादित्याह यद्यपीति अत्र विरुद्धे । असाधारणत्वमिति । अयमसाधारण एव न विरुद्ध इति भावः । उपाधिभेदात् निरुक्तासाधारणत्वनिरुक्तविरुद्धत्वरूपोपाधिभेदात्। भेदः अयमसाधारण इत्यादिव्यवहारभेदः । तथा च हेतोरैक्येऽपि न क्षतिरिति भावः। परे तु साध्यासमानाधिकरणत्वमसाधारणत्वं । साध्यव्यापकीभूताभावप्रतियोगित्वं विरुद्धत्वं । विरुद्धताज्ञानस्य सामानाधिकरण्यघटितव्याप्तिज्ञानप्रतिबन्धकत्वं । सत्प्रतिपक्षं लक्षयति पक्षे साध्येति । यथेति । तथा चोष्णत्वव्याप्यस्पर्शवज्जलं उष्णत्वाभावव्याप्यातेजस्त्ववज्जलमिति परामर्शद्वयेन परस्परप्रतिबन्धादुष्णत्वस्याष्णत्वाभावस्य वा नानुमितिरिति भावः । अत्र रत्नकोषकारः । साध्यव्याप्यपरामर्शस्य साध्याभावव्याप्यपरामर्शस्य च सत्वात्सत्प्रतिपक्षस्थले संशयाकारानुमितिर्जायते । न च ग्राह्याभावव्याप्यवत्तानिश्चयोऽनुमितौ प्रतिबन्धक इति वाच्यम्। दोषविशेषाजन्यानुमित्यन्यशाब्दान्याहार्येतरविशिष्टबुद्धिसामान्यं प्रति तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वेनानुमितावप्रतिबन्धकत्वात् । न च प्रतिबध्यकोटावनुमितिभिन्नत्वं नोपादेयमिति वाच्यम् तदुपादानस्यावश्यकत्वात्। इतरथा त्यज्यतां शाब्दान्यत्वमिति । न च तथापि कथं साध्यतदभावयोरेकदानुमितिः विशिष्टबुद्धिमात्रं प्रति कार्यसहभावेन ग्राह्याभावनिश्चयस्य प्रतिबन्धकत्वादिति वाच्यम् । सत्प्रतिपक्षीयानुमितेः संशयात्मकत्वेन विशिष्टबुद्धिरूपकार्यकाले ग्राह्याभावनिश्चयाभावात् । यदि च संशयत्वपदवाच्या सन्देह्मीत्यनुव्यवसायसिद्धविषयता प्रत्यक्षमात्रनि-

ष्ठा नानुमित्यादिसाधारणी अन्यथा साध्यसन्देहस्यानुमितेः पूर्वमपि सत्वात्कि संशयाकारानुमितेः प्रयोजनमिति सूक्ष्ममीक्ष्यते तदा भवतु तस्य साध्याभाववत्तांशे साध्यवत्तांशे च निश्चयात्मकत्वन्तर्हि ग्राह्या-भावनिश्चयस्य कार्यसहभावेन प्रतिबन्धकत्वात् कथमेकदा साध्यत-दभावयोरनुमितिरिति चेन्न तत्र पक्षतावच्छेदकावच्छेदेन साध्यत-दभावयोरनुमित्यसम्भवेऽपि पक्षतावच्छेदकसामानाधिकरण्येनैकदा तादृ-शानुमितौ बाधकाभावात् कोयं मन्त्रपाठ इति चेन्न। तद्धर्मितावच्छेद-कसामानाधिकरण्येन तादृशविशिष्टबुद्धि प्रति तद्धर्मितावच्छेदकसामाना-धिकरण्येन ग्राह्याभावनिश्चयस्य प्रतिबन्धकत्वाभावात्। पक्षतावच्छे-दकसामानाधिकरण्येन तादृशविशिष्टबुद्धि प्रति तद्धर्मितावच्छेदकसा-मानाधिकरण्येन ग्राह्याभावनिश्चयस्य प्रतिबन्धकत्वाभावात्। पक्षताव-च्छेदकसामानाधिकरण्यानुमितौ बाधकाभावात्। अथैव न्यायमतप्रवेशः साध्यतदभावव्याप्यवत्तापरामर्शात्समानाधिकरण्येनोभयानुमितेर्नैयायिकै-रभ्युपगमादिति चेत् न। न्यायमते पक्षतावच्छेदकसामानाधिकरण्येना-नुमितिं प्रति पक्षतावच्छेदकसामानाधिकरण्येन व्याप्यवत्तापरामर्शस्यैव कारणत्वात् पक्षतावच्छेदकावच्छेदेनैव साध्यतदभावव्याप्यवत्तापरामर्शा-त्पक्षतावच्छेदकसामानाधिकरण्ये नानुमितेर्नैयायिकैरनभ्युपगमात्। अस्म-न्मते तु बाधकं विना पक्षतावच्छेदकावच्छेदेन साध्यतदभावव्याप्यवत्ताप-रामर्शादपि तत्सामानाधिकरण्येनानुमितेः सामानाधिकरण्येन साध्यतद-भावव्याप्यपरामर्शादप्यवच्छेदकावच्छेदेनानुमितेरिष्टत्वादुभयोर्भेद इति। तस्मात्सर्वत्र सत्प्रतिपक्षस्थले पक्षतावच्छेदकसामानाधिकरण्येनैव साध्य-तदभावयोरनुमितिरिति। अत्रोच्यते तादृशानुमितिस्वीकारेण साध्यत-दभावबुद्धावनुमिनोमीत्यनुव्यवसायापत्तेः। तदभावव्याप्यवत्तानिश्चये सत्यनुमितिरूपविशिष्टज्ञानानुदयाच्च। न च शाब्देतरत्ववदनुमितीतर-त्वमपि प्रतिबध्यकोटौ देयमिति वाच्यम्। शाब्देतरत्वदानप्रयोजनस्य बा-धग्रन्थे वक्ष्यमाणत्वेनावश्यकत्वाद् अनुमितीतरत्वस्यावश्यकत्वाभावेनानु-

पादेयत्वाद्गौरवान्मानाभावाच्चेति । यदि तदभावव्याप्यवत्ताज्ञाने सत्यप्यनुमितिर्जायत इत्येव दुराग्रहस्तदा तद्वुत्पत्त्यत्तोपमितिस्मृतीनामप्युत्पादः केन वारणीय इति सङ्क्षेपः । ननु ' सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा" इति सूत्र तत्र सत्प्रतिपक्षस्यानुक्तत्वादाह अयमेवेति । अयमेव सत्प्रतिपक्ष एव प्रकरणसम इति शब्दार्थस्त्वेव यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसम इति सूत्र विना ज्ञान अनुमितिरितिप्रावल्स इत्यस्य सहित इत्यर्थः तथा च परेण क्रियमाणा यस्माद्धेतोः साध्याभावानुमितिस्तत्सहितो निर्णयार्थः स्वसाध्यनिर्णयार्थमपदिष्टहेतुकृतः प्रकरणसम इति । अथ सूत्रोक्तसाध्यसमापरपर्यायरूपामसिद्धिमाह असिद्धिस्त्विति । सामान्यलक्षणमाह व्यभिचाराद्यन्यपरामर्षेति । व्यभिचारविरुद्धव्यावर्त्तनाय व्यभिचाराद्यन्येति प्रतिबन्धकतेति । तथा चासिद्धत्रयेणापि परामर्षप्रतिबन्धः क्रियत इति त्रिष्वपि लक्षणसमन्वय इति । पक्षे हेत्वभाव इति । पक्षतावच्छेदकविशिष्टे पक्षे हेतुतावच्छेदकसम्बन्धेन हेत्वभाव इत्यर्थः । पक्षे कमलात्मके पक्षे गगनीयत्वरूपपक्षतावच्छेदकाभावाद् गगनीयत्वरूपपक्षतावच्छेदकस्याश्रयोऽसिद्ध इत्यर्थः ॥

**एतदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धिः यथा धूलीपटले धूमनिष्ठव्याप्त्यभावः । साध्याप्रसिद्धिर्हेत्वप्रसिद्धिर्वा । पक्षे साध्यशून्यत्वं बाधः यथाजलादि पक्षे वह्न्यभावः । न चात्र धूमस्य हेतोरसिद्धिरस्तीति कृतं बाधेनेति वाच्यम् असिद्धिर्हि परामर्षप्रतिबन्धकतया दोषस्तथा च यत्र भ्रमात्मकपरामर्षो जातस्तत्र बाधे सत्यनुमितेरनुत्पत्तेर्बाधस्यानुमितिप्रतिबन्धकतया दोषत्वात् । आद्यकालावच्छिन्नो घटो रूपवान् पृथिवीत्वादित्यत्राद्यकालावच्छेदेन घटे रूपाभावरूपबा-**

**धस्थले दोषान्तराभावाच्च न हि पृथिवीत्वेन रूपाव्याप्तिः पक्षावृत्तिता वेति दिक् ॥**

एतदुभयेति । स्वरूपासिद्ध्याश्रयासिद्धिरूपोभयासिद्धिभिरित्यर्थः । व्याप्यत्वासिद्धेर्द्वैविध्यमाह साध्येति । साध्याप्रसिद्धिः साध्यतावच्छेदकाप्रसिद्धिः । तथा च साध्यतावच्छेदकाप्रसिद्ध्या तद्घटितव्याप्तेरप्रसिद्धत्वादिति भावः । यथा पर्वतः काञ्चनमयवन्हिमान्धूमादित्यादौ काञ्चनमयत्वघटितव्याप्तेरप्रसिद्धत्वादित्यर्थः । हेत्वप्रसिद्धिः । हेतुतावच्छेदकाप्रसिद्धि. यथा पर्वतो वह्निमान्काञ्चनमयधूमादित्यादौ हेतुतावच्छेदकघटितव्याप्तेरप्रसिद्ध्या व्याप्यत्वासिद्ध इत्यर्थः । पक्षे साध्यशून्यत्वमिति । पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यशून्यत्वमित्यर्थः । ननु सूत्रकृता पञ्चमहेत्वाभासः कालात्ययापदिष्ट एवोक्तो बाधस्य तदतिरिक्तत्वे हेत्वाभासाधिक्यापत्तेरतश्चाह अयमेवेति । बाधितविषयः । बाधितविषयसंज्ञकः । कालात्ययापदिष्टश्चेति । काले किञ्चित्कालावच्छेदेनात्यये साध्याभावे सत्यपदिष्टस्तत्कालावच्छेदेन हेतुकृत इत्यर्थः यथा वक्ष्यमाणाद्यकालावच्छिन्नो घटो रूपवान्पृथिवीत्वादित्यादौ पृथिवीत्वादिः । यद्वाकालात्यये काले ऽपदिष्टः साध्यसन्देहज्ञापककालोपलक्षितः पक्षे साध्याभाववत्तानिश्चये हेतुकृत इति । पक्षे साध्यशून्यत्व दर्शयति यथेति । तथा च जल वन्हिमद्धूमादित्यादौ वन्हिरूपसाध्यशून्यत्वस्य जलरूपपक्षे सत्वादित्यर्थः । दोषाणामेवेद लक्षण तद्वत्व हि दुष्टहेतूनामिति बोध्यम् । हेत्वाभासान्तरस्य साङ्कर्येण बाधस्य वैयर्थ्यमाशङ्कते न चेति । असिद्धिबाधयोर्वैलक्षण्यप्रदर्शनेन बाधस्य सार्थक्यमाह असिद्धिर्हीति । लक्षणे तथैवोक्तत्वादिति भावः । तथा चेति । असिद्धेस्तत्राभावादिति भावः । बाधासङ्कीर्णोदाहरणमप्याह आद्यकालेति । अत्र स्वरूपासिद्ध्यभावं व्याप्यत्वासिद्ध्यभाव चाह न हीति । रूपाव्याप्तिः रूपनिरूपितव्याप्त्यभावः । अथ बाधस्यानुमितिप्रतिबन्धकतया दोषत्वमुक्त तत्र कोय प्रतिबध्यबन्धकभाव इति सक्षेपतो विचार्यते । तत्र दोष विशेषाजन्य-

लौकिकसन्निकर्षाजन्यशाब्देतराहार्येतरतद्धर्मितावच्छेदकतद्धर्मावच्छिन्न-विशिष्टबुद्धिं प्रत्यनिश्चिताप्रामाण्यतद्धर्मितावच्छेदकतद्धर्मावच्छिन्नाभाववनिश्चय प्रतिबन्धकः। अत्र शङ्खो न पीत इति निश्चये सत्यपि पित्तादिदोषवशाच्छङ्खः पीत इत्यलौकिकनिश्चयस्य जायमानत्वाद्दोषविशेषाजन्येति। शुक्ताविद रजतमित्यादिभ्रमजनकदोषनिरासाय विशेषपद। बाधनिश्चये तादृशभ्रमानुत्पत्तेः। गाढान्धकारे घटाभावादिनिश्चये सत्यपि सत्यालोकसमवधाने लौकिकसन्निकर्षवशाद्घटादेर्लौकिकप्रत्यक्षस्य जायमानत्वाल्लौकिकसन्निकर्षाजन्येति। मुख न चन्द्र इत्यादिबाधनिश्चये सत्यपि आह्लादयोग्यताभ्रमादनाहार्यस्य मुख चन्द्र इत्यादिशाब्दबोधस्य जायमानत्वाच्छाब्देतरेति। बाधनिश्चयेऽपि इच्छयाऽऽहार्यलौकिकप्रत्यक्षस्यानुभवसिद्धत्वादाहार्येतरेति। आहार्य च बाधबुद्धिकालीनेच्छाजन्य ज्ञान। गृहं न घटवदित्यादिबाधनिश्चये सत्यपि भूतल घटवदित्यादिविशिष्टबुद्ध्युदयात्तद्धर्मितावच्छेदकेति। भूतल न घटवदित्यादिबाधनिश्चये सत्यपि भूतल प्रमेयवदित्यादिनिश्चये बाधकाभावात्तद्धर्मावच्छिन्नेति। वंशो नोरग इत्यादिचाक्षुषसत्त्वेपि मण्डूकवसाञ्जनवशाद्वंश उरग इति प्रत्यक्षोदयात्तदिन्द्रियजन्यत्वमपत्र देय। अप्रामाण्यज्ञानविशिष्टतदभाववत्तानिश्चये सत्यपि विशिष्टबोधोदयात्प्रतिबन्धककोटावनिश्चिताप्रामाण्येति। अनयैव रीत्या तदभावव्याप्यवत्तानिश्चये सत्यपि विशिष्टबोधोदयात्प्रतिबन्धककोटावनिश्चिताप्रामाण्येति। अनयैव रीत्या तदभावव्याप्यवत्तानिश्चयत्तादृशविशिष्टबुद्ध्योः प्रतिबध्यप्रतिबन्धकभावोऽवसेयः। नन्वय स्थाणु पुरुषो वेति संशयोत्तर भ्रमात्मक नाय पुरुष इत्यादिबाधनिश्चयोत्तर वा पुरुषत्वव्याप्यकरादिमानित्यादिविशेषदर्शने सति प्रत्यक्षस्योदयात्कथं निरुक्तप्रतिबध्यप्रतिबन्धकभाव इति चेत्। अत्रोपाध्यायाः। विशेषदर्शनाप्रामाण्यज्ञानादेरुत्तेजकतया विशेषदर्शनाद्यभावविशिष्टतादृशतदभाववत्ताज्ञानत्वेन तादृशविशिष्टबुद्धिं प्रति बन्धकत्व। नन्वेव प्रतिबध्यकोटौ तादृशज्ञानत्वस्य निश्चयत्वस्य वाऽनुपादाने सशयोत्तरमपि सशयोपमितिस्मृतीना-

मनुत्पत्तिप्रसङ्गात् । परामर्शात्मकविशेषदर्शनस्य सत्वाद्बाधनिश्चयोत्तरमप्यनुमित्यद्युत्पत्तिप्रसङ्गाच्चेति चेत् न तादृशविशिष्टप्रत्यक्षनिश्चयत्वेन प्रतिबध्यता विशेषदर्शनाद्यभावविशिष्टतदभाववत्तानिश्चयत्वेन प्रतिबन्धकतेत्येकप्रतिबध्यप्रतिबन्धकभावः तदभाववत्तानिश्चयत्वेन प्रतिबन्धकता तादृशविशिष्टबुद्धित्वेन प्रतिबध्यतेति द्वितीयः प्रतिबध्यप्रतिबन्धकभावोऽप्यावश्यकः । इतरथा बाधनिश्चयोत्तरमपि संशयोपमितिस्मृत्युत्पाद्यापत्तिः अत्रविशेशदर्शनादिकं चोत्तेजकं ॥ दोषविशेषजन्यसंशयस्याहार्यत्वनिरासाय दोषविशेषाजन्येत्यनाहार्येति च पदमित्याहुस्तदपरे न क्षमन्ते प्रतिबध्यप्रतिबन्धकभावद्वयकल्पने गौरवात् । न चैव तदभाववत्तानिश्चये सति विशेषदर्शने सति तद्विशिष्टबोधानुदयप्रसङ्ग इति वाच्यम् । विशेषदर्शने सति तदभाववत्ताज्ञाने ऽप्रामाण्यग्रहस्य जायमानत्वात्ततस्तादृशविशिष्टबुद्धेरिष्टत्वात् । यत्राप्रामाण्यग्रहो न जात इति विभाव्यते तत्र तद्विलम्बस्य शपथनिर्णेयतया तदर्थमनुक्षणे बाधकाभावादिति संक्षेपः । मिश्रास्तु दोषविशेषाजन्यप्रत्यक्षनिश्चयान्यशाब्दान्यतद्विशिष्टबुद्धि प्रत्यप्रामाण्यज्ञानानास्कन्दिततदभाववत्तानिश्चयत्वेन प्रतिबन्धकता । अथैवं विशेषदर्शनमन्तरेणापि तदभाववत्तानिश्चये सति तद्विशिष्टप्रत्यक्षनिश्चयः स्यादिति चेत् न । अप्रामाण्यज्ञानानास्कन्दिततद्विपरीतनिश्चयोत्तरप्रत्यक्षत्वावच्छिन्न प्रति तद्विशेषदर्शनादेर्हेतुत्वावधारणात् । न च तथापि विशेषदर्शनमन्तरेणाप्यानुमानिकतदभावनिश्चयोत्तरं तल्लौकिकप्रत्यक्षानुदयप्रसङ्ग इति वाच्यम् । तल्लौकिकप्रत्यक्षान्यैतादृशविपरीतनिश्चयोत्तरत्वस्य विवक्षितत्वादित्याहुस्तच्च न शोभते तथा हि भ्रमसंशयोत्तरप्रत्यक्षत्वावच्छिन्न प्रति तदभाववत्ताज्ञानत्वेनापि हेतुत्वं बोध्य । अन्यथा विपरीतज्ञानमन्तरेणापि विशेषदर्शने सति विपरीतज्ञानोत्तरप्रत्यक्षपादनस्य दुर्वारत्वात् । एवं विपरीतनिश्चये सति विशेषदर्शनं विना तदुत्तरप्रत्यक्षाभावेपि विपरीतज्ञानानुत्तरप्रत्यक्षापत्त्या तदनुत्तरप्रत्यक्षत्वावच्छिन्न प्रति तदभा-

वज्ज्ञानत्वेन प्रतिबन्धकत्वमावश्यकमिति बहुतरगौरवं । तस्माद्विपरीतनिश्चयोत्तरप्रत्यक्षं प्रति विशेषदर्शनं न हेतुरिति । न चैवं विनापि विशेषदर्शनं प्रत्यक्षापत्तिः । सति बाधनिश्चये तस्य प्रतिबन्धकत्वात् । न च तर्हि सति विशेषदर्शने सति च बाधनिश्चयेऽपि न स्यादिति वाच्यम् । विशेषदर्शनोत्पत्तिकाले बाधनिश्चयेऽप्रामाण्यग्रहात् । क्षणविलम्बस्य शपथनिर्णेयत्वेन बाधनिश्चयनाशोत्तरमपि तादृशप्रत्यक्षस्य सूपपन्नत्वाच्च । ननु यत्र यत्क्षण एव विपरीतनिश्चयस्तत्क्षण एव विशेषदर्शनं तत्रास्मन्मते द्वितीयक्षणे विशिष्टबोधः श्रीमन्मते चतुर्थक्षणे स्यादिति चेत् इष्टापत्तेः । क्षणद्वयनिर्णयस्यापि जन्मसहस्रेणापि ज्ञातुमशक्यत्वाच्चेति संक्षेपः । शिरोमणिचरणास्तु संशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनं नोत्तेजकं न वा कारणं प्रमाणाभावात् । नन्वभिहितमेवयद्विशेषदर्शनमन्तरेणापि संशयोत्तर प्रत्यक्षं स्यादिति चेत् न संशयोत्तरप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वाभावेन तदवच्छिन्नापादनस्य शशशृङ्गापादनतुल्यत्वात् । लाघवात्तत्तद्विशिष्टबुद्धित्वस्यैव कार्यतावच्छेदकत्वात् । तथा च दोषविशेषलौकिकसन्निकर्षाद्यजन्यतज्ज्ञानं प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वकल्पनावश्यकत्वात्सति विशेषदर्शनेऽपरकोटिप्रतिबन्धाविश्चयात्मकं संशयोत्तरप्रत्यक्षमर्थवशात्सिद्धमित्यपरकोटिकज्ञानप्रतिबन्धकतया विशेषदर्शनं संशयोत्तरप्रत्यक्षे प्रयोजकमात्रं न तु कारणं अन्धकारस्थघटादिसंशयोत्तरप्रत्यक्षे व्यभिचारात् । अथालोकसमवधानादेस्तत्रोत्तेजकतया न दोष इति चेन्न । उत्तेजकानामननुगमात् । संशयानुत्तरप्रत्यक्षे क्लृप्तायाः सामान्यसामग्र्या एवमाद्युत्तरप्रत्यक्षेऽपि निर्वाहात् । तत्र सामग्र्यन्तरकल्पनेऽतिगौरवादिति संक्षेपः । विवेचयिष्यते चान्यत्र योग्यताज्ञानस्य कारणत्वविचारावसर इति । अथ वन्हिव्याप्यधूमवान्पर्वत इत्यादिपरामर्शाद्यत्र पर्वतीयवन्हीतरवन्ह्यभाववानितिबाधनिश्चयसत्त्वे पर्वतीयवन्ह्यादिमात्रविधेयिकानुमितिरितिसिद्धान्तस्तत्र सा किं वन्हित्वरूपेण तत्तद्वन्हित्वरूपेण वेति चेत् । अनुमितेर्व्यापकतानवच्छेदकाप्र-

कारकत्वनियमाद्वन्हित्त्वरूपेणैव पर्वतीयवन्हिमात्रविधेयिकानुमितिः । न च वन्हिव्याप्यधूमवान्पर्वत इति सामान्यरूपेण परामर्षाद्विरुक्तवाध-निश्चयदशाया वन्हित्वरूपेण कथ पर्वतीयवन्हिमात्रविधेयिकानुमिति-रिति वाच्यम् । इतरबाधज्ञानस्येतरवन्हिभानप्रतिवन्धकत्वेनेतरवन्हेरभा-नात्तेनरूपेणपरामर्षात्तेन रूपेणानुमितै वाधकाभावादिति । न चेतरवा-धज्ञानस्य भिन्नप्रकारकतया वन्हित्वेन रूपेणेतरवन्हिभाने कथ प्रतिव-न्धकत्वमिति वाच्यम् । इतरवाधस्थले तथैव व्युत्पत्तेरितिदिक् । शिरोमणिप्रभृतयस्तु पर्वतीवन्हीतरवन्ह्यभाववानित्यादिवाधनिश्चयसत्वे विशिष्यपर्वतीयवन्हित्वरूपेण पर्वतीयवन्हिमात्रनिष्ठविधेयताशालित्य-नुमितिः । न चानुमितेर्व्यापकतानवच्छेदकारकत्वनियमभङ्गापत्तिः । तादृशनियमस्येतरवाधस्थलीयानुमितिभिन्नानुमितिपरत्वात् । न च तादृ-शबाधनिश्चयविरहदशाया वन्हिव्याप्यधूमवान्पर्वत इति सामान्यपरा-मर्षादपि पर्वतीयवन्ह्यादेर्विशेषरूपेणानुमित्यापत्तिरितिवाच्यम् तादृश-विशेषरूपेणानुमिति प्रति तादृशेतरवाधज्ञानस्य कारणत्वात् । इत्थ च पर्वतो जातिमान् सत्वादित्यादौ पर्वतवृत्तित्वविशिष्टजात्यभाववानिति वाधनिश्चयस्यानुमितौ प्रयोजकत्व । तत्र पर्वतवृत्तित्वविशिष्टजातित्व-स्यैव प्रकारत्वादिति । न च पर्वतीयवन्हित्वादिरूपेण व्याप्यवत्तापरामर्शात्तादृशेतरवाधनिश्चयमन्तरेणापि तेन रूपेण तादृशवाधनिश्च-योत्तरानुमितिरिति व्यभिचार इति वाच्यम् पर्वतीयवन्हीतरवन्ह्यभाव-वानिति वाधनिश्चयत्वेन तादृशवाधनिश्चयोत्तरानुमितित्वेन कार्यकार-णभावात्तादृशबाधनिश्चयाभावेन तादृशानुमितेरभावादिति सक्षेपः ।

**ननूपाधिरपि हेत्वाभासान्तरः सम्भवतीति कथमेत एवेति चेत्सव्यभिचाराद्यन्यतमत्वं हि हेत्वा-भासत्वं न चोपाधिस्तदन्यतम इति तस्मान्नैवं भूत-त्वादतएव सिद्धसाधनमपि न हेत्वाभासान्तरं । ननु**

कोऽयमुपाधिस्तत्राचार्य्याः साध्याव्यापकत्वे सति साधनाव्यापक उपाधिः । तद्व्यापकत्वं च तत्समानाधिकरणा यावन्तो यत्समानाधिकरणास्तत्वं । यथा धूमवान् वन्हेरित्यत्रार्द्रेन्धनं भवति हि तत्साध्यव्यापकं । धूमसमानाधिकरणस्य यावतस्तत्समानाधिकरणत्वात् भवति च साधनाव्यापकं वन्हिमत्यपःपिण्डे तदसत्वात् सद्धेतौ तु नैवं तत्र सद्धेतोः साध्यव्यापकत्वात् साध्यव्याप्याव्याप्यस्य च साध्याव्यापकत्वात् ।

ननुसाक्षात्परपरयानुमितिबन्धकज्ञानविषयत्व हेत्वाभासत्वमिति पर्यवसित तच्चोपाध्यादावप्यस्तीति तस्यापि हेतुदोषत्व स्यादित्याशङ्क्य समाधानपूर्वकमुपाधि निरूपयति नन्वित्यादिना । सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा कथिता नतूपाधिरपि कथित इत्यभिप्रायवान्समाधत्ते सव्यभिचारेति । सव्यभिचाराद्यन्यतमत्व सव्यभिचारादिपञ्चकभिन्नभिन्नत्व । उपाधौ तद्भिन्नत्वाच तदन्तर्भाव इति भाव । तदेवाह न चेति तस्या उपाधेः । नैवभूतत्वादिति सव्यभिचाराद्यन्यतमत्वरूपैवभूतत्वाभावादित्यर्थः । अत एव सव्यभिचाराद्यन्यतमत्वस्यैव हेत्वाभासत्वकथनादेव । अत्र साध्यपद । साध्यत्वाभिमतपरं । एव साधनपदमपि साधनत्वाभिमतपर । तेन व्यभिचारिणि साध्याभिमते व्याप्तिनिरूपकत्वरूपसाध्यत्वस्य साधनाभिमते व्याप्त्याश्रयत्वरूपसाधनत्वस्य विरहेपि न क्षतिः । तत् साध्यत्वाभिमत आद्रन्धन उपाधिरूपमार्द्रेन्धनादि । तत् आर्द्रेन्धन । ततसमानाधिकरणत्वात् । आर्द्रेन्धनसमानाधिकरणत्वात् । उपाधौ द्वितीयदलं योजयति भवतीति । तदसत्वादिति । आर्द्रेन्धनासत्वादित्यर्थः । तथा च वन्हिसमानाधिकार-

णस्यापःपिण्डत्वस्यार्द्रेन्धनसमानाधिकरणत्वाभावादिति भावः। नैव साध्यव्यापकत्वे सति साधनाव्यापकत्व। तत्र सद्धेतौ। हेत्वोरिति। हेतुसमानाधिकरणा यावन्तः साध्यसमानाधिकरणास्तत्कत्वरूपव्याप्तहेतौ सत्वादित्यर्थः। ननु तथापि सद्धेतावुपाधि' कुतो नेत्यत आह साध्यव्याप्याव्यापकस्येति। साध्यव्याप्यस्य धूमादेर्यदव्यापकं तत्साध्यस्य वह्न्यादेरव्यापकमित्यर्थः। तथा च मद्धेतौ साधनसमानाधिकरणस्य साध्याधिकरणवृत्तित्वनियमात्साधनाधिकरणवृत्त्यभावप्रतियोगित्वरूपसाधनाव्यापकत्वस्य साध्याधिकरणवृत्त्यभावप्रतियोगित्वरूपसाध्याव्यापकत्वादिति।

अत्र वदन्ति इदं साधनाव्यापकेऽव्याप्तं। यथा काकः श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वं न हि तच्छ्यामत्वव्यापकं श्यामत्ववति घटेऽसत्वात् किन्तु मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकं यत्र यत्र मित्रातनयत्वावच्छिन्नश्यामत्वं तत्र शाकपाकजत्वस्य सत्वात्। अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वमिति चेन्न। वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र पक्षधर्म्मबहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापके रूपादावुपाधावव्याप्तेः न हि प्रमेयत्वरूपसाधनावच्छिन्नसाध्यव्यापकं तत् आत्मादावसत्वात् किन्तु बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकं यावति तद्वति घटादौ रूपसत्वात्। अथ पक्षधर्म्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वं विवक्षितमिति चेन्न। यथोक्तस्थले शाकपाकजत्वेऽव्याप्तेः न हि पक्षधर्म्मावच्छिन्नश्यामत्वव्यापकन्तत्। तथाविधश्यामत्ववति पक्षेऽसत्वात्।

ग्रन्थोक्तपदार्थानां तट्टीकादिना स्फुटज्ञानसम्भवात् किमर्थं तव प्रयासोऽतः पूर्वपक्षसिद्धान्तपूर्वकं तदुत्तरमाह कृता—इति। नन्विमे विशेषाः सिद्धान्तचूडामणिप्रभृतिषु सन्तीति त्वत्प्रयासो व्यर्थोऽत आह कृतेतीत्यन्ये। यद्यपि तथाऽपीति शब्दौ पूर्वपक्षसिद्धान्तव्यञ्जकौ प्रसिद्धौ। यद्यपि आद्यैः पूर्वाचार्यैः पृथूदकस्वाम्यादिभिः। चतुरवचना सद्वृत्तमित्यादिविशेषयुता ग्रन्थरचना ग्रन्थनिर्मितिः कृता। तया च पूर्वसिद्धान्तगुरुपदार्थज्ञानस्यानायासेन सम्भवान्मत्कृतश्रमो व्यर्थस्तथाऽपि मया भास्कराचार्येणेय कृतिरारब्धा। अत्र हेतुमाह। तदुदितविशेषान् निगदितुमिति। तैः पूर्वाचार्यैः। उदिता उक्ताः। तेभ्यो ये विशेषा मद्भाविताभ्स्तान् निगदितुं कथयितुम्। एवं च मम यद्ग्रन्थारम्भणं तद्विशेषकथनायेति श्रमः सार्थक इति भावः। विशेषज्ञानायाह विलोक्येति। अतोऽत्र पूर्वग्रन्थापेक्षया विशेषसत्त्वात् सुजनगणकैः। सुजनपदं दुर्गणकव्यावृत्त्यर्थम्। तेषां सहजद्वेषात्। मत्कृतिः। क्रियत इति कृतिर्ग्रन्थः। मन्निर्मिता कृतिः। अपिशब्देन भवद्भिः पूर्वग्रन्थाः सपूर्णा दृष्टाः। इदानीं मत्कृतग्रन्थो द्रष्टव्योऽवश्यमित्याग्रहं सूच्यते। अन्यथा पूर्वग्रन्थविलोकनेनालस्योदयात् तेषामनादरोत्पत्तेः। कृत्स्ना निःशेषा विलोक्या अव्यवहितत्वेन द्रष्टव्या। सपूर्णग्रन्थदर्शनादेव मदुक्तविशेषज्ञानं स्यादिति भावः। यद्वा अत एव पूर्वग्रन्था इदानीं न द्रष्टव्या इत्याह। विलोक्येति। अतो मद्ग्रन्थदर्शनकालानन्तरमपि—शब्दोऽन्ययोगव्यवच्छेदार्थैवकारपरस्तेनैतत्कालपर्यन्तं भवद्भिः पूर्वग्रन्था दृष्टा इदानीं मत्कृतग्रन्थ एव द्रष्टव्यः। न पूर्वग्रन्थाः। अत्र पूर्वोक्तनिखिलार्थतद्विशेषयोः कथनाल्लाघवेनैवैतद्ग्रन्थज्ञानेन सकलपूर्वग्रन्थज्ञानसम्भवादन्यथा सिद्धेरिति भावः। 'अत्रापिशब्दो भिन्नक्रमः। अतो विलोक्या मत्कृतिः। कृत्स्नाऽपि द्रष्टव्या'—इति केचित्। तन्न। कृत्स्नाऽपि द्रष्टव्येत्यनेन पूर्वोक्तलाभात्। ननु विशेषमात्रग्रन्थस्यैवावलोकनं युक्तं न तु सम्पूर्णग्रन्थस्य। विशेषकथनाय ग्रन्थारम्भकरणात्। किं च त्वयाऽपि विशेषमात्रग्रन्थः कार्यो न तु पूर्वाचार्योक्तिनिखिलार्थनिबन्धनात्मकोऽपि प्रतिज्ञाभङ्गापत्तेरत आह। मध्य

इति । हि यत इह शिरोमणिग्रन्थे ते विशेषा मध्ये मध्ये यथास्थाननिहिताः सन्ति । अयमर्थः । मध्यमाधिकारे यो विशेषः स मध्यमाधिकारे । ग्रहप्रकरणे ग्रहविशेषः । शुद्धिप्रकरणे तद्विशेषः । एवं स्पष्टाधिकारादौ यथास्थानमुक्ता इति । विशेषमात्रग्रन्थे तु परस्परानन्वितासङ्गतप्रलापात् प्रेक्षावता प्रवृत्त्यनुपपत्तेः । पूर्वश्लोके शिरोमणिमित्यनेन निखिलार्थनिबन्धनात्मकग्रन्थस्य प्रतिज्ञाकरणाच्च तत्स्तुतिः । ते विशेषा यथास्थानेऽन्तरेण स्थितास्तेषां सर्वेषां विलोकनं सम्पूर्णग्रन्थावलोकनेन न तु विशेषावलोकनात् । कदाचिद्भ्रमाद्विशेषान्तरत्यागापत्तेः । 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणादिदं शिखरिणीवृत्तम् ॥ ४ ॥

इदानीं सुजनगणकान् प्रार्थयन् प्रयोजनमाह ।

**तुष्यन्तु सुजना बुद्ध्वा विशेषान् मदुदीरितान् ।**
**अबोधेन हसन्तो मां तोषमेष्यन्ति दुर्जनाः ॥ ५ ॥**

**वा. भा**—सुजना इति विशेषणं किम् । यतो दुर्जनाः स्वतस्तोषमेष्यन्ति । यदा दुर्जना मदुक्तान् विशेषान् द्रक्ष्यन्ति तदा तानज्ञात्वा दौर्जन्येन सञ्छन्नमतयो विशेषार्थान् न बुध्यन्ति तेनाबोधेन मदुक्तिमेव विरुद्धां मन्यमानाः सहर्षाः किं तेन कविना विरुद्धमुक्तमिति मामेव हसन्तस्तोषमेष्यन्ति । न हि तोषं विना हास्यमुत्पद्यत इति भावः ॥ ५ ॥

**वा वा**—मत्कृतिविलोकने सर्वेषामपि सन्तोषो भविष्यतीत्याह तुष्यन्त्विति ॥ ५ ॥

**मरीचिः**—ननु सुगणकानन्दकस्त्वद्ग्रन्थो गणकत्वावच्छिन्नानां सुखकराभावाद् दुर्गणकानां सहजद्वेषसत्त्वादाधुनिकग्रन्थे उत्सर्गतः सर्वेषां द्वेषसम्भवाच्चायं तेषां दुःखकर इति शिष्टानां प्रवृत्तिर्न स्यात् । दुःखकारणस्य हेयत्वाद्दुर्बुद्धिः पूर्वग्रन्था दूषितास्तथा त्वदुक्तमपि केचिद्दूषयिष्यन्ति वाऽत आह तुष्यन्तु—इति । स्पष्टार्थम् । सुगणकानां भावावबोधने दूषणास्फुरणात् तुष्टिः । दूषणास्फुरणे च तेषां तत्समाधानविचारदत्तमनसां सचिन्ततया तोषानुत्पत्तेः । दुर्गणकानां तु भावानवबोधनेन

दूषणोदयात् कथमत्राशुद्धमुक्तमित्युपहासदत्तवित्ताना तद्धास्यदर्शनेन तुष्टिरनुमीयते। हासस्य तुष्टिजन्यत्वात्। तथा च यस्य सम्यग्भावावबोधस्तस्य दूषणास्फुरणम्। यस्य दूषणास्फुरणं तस्य भावानवबोध इति मदुक्तस्य दूषणं कोऽपि न दास्यति अत एव पूर्वममलमित्युक्तमिति भावः। 'वितानमाभ्यामत्रान्यत्'इति वितानाख्यमनुष्टुप्छन्दः। एतदर्थस्तु—अत्रानुष्टुब्जातिवृत्ते आभ्या समानिकाप्रमाणिकाभ्यामन्यद्वृत्त तद्वितानसज्ञम्। आभ्यामिति पूर्वोक्तोपलक्षकम्। तेन चित्रपदाविद्युन्मालामाणवकहंसरुताख्येषु नातिप्रसङ्ग इत्यलम् ॥ ५ ॥

अथानन्तरश्लोकेन सिद्धान्तग्रन्थलक्षणं श्लोकद्वयेन सिद्धान्तप्रशंसा चाह* ।

त्रुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमा-
च्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः ॥ ६ ॥

जानन् जातकसंहिताः सगणितस्कन्धैकदेशा अपि
ज्योतिःशास्त्रविचारसारचतुरप्रश्नेष्वकिञ्चित्करः।
यः सिद्धान्तमनन्तयुक्तिविततं नो वेत्ति भित्तौ यथा
राजा चित्रमयोऽथ वा सुघटितः काष्ठस्य कण्ठीरवः ॥७॥

गर्जत्कुञ्जरवर्जिता नृपचमूरप्यूर्जिताऽश्वादिकै-
रुद्यानं च्युतचूतवृक्षमथ वा पाथोविहीनं सरः।
योषित् प्रोषितनूतनप्रियतमा यद्वन्न भात्युच्चकै-
र्ज्योतिःशास्त्रमिदं तथैव विबुधाः सिद्धान्तहीनं जगुः ॥८॥

वा० भा० —स्पष्टम् ॥ ६—८ ॥

वा० वा० —यदर्थं यो विचार आरभ्यते तत्समाप्तौ स एव बुद्धिस्थो भव-

---

* इय पूर्वटीका परम्परातो विकृता वस्तुत –'अथैकश्लोकेन सिद्धान्तग्रन्थलक्षणमनन्तरश्लोकद्वयेन सिद्धान्तप्रशंसा चाह'–इति।

तीति यस्मात्सिद्धान्तशिरोमणिं करोतीति प्रागभिहित तत्र सिद्धान्तपदेन कोऽसौ ग्रन्थविशेषोऽभिधीयत इति तल्लक्षणमवतारयति । त्रुट्यादीति । गण्यते सङ्ख्यायते तद्गणित तत्प्रतिपादकत्वेन तत्सञ्ज्ञ शास्त्रमुच्यते । तत्र व्यक्तेन स्पष्टेनोच्चावचजनप्रसिद्धमार्गेण सङ्कलनादिना यदुच्यते तद्व्यक्तम् । यावत्तावदादिवर्णकल्पनासापेक्षबुद्ध्या गणितमव्यक्तम् । ग्रहकर्मणा ग्रहगणितम् । गोलेन वेधादिना ग्रहकर्म सवासन गण्यत इति गोलाश्रितत्वाद्गोलगणितम् । गणितचतुष्टयात्मको गणितस्कन्धः । कालविधानशास्त्रापरपर्याय ग्रहगणितमेव गणितस्कन्धः । स चाध्येतव्यः । अत्र वासनावगतिपूर्वकोऽध्ययनविधिव्यापार इति । एतद्गणितत्रय ग्रहगणितवासनायामुपयुक्तम् । अतो गणितचतुष्टयात्मकत्व गणितस्कन्धस्य व्यवहरन्ति स एव सिद्धान्त इति । तथा चाहुः । 'व्यक्ताव्यक्तभगोलवासनमयः सिद्धान्त आद्य.' इति । आचार्योऽपि—

"गणितस्कन्धसन्दर्भोऽदभ्रदर्भाग्रधीमतः ।
उचितोऽनुचितो यन्मे धार्ष्ट्यं तत् क्षम्यता विदः" ॥

इति सिद्धान्त गणितस्कन्धत्वेन व्यवाहरत् । ग्रहतिथिसारिण्यो यन्त्रादि सर्वमत्रैवान्तर्भूतम् । अन्ये त्वेवमिच्छन्ति—यत्र कल्पादेर्ग्रहानयन स सिद्धान्तः । यत्र युगादेस्तत् तन्त्रम् । यत्र शकादेस्तत् करणमिति । अभियुक्तास्तु सिद्धान्ततन्त्रशब्दाभ्या गणितस्कन्धतदेकदेशावभिधीयेते होराशब्दो लग्नतदर्धयोरिवेत्याहु । उभयथाऽप्यभियुक्तप्रसिद्धिदर्शनात् । तन्त्रशब्देन ग्रहगणितस्कन्ध वराहो व्यवाहरत् * सावत्सरसूत्रे तेनोक्तम् । 'तत्र ग्रहगणिते पौलिशरोमक-वासिष्ठ-सौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु युगवर्षायनर्तुमासपक्षाहोरात्रयाममुहूर्त्तनाडीविनाडीप्राणत्रुटित्रुट्याद्यवयवादिकस्य कालस्य क्षेत्रस्य च वेत्ता चतुर्णां च मानाना सौरसावननाक्षत्रचान्द्राणामधिमासकावमसम्भवस्य च कारणाभिज्ञ' इत्यादिना ग्रन्थसन्दर्भेण एतानि समस्तानि व्यस्तानि वा यत्र भवन्ति स सिद्धान्त इति लक्षणमुक्तम् । बुधैरुदाहृत इत्यनेन यत्राभियुक्ताना सिद्धान्तत्वप्रसिद्धिः स

* बृहत्सहितायाम् ।

सिद्धान्त इति द्योतितम् । मुनिकृतशास्त्रे तु येन यावान् विषयः पृष्टस्तं प्रति तावानेवोक्त इत्येकदेशेऽपि सिद्धान्तपदप्रयोगो नैव दोषमावहति । इदं यल्लक्षणं क्रियते तत् पौरुषसिद्धान्तानामित्यविरुद्धम् ॥ ६ ॥

अध्येतव्यं ब्राह्मणैरेवेत्यध्ययनविधिविहितस्य सिद्धान्ताध्ययनस्य प्रवृत्त्यनुकूलां सिद्धान्तानभिज्ञनिन्दाद्वारेण सिद्धान्तज्ञप्रशंसामाह जानन्निति गर्जेदिति ॥ ७—८ ॥

**मरीचिः**-ननु सिद्धान्तशिरोमणिमित्याद्यत्र सिद्धान्तपदवाच्यः क इत्यतः सिद्धान्तलक्षणं शार्दूलविक्रीडितवृत्तेनाह त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः—इति । अत्र त्रिस्कन्धात्मकज्योतिःशास्त्रे गणितस्कन्धप्रबन्धे । गण्यते संख्यायते तद्गणितं तत्प्रतिपादकग्रन्थसमूहो गणितस्कन्धः । सिद्धान्ततन्त्रकरणसारण्यायुर्दायाष्टकवर्गपञ्चाब्दवास्तुच्छन्दःशिल्पादिविद्योपयोगि गणितं कलनेत्युच्यते । स गणितस्कन्धः सिद्धान्तमात्रप्रतिपादकात्मकः । तस्य प्रबन्धो ग्रन्थाः । जात्यभिप्रायेणैकवचनम् । तेष्वित्यर्थः । यत्र यस्मिन् ग्रन्थे त्रुट्यादिप्रलयान्तकालकलनेत्याद्युच्यते स ग्रन्थो बुधैर्गणितस्कन्धज्ञैः सिद्धान्तः सिद्धान्तपदवाच्य उदाहृत उक्तः । एतदुक्तरूपलक्षणलक्षितः सिद्धान्तपदवाच्यस्तेन तद्विदा यत्र सिद्धान्तपदवाच्यत्वं तस्यैतल्लक्षणमिति भावः । त्रुट्यादिप्रलयान्तकालकलना । त्रुटिकालादिमहाकल्पकालान्तावच्छिन्नखण्डकालस्य प्रतिपादनम् । मानप्रभेदः । मानानां सौरादीनां कालमानानाम् । प्रकर्षेण भेदेन सम्यग्विचारेणेत्यर्थः । भेदो नियतसंख्याविचारः । द्युसदां ग्रहाणां चारो गतिचिन्ता । अत्र जात्यभिप्रायेणैकवचनम् । तेन क्रमेण मध्यस्पष्टत्रिप्रश्नग्रहणच्छायोदयास्तग्रहयुतिनक्षत्रयुतिशृङ्गोन्नतिपातादिरूपा । द्विधा गणितं व्यक्तमव्यक्तं च । उच्चावचजनप्रसिद्धसङ्कलनादिना यावत्तावदादिवर्णनिरपेक्षेण चोच्यते तद्व्यक्तं पाटीगणितमित्यर्थः । यावत्तावदादिवर्णकल्पनासापेक्षमव्यक्तं बीजगणितमित्यर्थः । प्रश्नाः पूर्वपक्षाः स्वकल्पिताः पूर्वरीत्या वा सोत्तराः समाधानसहितास्तथा प्रतिपादिताः । भूधिष्ण्यग्रहसंस्थितेः पृथ्वीनक्षत्रग्रहा-

णा सस्थानस्य कथन प्रतिपादनम् । यन्त्रादि कालादिज्ञानसाधक प्रसिद्धम् । आदिपदात् स्वकल्पित च । यत्रोच्यत इत्यस्य प्रत्येकमन्वयः । नन्विद लक्षण सिद्धान्तत्वावच्छिन्नसिद्धान्तस्य न सम्भवति । तथा हि तद्धि श्लोकोक्त सम्पूर्ण वा प्रत्येक वा । नाद्यो व्यासवसिष्ठसिद्धान्तेऽव्याप्तेः । न च पौरुषसिद्धान्ताना लक्ष्यत्वाभावान्नाव्याप्तिरिति वाच्यम् । बुधैरुदाहृत इति मूलग्रन्थेन तज्ज्ञानां यस्मिंस्तद्व्यवहारस्तल्लक्षणमिति व्याससिद्धान्तेऽपि तद्विदा तद्व्यवहारात् । नान्त्यस्तन्त्रकरणादावतिव्याप्तेः । न च तन्त्रकरणादिक सिद्धान्तैकदेशमिति सर्वजनसिद्धेन तस्यापि लक्ष्यत्वात् । तेन व्यासवसिष्ठोक्ते तदन्यतदन्यतमलक्षणस्य सत्त्वान्नाव्याप्तिरिति वाच्यम् । करणादौ सिद्धान्तव्यवहारापत्तेः । सिद्धान्तलक्ष्यलक्षणाना परस्परमव्याप्तेरतिव्याप्तेश्च । न च श्लोकोक्त सिद्धान्तशिरोमणेरेव लक्षण वाच्यम् । श्रीपतिकृतसिद्धान्तशेखरेऽतिव्याप्तेः । गौरवाच्चेति चेत् । अत्रैकदेशिनो 'व्यक्तमव्यक्त ग्रहकर्मणा ग्रहगणित गोलेन वेधादिना ग्रहकर्म सवासन गण्यत इति गोलाश्रितत्वाद्गोलगणितं कालविधानशास्त्रापरपर्यायम् । ग्रहगणितमेव गणितस्कन्धः । वासनावगतिपूर्वकस्तदध्ययनविधिव्यापार इति । एतद्गणितत्रय ग्रहगणितवासनायामुपयुक्तमतो गणितचतुष्टयात्मकत्व गणितस्कन्धस्य व्यवहरन्ति स एव सिद्धान्तः । तथा चाहु'। 'व्यक्ताव्यक्तसगोलवासनमयः सिद्धान्त आद्यः, इति । अत्र व्यक्ताव्यक्तप्रधानः सगोलवासनमय इति मध्यपदलोपी समासः। यद्वा व्यक्ताव्यक्तीकृताऽव्यक्ता सगोलवासना येन तद्गणित तन्मयः । गणितं विना सगोला वासना नैव ज्ञायते तेन गणितमेव मुख्य सिद्धान्त इत्यर्थः । ग्रहतिथ्यादिसारिणीयन्त्रादि सर्वमत्रैवान्तर्भूतम् । तथा च गणितस्य सिद्धान्तत्वे सिद्धे गणितान्तर्गतत्रुट्यादीत्यादिश्लोकोक्त साधु । यावन्तो भेदा वक्तुं शक्यन्ते तावन्तो वक्तव्यास्तेनैतच्छ्लोकस्य गणितपदार्थवान् सिद्धान्त इति लक्षणे तात्पर्यम् । एतादृश च व्यासादिसिद्धान्ते स्फुटमिति न क्षतिरित्याहुः'—तन्न । गणितस्कन्धप्रबन्धे स सिद्धान्त उदाहृत इत्यस्यासङ्गतत्वापत्तेः । गणितस्कन्धसिद्धान्तयोः पर्यायत्वेनाभेदात् । यत्र

कल्पसृष्ट्याद्यहर्गणेन प्राधान्यतो ग्रहादिसाधनं स सिद्धान्तः । यत्र युगाद्यहर्गणेन तत्साधनं तत् तन्त्रम् । यत्र शकाहर्गणेन तत्साधनं तत् करणमिति केचित् ।

"सिद्धान्तोदीरितो ह्यर्थो निजयुक्त्यैव बध्यते ।
निखिलो यत्र तन्त्रं तद्विज्ञोपकरणाश्रितम् ॥
सिद्धान्तोक्तैकदेशास्तु केचिद्यत्र निरूपिताः ।
तदुक्तं करणं नाम्ना लघूपायविनिर्मितम्" ॥

इति तन्त्रकरणयोर्लक्षणमाहुः । सोपपत्तिकतया स्वप्रतिपाद्यार्थसिद्धकारिग्रन्थत्वं सिद्धान्तत्वमिति नवीनाः । वस्तुतस्तु अभियुक्तानां यत्र सिद्धान्तव्यवहारविषयत्वं स सिद्धान्त इति लक्षणम् । आधुनिकग्रन्थे तु पूर्वसिद्धान्तोक्तरीत्योक्तत्वं लक्षणम् । न च त्रुट्यादिप्रलयान्तकालकलनेत्यादिश्लोकस्य व्यर्थतापत्तेरिति वाच्यं तत्र लक्षणमित्यनुक्तत्वात् तस्यान्यार्थपरत्वात् । तथा हि सिद्धान्तशिरोमणिमित्यत्र सिद्धान्तस्य सिद्धान्तपदार्थनिरूपकेत्यर्थकरणात् । सिद्धान्तपदार्थाः के इत्यपेक्षायां सिद्धान्तपदार्थानाह । त्रुट्यादीति । यत्र ज्योतिःशास्त्रे विद्यमानगणितस्कन्धप्रबन्धे स निरुक्तलक्षणाक्रान्तः प्रसिद्धः सिद्धान्तः । अत्र जात्यभिप्रायेणैकवचनम् । बुधैरुदाहृतः। अत्र सिद्धान्तत्वावच्छिन्नसिद्धान्ते त्रुट्यादिप्रलयान्तकालेत्यादियन्त्राद्यन्तमुच्यते । तथा च सिद्धान्तपदार्थाः कथनयोग्या एते इत्यर्थः । तेन सिद्धान्तेषु एतत्पदार्थान्यतमकथनं युक्तम् । एवं हि प्रतिपाद्याज्ञाने प्रेक्षावतामप्रवृत्तेरिति प्रतिपाद्यपदार्थकथनमावश्यकमिति भावः। यद्यपि त्रुट्यादिप्रलयान्तकालकलनेनैव मानोद्देशो गतार्थः । कालकलनायां मानानां निरूपितत्वात् तथाऽपि पदार्थप्राधान्यज्ञानाय पृथगभिधानात् । अत एव सिद्धान्तशेखरे कालमानयोः पृथग्निरूपणम् । मानानां कालापेक्षत्वाल्लाघवेनैकत्र निरूपणं मूलकृतोक्तम्। यद्ग्रन्थे किञ्चित्पदार्थनिरूपणं तस्य तत्प्रकरणत्वं तेन तन्त्रकरणयोः प्रागुक्तं स्वरूपं युक्तम् । अत एव केशवदैवज्ञैः स्वकृतजातकपद्धतिटीकायां

प्रथमश्लोकव्याख्यावसरे 'त्रिस्कन्धज्योतिःशास्त्रस्वरूपकथने अथ सूत्राभिधाने गणितस्कन्धे किमित्याह भास्कराचार्यस्त्रुट्यादीत्यादिनोक्तम्'—इति मन्दाश्रितः पन्थाः ॥ ६ ॥

ननु सिद्धान्तारम्भणं न युक्तं प्रयोजनाभावात् । न च ज्योतिःशास्त्रत्वात् तदारम्भ इति वाच्यम् । ज्योतिःशास्त्रफल पुराणगणकैरादेश इत्युच्यते इत्यादिना शुभाशुभरूपादेशनिरूपकसंहिताजातकयोरेव ज्यौतिषत्वादतः शार्दूलविक्रीडितेनाह । जानन्—इति । सिद्धान्तानभिज्ञनिन्दाद्वारेण सिद्धान्तज्ञप्रशंसा सिद्धान्ताध्ययनप्रवृत्त्यनुकूला श्लोकद्वयेनाह जानन् इति गर्जेदित्यन्ते । यो गणकः सिद्धान्त भूगोलस्थित्यादिनिर्णयनिरूपकग्रन्थ नो वेत्ति न जानाति सः । यत्तदोर्नित्यसम्बन्धात् । ज्योतिःशास्त्रविचारसारचतुरप्रश्नेषु ज्योतिषां ग्रहनक्षत्रादीनां प्रतिपादकं शास्त्रं तस्य विचाराणां तदुक्तार्थक्षोदानां सारा यथार्थतात्पर्याणीत्येतद्विषयीभूतार्था वा तेषु चतुरास्तदभिज्ञास्तेषां प्रश्नाः पूर्वपक्षास्तेषु अकिञ्चित्करोऽनधिकारी तत्समाधानकरणाय स्यादिति शेषः । नन्वापाततो भूगोलस्थितिनिर्णयादिज्ञानवानप्यकिञ्चित्करोऽतः सिद्धान्तविशेषणमाह । अनन्तयुक्तिविततमिति । अनेकयुक्तियुक्तमित्यर्थः । तथा चापाततो ज्ञानवान् परमतदूषणदक्षयुक्त्याश्रयाभावाद्वेदेवाकिञ्चित्कर. । यद्वा सिद्धान्तमिति यथा श्रुत तेन शास्त्रान्तरसिद्धान्तज्ञानवानपि तत्राकिञ्चित्कर इति केवलसिद्धान्तग्रहण कथमित्याशङ्क्याह । अनन्तेति । 'अनन्त सुरवर्त्म खम्'—इत्यभिधानादनन्तमाकाशम् । तद्युक्तियुक्तम् । आकाशस्थभूगोलस्थितिनिर्णयकद्युक्तियुक्तमित्यर्थः । ननु ज्योतिःशास्त्रान्तर्गतसंहिताजातकज्ञानाभावादेवाकिञ्चित्करोऽत आह जानन्निति । जन्मकालमधिकृत्य प्राणिनां शुभाशुभफलनिरूपकग्रन्थसमूहो जातकमित्युच्यते । षोडशसंस्कारविवाहाद्युत्पातादिनिरूपकग्रन्थसमूहः संहिताः । ग्रन्थानां भूयस्त्वाज्जातकसंहिता इति बहुवचनम् । ननु जातकसंहितोपयुक्तगणितज्ञानाभावादेवात आह सगणितस्कन्धैकदेशा

इति। गणितस्कन्धैकदेशेरायुर्दायवास्तुगणितकरणादिभिः सह वर्त्तमान इति । अपिशब्दादादेशनिरूपकशास्त्रज्ञो व्यवहारयोग्यबहुगुणयुक्तश्च सिद्धान्तज्ञान विना तत्राप्रयोजक इति सिद्धान्ताध्ययनावश्यतायहः सूच्यते । अकिञ्चित्करे दृष्टान्तमाह भित्ताविति। यथेति दृष्टान्तद्योतकम्। भित्तौ चित्रमयो राजा अकिञ्चित्करः । चित्रस्थो राजा व्यवहारेऽप्रयोजक इत्यर्थः । ननु चित्रस्थो राजा चित्रस्थव्यवहारयोग्य एवेत्यस्वरसाद् दृष्टान्तान्तरमाह अथ वेति । काष्टस्य सुघटितः सम्यक्प्रकारेण कृतः कण्ठीरवः सिंहो यथा भयजनके गजहनने चाप्रयोजक इत्यर्थः । चित्रे सिंहभीतानामपि दर्शनसम्भवात् काष्ठस्येति । तथा च सिद्धान्तज्ञानरहितपुरुषस्य प्रश्नश्रवणानन्तरमचेतनता स्यादिति भावः । एव च यथा 'प्रदीपः सर्वविद्यानाम्'—इत्यादिना न्यायशास्त्रं विना सर्वशास्त्रज्ञानमप्रयोजकम् । तथा ज्योतिःशास्त्रं सिद्धान्तज्ञान विनाऽप्रयोजकं तदर्थमस्यारम्भो न ज्योतिःशास्त्रत्वादिति तात्पर्यम् ॥ १ ॥

ननु सिद्धान्तहीनोऽकिञ्चित्कर इत्युक्त पर यस्य ज्योतिःशास्त्रपठनेच्छा तन्निमित्त ज्योतिःशास्त्रारम्भो युक्तः । न च सिद्धान्तो ज्योतिः शास्त्रे मूलमिति तदारम्भ इति वाच्यम् । मानाभावादत शार्दूलविक्रीडितवृत्तेनाह गर्जदिति । इद प्रसिद्ध ज्योतिःशास्त्र त्रिस्कन्धात्मक सिद्धान्तहीनमुच्चकैरतिशयेन तथा तद्वत् तु न भाति मनोहर न भवति। इत्यर्थे एवकार. । विबुधास्तदभिज्ञा जगुराहुः । तथा च सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम् ।

"वेदस्य निर्मल चक्षुर्ज्योतिःशास्त्रमकल्मषम्" ।

इति नारदवचनमेव ज्योतिःशास्त्रान्तर्गतसिद्धान्तमानम्। तद्धीने ज्योतिःशास्त्रे वासनानभिज्ञतया निःसारत्वात् । सिद्ध सिद्धान्तस्य प्राधान्यमिति तदारम्भे न क्षतिरिति भावः । तथा कथमित्यतो दृष्टान्तमाह । गर्जदिति । यद्वत् नृपचमू राज्ञः सेना अश्वादिकैः । आदिपदाद्रथोष्ट्रपदात्यादिभिरूर्जिता युक्ता अपिशब्दात् सुन्दरमनोहरपदार्थयुक्ता

च गर्जत्कुञ्जरवर्जिता न भाति तद्वदित्यर्थः । ननु यद्देशे गजाभावस्तत्र सा भात्येवेत्यस्वरसादाह । उद्यानमिति । च्युतचूतवृक्ष च्युतो गतश्चूतवृक्ष आम्रवृक्षो यस्मात् तत् आम्रवृक्षरहितोद्यानमित्यर्थः । अथ वेत्यस्य प्रत्येकमन्वयः । यद्देशे आम्राभावस्तद्देशे त विनोद्यान लोकाना मनोहरमित्यस्वरसादाह । पाथोविहीनमिति । 'कबन्धमुदक पाथः'—इत्यभिधानाज्जलहीन सरः सरोवरम् । ननु जलहीनस्थलस्य सरोवरत्वाभावात् । कथमेतदुक्तमित्यस्वरसादाह । योषिदिति । प्रोषितनूतनप्रियतमा प्रोषितो देशान्तरगतो नूतनस्तरुणः प्रियतमोऽतिशयेन प्रिय इति प्रियतमो यस्याः सा योषित् युवती । तथा च प्रियतमविरहानलदग्धयुवतीवत् सिद्धान्तहीनज्योतिःशास्त्राभिज्ञोऽप्रयोजक इति भावः ॥ ८ ॥

इदानीं ज्योतिःशास्त्रस्य वेदाङ्गत्व निरूप्य वेदाङ्गत्वादवश्यमध्येतव्य तद्‌द्विजैरेव नान्यै. शूद्रादिभिरित्येतत्प्रतिपादनार्थं श्लोकचतुष्टयमाह ।

वेदास्तावाद्यज्ञकर्मप्रवृत्ता
यज्ञाः प्रोक्तास्ते तु कालाश्रयेण ।
शास्त्रादस्मात् कालबोधो यतः स्याद्-
वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात् ॥ ९ ॥

शब्दशास्त्रं मुखं ज्यौतिषं चक्षुषी
श्रोत्रमुक्तं निरुक्तं च कल्पः करौ ।
या तु शिक्षाऽस्य वेदस्य सा नासिका
पादपद्मद्वयं छन्द आद्यैर्बुधैः ॥ १० ॥

वेदचक्षः किलेदं स्मृतं ज्यौतिषं
मुख्यता चाङ्गमध्येऽस्य तेनोच्यते ।
संयुतोऽपीतरैः कर्णनासादिभि-
श्चक्षुषाऽङ्गेन हीनो न किञ्चित्करः ॥ ११ ॥

तस्माद्द्विजैरध्ययनीयमेतत्
पुण्यं रहस्यं परमं च तत्त्वम् ।
यो ज्यौतिषं वेत्ति नरः स सम्यग्-
धर्मार्थकामान् लभते यशश्च ॥ १२ ॥

**वा. भा.**—स्पष्टम् ॥ ९-१२ ॥

**वा. वा.**—वेदाङ्गत्वाद् द्विजैरवश्यमध्येतव्यमिति विवक्षुस्तावदस्य वेदाङ्गत्वे हेतुमाह वेदास्तावदिति । ननु कालस्योद्देश्यत्वेन विधिसम्बन्धाभावात् कथ कर्मशेषत्वम् । काले हि कर्म चोद्यते न कर्मणि काल इति । सत्यम् । न कर्मणि कालनोदना तथाऽपि 'पौर्णमास्यां पौर्णमास्या यजेत'—इत्यादौ तूपादेयमपि कर्मस्वरूपं न विधेय पूर्वप्राप्तत्वात् । तद्रूपमेव प्रत्यभिज्ञायत इत्यनुवाद्यम् । तस्य चोद्देश्येनापि कालेन सम्बन्धमात्रमप्राप्तमिति तन्मात्र विधीयत इति । एतदेव कालस्य विधेयत्व नाम । विधेयत्वाच्चाङ्गत्वसिद्धिः । तस्माद्वेदप्रतिपाद्यस्य कर्मणो ज्योतिःशास्त्रप्रतिपाद्यः कालोऽङ्गम् । प्रतिपाद्ययोः शेषशेषित्व प्रतिपादकयोरप्युपचर्यत इति वेदस्य ज्योतिःशास्त्रमङ्गमिति सम्यगुक्तम् । प्रत्यक्षो वाऽनुमितो वा वेदो भवतु तत्र नास्माकमाग्रहः । इद वेदमात्राङ्गम् । स्मृतिपुराणेतिहासप्रतिपादितकर्मापि काले विधेयमित्यनुमितवेदस्यापि ज्योतिःशास्त्रमङ्गम् । तिथ्यादिकालनिर्णयशास्त्रमपि ज्योतिःशास्त्राधीनम् । तथा चाह सूत्रकृत् ।

"वेदा हि यज्ञार्थमपि प्रवृत्ताः का*लाश्रयास्ते क्रतवो निरुक्ताः ।
तस्मादिद कालविधानशास्त्र यो ज्योतिष वेद स वेद यज्ञम्"—इति ।

अत्र यज्ञशब्दो होमदानतया ह्युपलक्षणार्थः । यतस्तान्यपि कालविशेषे विधीयन्ते । कालशब्दोऽपि दिगाद्युपलक्षणार्थः । तस्यापि ज्योतिःशास्त्रप्रतिपाद्यत्वात् कर्मानुष्ठानोपयोगित्वाच्च ॥ ९ ॥

* सम्प्रति ज्योतिषवेदाङ्गे द्वितीयचरणः 'कालानुपूर्वा विहिताश्च यज्ञा ' एवमुपलभ्यते ।

तत्र वेदस्य कानि कान्यङ्गानीत्याह शब्दशास्त्रमिति ॥ १० ॥

अथास्याङ्गमध्येऽभ्यर्हितत्वे युक्तिमाह वेदवत्तुरिति ॥ ११ ॥

वेदाङ्गत्वादवश्यमध्येतव्यम् । तद्द्विजैरेव न शूद्रादिनेत्येतत् प्रतिपादयति । तस्मादिति । यस्मादिदं प्रशस्तं वेदाङ्गं तन्मध्येऽभ्यर्हितं च तस्मादिदं पठनीयम् । 'अष्टमे वर्षे ब्राह्मणमुपनयेत् । एकादशे क्षत्रियम् । द्वादशे वैश्यम्'इति । उपनयनं नाम गुरुसमीपे नयनम् । गुरुसमीपानीतो माणवकः प्रयोजनमपेक्षते किमर्थमहमानीतोऽस्मीति । 'स्वाध्यायोऽध्येतव्यः'-इत्यध्ययनविधिरध्येतारमपेक्षते । अतः स्वाध्यायविधिस्तादृशं माणवकं गृहीत्वा चरितार्थो जातो न शूद्रादीन् गृह्णाति । मन्त्रब्राह्मणयोर्वेदनामधेयं षडङ्गमित्येके । 'साङ्गो वेदोऽध्येतव्यो ज्ञातव्यश्च' इति द्विजानामेवाध्ययनं प्राप्तम् । तस्मादध्ययनीयमेतदित्येवाचार्यस्य वक्तुमुचितम् । तत्र द्विजैरिति यदुच्यते तच्छूद्रादिनिवृत्त्यर्थमिति वासनाभाष्यकारेण सम्यक् परिसंख्यापरं व्याख्यातम् । विधिनियमपरिसंख्यालक्षणं भट्टपादैरुक्तम् ।

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते" ॥

चयने मृदाहरणार्थमश्वो गर्दभोऽप्यस्ति तत्र रशनाग्रहणे ब्राह्मणेन मन्त्रो नियोजितः । 'इमामगृभ्णन् रशनामृतस्य'-इत्यश्वाभिधानीमादत्त इति । इदमत्रोदाहरणं परिसंख्यायाः कृतम् । तत्र यावत्पर्यन्तं लिङ्गापरपर्यायसामर्थ्येन मन्त्रोऽश्वरशनाग्रहणेन प्राप्नोति तावत्पर्यन्तं शीघ्रप्रवृत्तया श्रुत्या मन्त्रोऽश्वरशनाग्रहणे नियोजितः । तस्मादयमपूर्वो विधिरेव फलतः परिसंख्येत्युच्यते ।

तदुक्तम् ।

'अपूर्वो विधिरेवायमतो मन्त्रस्य निश्चितः ।
परिसंख्या फलेनोक्ता न विशेषः पृथक् श्रुतेः"—इति ॥

विलम्बेनापि प्राप्स्यतोऽर्थस्य विधानं व्यर्थमिति फलतः परिसंख्येत्युच्यते । पुनः श्रुतेः फलं त्वन्यनिवृत्तिरेव ।

तदप्युक्तम् ।

"न गर्दभाभिधानीतः फलमन्यन्निवर्त्तनात्"—इति ।

तस्माच्च किञ्चिद्विरुद्धम् । पुण्यमिति यदुच्यते तच्चतुर्दशधर्मविद्यास्थानान्तर्गतत्वात् ।

उक्तं च ।

"पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
वेदोऽखिलो धर्ममूलं स्मृतिः शीले च तद्विदाम् ।
आचारश्चैव साधूनाम्" इति गौतमोक्तेश्च ।
रहस्यं गोप्यं दुष्टेभ्यः ।

तथा च श्रुतिः ।

"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथाऽस्यामिति ॥"

कालप्रतिपादकत्वात् परमतत्त्वम् । पुरुषार्थचतुष्टयसाधनस्य वेदाङ्गमित्येतदध्ययनपूर्वकं ज्ञानं धर्मार्थकाममोक्षदमिति सम्यगुक्तम् । सम्यगित्यनेन प्रत्यक्षागमसहितमित्युक्तम् । एतत्प्रतिपाद्यग्रहचारादेः प्रत्यक्षप्रमाणसिद्धत्वाद्वेदवत् स्वतः प्रमाणं स्मृतिवद्वेदमूलकत्वेन वा प्रमाणं शाक्यादिशास्त्रवदप्रमाणमिति शङ्काऽपि नास्ति ।

तथा चाहुः ।

"अप्रत्यक्षमिहान्यशास्त्रगदितं कोऽप्यत्र न प्रत्ययो
वादः केवलमत्र तत्र च मिथः सर्वा विरुद्धोक्तयः ।
ज्योतिःशास्त्रमदो वदत्यवितथं दृष्टप्रमाणं यतो
वक्तारो न विरुद्धबुद्धय इदं स्वाध्यायचक्षुः किल"—इति ॥१२॥

**मरीचिः**—ननु ज्योतिःशास्त्रे न प्रवृत्तिः फलाभावात् न च वेदाङ्गत्वाद्वेदस्य यत् फलं तदेवास्येति वाच्यं वेदाङ्गत्वाभावात् । तद्धि साक्षाद्वा परम्परया वा । नाद्यः । शास्त्रस्य शब्दात्मकतया शब्दस्य त्रिक्षणावस्थायित्वेन नाशादङ्गासम्भवात् । नान्त्यः । द्वाराभावात् । तेनैतदन्तर्गत-

सिद्धान्ते सुतरामिति कथ सिद्धान्तारम्भोऽत आह वेदा—इति । तावत् प्रथमतो वेदाश्चत्वार' । अभियुक्तवेदत्वव्यवहारविषयाः प्रसिद्धाः । यज्ञकर्मप्रवृत्ता यज्ञाः प्रसिद्धाः । कर्म वेदप्रतिपाद्यम् । तदनुष्ठानार्थे प्रवृत्ता ईश्वरेण निर्मिता इत्यर्थः । ते प्रसिद्धाः । यज्ञा यज्ञादयः कालाश्रयेण प्रोक्ताः 'वसन्ते वसन्ते ज्योतिषा यजेत'—इति वाक्यादिना कालाधीनास्त इत्यर्थः । अस्मात् शास्त्रात् ज्योति शास्त्रादित्यर्थः । यतो यस्मात् कारणात् कालबोधस्तत्खण्डकालावगम स्यात् । 'पश्चादस्यानुडुह चर्मास्तीर्य प्रागग्रीवमुत्तरलोम'-इत्यादिवेदविधिवाक्येन कर्मणो ज्योतिःशास्त्रावगतदिगपेक्षत्वात् कालशब्दो दिगाद्युपलक्षणार्थो बोध्यः । अस्मात् कारणात् ज्यौतिषस्य ज्योतींषि सूर्यादिग्रहानधिकृत्य कृतो ग्रन्थो ज्योतिषम् 'अधिकृत्य कृते ग्रन्थे' इत्यण् स(१) ज्ञापूर्वको विधिरनित्य इति वृद्ध्यभाव' । तस्य ज्योतिषस्य ज्योति'शास्त्रस्य वेदाङ्गत्वमुक्तम् । तथा च ज्योतिःशास्त्र दिक्कालद्वारा यज्ञादिद्वारा च तत्प्रतिपादकवेदानामुपयुक्तत्वेनाङ्गमिति भाव' । के चित् तु वेदप्रतिपाद्यकर्मणो ज्योति.शास्त्रप्रतिपाद्यकालोऽङ्गमिति प्रतिपाद्याङ्गाङ्गित्व प्रतिपादकयोरप्युपचर्यते । तेन वेदस्य ज्योतिःशास्त्रमङ्गमिति युक्तमुक्तम् । न च कालस्योद्देश्यत्वेन विधिसम्बन्धाभावात् । कथ कर्माङ्गत्व काले हि कर्म चोद्यते न कर्मणि काल इति वाच्यम् । तथाऽपि 'पौर्णमास्या यजेत'इत्यादौ उपादेयमपिकर्मस्वरूप न विधेय पूर्वप्राप्तत्वेनात्यन्ताप्राप्तत्वाभावात् तद्रूपमेव प्रत्यभिज्ञायत इत्यनुवाद्यम् । तस्य चोद्देश्येनापि कालेनाप्राप्तः सम्बन्धो विधीयत इत्येतदेव कालस्य विधेयत्वम् । विधेयत्वादङ्गत्वसिद्धिरिति प्राचु । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकै'—इति लक्षणाच्छालिनीवृत्तमिदम् । पादान्तस्य विकल्पेनेत्युक्तत्वादत्र द्वितीयचरणान्त्याक्षरस्य गुरुत्वमिति न क्षति' ॥ ९ ॥

(१) 'सञ्ज्ञापूर्वको विधिरनित्य.' इत्यनेन प्रकृते 'ज्योतिष'- इत्यत्र वृद्धेरनियतत्वेन ज्योतिषम । अथ चेत स नित्यस्तदा ज्यौतिषम । एव सर्वत्र पदद्वयेऽन्यतरस्य प्रयोगे न हि च्छन्दोभङ्गादिदोष. कश्चिदतो व्यर्थ एवानित्यविधिस्वीकार इति । "

नन्वेव कालद्वारा ज्योतिःशास्त्रस्य यज्ञकर्माङ्गत्व न वेदाङ्गत्वमत आह शब्दशास्त्रमिति । यद्वा ननूक्तयुक्त्या पात्रसाधनद्वारा शिल्पशास्त्रस्य वेदाङ्गत्वापत्तिरत आह । शब्दसाधक शास्त्र शब्दशास्त्र व्याकरण मुखम् । अस्याभियुक्तवेदत्वव्यवहारविषयस्य वेदस्याद्यैः प्राचीनैस्तदभिज्ञैरुक्त ज्यौतिष ज्योति.शास्त्र चक्षुषी उक्ते । निरुक्त वेदाङ्गत्वेन प्रसिद्धं श्रोत्र शब्दग्राहकेन्द्रियम् । कर्णशष्कुल्यवच्छिन्नाकाशस्य श्रोत्रत्वाच्छ्रोत्रमित्येकवचनम् । तस्यैकत्वात् । कल्पा वेदाङ्गत्वेन प्रसिद्धः करौ उक्तौ । या वेदाङ्गत्वेन प्रसिद्धा शिक्षा सा छ्रतिर्नासा । छन्दश्छन्दःप्रतिपादक शास्त्र पादपद्मद्वय पादावुक्तावित्यर्थ· । एतेन परिगणितषडङ्गेतरस्य वेदाङ्गत्वाभावः सिद्धः । तथा चाद्यैर्बुधैरित्यनेन ।

"शिक्षा घ्राण तु वेदस्य मुख व्याकरण स्मृतम् ।
ज्योतिषामयन चक्षुर्निरुक्त श्रोत्रमुच्यते ॥
छन्द. पादौ तु वेदस्य कल्पो हस्तौ प्रचक्षते" ।

इति मूलागमवचनाज्ज्योतिःशास्त्रे वेदाङ्गमित्यत्र शब्दप्रमाणमिति वेदाङ्गत्वेन वेदफलवज्ज्यौतिषे प्रवृत्तिर्युक्तेति तात्पर्यम् । "रैश्चतुर्भिर्युता स्रग्विणी सम्मता"—इति लक्षणात स्रग्विणीवृत्तमिदम् ॥ १० ॥

ननु तथाऽपि वेदफलाप्तये ज्यौतिषपठने न प्रवृत्तिर्युक्ता । स्वल्पान्याङ्गपठनेनैव तत्फलप्राप्तिसम्भवादत· स्रग्विण्याऽऽह । वेदचक्षुरिति । इदमङ्गत्वेन प्रसिद्ध ज्योति.शास्त्र वेदचक्षुः किलासशयम् । यतो वा स्मृतमाद्यश्लोकेन । तेन कारणेन अस्य ज्योति शास्त्रस्य अङ्गमध्ये वेदाङ्गशास्त्रेष्वित्यर्थः । मुख्यता प्राधान्यम् । च समुच्चये । तेनैतस्य वेदाङ्गत्वप्रधानाङ्गत्वोभयमुच्यते । आद्यैरित्यर्थः । चक्षुर्मुख्यमित्यत्र हेतुमाह । सयुत इति । इतरैश्चक्षुर्व्यतिरिक्तै कर्णनासादिभि. पूर्वोक्ताङ्गैः । अपिशब्दात् स्वकार्यक्षमैरित्यर्थः । चक्षुषाऽङ्गेन चक्षुरिन्द्रियेण हीनो रहितः पुरुषः किञ्चित्स्कर. किञ्चिदपि कार्यं कर्त्तु क्षमो न स्यात् । व्यवहारेऽप्रयोजक इत्यर्थ. ।

तथा च ।

"यथा शिखा मयूराणा नागानां मणयो यथा ।

तद्वद्वेदाङ्गशास्त्राणा गणित मूर्धनि स्थितम्" ॥

इति मूलागमवचनाच्च ज्योति.शास्त्राज्ञः सर्ववेदाङ्गशास्त्रज्ञोऽप्यन्यो निष्प्रयोजकस्तदर्थप्रवृत्तिरत्र युक्तेति भावः ॥ ११ ॥

नन्वेतदपेक्षया मुखरहितस्यास्याप्रयोजकत्वाद्व्याकरणाध्ययने प्रवृत्तिर्वेदफललाभार्थं युक्ता नान्यत्रेति कथमेतदारम्भ इत्यत उपसंहारव्याजेन तदुत्तरमाह । तस्मादिति । तस्माद्वेदाङ्गत्वात् देहलीदीपन्यायेनोत्तरार्धस्य ज्यौतिषपदमात्रानुसन्धेयम् । द्विजैर्ब्राह्मणराजन्यविड्भिस्त्रिवर्णिकै. । एवकारः शूद्रादिव्यवच्छेदार्थः । अध्ययनीयम् । ब्राह्मणेनाध्यापनीय च । राजन्यविशोरध्यापननिषेधात् साधारण्येनाध्ययनीयमित्युक्तम् । न च शूद्रादीनामनध्ययन कुत इति वाच्यम् । 'अष्टमे वर्षे ब्राह्मणमेकादशे क्षत्रिय द्वादशे वैश्यमुपनयेत्' इति वचने उपनयनमित्यस्य माणवकस्य गुरुसमीपानयनमित्यर्थाद्गुरुसमीपानीतो माणवकः प्रयोजनमपेक्षते । किमर्थमहमानीतोऽस्मीति । 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिश्चाध्येतारमपेक्षते । अत. स्वाध्यायविधिस्त माणवक गृहीत्वा चरितार्थो जातः । न शूद्रादीन् गृह्णाति उपनयनाभावात् । अतो द्विजैरिति सम्यगुक्तम् । अत एव ।

"स्नेहाल्लोभाच्च मोहाच्च यो विप्रोऽज्ञानतोऽपि वा ।

शूद्राणामुपदेश तु दद्यात् स नरक व्रजेत् ॥

लग्न ददाति यः शूद्रः सकृत् षोडशकर्मणाम् ।

अधो युगसहस्राणि जायते श्वानयोनिषु ।

सम्यगाचारयुक्तोऽपि यः शूद्रः सर्वशास्त्रवित् ॥

वर्जयेद्वचन तस्य कपालस्थोदक यथा" ।

इति गर्गवचनानि

"ज्योति.शास्त्रज्ञशूद्रेण यदुक्त यस्य सर्वदा ।

न ग्राह्य वचन तस्य शुनोच्छिष्ट हविर्यथा" ॥

इत्यार्यभटवचन चेति युक्तमित्याहु ।

तिर्यक्कृत्य गतः । तिर्यक्कारम् । समाप्य गत इत्यर्थः । अपवर्गे किम् । तिर्यक्कृत्वा काष्ठं गतः ॥

## स्वाङ्गे तस्प्रत्यये कृभ्वोः । ३ । ४ । ६१ ॥

मुखतःकृत्य गतः । मुखतः कृत्वा । मुखतःकारम् । मुखतोभूय । मुखतो भूत्वा । मुखतोभावम् । स्वाङ्गे किम् । अन्ततः कृत्वा गतः । तसिति किम् । अमुखं मुखीकृत्य गतः ॥

## नाधार्थप्रत्यये च्व्यर्थे । ३ । ४ । ६२ ॥

नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ स्तः ॥ अनाना नाना कृत्वा नानाकृत्य । नानाकारम् । विनाकृत्य । विनाकृत्वा । विनाकारम् । नानाभूय । नानाभूत्वा । नानाभावम् । अनेकं द्रव्यमेकं भूत्वा एकधा भूत्वा । एकधाभूय । एकधाभावम् । एकधाकृत्य । एकधा कृत्वा । एकधाकारम् । द्वैधकृत्य । द्वैध कृत्वा । द्वैध कारम् । द्वैधकारम् । धमुञन्तात्स्वार्थे डदर्शनमिति डप्रत्ययान्तस्य सङ्ग्रहार्थमर्थग्रहणम् । प्रत्ययग्रहणं किम् । हिरुक् कृत्वा । पृथक् कृत्वा ॥

## तूष्णीमि भुवः । ३ । ४ । ६३ ॥

तूष्णींशब्दे उपपदे भुवः क्त्वाणमुलौ स्तः ॥ तूष्णींभूय । तूष्णीं भूत्वा । तूष्णींभावम् ।

## अन्वच्यानुलोम्ये । ३ । ४ । ६४ ॥

अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये गम्यमाने ॥ अन्वग्भूयास्ते । अन्वग्भूत्वा । अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतो वानुकूलो भूत्वा आस्ते इत्यर्थः । आनुलोम्ये किम् । अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ॥

## शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । ३ । ४ । ६५ ॥

एषूपपदेषु धातोस्तुमुन् स्यात् ॥ शक्नोति भोक्तुम् । एव धृष्णोत्यादौ । अर्थग्रहणमस्तिनैव सम्बध्यते ॥ अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् । अक्रियार्थोपपदार्थ आरम्भः । भोक्तु शक्नोति धृष्णोति जानातीत्यत्र हि भुज्यर्थो विषयतया सम्बध्यते । प्रावीण्यञ्च गम्यते । ग्लायतीति तदशक्तिः । घटते अर्हतीति योग्यता । आरभते प्रक्रमते उत्सहते भोक्तुमिति भुजेरा द्यावस्था । लभते इत्यप्रत्याख्यानम् । अस्तीत्यादौ तु सम्भवमात्रम् ।

## पर्याप्तिवचनेष्वलमर्थेषु । ३ । ४ । ६६ ॥

पर्याप्तिः पूर्णता । तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् ॥ पर्याप्तो भोक्तुम् । प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् । अन्न भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् । पूर्वसूत्रे शक्तिग्रहणमनलमर्थम् । शक्यमेव कर्तुमिति ॥

## कर्तरि कृत् । ३ । ४ । ६७ ॥

कृत्प्रत्ययः कर्तरि स्यात् ॥ कर्ता । कारकः । नन्दनः । ग्राही । पचः ॥

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा । ३ । ४ । ६८ ॥

एते कृत्यान्ता कर्तरि वा निपात्यन्ते ॥ पक्षे तयोरेवेति सकर्मकात्कर्मणि अकर्मकात्तु भावे ज्ञेयाः । भवतीति भव्यः । भव्य-

मनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामानेन वा इत्यादि ॥

**लः कर्मणि च भावे चाकर्मकेभ्यः । ३ । ४ । ६९ ॥**

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥ पच्यते ओदनः । पचति देवदत्तः । आस्यते देवदत्तेन । आस्ते देवदत्तः । सकर्मकेभ्यो भावे न भवन्ति ॥

**तयोरेव कृत्यक्तखलर्थाः । ३ । ४ । ७० ॥**

एते भावकर्मणोरेव स्युः ॥ एवकारः कर्तुरनपकर्षणार्थः । कर्तव्यः कटो भवता । आसितव्य भवता । कृत कटो भवता । आसित भवता । ईषत्करः कटो भवता । ईषदाढ्यम्भव भवता । भावे चाकर्मकेभ्य इत्यनुवृत्तेः सकर्मकेभ्यो भावे न भवन्ति ॥

**आदिकर्मणि क्तः कर्तरि च । ३ । ४ । ७१ ॥**

आदिकर्मणि यः क्त स कर्तरि स्यात् चाद्भावकर्मणोः ॥ प्रकृतः कटं स । प्रकृतः कटस्तेन । प्रस्वेदितश्चैचः । प्रस्वेदितं तेन ॥

**गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यति-भ्यश्च । ३ । ४ । ७२ ॥**

एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च ॥ गङ्गां गतः । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः । वैकुण्ठमधिष्ठित । शिवमुपासितः । हरिदिनमुपोषितः । गुरुमनूषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे प्राप्ता गङ्गा तेनेत्यादि ॥

**दाशगोघ्नौ सम्प्रदाने । ३ । ४ । ७३ ॥**

एतौ सम्प्रदाने कारके निपात्येते ॥ दाशन्ति तस्मै दाशः । पचाद्यच् । गा हन्ति तस्मै गोघ्नोऽतिथिः ॥

**भीमादयोऽपादाने । ३ । ४ । ७४ ॥**

भीमः । भीष्मः । प्रस्कन्दन । प्रपता । मूर्खः । खलतिः ॥

**ताभ्यामन्यत्रोणादयः । ३ । ४ । ७५ ॥**

सम्प्रदानपरामर्शार्थं ताभ्यामिति । ततोऽसौ भवति तन्तुः । वृत्त तदिति वर्त्म । चरितं तदिति चर्म ॥

**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः । ३ । ४ । ७६ ॥**

एभ्योऽधिकरणे क्तः स्यात् चाद्यथाप्राप्तम् ॥ ध्रौव्यं स्थैर्यम् ।

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥

पक्षे आसेरकर्मकत्वात्कर्तरि भावे च । आसितो मुकुन्दः । आसितं तेन । गत्यर्थेभ्य कर्तरि कर्मणि च । रमापतिरिदं यातः । तेनेदं यातम् । भुजेः कर्मणि । अनन्तेनेदं भुक्तम् । कथं भुक्ता ब्राह्मणा पीता गाव इत्यादि । भुक्तमन्न पीतमुदकमस्ति एषामिति मत्वर्थीयोऽच् ॥

**लस्य । ३ । ४ । ७७ ॥**

अधिकारोऽयम् ।

**तिप्तस्झिसिप्थस्थमिप्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् । ३ । ४ । ७८ ॥**

एतेऽष्टादश लादेशाः स्युः ॥ पचति । पचतः । पचन्ति । पचसि । पचथ । पचथ । पचामि । पचावः । पचामः । पचते । पचेते । पचन्ते । पचसे । पचेथे । पचध्वे । पचे । पचावहे । पचामहे । एवमन्येष्वपि लकारेषूदाहार्यम् ॥

## टित आत्मनेपदानां टेरे । ३ । ४ । ७९ ॥

टितो लस्यात्मनेपदानां टेरेत्वं स्यात् ॥ तथैवोदाहृतम् । इह कस्मान्न भवति पचमानः । प्रकृतैस्तिबादिभिरात्मनेपदानां विशेषणात् । टितस्तङां टेरे इत्येव तु वक्तुमुचितम् ॥

## थासः से । ३ । ४ । ८० ॥

टितो लस्य थासः से स्यात् ॥ पचसे । पेचिषे । पक्तासे । पक्ष्यसे ॥

## लिटस्तझयोरेशिरेच् । ३ । ४ । ८१ ॥

लिडादेशयोस्तझयोरेश् इरेच् एतो स्तः ॥ एकारोच्चारणं ज्ञापकं तङादेशानां टेरेत्व नेति । तेन डारौरसां न । पेचे । पेचिरे । लेभे । लेभिरे ॥

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । ३ । ४ । ८२ ॥

लिटस्तिबादीनां नवानां णलादयो नव स्युः ॥ बभूव । बभूवतुः । बभूवुः । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ॥

## विदो लटो वा । ३ । ४ । ८३ ॥

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः ॥ वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे ।

वेत्ति । वित्तः । विदन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि । विद्वः । विद्म. ॥

**ब्रुवः पञ्चानामादित आहो ब्रुवः । ३ । ४ । ८४ ॥**

ब्रुवो लटः परस्मैपदानामादितः पञ्चाना णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः ॥ अकार उच्चारणार्थः । आह आहतुः । आहुः । आत्थ । आहथुः । पक्षे । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रवीषि । ब्रूथः ॥ पञ्चानां किम् । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः । आदितः किम् । परेषां माभूत् । परस्मैपदानां किम् । ब्रूते ॥

**लोटो लङ्वत् । ३ । ४ । ८५ ॥**

लोटो लङ इव कार्यं स्यात् ॥ तेन तामादयः सलोपश्च । पचताम् । पचतम् । पचत । पचाव । पचाम । अडाटौ तु लुङि अङ्गस्य क्रियेते न तु लङ इति तौ नातिदिश्येते ॥

**एरुः । ३ । ४ । ८६ ॥**

लोट इकारस्य उः स्यात् ॥ पचतु । पचन्तु ॥

**सेर्ह्यपिच्च । ३ । ४ । ८७ ॥**

लोटः सेर्हिः स्यात्सोऽपिच्च ॥ लुनीहि । राध्नुहि ॥

**वा छन्दसि । ३ । ४ । ८८ ॥**

हिरपिद्वा ॥ रारन्धि । अस्मे प्रयन्धि । युयोधि जातवेदः । रमेर्व्यत्ययेन परस्मैपदम् । अडितश्चेति हेर्धिः । शपः श्लुरभ्यासदीर्घश्च । यमेः शपो लुक् । यौतेः शपः श्लुः । न च भवति । हव्यं प्रीणीहि ॥

**मेर्निः । ३ । ४ । ८९ ॥**

लोटो मेर्निः स्यात् ॥ हिन्योरुत्वं न । इकारोच्चारणसामर्थ्यात् । पचानि । पठानि ॥

आमेतः । ३ । ४ । ९० ॥

लोट एकारस्याम्स्यात् । पचताम् । पचेताम् ॥

सवाभ्यां वामौ । ३ । ४ । ९१ ॥

सवाभ्यां परस्य लोडेतः क्रमाद्व अम् एतौ स्तः ॥ आमोऽपवादः । पचस्व । पचध्वम् ॥

आडुत्तमस्य पिच्च । ३ । ४ । ९२ ॥

लोडुत्तमस्याडागमः स्यात्स पिच्च ॥ करवाणि । करवाव । करवाम । करवै । करवावहै । करवामहै ॥

एत ऐ । ३ । ४ । ९३ ॥

लोडुत्तमस्य एत ऐ स्यात् ॥ आमोऽपवादः । पचै ॥ पचावहै । पचामहै । पचावेदमित्यत्र तु न भवति । बहिरङ्गलक्षणत्वाद्गुणस्य ॥

लेटोऽडाटौ । ३ । ४ । ९४ ॥

लेटोऽट् आट् एतौ पर्यायेणागमौ स्तः तौ च पितौ ॥ प्रण आयूंषि तारिषत् । पताति दिद्युत् । पित्वात्सुत्रवैते करवाव इत्यादौ गुणः ॥

आत ऐ । ३ । ४ । ९५ ॥

लेट आकारस्य ऐः स्यात् ॥ सुतेभिः सुप्रयसामादयैते । आतामित्याद्याकारस्य ऐकारः । द्वितीयस्य तु टेरेत्वम् । कृताकृतप्रसङ्गित्वेन नित्यत्वात् । उत्तरसूत्रे ऽन्यत्रेति लिङ्गाच्च । विधिसामर्थ्या-

दाट ऐत्वं न । अन्यथा हि ऐटमेव विदध्यात् । यो यजाति यजात इत् ॥

**वैतो ऽन्यत्र । ३ । ४ । ९६ ॥**

लेट एकारस्य ऐ स्याद्वा आत ऐ इत्यस्य विषयं विना ॥ पशूनामीशै । ग्रहा गृह्यान्तै । अन्यत्र किम् । सुप्रयसामादयैते ॥

**इतश्च लोपः परस्मैपदेषु । ३ । ४ । ९७ ॥**

लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु ॥ जोषिषत् । न च भवति । पताति दिद्युत् अग्ना भवाति । परस्मैपदेषु किम् । पशूनामीशै । उत्तमैकवचनमिदम् ॥

**स उत्तमस्य । ३ । ४ । ९८ ॥**

लेट उत्तमसकारस्य वा लोपः स्यात् ॥ करवावः । करवाव ।

**नित्यं ङितः । ३ । ४ । ९९ ॥**

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् ॥ अलोन्त्यस्येति सलोपः । अपचाव । अपचाम ॥

**इतश्च । ३ । ४ । १०० ॥**

ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः स्यात् । अपचत् । अपचन् । अपाचीत् । परस्मैपदेषु किम् । अपचावहि ।

**तस्थस्थमिपां तान्तन्तामः । ३ । ४ । १०१ ॥**

ङितश्चतुर्णां तामादयः क्रमात्स्युः ॥ अपचताम् । अपचतम् । अपचत । अपचम् ।

**लिङः सीयुट् । ३ । ४ । १०२ ॥**

पचेत । पचेयाताम् । पचेरन् । पक्षीष्ट । पक्षीयास्ताम् । पक्षीरन् ॥

**यासुट् परस्मैपदेषूदात्तो ङिच्च । ३ । ४ । १०३ ॥**

लिङः परस्मैपदानां यासुडागमः स्यात्सचोदात्तो ङिच्च ॥ ङित्वोक्तिर्ज्ञायते क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इति । श्नादेशस्य शानच. शित्वमपीह लिङ्गम् । तेन वक्ष्यमाणेत्यत्र पित्वादुगित्वाच्च ङीप् प्राप्तो न भवति । कुर्यात् । कुर्याताम् । कुर्युः ॥

**किदाशिषि । ३ । ४ । १०४ ॥**

आशिषि लिङो यासुट् कित्स्यात् ॥ इज्यात् । इज्यास्ताम् । इज्यासुः । जागर्यात् । जागर्यास्ताम् । जागर्यासुः । आशिषि किम् । जागृयात् । वच्यात् ॥

**झस्य रन् । ३ । ४ । १०५ ।**

लिङो झस्य रन्स्यात् ॥ पचेरन् । यजेरन् । कृषीरन् । हृषीरन् ॥

**इटो ऽत् । ३ । ४ । १०६ ॥**

लिङादेशस्येटोऽत् स्यात् ॥ तकार उच्चारणार्थ. । पचेय । यजेय । कृषीय । हृषीय । आगमस्येटोऽनर्थकत्वान्न भवति ॥

**सुट्तिथोः । ३ । ४ । १०७ ॥**

लिङस्तकारथकारयोः सुट् स्यात् ॥ सुटा यासुट् न बाध्यते । लिङो यासुट् तकारथकारयोः सुडिति विषयभेदात् । कृषीष्ट । कृषीयास्ताम् । कृषीष्ठाः । कृषीयास्थाम् ।

**झेर्जुस् । ३ । ४ । १०८ ॥**

लिङो झेर्जुस् स्यात् ॥ ज इत् । पचेयुः । यजेयुः ॥

**सिजभ्यस्तविदिभ्यश्च । ३ । ४ । १०९ ॥**

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात् ॥ अकार्षुः । अहार्षुः । अजुहवुः । अबिभयुः । अजहुः । अजागरुः । अविदुः ॥

**आतः । ३ । ४ । ११० ॥**

सिज्लुकि आदन्तादेव झेर्जुस् स्यात् ॥ अदुः । अधुः । अस्थुः । अपुः । नेह । अभूवन् ॥

**लङः शाकटायनस्यैव । ३ । ४ । १११ ॥**

आदन्तात्परस्य लङो झेर्जुस् वा स्यात् ॥ अयुः । अयान् । अवुः । अवान् । अददुः । अददन् । अदधुः । अदधन् । ननु च ङित इत्यनुवर्तते तच्च लङेवाकारात्परो ङिल्लभ्यते इति किम् लङ्-ग्रहणेन । एवं तर्हि लङेव यो लङ् तस्य यथा स्यात् लङ्वद्भावेन यो लङ् तस्य माभूत् लोटो लङ्वदिति । यान्तु । वान्तु । ददतु । दधतु । लङ इति योगविभागाच्च सिजभ्यस्तविदिभ्यश्चेत्ययमपि जुस् लोटो न भवति । जुह्वतु । बिभ्यतु । जाग्रतु । विदन्तु । एवकार उत्तरार्थः ॥

**द्विषश्च । ३ । ४ । ११२ ॥**

लङो झेर्जुस्वा स्यात् ॥ अद्विषुः । अद्विषन् ॥

**तिङ्शित्सार्वधातुकम् । ३ । ४ । ११३ ॥**

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ भवति । नयति । रोदिति । स्वपिति । पचमानः । यजमानः । सार्वधातुक-प्रदेशाः सार्वधातुके यगित्यादयः ॥

**आर्द्धधातुकं शेषः । ३ । ४ । ११४ ॥**

तिङ्‌शिद्भ्यो ऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् ॥ लविता । लवितुम् । धातो किम् । वृक्षत्वम् । लूभ्याम् । जुगुप्सते । आर्द्धधातुकप्रदेशा आर्द्धधातुकस्येड् वलादेरित्यादयः ॥

## लिट् च । ३ । ४ । ११५ ॥

एवकारोऽनुवर्तते । लिडादेशस्तिङार्द्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः । तेन शबादयो न । पेचिथ । शेकिथ । जग्ले । मम्ले ॥

## लिङाशिषि । ३ । ४ । ११६ ॥

आशिषि लिङस्तिङार्द्धधातुकसंज्ञ एव स्यात् ॥ भूयात् । भूयास्ताम् । लविषीष्ट । लविषीष्ठाः । आशिषि किम् । लुनीयात् । पुनीयात् ॥

## छन्दस्युभयथा । ३ । ४ । ११७ ॥

धात्वधिकारोक्तः प्रत्ययः सार्वधातुकार्द्धधातुकोभयसंज्ञः स्यात् ॥ वर्द्धन्तु त्वा सुष्टुतय. । वर्द्धन्त्वित्यर्थः । आर्द्धधातुकत्वा-णिलोपः । विशृण्विरे । सार्वधातुकत्वात् श्नुः शृभावश्च हुश्नुवो-रिति यण् चेति सर्वेष्टसिद्धिः ॥

इत्योरम्भट्टेन धोंडभट्टविश्वरूपात्मजेन वैजनाथभट्टविश्वरूपा-परनामधेयेन विरचितायां श्रीव्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ तृतीयस्याध्यायस्य चतुर्थः पादो ऽध्यायश्च तृतीयः समाप्तः ॥



श्रीगणेशाय नमः ।

# अथ चतुर्थाध्यायस्य प्रथमः पादः ।



## ङ्याप्प्रातिपदिकात् । ४ । १ । १ ॥

ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्यापञ्चमपरिसमाप्तेरधिकारोऽयम् ॥ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येव सिद्धे ङ्याब्ग्रहणं ङ्यबन्तात्तद्धितोत्पत्तिर्यथा स्यात् ङ्याब्भ्यां प्राङ्मा भूदित्येवमर्थम् । तेन लोहितिका लोहिनिका आर्यिका आर्यका च सिध्यति । तथाहि स्वार्थिकत्वेनान्तरङ्गं परश्च लोहितान्मणाविति कन् ङीपं बाधेत ततो लोहितिकेत्येव स्यात् । इष्यते तूभयम् । ङीब्ग्रहणसामर्थ्यात्तु ङ्यन्तात्कनि रूपद्वयं सिद्धम् । वर्णादनुदात्तादित्यस्य वैकल्पिकत्वात् । आर्यशब्दात्तु न सामिवचने इत्यत्र ज्ञापयिष्यमाणोऽत्यन्तस्वार्थिकोऽपि कन् आब्ग्रहणसामर्थ्यात्पूर्वं न प्रवर्तते तेन उदीचामातः स्थाने यकपूर्वाया इतीत्वविकल्पः सिध्यतीति दिक् ॥

## स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योःसुप् । ४ । १ । २ ॥

ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥ सुङस्योरुकारेकारौ जशटङपाश्चेतः । ङ्यन्तात् कुमारीगौरीशार्ङ्गरव्यादयः उदाहरणानि । आबन्तात् खट्वाबहुराजाकारीषगन्ध्यादयः । प्रातिपदिकात् दृषदादयः ॥

## स्त्रियाम् । ४ । १ । ३ ॥

अधिकारोऽयं समर्थानामिति यावत् ॥

## अजाद्यतष्टाप् । ४ । १ । ४ ॥

अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् ॥ अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय । अजा । अतः । खट्वा । अजादिभिः स्त्रीत्वस्य विशेषणान्नेह । पञ्चाजी । अत्र हि समासार्थ-समाहारनिष्ठं स्त्रीत्वम् । अजा । एडका । अश्वा । चटका । मूषिका । एषु जातिलक्षणो ङीष् प्राप्तः । बाला । वत्सा । होढा । मन्दा । विलाता । एषु वयसि प्रथम इति ङीप् प्राप्तः । सम्भस्त्राजिनशण-पिण्डेभ्यः फलात् । सफला । भस्त्रफला । ङ्यापोरिति ह्रस्वः । सद-च्काण्डप्रान्तशतैकेभ्यः पुष्पात् । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । शूद्रा चामहत्पूर्वा जातिः । शूद्रा । पुंयोगे तु शूद्री । अमहत्पूर्वा किम् । महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेऽपि । कोकिला जातावपि । मूलान्नञः । अमूला ॥

## ऋन्नेभ्यो ङीप् । ४ । १ । ५ ॥

कर्त्री । दण्डिनी ॥

## उगितश्च । ४ । १ । ६ ॥

उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात् ॥ भवती । भवन्ती । पचन्ती । शप्श्यनोरिति नुम् । उगिदचामिति सूत्रे अञ्चग्रहणेन धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियम्यते । तेनेह न । उखा-स्रत् । पर्णध्वत् । क्विप् । अनिदितामिति नलोपः । वस्विति दः । अञ्चतेस्तु स्यादेव । प्राची । प्रतीची ॥

## वनो र च । ४ । १ । ७ ॥

वन्नन्तात्तदन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् स्यात् रश्चान्तादेश. ॥ वन्निति ङ्वनिप्क्वनिप्वनिपां सामान्यग्रहणम् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् । तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते । सुत्वानमतिक्रान्ता अतिसुत्वरी । अतिधीवरी । शर्वरी ॥ वनो न हश इति वक्तव्यम् ॥ * ॥ हशन्ताद्धातोर्विहितो यो वन् तदन्तात् तदन्तान्ताच्च ङीप् रश्च नेत्यर्थः । ओणृ अपनयने । वनिप् । विड्वनोरित्यात्वम् । अवावा ब्राह्मणी । राजयुध्वा । बहुलं छन्दसि ङीब्रौ वक्तव्यौ ॥ * ॥ यज्वरी रिषः । यज्वनी रिषः । सुयजोर्ङ्वनिप् । वा छन्दसीति पूर्वसवर्णदीर्घः । बहुव्रीहौ वा ॥ * ॥ बहुधीवरी । बहुधीवा । पक्षे डाप् वक्ष्यते ॥

## पादो ऽन्यतरस्याम् । ४ । १ । ८ ॥

पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकात् स्त्रियां ङीप् वा स्यात् ॥ द्विपदी । द्विपात् ॥

## टाबृचि । ४ । १ । ९ ॥

ऋचि वाच्यायां पादन्तात् टाप् स्यात् ॥ द्विपदा ऋक् । एकपदा ॥

## न षट्स्वस्रादिभ्यः । ४ । १ । १० ॥

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः ॥ पञ्च ब्राह्मण्यः । सप्त । नव । दश । स्वसा । तिस्रः । चतस्रः ॥

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

पञ्चेत्यादौ नलोपे कृतेऽपि ष्णान्ता षडिति षट्संज्ञां प्रति नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वान्न षट्स्वस्रादिभ्य इति न टाप्॥

## मनः। ४। १। ११॥

मन्नन्तान्न ङीप्॥ सीमा। सीमानौ॥

## अनो बहुव्रीहेः। ४। १। १२॥

अन्नन्ताद्बहुव्रीहेर्न ङीप्॥ बहुयज्वा। बहुयज्वानौ॥

## डाबुभाभ्यामन्यतरस्याम्। ४। १। १३॥

सूत्रद्वयोपात्ताभ्यां डाप् वा स्यात्॥ सीमा। सीमे। दामानौ। दामे। न पुंसि दामेत्यमरः। बहुयज्वा। बहुयज्वे॥

## अनुपसर्जनात्। ४। १। १४॥

अधिकारोऽयं यूनस्तिरित्यभिव्याप्य॥ अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति॥

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः। ४। १। १५॥

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप्स्यात्॥ कुरुचरी। उपसर्जनत्वान्नेह। बहुकुरुचरा। नदट्। नदी। वक्ष्यमाणेत्यत्र टित्वाद्‌गित्वाच्च ङीप् प्राप्तो यासुटो ङित्त्वेन लाश्रयमनुबन्धकार्यं नादेशानामिति ज्ञापनान्न भवति। श्नः शानचः शित्वेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधज्ञापनाद्वा। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी। ताच्छीलिके णेऽपि। चौरी॥ नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्॥ * ॥ स्त्रैणी। पौंस्नी। शाक्तीकी। आढ्यङ्करणी। तरुणी। तलुनी॥

## यञश्च । ४ । १ । १६ ॥

यञन्तात् स्त्रियां ङीप्स्यात् ॥ अकारलोपे कृते हलस्तद्धितस्येति यलोपः । गार्गी । अनपत्याधिकारस्थान्न ङीप् । द्वीपे भवा द्वैप्या । अधिकारग्रहणाद्दैवस्यापत्य दैव्या । देवाद्यञञाविति हि प्राग्दीव्यतीयो न त्वपत्याधिकारपठितः ॥

## प्राचां ष्फ तद्धितः । ४ । १ । १७ ॥

यञन्तात् ष्फो वा स्यात् स्त्रियां स च तद्धितः ॥ तद्धितान्तत्वात्प्रातिपदिकसञ्ज्ञा । षित्वसामर्थ्यात्ष्फेणोक्तेऽपि स्त्रीत्वे षिद्गौरेति वक्ष्यमाणो ङीष् । गार्ग्यायणी ॥

## सर्वत्र लोहितादिकतन्तेभ्यः । ४ । १ । १८ ॥

लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्य ष्फः स्यात् ॥ लौहित्यायनी । कात्यायनी । आरम्भसामर्थ्यादेव प्राचामित्यस्य निवृत्त्या नित्यत्वे लब्धे पुनः सर्वत्रग्रहणं प्राचां ष्फ तद्धित इत्यत्रापकर्षणापवादविषयेऽपि प्रवृत्त्यर्थम् । तेनावट्यायनीति प्राचा ष्फ सिद्धो भवति । अन्यथा ह्यावट्याच्चेति चाप् उदीचां सावकाशः परत्वात्प्राचा ष्फ बाधेत । अथ कथ शाकल्यायनीति । यदि पुनरयं शकलशब्दो लोहितादिषु पठ्यते नैव शक्यम् । इह हि शाकल्यस्य छात्राः शाकलाः कण्वादिभ्यो गोत्र इत्यण् न स्यात् । एव तर्हि ॥

कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते ।
पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम् ॥

## कौरव्यमाण्डूकाभ्याञ्च । ४ । १ । १९ ॥

ॐ श्रीरस्तु ।

श्रीमते हयग्रीवाय नमः ।

श्रीमते निगमान्तमहागुरवे नमः ।

# सङ्कल्पसूर्योदये द्वितीयोऽङ्कः ।

ततः प्रविशति श्रद्धा विचारणा च ।

विचारणा—*समजलबिन्दुणिअरणिभासिअणिडालअलावच दसणूसु आव-
च्छलेव तुरन्ती वट्टसि ।

मुह अन्दसन्दि असुहासुहआ
छविफुल्लमल्लिमअरन्दणि हा ।
णवसोम्मजंवणल आकलिआ
सिरिमुंवहन्ति तुहसे अकणा ॥ १ ॥

*श्रमजलबिन्दुनिकरनिर्भासितनिटालतला वत्सदर्शनोत्सुका वत्सलेव त्वरमाणा वर्तसे।

मुखचन्द्रस्यन्दितसुधासुभगा छविफुल्लमल्लीमकरन्दनिभा ।
नवसौम्य यौवनलताकलिका श्रियमुद्वहन्ति तव स्वेदकणा ॥

अथ सूच्यार्थोपक्षेपक प्रवेशक प्रपञ्चयति ।

तत इति—यथोक्त

तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजित. ।
प्रवेशोऽङ्कद्वयस्यान्तश्शेषार्थस्योपसूचक. ॥ इति ।

श्रद्धाविचारणा च सुमतेश्चेटौ ।

श्रमजलबिन्दुनिकरै निर्भासितमलङ्कृतं निटिलतट ललाटतटं यस्यास्सा तथो
क्ता । किमिति त्वरया धावसीति भाव । श्रमजलबिन्दून्वर्णयति ।
तव स्वेदकणा एव मुक्ताः ।

श्रद्धा—*पिअसहि, दाणिं किल एक्कमुह पडिठाविअ सुइसिर सिद्धन्तस्स पडिपक्ख पडिखेवभाविअपडिण्ण स भत्तुणो विवेअस्स सहधम्म आरिणी देवी सुमई पक्कन्द णिव्वहण दोहलेण परिगहिअ मङ्गलाआरा पमआवण पासिमसअण सेल आसिदा कमलावइ चलण कमलसमच्चण जोग्गाइं कञ्चण पदुमाइं इव हरिउ आण-वि ऊणसोहणेक्कताण हि अआ सुहठाइ, ता झत्ति उवसप्पामि पङ्कआसणवअण पङ्कअराअहंसी भारई विअ पसण्ण पवाह भाईरई

(ऊर्ध्वमवभिनीय)

†कच्छुत्तंसि अकप्परुक्खसिहरुब्भासन्तवासन्तिआ
गन्धुग्गारफुरन्त सोंमलहरीसोहन्तराहन्तरा।
अह्मोदूसहजंमसञ्चरसमासिन्धाइसुंधा इदी
दुंखाइंकडणुकाह इसअंमंदाइमंदाइणी ॥ २ ॥

*प्रियसखि इदानीं किल एकमुखप्रतिष्ठापितश्रुतिशिरस्सिद्धान्तस्य प्रतिपक्षप्रतिक्षेपभावितप्रतिज्ञस्य भर्तुर्विवेकस्य सहधर्मचारिणी देवी सुमतिः प्रक्रान्तनिर्वहणदोहलेन परिगृहीतमङ्गलाचारा प्रमदावनपार्श्वशैलमाश्रिता कमलापतिचरणकमलसमर्चनयोग्यानि काञ्चनपद्मानि उपहर्तुमाज्ञाप्य शोभनैकतानहृदया सुखं तिष्ठति तत्झटित्युपसर्पामि पङ्कजासनवदन पङ्कजराजहंसी भारतीमिव प्रसन्नप्रवाहां भागीरथी

†कच्छोत्तंसितकल्पवृक्षशिखरोद्भासमानवासन्तिका
गन्धोद्गारस्फुरत्सौम्यलहरी शोभमानराधोन्तरा।
अस्माकं दुस्सहजन्मसञ्चरश्रमसिद्धानि शुद्धाकृति
दुःखानि कटानुकरिष्यति स्वयं मन्दानि मन्दाकिनी ॥

श्रद्धा विचारणां प्रत्याह। एकमुखतया भगवदेकपरतया प्रतिष्ठापितः श्रुतिशिखरसिद्धान्तो वेदान्तसिद्धान्तो येन तस्य। परपक्षप्रतिक्षेपे भाविता क्लृप्ता प्रतिज्ञा येन तस्य। पूर्वाक्रान्ते परपक्षप्रतिक्षेपे प्रयतितव्यमिति हि प्रतिज्ञातं। पङ्कजासनस्य चतुर्मुखस्य वदनान्येव पङ्कजानि तेषु राजहंसीमिव सञ्चरन्तीं। भारतीं सरस्वतीमिव प्रसन्नप्रवाहां। प्रवाहो निस्सरणमोघश्च।

कच्छैरनूपैः उत्तंसिता उद्धराडा ये कल्पवृक्षा तेषां शिखरेषु उद्भासमाना या वासन्तिका तासां गन्धस्योद्गारेण उद्गमेन स्फुरन्ती सौम्या च या लहरी प्रवाहवीचिकया तया शोभमाना राधसोरन्तरं यस्यास्सा तथा दुस्सहं यज्जन्म संसारः तस्मिन्यस्सञ्चरः सञ्चारः तेन यः श्रमः तेन। आसमन्तात् सिद्धानि सज्जनहृदयवच्छीतलैः मधुमथनपदसरित मधुरिपुचरणसमुद्भवा मन्दाकिनी नदी।

विष्णुपादच्युतां दिव्यामपापां पापनाशिनीमित्युक्तेः।

विचारणा—(अग्रतो निर्दिश्य), *एसा खु सा अस्माण आसणअरा, ता इमस्मि सज्जणहिअअ सीअलमन्दमारु आदोलिअमन्दार दुमकुसुममअरन्द सोरह भरिअ महुमहणपअसरिआ पुलिण माहवीलआघरे खलव अणतिक्ख उण्हअर किरण सन्ताव उवसमऊण खणन्तरे गमिस्ससि।

जन्थअ।

एदेणिं भरणिं असोरहसुहापं भारविम्भाइअं
माणुंलुंफणमीणलं फणमहाधाणुक्कबाणुक्कर।
छाआलाणमहिन्दवारवणि आधम्मिम्लमम्लोइअं
साहङ्गेहिमुअन्तिपुम्फणि अरंरुंखामरुंखोहिआ॥२॥

अट्टा—†जहरोअदि पि असहीण

अट्टा—‡हलाविआरणे तुमउणकिंणिमित्तं इमन्देस आअदा।

---

*एषा खलु सास्माकमासन्नतरा तदेतस्मिन् सज्जनहृदयशीतलमन्दमारुतान्दोलितमन्दारद्रुमकुसुममकरन्दसौरभभरितमधुमथनपदसरित्पुलिनमाधवीलतागृहे खल वचनतीक्ष्णोष्णकरकिरण सन्तापमुपशमय्य क्षणान्तरे गमिष्यसि।

यत्र च।

एते निर्भरनिर्यत्सौरभ सुधाप्राग्भारविभाजित
मानोल्लुञ्चनमीनलाञ्छनमहाधानुष्कबाणोत्कर।
छायालीनमहेन्द्रवारवनिताधम्मिल्लमाल्योचित
शाखाग्रैर्मुञ्चन्ति पुष्पनिकर वृक्षा मरुत्क्षोभिता॥

†यथारोचते प्रियसख्यै (उभेमललितमासाते)

‡हलाविचारणेत्व पुन किंनिमित्त इम देशमागता

---

खलाना वचनमेव तीक्ष्णो य उष्णकर, तस्य किरणै यस्सन्ताप तन्निर्भर पूर्ण यथा भवति तथा निर्यत निर्गच्छत् सौरभमामोद तदेव सुधा सौरभस्य भोग्यता शयेन सुधात्वरूपण तस्या प्राक्भारेणाधिक्येन विभाजित। मानस्य अभिमानस्य उल्लुञ्चन उन्मूलन यो मीनलाञ्छन, मकरध्वज स एव महाधानुष्क उत्कृष्टधन्वी तस्य बाणोत्कर बाणनिकर। छायाया उल्लीना विश्रान्ता या महेन्द्रस्य वारवनिता वारविलासिन्य अप्सरस तासा धम्मिल्लेषु यानि माल्यानि तदुचितम्॥

यथा रोचते प्रियसख्यै।

विचारणा—*सु अउपिअसहीए, अजखुविवेअमहारा अंमववसाअ सेणावइ सहाअस सणाह सुणिऊण कुविएणारणा महामोहेण बुन्धजिण पमुह सिन्धन्तठावण पवीणा कुहअवाइणो कुमइगणे हिसह पुरुसोन्तमपअपदुमणिअमिअचित पुरुस हालिअजबुअदसणणा एण अयन्तरपसङ्गेण पआरेउ आदिणा इवसप्पन्तिन्ति किव-अन्ति आअणअन्तीए भट्टिणीए सुमई एविपहुउन्तन्द एअन्ते सेणावइणो विणवेदु आणत्ता महाराएण विवेएण सहमन्तण पउन्त त एव्वदठु उवठिअह्मि

श्रद्धा—†अजउण पिसाअ विवाहमि गन्दभगाण सवुन्तञ्ज महामोहस-मीहिएदुवाइण सणाहो, होदुणाम ईसकरं एव परसिन्धन्तणि-मूलण महाराअस

विचारणा—‡हला बुअपइपमुहेंहिपडिठाविआण पबलाण बहूण पडिपह्वाण एक्केण णिमूलण तुए कहं आससिअ

---

*श्रूयता प्रियसख्या, अद्य खलु विवेकमहाराजस्य व्यवसाय सेनापति सहायस्य सन्नाह श्रुत्वा कुपितेन राज्ञा महामोहेन बुद्धजिनप्रमुखसिद्धान्तस्थापनप्रवीणा कुह-कवादिन कुमतिगणैस्सह पुरुषोत्तमपदपद्मनियमितचित्त पुरुष हालिकजम्बुकदर्शन न्यायेनार्थान्तरप्रसङ्गेन प्रतारयितुमादिष्टा उपसर्पन्तीति किवदन्तीमाकर्णयन्त्या भर्त्र्या सुमत्या विपक्षवृत्तान्तमेकान्ते सेनापतेर्विज्ञापयितु आज्ञप्ता महाराजन विवेकेन सह-मन्त्रणप्रवृत्त तमेव द्रष्टुमुपस्थितास्मि ।

†अद्य पुन पिशाचविवाहे गर्दभगान सवृत्त, यन्महामोहसमीहिते दुर्वादिना सन्नाह॰, भवतुनाम, ईषत्करमेव परसिद्धान्तनिर्मूलन महाराजस्य ।

‡हला बृहस्पतिप्रमुखै प्रतिष्टापिताना प्रबलाना बहूना प्रतिपक्षाणां एकेन निर्मूलनं त्वया कथमाश्वसितम् ।

---

पिशाचाना विवाहेषु गर्दभाः किल गायका इति लोकवचनं । प्रत्यायितास्मि

श्रद्धा—*ज सच्चन्त एव णिच्च होइजं उणमिछातं कालेण अलीअहो इति जणवा असवाइणा बलवन्तेण पमाणेण पेंखिहिसितुम एंव महवअण सच्चत्तण ।

दीसन्तोदि असेसरोंवबहलं अंधारपंभारअं
दिम्पन्तो अदवाणलोंवविउलंविंझाडवीमंडलं ।
तूरन्तो अपहंजणोंवतुलि अंसेलेणतूलुक्करं
पेंखन्तोणिहिलं विदुंमइमअंभेन्तुं विवेओपहू ॥ ४ ॥

ताविवेअविअअ कामस महामोहस कुमइगण सङ्गहण साअरल-घणुसुअस उवलसहा आणेमण ।

विचारणा—†पच्चाइअह्मिपि अमही वअणेण सन्ता मे विचिकिच्चा अविल-बिअ किअ पेसण भटिणिपेङ्खामि ।

श्रद्धा—‡हलासमाणचित्त उत्तित्तण सहित्तण तुए पआसिअ अहंअ कम-लाइअवचेउ आउन्तातुम विराअघर पविसतु ।

इति निष्क्रान्ते

—प्रवेशकः—

---

*यत्सत्य तदेवनित्य भवति यत्पुनर्मिथ्या तत्कालेनालीक भवतीति जनवादस-वादिना बलवता, प्रमाणेन प्रेक्षिष्यसे त्वमेव मम वचनसत्यत्व ।

दृश्यमानो दिवसेश्वर इव बहुलमन्धकारप्राग्भारकं
दीप्यमानश्च दवानल इव विपुल विन्ध्याटवीमण्डलं ।
त्वरमाणश्च प्रभञ्जन इव तुलित शैलेन तूलोत्कर
प्रेक्षमाणो निखिलमपि दुर्मतिमत भेत्तु विवेक प्रभु. ॥

तस्माद्विवेकविजयकामस्य महामोहस्य कुमतिगणसङ्ग्रहण सागरलङघने-त्सुकस्य उपलसहायान्वेषण ।

†प्रत्यायितास्मि प्रियसखीवचनेन शान्ता मे विचिकित्सा अविलम्बितकृतप्रेषणा भर्त्री प्रेक्षे ।

‡हला समानचित्तवृत्तित्व सखित्व त्वया प्रकाशित अहं च कमलान्यपचेतुराब्धा त्वमपि राजगृह प्रविशस्व ।

---

प्रियसखीवचनेन प्रत्यायिता विस्रभयुक्ता शान्ता मे विचिकित्सा । विचिकित्सा सन्देहः अविलम्बित यथा भवति तथा कृतमनुष्ठित प्रेषण नियोगो यस्यास्सा तथा ।

समानचित्तवृत्तित्व समानचित्तवृत्तिर्व्यापारो यस्यास्सा तथा तस्याभाव ।

ततः प्रविशति राजा व्यवसायश्च ।

राजा—सेनापते कठिनतरकर्मपाशकोटिनिबिडयन्त्रितमुधाव्यापारमोमुह्यमान पुरुषमोक्षणव्रतदीक्षितस्य मम स एष समयः सत्वमार्गविषयकृताकृतप्रत्यवेक्षणेन कृत्यशेषनिर्धारणस्य ।

(मुहूर्तमिव स्थित्वा सविषाद)

जडमति बहुलेस्मिन्दैवकोपाज्जनित्वा
जगति निरपराधे जातनिर्व्याजवैराः ।
कतिकतिकलहार्थं कॢप्तसिद्धान्तभेदाः
प्रलपनमुखभेदान् पाठयन्ति प्रगल्भाः ॥ ५ ॥

---

तत्व तदेव सखित्वं एव सूच्यमर्थं प्रवेशके सूचयित्वा दृश्यमप्रदर्शयितुमङ्कमारभते । तत इति ।

महाराः एण सहमन्तरां पवुन्तं त एवद मु उवपिठ अहोति प्रवेशके विचार णया सूचितौ राजा व्यवसायश्च प्रविष्टाविति मन्तव्यम ।

कठिनतरमनुभवैकनाश्यं यत्कर्म पुण्यपापात्मकं तदेव पाशस्तेन निबिडं यथा भवति तथा नियन्त्रित बद्ध मुधा व्यापारैः सुखलवाशयाकृतै. दुःखोदकै व्यापारैः मोमुह्यमानश्च य. पुरुष. तस्य मोक्षणमेव व्रत तस्मिन् दीक्षितस्य ममेति शेष सत्व मार्गो शुद्धसत्वमयमार्गो तत्प्राप्तिमार्ग इति यावत् कृताकृतप्रत्यवेक्षणेनैतत कृतमेतद कृत कर्तव्यमिति पर्यालोचनया कृत्यशेषविधारणस्य इद कर्तव्यमिति निश्चयस्य स एष समय । अस्मिन्नेवकाले निश्चेतव्यमिति भाव. ।

वक्ष्यमाणार्थचिन्तनेन विषादः । विषादहेतुमाह

जडमतीति—जडमतिभिर्विवेकविधुरै विपुले विस्तृते अस्मिन् जगति दैवकोपात् ।

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥

इत्यादिषु उक्ताज्जनित्वा निरपराधे जगति तत्स्थिते जने मञ्चाः क्रोशन्तीतिवत् जातं निर्व्याजं हेतुक वैर येषा ते तथोक्ता कलहार्थं परस्परकलहाय किमेतत्तूष्णीमास्ते कलह कुर्वन्तुनामेति बुध्येत्यर्थः । कॢप्ताः सिद्धान्तभेदा यैस्ते तथा प्रगल्भाः धृष्टा श्रोतारोपहसन्तीति लज्जाविहीना इत्यर्थः प्रलपनाना मुखभेदान् पर्यायान् पाठयन्ति अध्यापयन्ति पाठयन्तीत्यनेन अर्थविचारानपेक्षशब्दराशिपाठ एव प्रयोजनमिति सूच्यते ॥ ५ ॥

आः कष्ट, व्यामोहजनकविविधसमयोपप्लुते जगति कथमियम-ध्यात्मविद्या प्रतिष्ठास्यति ।

(आकाशे)

भोभो महामोहापशद त्रिभुवनसम्मोहनेन भवता किन्नाम लब्ध लप्स्यते वा ॥

अपि च ।

सर्वतः करवीरादीन् सूते सागरमेखला ।
मृतसञ्जीविनी यत्र मृग्यमाणदशाङ्गता ॥ ६ ॥

तदहमीदृशोपप्लवशमनाय भगवन्तमेवाभिगच्छामि ।

(स्मरणमभिनीय)

स्वतस्सिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं
सुधासध्रीचीभिर्द्युतिभिरवतापत्रिभुवनं ।
अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं
हताशेषावद्यं हयवदनमीडीमहि महः ॥ ७ ॥

---

आ कष्टमिति विषादातिशय व्यनक्ति । व्यामोहस्य एव वा एववेति समयस्य जनकै विविधैश्च समये कृतान्तै उपप्लुते व्याकुलिते जगति अध्यात्मविद्या जीवेश्व रस्वरूपस्पष्टावबोधिनी विद्या वेदान्तविद्येत्यर्थ प्रतिष्ठास्यति प्रतिष्ठा प्राप्स्यति ।

आकाशे पुरत कस्यचिदवस्थानाभावेपि तमग्रतो वर्त्तमान मत्वा वदतीत्यर्थ । त्रिभुवन समोहयतीति त्रिभुवनसंमोह तेन किन्नाम लब्ध नकिञ्चिदपि प्राप्तमित्य र्थ । किन्नाम लप्स्यते न किञ्चिदपि लप्स्यत इति भाव । श्रममात्रमेव फलमित्या शय । ईदृशदुर्जनबाहुल्य सुजनदौर्लभ्यञ्चानुसन्धायाह । अपि चेति ।

सागरो मेखा रशना यस्यास्सा सागरमेखला भूमि सर्वत सर्वत्र करवीर आदि र्येषा तान आदिशब्देन विषमुष्टिप्रभृतयो गृह्यन्ते तत्र भूमौ मृतान्सञ्जीवयतीति मृतसञ्जीविनी ओषधिविशेष मृग्यमाणदशा मृग्यमाणत्व गता ॥ ६ ॥

तद्दुष्टबाहुल्याद्धेतोरीदृशैर्महामोहसदृशैर्य उपप्लव । तदुपशमनाय किरूप भगवन्तमभिगच्छामीति ध्यात्वा हयग्रीवविषय स्मरण प्राप्त तदेवाभिनीय वदति स्वत इति ।

स्वतस्सिद्धमिति—स्वसङ्कल्पाधीनस्वरूपचिदचिद्व्यावृत्तिरुक्ता भगवदिच्छया किन्न तदितरसकलवस्तुसत्ता । तदुक्तमभियुक्तै । इच्छातएव तव विश्वपदार्थसत्ता नित्यं प्रियास्तव तु केचन ते हि नित्याः इति । शुद्धा ये स्फटिकमणय तैये

अपि च ।

समाहारस्साम्नां प्रतिपदमृचान्धामयजुषां
लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्प्रतिकथककोलहलभवं
हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ ८ ॥

सेना—महाराज सर्वत्रसिद्धारम्भः खल्वसि । अमोघ एव खल्वनरण्यशाप इवारण्यकवादो भवत्प्रभावेन महामोहविध्वसनवादी ।

---

भूभृत गिरि तस्य प्रतिभटं स्वकान्त्या तत्कान्तिमपहुवानं सुधायास्सध्रीचीभि. समानाभि· द्युतिभि अपताप अवगतताप त्रिभुवनं यस्य स तथा । अनन्तैरसख्येस्त्वय्यन्तेर्वेदान्तै. अनुविहित अनुकृत हेषाया. हलहलो यस्य तत हलहल इति शब्दानुकारः भगवते हयग्रीवस्य हेषामनुकुर्वन्ति वेदान्ता इति भाव· । हतानि निरस्तानि अशेषाणि अव द्यानि यस्य तत अनेन हेयगुणराहित्यमुच्यते । श्रूयते हि तत । अपगतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः ॥ निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जन ॥ इति हयस्य वदनमिववदन यस्य तत मह ज्योति ज्योतिष्ट्व हि भगवत एव प्रसिद्ध । अथ यदतः परो दिवो ज्योतिः दीप्यते । त देव ज्योतिषा ज्योतिरायुर्होपासते मृतं । नारायणपरो ज्योतिरित्यादिषु श्रवणात् ईडीमहि तद्विषया स्तुति करवामहे ॥ ७ ॥

एव हयग्रीवस्य हेषाहलहल. प्रस्तुत स एव ममाज्ञानान्धकारं शमयत्विति प्रार्थ्यते ।

सामहार इति—साम्ना समाहार सग्रह ऋचाम्प्रतिपद पर्यायशब्दः यजुष धाम गृह प्रत्यूहाना विघ्नाना लय विरामः बोध एव जलधि· तस्य लहरीणा वीचीनः वितति विस्तार· एवभूता हयवदनहेषाहलहल कथासु वादेषु दर्पेण अस्मत्सदृशो नास्तीति गर्वेण क्षुभ्यन्त. अवसरोचित अजानन्त ये कथका वादिन· तेषा कुलस्य समूहस्य कोलाहलभव कलकलजन्य अन्तर्ध्वान्त अन्तर्मनसि वर्तमान अज्ञानरूप ध्वान्त तमः हरतु नाशयतु ॥ ८ ॥

सिद्ध फलसिद्ध्यविनारम्भो यस्य स । तथा सिद्धारम्भत्व कथमित्यत्राह । मोहविध्वसनवादी आरण्यकाना ऋषीणा वादो वचनं अनरण्यस्य शापइव भगवत्प्र भावेण अमोघ खलु आरण्यकवादस्य अमोघत्वात् आरम्भोऽपि सफलो भविष्यतीति भावः ।

इदानीं कृत्यशेषमपि अल्पमित्याह अद्य चेति ॥

अन्यच्च।

त्वयात्र्यन्तविज्ञानं पुरुषस्य विभावितं।
श्रद्धावैकल्यमात्रन्तु शमनीयमतः परं ॥ ९ ॥

राजा—(सपरितोष), भद्र साधु सम्बोधितोऽस्मि भव्यवृत्तेन भवता त्वत्सहायस्य मे कृत्यशेषमपि कृतप्रायमेव निश्चिनोमि।

शमदमसुखास्तिष्ठन्त्वेते शतंशतमुत्थिता
निरुपधिमहामोहश्रद्धानिवारणलम्पटाः।
दनुजमथने विष्वक्सेनो हरेस्तदनन्यधीः
प्रतिमत तमश्छेदे हेतुस्त्वमप्यनघो मम ॥ १० ॥

सेना—देव प्रहरणनयेन परेषु प्रयोक्तव्यतया परतन्त्र एवाहं भवतः।

निष्प्रत्यूहसमुत्थितैरधिगतस्थैर्यैः प्रमाणादिभिः
स्वच्छन्दप्रथमानशौर्यविभवः स्वायत्तसिद्धिर्भवान्।
इत्थं सत्यनुपप्लवं परिपतच्छिन्ताफलस्रोतस-
स्सत्तावस्थितिवृत्तिषु स्वयमहं छायासमस्तस्यते॥ ११ ॥

---

त्वया—त्र्यन्तविज्ञान वेदान्तविज्ञान विभावित प्रकाशित। श्रुतार्थे श्रद्धाया वैकल्यमात्रमत पर शमनीयम ॥ ९ ॥

भव्य कल्याण वृत्त यस्य तेन कृतप्राय कृतभूयिष्ठं त्व सहायो यस्य मे। एव वक्तु को वातिशय इत्यत्राह

शम इति—निरुपधिमन्तरेण महामोहश्रद्धाया महामोहस्य या शत्रुविजिगीषा तस्या इत्यर्थ निवारणे लम्पटा इच्छावन्त शतशतमुत्थिता एकैकस्मिन्कार्ये अहमहमिकया सङ्घश बद्धपरिकरा' शमदमसुखा तिष्ठन्तु। हरे दनुजमथने तद नन्यधी तदेकाभिप्राय विष्वक्सेन हेतु मम प्रतिमतमेव तम तस्य छेदे अनघ त्वमपि हेतु. ॥ १० ॥

प्रहरणन्यायेन आयुधन्यायेन यथा अचेतन्मायुध केनचित्पुरुषेण प्रयुक्त सत त्रिमत हन्ति तथाहमपि त्वया प्रयुक्तस्सन् तत्तत्कार्या करोमीति भाव। एतच्चार्यसिद्ध विवेकस्य स्वातन्त्र्यमात्मन पारतन्त्र्य चाह।

निष्प्रत्यूहेति—निष्प्रत्यूह यथा भवति तथा समुत्थितैरुदितैः प्रमाणादिभि। आदिशब्देन प्रमाता गृह्यते। अधिगतस्थैर्य स्वच्छन्द प्रथमानः वर्धमान शौर्यस्य विभवो यस्य स तथा स्वायत्तसिद्धि स्वाधीनअभिमतसिद्धि स्वायत्तसिद्धय सचिवाय

तस्मादह वा सुमतिर्वा जलोद्धृतमत्स्यन्यायेन भवन्त विना मुहूर्तमपि न जीवाव॰ ।

राजा–( विचिन्त्य ) सेनापते पश्य पश्य

असुरादिमोहनविधौ विहिताः
प्रमितावतीतसमयास्समयाः ।
तपनापनेयतिमिरक्रमतः
प्रचरन्ति हन्त जगदन्तरतः ॥ १२ ॥

---

त्तसिद्धयश्चेति द्विविधा राजान॰ तत्र स्वायत्तसिद्धय स्वतन्त्रा सचिवायत्तसिद्धय परतन्त्रा॰ तेषु प्रथमे धीरोदात्ता त एव नाटकेषु नायकया वर्ण्यन्ते इतरे धीरललिता नाटिकासुनायका इत्युक्तप्रकारेण तव इव स्वातन्त्र्यसिद्धे सति अनुपप्लवं अनुपद्रव यथा भवति तथा परिपतत् सिद्ध्यत चिन्ता फलाना श्रोत प्रवाहो यस्यते अह सत्ताया अवस्थितिषु वृत्तिषु व्यापारेषु छायासम । त्वदधीनसत्तास्थितिप्रयतन अह तव छायेव परतन्त्र इति भाव ॥ ११ ॥

एव तदेपक्षया स्वस्य पारतन्त्र्यमुक्त्वा तद्विश्लेषासहत्वं आत्मन॰ सुमतेश्चाह तस्मादिति ॥

तस्मात् छायावत्पारतन्त्र्याद्धेतो जलोद्धृतमत्स्यन्यायेन यथा जलादुद्धृत॰ मत्स्य॰ मुहूर्तमल्पकालमपि न जीवति तथेत्यर्थ इद लक्ष्मणवाक्यसस्मारक भवति । यथोक्त लक्ष्मणेन ॥

न च सीता त्वया हीन न चाहमपि राघव ।
मुहूर्तमपि जीवावो जलात्मत्स्याविवोद्धृतौ ॥

इति ॥

वक्ष्यमाणार्थमवेक्ष्य विचिन्तनम ।

असुरादीना आदिशब्देन तत्समा भगवद्विरोधिनो गृह्यन्ते तेषा मोहनस्य विधौ विधीयत इति विधि कर्म तस्मिन् विहिताः क्लृप्ता॰ प्रमितौ याथार्थ्यानुभवे अतीतसमया अतिक्रान्तकाला सम्यक्विचारेण परस्परव्याघातेन तत्तत्क्षणमात्रावसाना इत्यर्थ समयाः सिद्धान्ता तपनापनेय विनाश्य यत् तिमिर तत् क्रमत जगदन्तरत॰ प्रचरन्ति यथा जगति रात्रौ वर्तमान तम॰ तपनेनापनीयते एव समयाश्च केनचित् महसा निरस्यन्ते इति भाव ॥ १२ ॥

एते च मधुमथनभुजबलपरिभ्रमितमन्दरमहीधरमथ्यमानमहार्णवनिर्घोषनिर्विशेषनिरर्थकविविधवाचो वाचस्पतिमपि वनस्पतीकर्तुमुद्युञ्जते वणिक्का वावदूकाः तदमी सावधानसम्प्रयुक्तारम्भेणप्रकटप्रकाशितसाधनोपालम्भदंष्ट्राङ्कुरेण प्रतिपक्षखरतरतर्कपञ्चनखरेणारण्यकारण्यवर्तिना प्रमाणपराक्रमकण्ठीरवेण नियतमकुण्ठशक्तिना निरसनीयास्सत्पथविस्रम्भरम्भावनमथनविहितसरम्भाः प्रचण्डा वैतण्डिकवेतण्डाः।

सेना—देव नियुक्तो हि त्वया वादेन सह वेदान्तसिद्धान्तः प्रतिमतनिर्मूलनाय, तदासीदित्येषा कथासङ्ग्रामसीमा

ततः प्रविशतो गुरुशिष्यवेषधारिणौ सिद्धान्तवादौ

गुरुः—आयुष्मन्नवधारितपरमार्थेन प्रतिभटकथकलङ्काभटहनूमता भवता स्थूणानिखनन्यायेन सञ्चालितनिष्कम्पमध्यात्मतत्वमवगच्छामि

---

एते तत्तत्समयनिष्ठाश्च मथ्यमानस्य महार्णवस्य यो निर्घोष. तेन निर्विशेष विशेषरहितं यथा भवति तथा निरर्थका विविधाश्च वाच. येषा ते तथा वनस्पतीकर्तुं वृक्षवत स्तब्धीकर्तुं उद्यञ्जते वणिका. क्षुद्रा वावदूका.। तत्तस्मात यदेवमेतद्युञ्जते तस्मादित्यर्थ । सावधान अवधानेन सहित यथा भवति तथा प्रयुक्ता आरम्भा यस्य तेन प्रकट. प्रकाशित य साधनोपलम्भ साधनप्राप्ति स एव दंष्ट्राङ्कुरो यस्य तेन प्रतिपक्ष सेचित खर खरतरश्च य तर्क स एव पञ्चनखरा यस्य तेन आरण्यकानि उपनिषद' तान्येवारण्य तत्र वर्तत इति तद्वर्ति तेन प्रमाणाना प्रत्यक्षादीना पराक्रम पराभिभवनसामर्थ्य स एव कण्ठीरव सिंह तेन अकुण्ठा तीक्ष्णा शक्ति यस्य तेन सत्पथे समीचीनमार्गे सता पराशरपाराशर्यबोधायनादीना मार्गे तद्दर्शिते सिद्धान्ते वा यो विस्रम्भ स एव रम्भावन कदलीवन तस्य मथनं विहितसरभा कृतयत्नाहा प्रचण्डा क्रूरा वैतण्डिका एव वेतण्डा' गजा. निरसनीया.। नियतनिश्चय प्रमाणबलेनैव एषा निरसन कार्यमिति भाव ।

वेदान्ताना सिद्धान्त' सर्वातिशायी निश्चय तत्वनिर्णयाय प्रवृत्त प्रसङ्ग वाद' प्रतिमत विरुद्धमत तन्निर्मूलनाय कथाप्रसङ्ग सैव सग्राम. तस्य सीमा अवधि असौ सिद्धान्त । कथावधित्वात्सिद्धान्तस्य ॥

अवधारित निश्चितः परमार्थो याथार्थ्यं येन स तथा तेन कथका प्रतिवादिन. तएव लङ्काभटा राक्षसा तेषा हनूमतानाशकेनेत्यर्थ स्थूणानिखनन्यायेन पुन' पुनः ता सञ्चाल्य निष्कप कुर्वन्ति तद्वत् सञ्चालितनिष्कपं अध्यात्मतत्व अध्यात्मशास्त्र प्रतिपाद्य अवगच्छामि दत्त इति तस्य नाम अत्रिपुत्रः आत्रेय. दत्तं दुर्वाससा सोममिति पुराणवचनात ।

शिष्यः—(सप्रश्रय) भगवन् दिव्येन यतीन्द्रवेषेण दत्तात्रेय इव सन्दृश्यसे योऽसौ महर्षिभिरनुस्मर्यते ।

काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः ।
त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥ १३ ॥ इति

गुरुः—आयुष्मन्नसुराः खल्वेते बाह्या कुदृष्टयश्च तानहं विष्णुरूपमाश्रित्य विजिगीषे

शिष्य.—भगवन् विष्णुरूपी सन् विष्णुभावेन नमस्यः खल्वसि ।

ततश्च ।

उपवीतिनमूर्ध्वपुण्ड्रवन्तं
त्रिजगत्पुण्यफलं त्रिदण्डहस्तं ।
शरणागतसार्थवाहकन्त्वां
शिखयाशेखरशालिनं भजामि ॥ १४ ॥

(इति साष्टाङ्गं प्रणमति)

---

अनुस्मरणमिवाह काणाद इति ॥

असुरा इत्यादि अयमभाव असुरसंहर्तृत्वं भगवत एव असाधारणं । बाह्यकुदृष्टीनां आसुरत्व तन्निरसन तद्रूपमाश्रित्यैव कार्यमिति । विष्णुरूपत्वादेव विष्णुभाव' तत एव नमस्यत्व ततश्च नमस्यत्वादेव नमस्यति ।

उपवीति—उपवीति ऊर्ध्वपुण्ड्राभ्या दत्तात्रेयस्य असाधारणं एवमेव त्रिदण्डशिखे च जगत्कर्तृत्वविशिष्टानि जगन्ति तेषां यत् पुण्य तत्फलरूपं त्रिजगदित्येतत्सकल लोकप्रदर्शनार्थं भगवदवतारस्य सर्वलोकरक्षाहेतुत्वात त्रिदण्ड हस्ते यस्य स तथा तं । शरणागतानां य सार्थ' समूह' तं वाहयति रक्षतीति शरणागतसार्थवाहक शिखया शेखरेण शोभमानम ॥ १४ ॥

साष्टाङ्ग अष्टाङ्गसहित यथा भवति तथा प्रणमति ।

मनोबुद्ध्यभिमानेन सहन्यस्यधरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमं ॥

इति उक्तलक्षण' साष्टाङ्गप्रणामः ।

गुरुः—आयुष्मन्

प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः ।
भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥१५॥

(इति दिव्यशक्तिमयं दर्भपवित्रन्ददाति)

**शिष्यः**—(तदादाय शिरसि निधाय दक्षिणे हस्ते धारयति)

**गुरुः**—अविश्रान्तश्रद्धाशतकलहकल्लोलविषमाः
तवाविर्भूयासुर्मनसि मुनिसिद्धादिसुलभाः ।
मधुक्षीरन्यायस्वगुणविभवासञ्जनकन-
न्महानन्दब्रह्मानुभवपरिवाहा बहुविधाः ॥१६॥

---

एवं प्रणमति शिष्ये प्रसन्नो गुरुराह ॥

**प्रतिष्ठापितेति**—नारायणैकप्रतिपादकतया प्रतिष्ठां प्रापितः वेदान्तो येन स तथा भगवदेकनिष्ठत्वादेव हि वेदान्तानां प्रतिष्ठा ।

सर्वे वेदा यत्पदमामनन्ति ।
नारायणपरा वेदाः ।
नतास्मवचसा प्रतिष्ठा यत्र शाश्वती ।

इत्यादिषु तथा दर्शनात् । गीतं च एतत् भगवता स्वयमेव **वेदैश्च सर्वैः अहमेव वेद्यः ।** इति

प्रतिक्षिप्तानि निरस्तानि बहिर्मतानि बाह्यकुदृष्टीनां मतानि येन स तथा तिस्रो विद्यास्त्रैविद्यं वेदत्रयं तन्निष्ठाः त्रैविद्याः तेषां मान्यः पूज्यः भूरीणां अधिकानां कल्याणानां मङ्गलानां भाजनं पात्रं स्थानं च भूयाः ॥ १५ ॥

दिव्या देवसम्बन्धिनी शक्तिः तन्मयं तद्विकारं ।

शिष्यस्य गुणपूर्तिं दृष्ट्वा प्रसन्नो गुरुः पुनरपि भगवदनुभवाविच्छेदमाशास्ते ।

**अविश्रान्त इति**—अविश्रान्तानां अनुपरतानां श्रद्धाशतानां अनुभवदशापरंपराणां कलहः अहं पूर्वं अहं पूर्वमिति स्पर्धा तस्याः कल्लोलैः विततिभिः दन्तुराः मुनयः मननशीलाः सनकादयः सिद्धाः मुक्तात्मानः आदिशब्देन अनन्तगरुडादयः गृह्यन्ते तेषां सुलभाः । अनेन तद्व्यतिरिक्तानां असुलभा इति व्यज्यन्ते । मधुक्षीरयोः विमिश्रयोः न्यायः प्रकार इव प्रकारः येषां ते मधुक्षीरन्यायाः ये स्वस्य गुणाः स्वशब्दः ब्रह्मवाची वात्सल्यसौशील्यादयः तेषां विभवस्य आसञ्जनेन सम्पर्केण कनन्तुज्ज्वलः महांश्च आनन्दो यस्य तस्य ब्रह्मणः अनुभवपरीवाहाः बहुविधाः तव मनसि भूयासुः ॥ १६ ॥

शिष्यः–(सप्रश्रय) अमोघाशिषो भगवतः प्रसादेन सिद्धमेव मे सर्वं समीहित, अथ च भगवन् यदहमिह किञ्चित्पृच्छामि तद्यदि श्रावयितुमर्हामि श्रावयितव्योऽस्मि

गुरु–सम्यगुपसन्नस्य सच्छिष्यस्य समये सति किन्न श्रावयितव्य

शिष्य–भगवन्! विगृह्य कथाकरण महर्षिभि प्रतिषिध्यते, वादेन ब्राह्मणञ्जित्वा हृष्टस्य पापिष्ठपादपत्वप्राप्तिश्च प्रतिपाद्यते, कथमिदानीं विजिगीष्यन्ते विपक्षवादिनः

गुरु–(सप्रसाद) भद्र भव्यबुद्धिना त्वया सम्यगनुयुज्यते किन्तु वर्णाश्रमजातिगोत्रप्रवरकुलचरणदेशकालादिविषयभेदेन व्यवस्थितैव हि विधिनिषेधमर्यादा तदहमिदानीं परिगृहीतनियमानुगुण स्वयविपक्षनिरसनमकुर्वाणः कौशिकइव राघव त्वा पुरस्कृत्य कुदृष्टीन् बाह्यांश्च निराचिकीर्षामि ।

---

समीहित इष्ट श्रावयितु श्रवण कारयितुमर्हामि योग्योऽस्मि श्रावयितव्या श्रोतृत्वेन कर्तव्योऽस्मि । सम्यगुपसन्नस्य साधुसमीपङ्गतस्य अनेन उपसन्नाय सम्यक् इति श्रुति प्रत्यभिज्ञायते । सच्छिष्यस्य सत्व सद्बुद्धिस्साधुसेवीत्यादौ द्रष्टव्य । समये सति तत्तत्प्रश्नोचितअवसरे सति कि किवा श्रावयितव्य न तत्तदवसरोचित सर्वं श्रावयितव्यमिति भाव । प्रतिषिद्ध्यते न विगृह्य कथा कुर्यात् पादप्राप्तिश्च सम्प्राप्य ते

वादेन ब्राह्मणं जित्वा हृष्टो भवति यो द्विजः ।
श्मशाने पादपस्स स्यात् गृध्रकङ्कनिषेवितः ॥

इत्येव पापभीरुत्वादस्यास्मिन गुरोः प्रसादो जात तत्सहित वदति ।

भव्या शोभना बुद्धिः यस्य तेन अनुयुज्यते शङ्क्यते अनुयोग समीचीन मन्त्रविशेषो ऽस्तीत्यत्राह किन्तु-इति । वर्णा ब्राह्मणादय चत्वारो वर्णा । ब्राह्मणक्षत्रियवैश्यशूद्रा इति स्मृतेः । आश्रमश्च चत्वारः ब्रह्मचारिगृहीवनीयतय । जाति ब्राह्मणयादिक । गोत्राणि कूटस्थर्षिनामभि कृतानि । प्रवरा तत्तद्गोत्राणा गोत्रान्तराणा च प्रवर्तयितार कुलानि तत्तत्पुरुषविशेषकृतानि । बहृचत्वया याजुषत्वादीनि । देश तुण्डीरचोलपाण्ड्यादय । काला वसन्तादयः । विषया अधिकारभेदा. आदिशब्देन आरोग्यरुग्णत्वादि गृह्यते । एवविधभेदेन विधिनिषेधयोः मर्यादास्थिति. व्यवस्थितैव अय भाव उक्तेषु वर्णादिकेषु एकैकस्य कर्तव्यतया यन्निधीयते तदितरस्य नि

तत्र च ।

**दूरे भवतु ते वीर जल्पस्सहवितण्डया ।**
**त्वमेव स्थिरवादात्मा निरुन्धि परिपन्थिनः ॥ १७ ॥**

अथवा त्वया मन्निदेशानुवर्तिना कौशिकनियमितेन राघवेणेव लब्धाधिकारेण यथाविधि वीतरागकथानवसरे वेदेश्वरविद्रूपकास्सर्वे तत्वाध्यवसायसंरक्षणार्थं बलातिबलाभ्यामिव जल्पवितण्डाभ्यामपि जेतव्याः

शिष्यः—(साञ्जलिबन्धं) शिरसा प्रतिगृहीतोऽयं भगवन्स्समादेशः अद्यापि भगवता विश्वाचार्येण भवता कथमिहमितरचेमयि कथकभार-मारोप्यते ।

गुरुः—अवधार्यतामिदम् ।

**नित्यक्षिप्तपरस्परेषु समयग्रामेषु निष्णातिनः**
**शिष्याः केचन सन्ति नः क्षितितले शिक्षाधिकग्राहिणः ।**
**तत्र त्वद्भुतनिर्भरप्रसरया बुद्ध्या परिष्कारिण-**
**स्त्वत्तः प्रत्ययितो न कश्चिदपरः प्रत्यर्थिभिः प्रार्थितः ॥ १८ ॥**

---

विधीयते । यस्त्याज्यतया निषिध्यते तदेव अन्यस्य कर्तव्यतया विधीयते । अत विधिनिषेधमर्यादा व्यवस्थितैवेति । तस्मादेव व्यवस्थाविच्छेदे परिगृहीतो यो नियमः तदनुगुणः स्वीकृतसन्यासानुगुण इत्यर्थः । निराचिकीर्षामि निराकर्तुमिच्छामि । यथा कौशिकः स्वस्य ब्रह्मर्षितानुगुणत्वेन स्वयं निशिचरवधमकुर्वन् राघवं पुरस्कृत्य कृतवान् तथाहमपि परिगृहीतपारिव्रज्यानुगुणः भवन्तं पुरस्कृत्य बाह्यकुदृष्टिनिरसनं कर्तुमिच्छामीत्यर्थः । ततश्च यतयेते त्वयैव निरसनीया ततश्च ।

**दूर** इति-स्थिरवादात्मा दृढतरवादात्मा त्वमेव प्रतिपन्थिनः प्रतिपक्षान्निरुन्धि वारय ॥ १७ ॥

पक्षान्तरमाह **अथवेति** । लब्धाधिकारेण प्रतिपक्षनिरसने अधिकारवता त्वया वीतरागकथायाः अनवसरे तत्वबुभुत्सया कृतायाः कथायाः वादस्याप्राप्तौ तत्वाध्यवसायस्य तत्वनिश्चयस्य संरक्षणार्थमनुज्ञाताभ्यां जल्पवितण्डाभ्यामपि जेतव्याः ।

मित पचे क्षुद्रे ।

**नित्येति**—नित्यं क्षिप्तः परस्परं येषु ते नित्यक्षिप्तपरस्पराः तेषु समयग्रामेषु निष्णातिनः निष्ठवन्तः शिक्षायाः अधिकं गृह्णातीति शिक्षाधिकग्राहिणः केचन शिष्याः नस्सन्ति तत्र तेषु तु अद्भुतः निर्भरश्च प्रसरो यस्यास्तया बुद्ध्या परिष्कारिणः अलङ्कारवतः त्वत्तः अपरः कश्चिदपि प्रत्ययितः सञ्जातप्रत्ययः प्रत्यर्थिभिः न प्रार्थितः ॥ १८ ॥

शिष्य:—यदादिशति भगवान्, अत्र तु कञ्चित्सिद्धान्तमनवलम्ब्य न कापि-
कथा प्रवर्तते, अतस्स्वाभिमते कुत्रचिन्मामवस्थापयतु भगवान् ।

गुरु:—भद्र, इह किल सयूथ्यकलहे समानतन्त्रे त्वया स्थातव्य, विपक्ष-
विप्रतिपत्तौ तु वेदान्तसिद्धान्ते तत्रापि पराशरपाराशर्यशुकशौन-
कबोधायनप्रभृतिभि: परिचित पन्थानमाश्रित्य परमार्थदर्शिदेशि-
कदत्तदृष्टिभिरस्माभि: परिमितविशदगम्भीरा: पञ्चषा: प्रबन्धा:
प्राबन्धिषत, तेष्ववहितचेतसा त्वया प्रतिसंहितपरमार्थेन पारि-
षदहृदयङ्गमा: प्रमाणतर्का: प्रयोक्तव्या: ।

शिष्य:—भगवति प्रसेदुषि न क्वचित्प्रमाद्यामि । यत:

**गुरुप्रसदनस्फुरद्गुणगरिम्णि यन्मानसे**
**सकृत्स्फुरति वस्तु तन्नर्हि किमप्यपभ्रश्यति ।**
**ऋषिस्तदितरोऽपि वा यदि गृणाति गत्यन्तरं**
**विकल्प्य तदपि क्षणाद्विलयमभ्युपैति स्वयं ॥ १९ ॥**

गुरु—भद्र, विश्वव्यामोहनविषमयुक्तिभयात् त्वां नित्यमवधानेन योज-
यामि । इह हि

---

यूथे भवा यूथ्याः सयूथ्या· समानयूथ्या एकसिद्धान्तस्था तैः कलहे समानतन्त्र तस्मिन्नेव सिद्धान्तइत्यर्थ । विपक्षे विप्रतिपत्तौ तु वेदान्ते सिद्धान्ते स्थातव्य तत्रापि वेदान्तसिद्धान्तेपि पराशरादिभि परिचित पन्थानमाश्रित्य परमार्थदर्शिभि· देशिकैः दत्ता दृष्टि ज्ञान येषा तैरस्माभि· । पञ्च वा षड्वा पञ्चषा प्रबन्धा भाष्यादय· प्राबन्धिषत प्रबन्धा । अवहित सावधानं चेतो यस्य तेन प्रतिसंहित परमार्थो येन तेन त्वया परिषदि स्थिता पारिषदा· तेषा हृदयङ्गमा प्रमाणतर्का प्रमाणानुकुलास्तर्का ।

प्रमादाभावः अतइत्यत आह ।

गुर्विति—गुरो· प्रसदनेन प्रसादेन स्फुरत गुणगरिमा यस्मिन् तस्मिन् मानसे यद्वस्तु सकृत्स्फुरति तत किमपि नापभ्रश्यति अन्यथा न भवति ऋषिस्तपोविशेष साक्षात्कृतपरावरवस्तुयाथात्म्य· तदितरः स्वतस्सर्वज्ञा· देवोपि वा गत्यन्तरं गृणाति यदि तदपि स्वय विकल्प्य नानाभूत्वा विलयमभ्युपैति ॥ १९ ॥

विश्वेषा व्यामोहनाय या· विषमयुक्तयः ताभ्यो भयात् बाह्यकुदृष्टिकल्पितयुक्तीनां क्रौर्यमाह ॥

अध्ययने हेतुमाह य इति । यो नरो ज्यौतिषं वेत्ति जानाति सम्यक् तत्त्वतः स धर्मार्थकामान् यशश्च लभते । अत्र सम्यक्पदग्रहणेनासम्यक्शास्त्रपरिज्ञानात्—

*"अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते ।
स पङ्क्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः ॥"
"तिथ्युत्पत्तिं न जानन्ति ग्रहाणां नैव साधनम् ।
परवाक्येन वर्त्तन्ते ते वै नक्षत्रसूचकाः ॥
परवचनेन ज्यौतिषमुपचरति स्वयं न दैवज्ञः ।
सदसि नृपस्य च शास्त्रे ज्ञेयो नक्षत्रपाठकः पापी ॥
प्रायश्चित्तं चिकित्सां च ज्यौतिषं धर्मनिर्णयम् ।
विना शास्त्रेण यो ब्रूयात् तमाहुर्ब्रह्मघातकम् ॥
नक्षत्रसूचकोद्दिष्टमुपवासं करोति यः ।
स व्रजत्यन्धतामिस्रं सार्धमृक्षविडम्बिना" ॥

इति वचनैश्चाययाशास्त्रफलादेशकस्य पङ्क्तिदूषकस्य नक्षत्रसूचकस्य निवारणं सूचितम् । फलप्राप्तौ हेतुभूतानि ज्यौतिषविशेषणान्याह पुण्यमिति ।

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" ॥

इत्युक्तत्वेन चतुर्दशविद्यास्थानान्तर्गतत्वाद्रहस्यं गोप्यं दुष्टेभ्यः । तथा च श्रुतिः ।

"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथाऽस्यामिति ॥"

परमम् ।

"कालोऽयं भगवान् विष्णुरनन्तः परमेश्वरः ।
तद्वेत्ता पूज्यते सद्भिः पूज्यः कोऽन्यतमो मतः" ॥

* बृहत्संहितायां सांवत्सरसूत्रस्य १६ श्लो० ।

इति वचनेन कालप्रतिपादकत्वाद्व्याकरणादिवेदाङ्गशास्त्रेषूत्कृष्टम् । अत्र हेतुभूतं विशेषणमाह तत्त्वमिति ।

"अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम् ।
प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ" ॥

इत्युक्तत्वाद्वस्तुभूतार्थप्रतिपादकम् । एतत्प्रतिपाद्यग्रहचारादेः प्रत्यक्षसंवादेन वेदवत् स्वतः प्रमाणं स्मृतिवद्वेदमूलकत्वेन वा ।

तथा च ।

* "ग्रन्थतश्चार्थतश्चैतत् कृत्स्नं जानाति यो द्विजः ।
अग्रभुक् स भवेच्छ्राद्धे पूजितः पङ्क्तिपावनः" ॥

† "वनं समाश्रिता येऽपि निर्ममा निष्परिग्रहाः ।
अपि ते परिपृच्छन्ति ज्योतिषां गतिकोविदम्" ॥

‡ "मुहूर्त्ततिथिनक्षत्रमृतवश्चायने तथा ।
सर्वाण्येवाकुलानि स्युर्न स्यात् सांवत्सरो यदि" ॥

¶ "नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता ।
चक्षुर्भूतोऽहि यत्रैष पापं तत्र न विद्यते" ॥

§ "यस्तु सम्यग् विजानाति होरागणितसंहिताः ।
अभ्यर्च्यः स नरेन्द्रेण स्वीकर्त्तव्यो जयैषिणा" ॥

"विनैतदखिलं श्रौतस्मार्त्तकर्म न सिद्ध्यति ।
तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा ॥
अत एव द्विजैरेतदध्येतव्यं प्रयत्नतः ।

---

* बृहत्संहितायां सांवत्सरसूत्रस्य १३ श्लो० ।

† बृहत्संहितायां सांवत्सरसूत्रस्य ७ श्लो० ।

‡ बृहत्संहितायां सांवत्सरसूत्रस्य ८ श्लो० ।

¶ बृहत्संहितायां सांवत्सरसूत्रस्य ११ श्लो० ।

§ बृहत्संहितायां सांवत्सरसूत्रस्य १९ श्लो०

अन्यानि शास्त्राणि विनोदमात्र न किञ्चिदेषा भुवि दृष्टमस्ति ।
चिकित्सित ज्यौतिषमन्त्रवादा पदे पदे प्रत्ययमावहन्ति" ॥

इति गर्गनारदवचनादिभिः—

"यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम सर्वकर्मसु गर्हितः" ॥

इति प्रत्ययवचनाच्च 'साङ्गो वेदोऽध्येयो ज्ञेयश्च'—इत्युक्तत्वाद्विना ज्यौतिषं साङ्गवेदाध्ययनाभावाच्च ज्योतिःशास्त्रमवश्यमध्येतव्यमिति । 'दर्शादिनक्षतपाप हन्ति सिद्धान्तवेत्ता'—इत्यादिबहुवचनैस्तदन्तर्गतसिद्धान्ताध्ययनमुक्तम् । तेन तदारम्भो युक्त इति भावः । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः'—इति लक्षणादिन्द्रवज्रावृत्तमिदम् ॥ १२ ॥

इदानीं ज्योतिःशास्त्रमूलभूतस्य सग्रहस्य भचक्रस्य चलन श्लोकद्वयेनाह ।

**सृष्ट्वा भचक्रं कमलोद्भवेन**
**ग्रहै सहैतद्भगणादिसंस्थैः ।**
**शश्वद्भ्रमे विश्वसृजा नियुक्तं**
**तदन्ततारे च तथा ध्रुवत्वे ॥ १३ ॥**
**ततोऽपराशाभिमुखं भपञ्जरे**
**सखेचरे शीघ्रतरे भ्रमत्यपि ।**
**तदल्पगत्यैन्द्रदिशं नभश्चरा-**
**श्चरन्ति नीचोच्चतरात्मवर्त्मसु ॥ १४ ॥**

**वा.भा.**—यदेतद्भचक्र ग्रहै सह भ्रमद्दृश्यते तद्विश्वसृजा जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा सृष्ट्यादौ सृष्ट्वा ततः शश्वद्भ्रमेऽनवरतभ्रमणे नियुक्तम् । एतदुक्त भवति । भान्यश्विन्यादीन्यन्यानि विशिष्टानि ज्योतींषि तेषा समूहश्चक्र ग्रहाश्च सूर्यादयस्तैः सह सृष्टम् । तानि भानि प्राक्संस्थया समन्तान्निवेशितानि । ग्रहास्तु भगणादावश्विनीमुखे निवेशितास्त उपर्युपरिसंस्थया । तत्रादौ तावदधश्चन्द्रः । तदुपरि बुधः । ततः

शुक्रः । ततो रविः । तस्माद्भौमः । ततो गुरुः । ततः शनिः । सर्वेषामुपरि दूरे भचक्रम् । एषां कक्षाप्रमाणानि कक्षाध्याये प्रतिपादयिष्यन्ते । अहो यद्यूर्ध्वाधःस्था ग्रहास्तदुपरि दूरतो भगणस्तत् कथं भगणादिसंस्थैर्ग्रहैरित्युच्यते । सत्यम् । अत्र भूमध्ये सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं भचक्रेऽश्विनीमुखे किल निबद्धम् । तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो ग्रहाः सृष्ट्यादौ ब्रह्मणा निवेशिताः । भमण्डलं द्वादशधा विभज्यैव भूमध्यात् सूत्राणि प्रतिभागं नीत्वा किल बद्धानि तैः सूत्रैः सह ग्रहकक्षाया ये सम्पातास्ते तासु कक्षासु राश्यन्ताः । तद्वत्प्रकारा राशय इति मद्बुद्ध्यामिहोक्तम् । कक्षाध्याये गोले च किञ्चिद्विस्तार्य वक्ष्यामः । एवंविधं भचक्रं सृष्ट्वा ब्रह्मणा गगने निवेशितम् । यत्र निवेशितं तत्र प्रवहो नाम वायुः । स च नित्यं प्रत्यग्गतिः । तेन समाहतं भचक्रं सखेचरं पश्चिमाभिमुखभ्रमे प्रवृत्तम् । यत् तस्य प्रत्यग्भ्रमणं तच्छीघ्रतरम् । यत एकेनाह्ना भमण्डलस्य परिवर्त्तः । एवं तस्मिन् भपञ्जरे सखेचरे शीघ्रतरं भ्रमत्यपि खेचरा इन्द्रदिशं चरन्ति पूर्वाभिमुखं व्रजन्ति । नीचोच्चतरास्ववस्थितेनु । अनन्तरकथितेषु स्वस्वमार्गेषु तेषां प्राग्भ्रमणम् । तत् तदल्पगत्या । प्रत्यग्गतेर्बहुत्वात् प्रागल्पगत्या व्रजन्तो नोपलक्ष्यन्त इति भावः । तथा तस्य भपञ्जरस्य यौ दक्षिणोत्तरावन्तौ तत्र ये तारे ते ध्रुवत्वे नियुक्ते ॥ १३—१४ ॥

वा· भा·—इदानीं कालव्यक्तिजनकत्वेन ज्योतिःशास्त्रमूलभूतत्वात् सग्रहस्य भचक्रस्य चलनं श्लोकद्वयेनाह सृष्ट्वा इति । विश्वसृजा जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा यदेतद्भचक्रं सग्रहं भ्रमद्दृश्यते तत् सृष्ट्वा शश्वद्भ्रमे नियोजितमस्ति । सृष्ट्वेत्यनेन नियोजनात् पूर्वकालता सृष्टेर्बोधिता । कल्पादितः प्राक् सृष्टिः कल्पादौ प्रवहवायौ नियोजनमित्युक्तं भवति । शश्वद्भ्रमतीति शश्वद्भ्रमो निरन्तरनियतपश्चिमगतिः प्रवह एव । भान्यश्विन्यादीन्यष्टाविंशतिसंख्यानि । अन्यानि च लुब्धकादीनि ज्योतींषि तेषां समूहो भचक्रमित्युक्तं भाष्यकृता । तत्र नोदयन्ति ।

यथा परो धावतीत्यनेनान्योऽपि प्रतीयते तथाऽन्यानि च ज्योतींषीत्यनेन दास्रादिनक्षत्राणामपि तैजसत्वमभ्युपगत प्रतीयते तच्च सिद्धान्तविरुद्धमिति । अत्रोच्यते । परमतप्रसिद्ध्यभिप्रायेणोक्तत्वान्नैष दोषः । यद्वौपाधिक तैजसत्व गृहीत्वोक्त ज्योतींषीति । अथ वा चन्द्रव्यतिरिक्ताना ग्रहाणा नक्षत्राणा च तैजसत्वमेवाभ्युपगम्यते । अस्ति च तेषा परप्रकाशकत्व स्वाभाविकम् । औपाधिकपरप्रकाशकत्वे मानाभावात् । शशाङ्कस्य तैजसत्वे ग्रहणशृङ्गोन्नमनदर्शनाद्यनुपपत्तिः । तस्मादन्यथाऽनुपपत्त्या चन्द्रस्य जलमयत्व स्वीक्रियते। अन्येषा तु तैजसत्वे न किञ्चिद्बाधकमस्तीति श्रीमदाचार्येणान्यानि ज्योतींषीति सम्यगुक्तम् । तदन्ततारे च ध्रुवत्वे नियुक्ते। तेषामश्विन्यादीनां भानामन्तयोस्तारे भचक्रस्य समन्तात् पूर्वापरयोः स्थितत्वादन्तो नास्त्यतो दक्षिणोत्तरे ध्रुवत्वे स्थिरत्वे नियुक्ते निबद्धे । ध्रुवमध्यगं भवलयं गगनस्थितचुम्बकपाषाणद्वयान्तर्गतायोगोलवद्यथा न पतति तथा ध्रुवयोः स्थिरता कृतेति भावः । ननु भवलयस्य समन्तात् स्थितत्वेन कल्पादौ ग्रहाः कुत्र निवेशिताः । इत्यत्र विशेषणद्वारेणाह भगणादिसंस्थैरिति । दास्रनक्षत्रस्यादिसंस्थैरित्युक्तम् । यस्मादनवरतनियतपश्चिमगतौ स्थापितं तद्धेतोरपराशाभिमुख सखेचरे भपञ्जरे भ्रमत्यपि नभश्चरास्तदल्पगत्या पूर्वदिश सचरन्ति । यत् तस्य प्रत्यग्भ्रमण तच्छीघ्रतरम् । एकेनाह्ना नाक्षत्रेण भमण्डलस्य परिवर्त्तः । तस्माद्याऽल्पा पूर्वा गतिस्तया व्रजन्तोऽपि झटिति नोपलक्ष्यन्त इति तदल्पगत्येत्युक्तम् । नभश्चराः संचरन्तीत्यनेन या पूर्वगतिः सा ग्रहशक्त्यैवेति सूचितम्। पश्चिमगतिस्तु प्रवहवशतो न स्ववशत इति । ततोऽपराशाभिमुख भपञ्जरे सखेचरे भ्रमत्यपीत्यनेनोक्तम् । न ह्यश्विनीमुखे युगपत् सर्वेषामवस्थान सम्भवतीति कुत्र सचरन्तीत्यपेक्षाया भग्रहसयोगे मुहुरनुभूतं कक्षाणामूर्ध्वाधरत्वमाह नीचोच्चतरात्मवर्त्मसु । अतिशयेन नीचोच्चानि यानि वर्त्मानि मार्गास्तेषु । केन क्रमेणेत्यत आह । तावदधश्चन्द्र इत्यादि । ननु कक्षाणामूर्ध्वाधरान्तरस्य विद्यमानत्वात् कथं भग-

णादिसस्थैरित्युच्यते। सत्यम्। पूर्वापरान्तराभावं भमुखग्रहाणामभ्युपेत्योच्यते। भमुखग्रहाणा पूर्वापरान्तराभाव एव ज्ञायते। अत्र भूमध्ये सूत्रस्यैकमग्र बद्धा द्वितीयमग्र चाश्विनीमुखे निवेशनीयम्। तत् सूत्र ग्रहकक्षासु यत्र लग्न तासु कक्षासु तत्राश्विनीमुखमित्युपचर्यते। तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो ग्रहा अश्विनीस्थाः पूर्वापरान्तराभावादुच्यन्ते। एवं भमण्डलं विभज्य चन्द्रादिकक्षासु प्रोक्तदिशा भूगर्भात् सूत्रसम्पाते राश्यंशकलाविकलाकल्पनया ग्रहस्था भमण्डले वर्णयन्तीति न किञ्चिद्विरुद्धम्॥ १३-१४॥

**मरीचिः**-अथैतज्ज्योतिःशास्त्रस्य ज्योतींषि ग्रहनक्षत्रादीनि विषयो यस्मिन्नित्यादिव्युत्पत्त्योपजीव्यत्वात् सग्रहभचक्रसस्थान प्रथमत आह सृष्टा इति। कमलोद्भवेन ब्रह्मणा एतत् पश्चिमाभिमुखं प्रत्यक्षभ्रममाणं भचक्र भानामश्विन्यादीनामन्येषा चक्र समूहम्। ग्रहैः सूर्यादिभिः सह। सृष्टा सृजन कृत्वा। शश्वद्भ्रमे शश्वदनवरत पश्चिमभ्रमो विद्यते यस्यासौ शश्वद्भ्रमः प्रवहवायुस्तस्मिन् गोलाकारप्रवहवायौ द्वादशविभागाद्याङ्किते। नियुक्त नियोजितं स्थापितमित्यर्थः। तानि च प्राक्संस्थया गोलाकारेण यथोक्तस्थाने निवेशितानीति यावत्। न तु भचक्र भानां चक्रं विषुवन्मण्डलमिति पृथूदकोक्तोऽर्थः। क्रान्तिवृत्तप्रदेशविशेषपश्चिमभ्रममार्गस्य विषुवद्वृत्तकल्पनात्। ननु भचक्रस्य समन्तात् स्थितत्वेन ग्रहाः कुत्र निवेशिता इत्यत आह। भगणादिसस्थैरिति। भगणस्य आदिः। 'पौष्णान्ते भगणः स्मृतः' इति सूर्यसिद्धान्तात्। पौष्णान्तोऽश्विन्यादिस्तत्सस्थैः। रेवतीयोगताराप्रदेशात् पूर्वानुक्रमेण यद्वृत्ताकारमाकाशं भचक्रं क्रान्तिवृत्त तस्मिन् रेवत्यन्ते योगताराया निवेशिता इति भावः। नन्वनेन ग्रहादिसृजनसामर्थ्याभावात् कथ सृष्टमत आह। विश्वसृजेति। विश्वान्तर्गतग्रहादिसृजन सहजमेवेति भावः। न च विश्वसृजेत्यनेनैवाशङ्काविरहात् कमलोद्भवेनेति व्यर्थमिति वाच्यम्। विश्वामित्रवारणाय कमलोद्भवेनेति विश्वस्य ब्रह्मकृतविश्वस्य अमित्रः शत्रुरिति व्युत्पत्त्या स्वस्थि-

त्यर्थमन्यद्विश्वं कृतमेवेति पुराणादौ प्रसिद्धम्। एवं च विष्णुनाभिकमलोत्पन्नब्रह्मणा सृष्टम्। तेन विष्णुः सर्वमूलं न तु ब्रह्मेति। न च 'विधाता विश्वसृड्विधिः'—इत्यभिधानात् कमलोद्भवेनेत्यनेनैवाशङ्काविरहाद्विश्वसृजेति व्यर्थमिति वाच्यम्। कमलात् 'सलिलं कमलं जलम्'--इत्यभिधानाज्जलादुद्भवो जन्म यस्येति व्युत्पत्त्या मत्स्यादिकृतसृजनस्य निर्मूलत्वात् तद्वारणाय विश्वसृजेति। एवं चोभये पदविशिष्टत्वं ब्रह्मणस्तेन ब्रह्मसृष्टिरुक्तेति भावः। ननु प्रवहवायौ स्थापितभचक्रस्य वायोराघातात् स्थिरत्वं कथमत आह। तदन्ततारे चेति। ध्रुवत्वे स्थिरतायां तदन्ततारे तस्य भचक्राधिष्ठितगोलस्यान्तयोर्दक्षिणोत्तरदिक्स्थनेमिप्रदेशयोस्तारे नक्षत्रे चकाराच्चियुक्ते तथा। यथा ध्रुवमध्यग अवलय गगर्नास्थितचुम्बकपाषाणद्वयान्तर्गतायोगोलवत् न पतति तथा ध्रुवयोः स्थिरता कृतेति भावः। न च दक्षिणोत्तरतारयोर्मत्स्यपरिभ्रमात् कथं स्थिरत्वमिति वाच्यम्। तत्परमाणौ भ्रमाभावात्। यद्यपि भचक्रपश्चिमप्रत्यक्षभ्रमहेतोः प्रवहवायोः कल्पनं न युक्तं स्वत एव भचक्रभ्रमाङ्गीकारात्। न चैतस्याचेतनत्वात् स्वतो भ्रमासम्भव इति वाच्यम्। नक्षत्रग्रहरूपत्वेनाचेतनत्वाभावाद्वायोरप्यचेतनत्वाच्च। न च प्रवहवायौ पश्चिमभ्रमणशक्तिर्भपञ्जरेऽपि तथात्वात्। न हीश्वरेण वायौ भ्रमण निरुक्तं न भपञ्जरे येन भवता मूलसत्त्वाद्दोषाभाव इति वाच्यं विनिगमनाविरहात्। किं च वायुविशेषः कल्पनीयस्ततोऽस्य पश्चिमभ्रमणशक्तिः। तेन भचक्रभ्रमो भवतीति भवद्भिः कल्पनीयम्। तत्र लाघवाद्भचक्रस्यैव पश्चिमभ्रमशक्तिकल्पनं युक्तम्। न गौरवाद्वाय्वादिकल्पनमेव च शश्वद्भ्रमे इत्यस्य प्रवहवाय्वर्थानुपपत्तिः। न चोक्तदोषभयादिव शश्वद्भ्रमे इत्यस्य भचक्रं निरन्तरभ्रमणे नियोजितमिति लक्ष्मीदासोक्तयथाश्रुतार्थो युक्त इति वाच्यम्। तदन्ततारे च तथा ध्रुवत्वे इत्यस्य व्यर्थतापत्तेः। गोलाध्यायोक्त—'नक्षत्रकक्षाखचरैः'—इत्याद्यस्य विरोधापत्तेश्च। तथाऽपि भचक्रस्यानेकनक्षत्रसूर्यादिग्रहात्मकत्वात् स्वतो भ्रमेऽनेकपश्चिमभ्रमणश-

क्तिकल्पनेति मदुक्तं प्रत्युत गौरवात् ग्रहाणां स्वशक्त्या पूर्वगत्यङ्गीकारादेक एव स्वशक्त्या सदा पूर्वपश्चिमयोर्गच्छतीति विरुद्धत्वाच्च प्रवहवायोर्भचक्रभ्रमणहेतुकल्पनं युक्तम् । पुराणादिना कॢप्तत्वात् । अत एव सूर्यसिद्धान्ते ।

"प्रवहाख्यो मरुत् तांस्तु स्वोच्चाभिमुखमीरयेत्" ।

इत्यङ्गीकाराच्चेति संक्षेपः । स्वरूपादिविचारं तु गोलाध्याये विस्तरेण वक्ष्यामः ।

तथा च ब्रह्मगुप्ताचार्यैः ।

* 'ध्रुवताराप्रतिबद्धं ज्योतिश्चक्रं प्रतिक्षणगमादौ ।

पौष्णाश्विन्यन्तस्थैर्ग्रहैः सह ब्रह्मणा सृष्टम्" ॥ इति ।

एतद्वृत्ते प्रथमतृतीयचरणयोरिन्द्रवज्रालक्षणाद्द्वितीयचतुर्थचरणयोः 'उपेन्द्रवज्रा जतजास्ततो गौ' इति लक्षणाच्चेन्द्रोपेन्द्रवज्रासंमिश्रं वृत्तम् ।

उपजातिकाख्यं वा ।

"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" ।

इत्युक्तत्वात् ॥ १३ ॥

अथैतद्भचक्रस्य चलनं ग्रहाणां पूर्वगतिं चाह तत इति । ततो यतो निरन्तरपश्चिमगतौ वायौ भक्रस्थापनं कृतं तत्कारणात् अपराशाभिमुखं पूर्वदिगपेक्षया तत्स्पर्धिन्या दिशि पश्चिमायामपराशात्वं युक्तम् । तदभिमुखं यथा स्यात् तथा पश्चिमानुक्रमेणेत्यर्थः । भपञ्जरे भचक्रे सखेचरे प्रवहसहिते शीघ्रतरं भ्रमत्यपि सति स्वस्वस्थाने सग्रहभगणे प्रवहवायुघातेनान्तरिक्षे वृत्ताकारभ्रममाणे स्वस्वशक्त्याऽन्यत्र गन्तुमशक्ये इत्यपि-शब्दार्थः । नभश्चरा आकाशस्था ग्रहा ग्रहाधिष्ठितस्वमण्डलरूपबिम्बानि तदिच्छया इन्द्रदिशं पूर्वदिशाभिमुखं तदल्पगत्या तस्या

* ब्रह्मस्फुटसिद्धान्तस्य ३ श्लो० ।
तत्र 'प्रदक्षिणगमादौ' इति पा० ।

भचक्रगतेर्नाक्षत्रषष्टिघटिकाकाले तत्परिवर्त्तरूपोया अल्पगत्या न्यूनगत्या पूर्वगतिप्रत्यक्षाभावात् चरन्ति गच्छन्ति । अन्यथाऽश्विन्यादिस्थग्रहस्य भरण्यादिस्थत्वानुपपत्तेः । अत्र क्रान्तिवृत्ते सप्तविंशतिनक्षत्राणि समप्रदेशान्तरेण द्वादश मेषादिराशयश्च प्रत्यक्षाश्विन्यादिनक्षत्रविलक्षणास्थित्यनुरोधात् पूर्वानुक्रमेणातीन्द्रियदृगृषिभिः कल्पिताः । सर्वत्र ग्रन्थे तत्स्थितग्रहानयनस्य सर्वफलादेशाद्युपयुक्तस्योक्तत्वात् । तथा चेन्द्रादिश चरन्तीत्यनेन ग्रहाणां पूर्वगतिः स्वशक्त्यैव ततोऽपराशाभिमुखमित्यादिना ग्रहाणां पश्चिमगतिर्न स्वतः किन्तु प्रवहवशत इति सूचितम् । ननूक्तरूपक्रान्तिवृत्ताश्विन्यादिप्रदेशे परमाणुकल्पत्वाद्भगणादिसंस्थैरित्यनेन सर्वग्रहबिम्बानां प्रोक्तमानानां स्थित्यसम्भवात् कथं सचरन्तीत्युक्तमत आह नीचोच्चतरात्मवर्त्मस्विति । अतिशयेन नीचोच्चा यानि आत्मनो ग्रहस्य वर्त्मानि मार्गास्तेषु । तथा च ग्रहाणामेकस्यानाकाशे वृत्ताकारे प्रत्येकं स्थितिसम्भवात् कक्षास्वित्यर्थस्तेन निराधारभूगोलात् परित आकाशे प्रथमं चन्द्रमार्गवृत्तं कक्षाख्यं ततस्तत्समन्ताद्बुधकक्षा ततः शुक्रस्य ततोऽर्कस्य ततो भौमस्य ततो गुरोस्ततः शनेः । ततः सर्वेषामुपरि भचक्राख्यक्रान्तिवृत्तस्येत्यष्टकक्षाङ्गीकारादश्विन्यादिप्रदेशाध स्वकक्षाया समसूत्रेणावस्थानं तेषां युक्तम् । ततश्च स्वकक्षाया पूर्वाभिमुखगमनं युक्तमिति भावः । न चैव नक्षत्राधिष्ठितरूपक्रान्तिवृत्तस्य ग्रहकक्ष भ्यो दूरस्थत्वात् कथं भगणादिसंस्थैरित्युक्तं कल्पकोटिशतैरपि सम्भवाभावादिति वाच्यम् । अत्र भूगर्भे सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं चाश्विन्यादिप्रदेशे निवेशनीयम् । तत्सूत्रं ग्रहकक्षासु यत्र लग्नं तत्र प्रत्येकमश्विन्यादित्वमुपचर्यते । तत्र सूत्रे पूर्वापरान्तराभावादूर्ध्वाधरान्तरसत्त्वेऽपि चन्द्रादयो ग्रहा अश्विनीस्था उच्यन्ते इत्यस्याङ्गीकारात् । अत एवैव भचक्रं विभज्य चन्द्रादिकक्षासु प्रोक्तदिशा भूगर्भात् सूत्रसम्पाते राश्यंशकलाविकलाकल्पनया ग्रहसंस्था भूमण्डले वर्णयन्ति । अन्यथा ग्रहाणां राश्यादिफलानां युतिफलानां च व्यर्थतापत्तेः । एवं क्रान्तिवृत्तसमसूत्रे-

णोर्ध्वस्थप्रवहवायुगोलान्तर्गतवृत्ते राश्यादिकल्पना प्रयोजनवशात् कार्येत्यलम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इत्युक्तत्वाद्वंशस्थवृत्तमिदम् ।

अत्र युक्तिः । ग्रहाणां नक्षत्राणां च नित्यमुदयास्तदर्शनात् स्वतः पश्चिमगतेर्दूषितत्वात् तद्गतौ क्ष्मप्रवहवाय्वाघातस्य हेतुत्वकल्पनात् ततोऽपराशेत्याद्यर्धमुपपन्नम् । नन्वत्र प्रवहवायुकृतभ्रमणं न युक्तं तथा सत्यूर्ध्वाधोविभागेन कक्षाणां स्थितत्वात् परस्परन्यूनाधिकवाय्वाघातेन युगपत्कक्षावृत्तभ्रमणानुपपत्तिः । किं च । सृष्ट्वा भचक्रमित्यादिना प्रवहवायौ मुख्यतया भचक्रस्थापनात् । तत्र प्रवहाभावाच्च सग्रहैरित्यनेन भचक्रग्रहकक्षाणां सम्बन्धाकथनाद्भचक्रभ्रमेण कथं ग्रहाणां पश्चिमभ्रमः । न चेष्टापत्तिरुदयास्तदर्शनादिति चेन्न । प्रवहवायौ सूर्यादिग्रहानेकतारात्मकभचक्रस्य निवेशाच्चन्द्रकक्षातो भचक्रोर्ध्वपर्यन्तं गोलाकारः प्रवहवायुर्भूगोलात् परित आकाशेऽस्ति तेन नोक्तदोषः । आकाशस्थत्वेन व्यवधायकाभावाद्वायुघातस्य सर्वत्र तुल्यत्वाच्च । चन्द्रादिकक्षामार्गे वायुवृत्तानां पश्चिमभ्रममाणानां प्रवहवाय्वन्तर्गतानां सत्त्वाद्वा न क्षतिः । अश्विनीस्थग्रहस्य भरणीस्थत्वस्य प्रत्यक्षनक्षत्रव्यञ्जकेनानुमानद्वारा दर्शनात् तत्पूर्वगतिं विनाऽसम्भवात् कारणान्तराभावाच्च ग्रहाणां स्वशक्त्या पूर्वगतिरस्तीति तदल्पगत्येन्द्रदिशमित्युपपन्नम् । ननु पश्चिमगतिवत् पूर्वगतिदर्शनाभावेन तत्कल्पने मानाभावात् । किन्तूक्तार्थानुपपत्त्या पश्चिमानुक्रमेण नक्षत्रस्थित्या भपञ्जरगत्यपेक्षया ग्रहस्य पश्चिमगतिः स्वशक्त्याऽधिकाऽस्तीति कल्पनं युक्तं पश्चिमगतेः प्रत्यक्षदर्शनात् । न चाश्विन्याः पूर्वमुदयस्ततो भरण्या इति प्रत्यक्षदर्शनेन पश्चिमानुक्रमेण नक्षत्रासद्भावात् सदा रेवत्यादिपश्चिमनक्षत्रस्थत्वापत्तेरिति वाच्यम् । नक्षत्राणां पश्चिमगतिः प्रत्यक्षेण किञ्चिदधिका स्वशक्त्या पश्चिमगतिरस्तीति कल्पनेनैवोक्तार्थोपपत्तिसम्भवाद्ग्रहपूर्वगतिकल्पनं प्रत्यक्षबाधादयुक्तमिति चेत् तत्र भचक्रस्य पश्चिमगतिकल्पने नक्षत्रवृत्तस्यैकत्वेन स्वशक्त्या तेषां तुल्यगत्या सप्तग्रहाणां सदैकनक्षत्रे

स्थितिप्रसङ्गात् । अद्य यस्मिन् काले चन्द्रो यत्र दृष्टस्तत्पूर्वभागे किञ्चिदन्तरेणाकाशे द्वितीयदिने तस्मिन् काल एव दृश्यत इति ग्रहाणां पूर्वगतिप्रत्यक्षोपलम्भाच्च । इन्द्रदिशं चरन्तीत्यनेन पूर्वगत्या क्रान्तिशरवशेन दक्षिणोत्तरा गतिः पूर्वा च । प्रवहाद्विना पश्चिमगतिः । नीचोच्चतरात्मवर्त्मस्वित्यनेनोर्ध्वाधोगतिरिति षोढा ग्रहाणां गतिः प्रतिपादिता ।

तथा चार्यभटः ।

* "उदयास्तमयनिमित्तं प्रवहेण वायुना क्षिप्तः ।
लङ्कासमपश्चिमगो भपञ्जरः सग्रहो भ्रमति"—इति ॥

तथा च श्रीपतिः

"†स्वव्यापारात् प्राग्गतिः खेचराणामूर्ध्वाधस्ताद्याम्यसौम्यापराणि ।
गोलाभिज्ञैः पञ्च यातानि यानि तेषामुक्तान्यन्यहेतूनि तानि ॥
प्रत्यग्गतिः प्रवहवायुवशेन तेषां
नीचोच्चवृत्तजनितोर्ध्वमधश्च सा स्यात् ।
याम्योत्तरा त्वपमवृत्तविमण्डलाभ्यां
षोढा गतिर्निगदितैवमिह ग्रहाणाम्"इति ॥

"मध्यमकक्षावृत्ते मध्यमया गच्छति ग्रहो गत्या ।
उपरिष्टात् तल्लघ्व्या तदधिकगत्या त्वधःस्थः स्यात् ॥
वक्री यात्यपराशां निसर्गतो गच्छति ग्रहः प्राचीम् ।
क्रान्त्या याम्योदीच्योर्ग्रहगतिरेवं भवेत् षोढा"—॥

इत्यनेन पूर्वगत्यैव षोढा गतिनिरूपणं लल्लकृतं च युक्तम् । इदमुपलक्षणम् ।

"वक्राऽनुवक्रा विकला‡ मन्दा मन्दतरा समा ।
तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः" ॥

---

* आर्यभटीये गोलपादे १० श्लो० ।

† शिष्याधीवृद्धिदे गोलाध्याये भुवनकोशे ३८-३९ श्लो० ।

‡ अ धुनिकसूर्यसिद्धान्ते विकलेत्यत्र कुटिलेत्युपलभ्यते ।

इति पूर्वगत्या ज्ञेया। एव ग्रहाणा चतुर्दशधा गतिः प्रतिपादितेति केचित् तन्न। प्रवहवायुकृतगतेः प्रत्यक्षत्वेऽपि स्वशक्त्या पूर्वगतेरेकस्या एवाङ्गीकारादितरगतीनामेतदुपजीव्यत्वात् क्रान्तिवृत्ते पूर्वगत्या चलितग्रहस्यावधिविशेषेणेतरगत्याभासदर्शनाच्च। अन्यथा मूलकृद्धि· षोढेत्यादि याम्योत्तरपूर्वकमुक्त स्यात्। पूर्वगतेः प्रतिदिन भेदादनन्तगतित्वापत्तेश्चेति सक्षेपः। विस्तरेण गोलाध्यायेऽनेकमतनिरूपण षोढागतिविचारणानिराकरणादिना वक्ष्यामः॥ १४॥

इदानीमनाद्यनन्तस्य कालस्य प्रवृत्तिमाह।

**लङ्कानगर्यामुदयाच्च भानो-**
**स्तस्यैव वारे प्रथमं बभूव।**
**मधोः सितादेर्दिनमासवर्ष-**
**युगादिकानां युगपत् प्रवृत्तिः॥ १५॥**

वा० भा०—ननु पूर्वटीकायामनादिरनन्तश्च कालोऽभिहित। अथ च सृष्ट्यादौ तस्य प्रवृत्तिः। प्रवृत्तिर्नाम आदिः। प्रलये तदन्तः।

तथा च शास्त्रान्तरे

'कालः पचति भूतानि सर्वाण्येव सहात्मना।
कल्पान्ते स पक्वस्तेनैव सहाव्यक्ते लयं व्रजेत्''—इति॥

तत् कथमनाद्यनन्तः काल उच्यते। सत्यम्। योऽयं भगवान् मूर्तो व्यापकश्च कालस्तस्य प्राक्तनप्राकृतिकलयादनन्तर व्यक्तिजनकाना सूर्यादीनामभावादव्यक्तस्याव्यक्ते यदवस्थान स तस्य लय उच्यते। न त्वात्यन्तिकः प्रलयः कालस्यास्तीति। यत् तूक्त 'कल्पान्ते स पक्वस्तेनैव सहाव्यक्ते लय व्रजेदिति' तत् तेनैवाव्यक्तावस्थानाभिप्रायेण। अतो युक्तमनाद्यनन्तत्व तस्योक्तम्। तस्याव्यक्तस्य कालस्य सृष्ट्यादौ व्यक्तिजनकानां भग्रहाणा प्रादुर्भावे सति कालस्य व्यक्तीनामपि दिनमासवर्षयुगादीनां युगपदेकहेलया प्रवृत्तिर्बभूव। एतदुक्त भवति। चन्द्रार्कयोर्म-

षादिस्थयोश्चैत्रस्य शुक्लपक्षादिः प्रतिपत् । अतो मधोः सितादेर्दिनानां सौरादिमासानां वर्षाणां युगानां मन्वन्तराणां कल्पस्य च तदैव प्रवृत्तिः । अथोदयाच्च भानोः । स चोदयः कस्मिन् देशे । लङ्कानगर्याम् । तथा तस्यैव वारे आदित्यवार इत्यर्थः ॥ १५ ॥

**वा० वा.**—इदानीं कालस्य प्रवृत्तिमाह लङ्कानगर्यामिति । कल्पादि कालस्य युगपत् प्रवृत्तिर्नामादिर्बभूव । कालो द्विविधः । नित्योऽनित्यश्च ।

"नित्योऽनित्यश्च कालो द्वौ तयोराद्यः परेश्वरः ।
सोऽवाङ्मनोगोचरश्च देही भक्त्यनुकम्पया" ॥

इति वासिष्ठेऽपि । कालः कल्यते येनेति ।

सूर्यसिद्धान्ते च ।

"भूतानामन्तकृत् कालः कालोऽन्यः कलनात्मकः ।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते" ॥

तथाऽन्यत्रापि । 'चिरक्षिप्रादिव्यवहारासाधारणो हेतुः कालः' । स च द्विधा । एकः कालोऽन्यः कालकाल इति । तत्र येन प्राणिदेहा योऽतीतवर्त्तमानादिरूपेण कलयितव्याः स केवलः कालः । उक्तं च 'कलयति जगदेष कालोऽतः'—इति । स चानित्यः सावयवश्च । 'अहोरात्राणि विदधद्विश्वस्य मिषतो वशी'—। 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि'-इत्यादि श्रुतिभ्यश्च । न चोपाधिरेव जन्यो न काल इति वाच्यम् । शैवागमसारसंग्रहे कालस्वरूपस्य जन्यत्वश्रवणात् ।

तथा च संग्रहकारिका

"नानाविधशक्तिमयी सा जनयति कालतत्त्वमेवादौ" ।

तच्च कालस्वरूपम् । एतादृशः कालोऽप्युत्पत्तिस्थितिविनाशकारिणा येन कलयितव्यः स कालकाल इति । ननु 'कालः पचति'—इत्यादिना कालस्य लयश्रवणात् कथमनाद्यनन्तत्वम् । उच्यते । योऽयमित्यादिभाष्यकारस्य वस्तुतो द्वैविध्यानित्यत्वयोरभावात् श्रुतिप्रतिपादिता-

नित्यत्वसावयवत्वयोर्बाधकत्वेनाप्युपपत्तेः कालस्यानाद्यनन्तत्वे न किञ्चिद्बाधकमस्तीत्येतदभिप्रायिकमपि कालकालपरं व्याख्येयम् । के चिदेन कालं मायेत्याहुः । तस्या एव सर्वाधारत्वात् । ईश्वरान्नातिरिच्यत इत्यन्ये । दिश आकाश एव । आकाशस्यैव दिग्व्यवहारजनकत्वात् । 'दिशः श्रोत्रम्'–इति श्रुतेः । आकाशोऽप्यनित्य एव । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति श्रुतेः । काल एव नित्यः स चेश्वर एव । कालव्यक्तिव्यञ्जकानां ग्रहाणां प्रादुर्भावे कालस्य व्यक्तीनामपि युगपदेकहेलया कल्पादौ प्रवृत्तिर्बभूव । कल्पादित एव गतिप्रारम्भः स्वीकृतः । विष्णुधर्मोत्तरान्तर्गतब्रह्मसिद्धान्ते लघुवशिष्ठसिद्धान्ते च स्वीकृतत्वात् । अत एवार्यभटेनाप्युक्तम् ।

"*कलिसंज्ञे युगपादे पाराशर्यं मतं प्रशस्तमतः ।
नात्र मते सृष्ट्यब्दाः शेषं कल्पादिकं प्राग्वत्"–इति ॥

तथा च ब्रह्मगुप्तेनापि स्वीकृतेः ।

"†ब्रह्मोक्तं ग्रहगणितं महता कालेन तत् खिलीभूतम् ।
अभिधीयते · · ·" ॥

इति वदता च विष्णुधर्मोत्तरान्तर्गतब्रह्मसिद्धान्तः स्वोक्तस्य मूलमिति स्पष्टमेवाभिहितम् । तस्मादत्र मते कल्पादितः प्राक् ग्रहसृष्टिः । कल्पादौ पूर्वगतिप्रारम्भ इति निरवद्यम् ।

"विधेर्दिनादौ युगपत् समस्तं भूत्वा ग्रहाः प्रागगमनप्रवृत्ताः ।
इतीरितं वेदविरोधिनस्ते ब्रह्मार्कचन्द्रादिमताद्विभिन्नाः ॥
ब्रह्मा प्राह च नारदाय हिमगुर्यच्छौनकायामलं
माण्डव्याय वसिष्ठसंज्ञकमुनिः सूर्यो मयायाह यत्
प्रत्यक्षागमयुक्तिशालि तदिदं शास्त्रं विहायान्यथा
यत् कुर्वन्ति नराः‡ न निर्वहति तद्विज्ञानशून्याश्चिरम्" ॥

* पद्यार्धमार्यभटसिद्धान्ते पाराशर्यमतान्तराख्ये द्वितीयपादे उपलभ्यते ।

† ब्रह्मस्फुटसिद्धान्तस्य २ श्लो० ।

‡ 'अधमाश्च तदसद्वेदोक्तशून्या भ्रमम्'–इति श्रीकमलाकरकृते तत्त्वविवेके पाठ उपलभ्यते ।

इति ये वदन्ति त एव विज्ञानशून्या अबहुदृष्टत्वात्। प्रपञ्चितं चैतत् सूर्यसिद्धान्तवासनाभाष्येऽस्माभिरित्युपरम्यते ॥ १५ ॥

**मरीचिः**—अथ कालस्यानाद्यनन्तत्वादमूर्त्तत्वेनेन्द्रियागोचरत्वाच्च कथं ग्रहचारप्रवृत्तिप्रासङ्गिककालस्तदुपाधिभेदावगमं विनाऽवगन्तुं शक्य इत्यतः स्वस्वोपलक्षकोपलक्षिततत्प्रत्यवमर्शवर्त्तिकालोपाधिप्रवृत्तिं वक्ष्यमाणसर्वविषयोपजीव्यत्वादुपजातिकयाऽऽह लङ्कानगर्यामिति। लङ्कानगर्यात्मकोपलक्षितभूगर्भप्रदेशविशेषे भानोर्वारे आदित्ये। च समुच्चये। प्रथमं तस्य तूदायदेव पूर्वं तस्य भानोरुदयक्षितिजसलग्नताकालस्तस्मात् तमारभ्येत्यर्थः। भचक्रस्यापनानन्तरग्रहचारप्रवृत्तिकालमेव प्रथमलङ्कासूर्योदयमारभ्येति यावत्। एवकारो लङ्कायामर्धरात्रे प्रवृत्तिरिति विरुद्धमतवारणाय।

"उदयादुदयं भानोः सावनं तच्च कीर्त्तितम्"।

इत्यनेन सूर्योदयमूलसावनस्योक्तत्वात्। मधोश्चैत्रस्य सितादेः शुक्लप्रतिपदमारभ्य। अत्र मध्वादेरित्यनेन 'मासो दर्शावधिश्चान्द्रः'—इति लघुवसिष्ठोक्ताच्छुक्लपक्षसिद्धेरपि कृष्णादिमासव्युदासाय सितग्रहणम्। अहर्गणादौ शुक्लादिमासानां प्रयोजनात्। समुच्चयार्थकपूर्वोक्तचोऽत्रानुसन्धेयः। दिनमासवर्षयुगादिकानां दिनानां सौरचान्द्रनाक्षत्राणां मासानामेतद्रूपाणाम्। वर्षाणामप्येतद्रूपाणाम्। अत्र युगपदेन महायुगम्। अन्यथा त्रेताद्यनुपपत्तेः। आदिपदात् कल्पमनुनवमानाद्यनुक्तमानान्तराणां घट्यादीनां च युगपत् तुल्यसमये प्रवृत्तिरादिरारम्भ इति यावत्। बभूव जातेत्यर्थः। यद्वा लङ्कादेशे भानोर्वारे तस्य क्षितिजसलग्नतया स्थापनात्। तदुदये इति एवकारार्थोऽध्याहारेण वा। चैत्रादीनां प्रवृत्तिर्युगपत् जाता। लङ्कादेशादितरदेशे तु भानोरुदयतः स्वसूर्योदयादित्यर्थः। प्रथमं लङ्कासूर्योदयाच्चलितसूर्यस्य देशे यावत्कालेनोदयस्तत्कालेन पूर्वमित्यर्थः। प्रवृत्तिस्तेषां जातेत्यर्थः। तेन सर्वत्र एकस्मिन् काले एषां युगपत् वृत्तिर्जातेति सिद्धम्। तथा च

लङ्कोदयसमये लङ्काया अन्यदेशे मध्याह्नादिपूर्वकेष्टघटिकाकाले स्वदेशोदयाद्गते सिद्धे एव प्रवृत्तिर्जातेति पृथूदकोक्तं युक्तम् । एवं च 'चैत्रशुक्लप्रतिपद्यादित्यदिने लङ्काया प्राक्स्वस्तिके ग्रहचारः प्रवृत्त.'—इति प्रतिज्ञा कृतेति भावः । अत्र युक्तिः । भगणादिसस्थैरिति पूर्वोक्तेन ग्रहचारप्रवृत्त्यादौ सूर्यस्य मेषादिस्थत्वेन चैत्रत्व मेषार्कयुक्तचान्द्रमासस्य तथात्वात् । चन्द्रसूर्ययोगाद्दर्शान्तत्वमत एव चैत्रशुक्लप्रतिपदादित्वञ्च । ग्रहाणां लङ्काक्षितिजे प्राक्स्वस्तिके ग्रहाणां स्थापनात् सूर्यकिरणप्रतिहतानां चन्द्रादीनामदर्शनाच्च सूर्योदय इत्युक्तम् । लङ्कायाः कुमध्ये वर्त्तमानत्वात् । न च भूमेर्वर्त्तुलत्वेन मध्यः सर्वप्रदेशे सम्भवतीत्ययुक्तमिति वाच्यम् । स्वतन्त्रेच्छस्य नियोक्तुमशक्यत्वात् । अत एव यमकोटेर्मध्यत्वकल्पन सूर्यसिद्धान्ते । न चोदयकाले तदानीं मेषलग्नस्य क्रूरास्तमिताखिलग्रहोपहतत्वान्न्यूनत्वात् कथं तदारब्धग्रहचारादीनामाकल्पमविघ्नेन स्थानमिहि संहिताद्यन्याप्रामाण्यापत्तेरिति वाच्यम् । वेदोक्तकर्मकर्त्रस्मदादीनां मनुष्याणां संहितोक्ताशुभकालत्यागसम्भवाच्च सर्वज्ञब्रह्मणो मनोऽभिलषितकार्यस्येच्छामात्रसम्पाद्यत्वेन महाशक्तिमत्त्वात् । अन्यथा सर्वग्रहाणामस्तमितत्वेन भवदभिमतार्धरात्रे पापलग्नस्यार्कस्य पापाक्रान्तचतुर्थस्य सत्त्वेन च ग्रहचारप्रवृत्तेरसङ्गततापत्तेः । अथ सप्तग्रहेषु तदानीं सूर्यस्योच्चस्थत्वेन ग्रहप्रकाशकहेतुत्वेन स्वोदयमूलदिनकर्तृत्वेन दिनकरदिनेशाभिधानाच्च प्रथमदिने सूर्यस्याधिपत्यं युक्तम् । अन्यग्रहाणां निष्प्रभत्वेन निर्बलत्वात् । चारमार्गे बलिन एव प्रथमप्रवृत्तेः । अथ सृष्ट्यादौ ग्रहचारप्रवृत्तिकाले तदुपाधीनां प्रवृत्तेर्दिनमासवर्षयुगादीनां युगपत् प्रवृत्तिरिति च युक्तम् ।

"चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्र तत् तदा सूर्योदये सति ॥
प्रवर्त्तयामास तदा कालस्य गणनामपि ।
ग्रहानहान्यृतून् मासान् वत्सरान् वत्सराधिपम्" ॥

sole cause, then there would be no difference between two things made up of equally large particles, even though these latter were more compact than those in the other As a matter of fact however, in both these cases we do find a difference, and from that we conclude that in such cases neither Number nor Largeness is the cause

In certain cases we find that one thing is made up of non-aggregated minute particles, and another is made up of aggregated large particles, and the cause of the difference in the largeness or bulk of these two must be regarded as due to both Largeness and Aggregation Then again, in a case where one thing is made of certain aggregated particles, and another is made of large number of equally large particles but non-aggregated, we find an excess of bulk in that produced out of a large number of aggregated particles and the cause of this is Number, as well as Aggregation In a case where one thing is made up of a lesser number of non-aggregated minute particles, and the other of a large number of aggregated bulky particles, the difference in bulk must be attributed to all the three causes—Number, Largeness and Aggregation

**Page 137**] Some people think that in the case of substances capable of being weighed by means of a balance, the production of the bulk in the product is due to the weight-measures inhering in the cause, and not to the Large Dimension And it is in view of this theory that the author has denied the causal potency of this 'weight-measure', in the case of aggregated products Properly speaking, in accordance with the author's view, no such causal potency ever belongs to weight measures

It is the number 'Duality' inhering in the two atoms that produces 'minuteness' in the Diad Some people hold that the Dimension of the Diad is produced by the Dimensions of the component atoms But if such were the case then the Diad too would be as 'minute' or 'atomic' as the atom itself,—an argument we had brought forward before and which we repeat in the present connection There is yet another reason, based upon the fact of the unproductive character of the Dimension of an eternal

substance That is to say, the Dimension of the atom cannot be productive of anything,—because it is the dimension of an eternal substance, like the dimension of Ākāça,—or, because it is a minute dimension, like the dimension of Mind

The author proves the production of *Length—Mahattvavat* *i e* Just as Largeness or Bulk is produced by the plurality of component particles, from the homogeneous bulk of the cause, and by Aggregation,—so also is Length which in all these points is similar to Bulk

*Anutvavat* &c That is to say, the *shortness* of the Diad also has got the number 'Duality' for its non-material cause

*Question* "How is it that from a single cause there come about diverse effects?"

*Answer* It is due to the difference in the unseen potencies which are auxilliary to all causal operations

An objection is raised, based upon the conception that *Length* is only a particular kind of Bulk or *Largeness*, and so too is *shortness* a mere form of *Minuteness*

The reply given to this is—*Tatrāsti* &c If there were no difference between *Length* and *Largeness*, then we could have no such specification with regard to a 'long' thing, as that 'being a *large* long thing,' as we do not specify a coloured substance as 'coloured' As a matter of fact however, we do have such specification with regard to *long* things, and hence the two cannot but be regarded as distinct

*Objection* "The dimension of a substance pervades all over it, and hence it would not be possible for one and the same substance to have two dimensions (*largeness* and *length*)"

*Reply* There is no incongruity in such existence of two unlike dimensions

*Objection* "But even though the sub-class 'blue' differs from the sub-class 'yellow,' yet we do not find these two inhering in the same substance"

चेत् न बाधोन्नीतपक्षेतरत्वस्योपाधित्वस्वीकारात् । अत्रोपाधेर्दूषकताबीजं कुतो नोक्तमित्यत आह संक्षेप इति । अत्राय संक्षेप । सर्वत्र व्यभिचारिसाधने साध्यव्यापकोपाधिव्यभिचारितया साध्यव्यभिचारित्वमनुमेयम् । तथा च वह्निर्धूमभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारित्वादित्याद्यनुमानाद्वह्न्यादौ व्यभिचारोन्नायकत्वेनोपाधेर्दूषकत्वमिति । अथोपाधौ साध्यव्यापकत्व साधनाव्यापकत्वमनुमेयमिति कुत्र व्यभिचरोन्नायकत्वमुपाधेरत एव न सत्प्रतिपक्षोत्थापकत्वमपि । साध्याव्यापकाभावस्य साध्याभावसाधकत्वाभावादिति चेन्न उपाधेः साध्यव्यापकत्वस्य साधनाव्यापकत्वस्य चानुकूलतर्कादिना निश्चितत्वात् । अन्यथा तस्योपाधित्व न स्यात् । तस्मादुपाधेः संशयाद्व्यभिचारसंशयस्तन्निश्चयात्तन्निश्चय इति । अथ सत्प्रतिपक्षोत्थापकत्वमेवास्तु । साध्याभावसाधकं हेत्वन्तरं सत्प्रतिपक्षस्तथा हि अयःपिण्डो धूमवान्वह्नेरित्यत्रायःपिण्डो धूमाभाववान् धूमव्यापकार्द्रेन्धनाभावादिति सत्प्रतिपक्षोन्नायकत्वमुपाधेर्दूषकताबीजमस्त्विति चेत् न अयःपिण्डो धूमाभाववान् धूमव्यापकार्द्रेन्धनाभावादित्यत्र वह्न्यभावस्योपाधित्वात् । व्यभिचाराधिकरणे धूमाभावस्य निश्चयाभावादन्यत्र वह्न्यभावस्य धूमाभावव्यापकत्वात् । अत एव सत्प्रतिपक्षे पूर्वसाधनव्यभिचारस्योपाधित्वमिति गङ्गेशोपाध्यायोक्तमपि सङ्गच्छते न चैव सत्प्रतिपक्षोच्छेदः विशेषदर्शनदशायां पूर्वसाधनव्यतिरेकस्य साध्यव्यापकत्वेनोपाधित्वात् । किं चोपाधेः सत्प्रतिपक्षोन्नायकत्वे पक्षवृत्तिकोपाधिर्न स्यात् । पक्षे तद्ग्रहदशायां तदभावग्रहासम्भवात् । यथा घटो नित्यो द्रव्यत्वादित्यत्र कार्यत्वमुपाधिर्न स्याद् इति कार्यत्वव्यतिरेकस्य घटवृत्तित्वाभावादिति दिक् ।

**तच्चानुमानं परार्थं न्यायपूर्वकं न्यायश्च क्रमिकप्रतिज्ञादिपञ्चकसमुदायः यथा पर्वतो वह्निमान् धूमाद् यो यो धूमवान्सो वह्निमान् वह्निव्याप्यधूमवानयं तस्माद्वह्निमानिति । तत्रैतन्न्यायघटकपर्वतो**

वह्निमानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वं प्रतिज्ञात्वं। एतद्धूमादिति शब्दवृत्तितादृशोपाधिमत्त्वं हेतुत्वं। एतद्यो यो धूमवान्सोऽग्निमाति शब्दवृत्तितादृशोपाधिमत्त्वमुदाहरणत्वं। एतद्वह्निव्याप्यधूमवानयमिति शब्दवृत्तितादृशोपाधिमत्त्वमुपनयत्वं। एतत्तस्माद्वह्निमानिति शब्दवृत्तितादृशोपाधिमत्त्वं निगमनत्वं। अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वमुक्तं चावयवाः पञ्च प्रतिज्ञादिभेदादिति संक्षेपः॥

इति श्रीभट्टाचार्य्यचूडामणिकृतायां न्यायसिद्धान्तमञ्जर्य्यामनुमानपरिच्छेदः॥

---

अनुमानं द्विविधं स्वार्थं परार्थं च तत्र स्वार्थं निरूप्य परार्थं निरूपयति तच्चेति। तच्च परार्थं च न्यायपूर्वकमिति। तथा च परार्थानुमाने न्यायस्यावश्यकत्वादिति भावः। न्यायलक्षणमाह। क्रमिकेति। क्रमिको यः प्रतिज्ञादिसमुदाय इत्यर्थः धूमवान्पर्वतो वह्निमान् वह्निव्याप्यधूमवानय यो यो धूमवान् सोऽग्निमास्तस्माद्वह्निमानित्यादिव्युत्क्रमप्रयुक्तावयवसमुदाये ऽतिव्याप्तिवारणाय क्रमिक इति। तेन मीमासकमते प्रतिज्ञादित्रयात्मकः। बौद्धमते उदाहरणोपनयात्मकः। जरन्नैयायिकमते प्रतिज्ञादिकं पञ्च जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्चेति दशावयवात्मको न्यायस्तद्वारणमिति। अत एव प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति न्यायसूत्रे पञ्चैव परिगृहीता इति। क्रमिकः उचितानुपूर्वीकः क्रमश्च प्रतिज्ञोत्तरं हेतुः हेतूत्तरं उदाहरणं उदाहरणोत्तरमुपनयः। उपनयोत्तरं निगमनमिति प्रतिज्ञादिसमुदायः। तथाचोचितानुकपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वमिति

निर्गलितोऽर्थः । उचितक्रमशः प्रतिज्ञादिपञ्चकं दर्शयति । यथेति । यो यो धूमवान्सोऽग्निमानिति यच्छब्दवीप्साबोधितस्य चैकेन तच्छब्देन बोध इति न सोऽग्निमानित्यत्र वीप्सा तदादेर्बुद्धिस्थबोधकत्वेन तच्छब्देन वीप्साबोधितस्यैव परामर्शात् । अत एव यच्छब्दे वीप्सा न तु तच्छब्द इति सङ्गच्छते । तथा शब्दार्थाभिधानपूर्वकं तथा चायमित्युपनयं दर्शयति । तथेति । तस्माद् वह्निव्याप्यधर्मवत्त्वात् । अथ प्रतिज्ञाया एव प्रथमोद्दिष्टत्वात्प्रथमं प्रतिज्ञात्वं लक्षयति । पर्वत इति । अत्र पर्वतो वह्निमानित्यादिशब्दसमुदायो न्यायस्तत्र पर्वतो वह्निमानिति शब्दस्य प्रतिज्ञारूपन्यायावयवत्वं तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे पक्षे साध्यतावच्छेदकवह्नित्वादिविशिष्टवह्न्यादिवैशिष्ट्यबोधजनको यः पर्वतो वह्निमानिति शब्दस्तद्वृत्तिर्योऽवयवविभाजकोपाधिस्तद्वत्त्वं प्रतिज्ञात्वमित्यर्थः । प्रतिज्ञासमानाकारकौदासीनवाक्यस्य वारणायावयवेति । अवयवत्वं च हेत्वादिसाधारणमतस्तद्विभाजकेत्यादि । हेतुविशिष्टे पक्षे साध्यतावच्छेदकविशिष्टसाध्यबोधजनके उदाहरणेऽतिव्याप्तिवारणाय प्रथमविशिष्टान्तम् । उदाहरणं तु हेतुशिष्ट एव साध्यतावच्छेदकविशिष्टसाध्यज्ञानजनकं न तु पक्षतावच्छेदकविशिष्ट इति । पक्षतावच्छेदकविशिष्टपक्षे साध्यव्याप्यवैशिष्ट्यबोधके उपनयेऽतिव्याप्तिवारणाय द्वितीयविशिष्टान्तम् । उपनयात्तादृशपक्षे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति । पर्वतो द्रव्यसामान्यवान्धूमादित्यत्र द्रव्यसामान्यव्याप्यधूमवानित्युपनयेऽतिव्याप्तिवारणाय साध्यतावच्छेदकविशिष्टेति तत्र द्रव्यत्वेन रूपेण धूमस्यापि साध्यतया तादृशपक्षे धूमरूपसाध्यवैशिष्ट्यस्य सत्त्वेपि न साध्यतावच्छेदकरूपेण धूमवैशिष्ट्यमिति । एवं च "साध्यनिर्देशः प्रतिज्ञेति सूत्रं" तत्र साध्यनिर्देशोऽप्ययमेवेति सूत्रार्थोऽपि सङ्गच्छते । हेत्ववयवत्वं लक्षयति एतद्धूमादितीति । एतद्धूमात् । प्रकृतसाध्यनियतसमानाधिकरणसाधकधूमात् । तादृशोपाधिः अवयवविभाजकोपाधिः । तथाचैतादृशशब्दवृत्तिर्योऽवयवविभाजकोपाधिस्तद्वत्त्वं हेत्ववयवत्वमित्यर्थः । यद्वैतन्न्याया-

न्तर्गतस्तथा च न्यायान्तर्गतो धूमादितिशब्दवृत्तिर्यस्तादृशोपाधिरित्या-द्यर्थस्तत्र सर्वत्रैतत्पद न्यायान्तर्गतपरमिति व्याख्येयम्। अत्र पञ्चम्यर्थो ज्ञाप्यत्व तच्च पर्वतो वह्निमानिति प्रतिज्ञास्यवह्निपदार्थेन्वेति। तथा च प्रतिज्ञाहेत्ववयवाभ्या धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वत इति बोधः। इद चान्वयिस्थले हेत्ववयवत्व। अत एवोदाहरणसाधर्म्यात्साध्यसाधन हेतुरित्यन्वयबोधक सूत्रमपि सङ्गच्छते तत्रोदाहरणसाधर्म्य प्रकृतसाध्य-हेतोर्नियतसामानाधिकरण्यमिति। यदा च व्यतिरेक्यनुमानाभिप्रा-येण धूमरूपो हेतुः प्रयुक्तस्तदैव। तथा हि एतद्धूमात्। प्रकृतसाध्याभा-वव्यापकीभूताभावप्रतियोगिधूमात्। तथा च प्रकृतसाध्यसाधनव्यतिरेक-व्याप्तिबोधकोदाहरणपूर्ववर्त्तिसाध्यसाधनधूमादिति शब्दवृत्त्यवयवविभा-जकोपाधिमत्त्वं व्यतिरेकिहेत्ववयवत्वमिति तथा च सूत्र तथा वैधर्म्या-दिति। अत्र पूर्वसूत्रात्साध्यसाधनमित्यनुवर्तव्यतिरेकिहेतुरिति शेषः पूरणीयः। अत्र तथावैधर्म्यं उदाहरणवैधर्म्यं प्रकृतहेतोः साध्याभावव्या पकीभूताभावप्रतियोगित्व। तथा चोदाहरणवैधर्म्यात्साध्यसाधन व्यति-रेकिहेतुरिति समुदितार्थः। उदाहरण द्विविधं। अन्वयव्यतिरेकिभेदात् तत्रान्वय्युदाहरण लक्षयति य इति। अत्र वीप्साया व्यापकत्वमर्थस्तथा च भूतव्यापकवह्निमामानित्यर्थः। वह्निमानित्यनन्तर यथा महानस-मिति पूरणीय तादृशोपाधिमत्त्व अवयवविभाजकोपाधिमत्त्व। उदहार-णत्व। अन्वय्युदाहरणत्व तथा च सूत्र। साध्यसाधर्म्यात्तद्धर्मभावो दृष्टान्त-मुदाहरणमिति॥ अत्र साध्यसाधर्म्यहेतुस्तस्मात्तद्धर्मभावी दृष्टान्तहेतुरू-पधर्ममपेक्षभावो धर्मः साध्यरूपः तादृशो हेतुः साध्य प्रतिपादयतीति तद्धर्मभावी। अत्र पञ्चम्यर्था व्यापकत्व तथा च व्यापकसाध्यवान्दृ-ष्टान्तमुदाहरणमित्यर्थः। व्यतिरेक्युदाहरणत्व तु यो यो वह्न्यभाववान् सो धूमाभाववानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्व तथा च सूत्रे तद्विपर्ययाद्विपरीतमिति। तदर्थस्तु प्रकृतहेतुकप्रकृतसाध्यकव्यतिरेक-व्याप्तिप्रतिपादकदृष्टान्तमुदाहरणमिति। तथा चायमित्यस्योपनयस्यार्थो-

भिधानपूर्वकमुपनय लक्षयति । एतद्वह्नीति । एतद्वह्निः प्रकृतवह्निः । तादृशः अवयवविभाजकः । उपनयत्वमन्वय्युपनयत्व । उपनयस्तु पक्षे साध्यव्याप्यहेतोरुपसहारात्मकस्तत्रोदाहरणस्याप्यपेक्षा व्यतिरेक्युपनयस्तु पक्षे साध्यव्याप्यहेत्वभावाभावप्रतिपादको न तथायमित्याकारकः । तथा च सूत्र । "उदाहरणापेक्षस्तथेत्युपसहारो न तथेति वा साध्यस्योपनय इति" साध्यस्य साध्यव्याप्यहेतोरित्यर्थ. । निगमन लक्षयति एतत्तस्मादिति एतन्न्यायान्तर्गतस्तथा च न्यायान्तर्गतो यस्तस्माद्वह्निमानिति शब्द-इत्याद्यन्वयः तस्माद्वह्निव्याप्यधूमवत्त्वात् । तथा च न्यायान्तर्गतवह्नि-व्याप्यधूमवत्त्वाद्वह्निमानितिशब्दवृत्त्यवयवविभाजको य उपाधिस्तद्वत्त्व निगमनत्वमित्यर्थः। तथा च सूत्र "हेतूपदेशात्प्रतिज्ञायाः पुनर्वचन निगमन"मिति । अत्रावयत्व किमत आह अवयवत्व चेति । अयमर्थः । पर्वतो वह्निमान् धूमात् । यो यो धूमवान्सोऽग्निमान्यथा महानस वह्नि-व्याप्यधूमवानय वह्निव्याप्यधूमवत्त्वाद् वह्निमानिति वाक्य न्यायः । एतन्न्यायान्तर्गतपर्वतो वह्निमानिति वाक्य प्रतिज्ञा । एतन्न्यायान्तर्गत-धूमादिति वाक्य हेतुः । एतन्न्यायान्तर्गत यो यो धूमवान्सोऽग्निमानिति वाक्यमुदाहरण एतन्न्यायान्तर्गतवह्निव्याप्यधूमवानयमिति वाक्यमुप-नयः । एतन्न्यायान्तर्गतवह्निव्याप्यधूमवत्त्वाद्वन्हिमानिति वाक्य निग-मनं । एतदन्यतमत्वञ्चावयवत्व । अन्यतमत्व च प्रतिज्ञादिभिन्नभिन्नत्व तच्च प्रतिज्ञादिष्वेवेति । ननु मीमासकमते प्रतिज्ञाहेतूदाहरणात्मको न्याय इति त्रयोऽवयवाः । बौद्धमते उदाहरणोपनयात्मक इति द्वावयवौ । तत्र नैयायिकनये प्रतिज्ञादिपञ्चक जिज्ञासा सशयः शक्यप्राप्तिः । प्रयो-जन सशयव्युदासश्चेति दशावयवा इति ॥ तत्र प्रतिज्ञाद्यन्यतमशब्देन कियन्तोऽवयवा ग्राह्या इत्यत आह । उक्तैवेति । एव च "प्रतिज्ञाहेतूदाहर-णोपनयनिगमनान्यवयवा" इति सूत्रमपि सङ्गच्छते । तत्र प्रतिज्ञादिप-ञ्चानामेव परिग्रहादिति । अत्राय सक्षेपार्थः । पञ्चावयवैरेकवाक्यतया शाब्दबोधो जन्यते । तदाकारोऽय । पर्वतोऽय धूमज्ञानज्ञाप्यवह्निमान्-

धूमवद्वृत्त्यत्यन्ताभावाप्रतियोगिवह्निमदभिन्नमहानससादृश्यवान्वह्निव्याप्यधूमवान्वह्निव्याप्यधूमज्ञानज्ञाप्यवह्निमानिति तदुपपत्तिरेवं प्रतिज्ञाहेतुभ्यां धूमज्ञानज्ञाप्यवह्निमानिति बोधः । तत्रोदाहरणाशस्या च यस्तथा हि यो यो धूमवान्सोऽग्निमान्यथामहानसमित्युदाहरणं। तत्र वीप्सात्मकयो यः पदेन धूमवतो व्यापकत्वं वह्निमत उपस्थाप्यते व्यापकत्वं च तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वं तत्राधेयतया धूमवतोऽत्यन्ताभावेऽन्वयः । निरूपितत्वसम्बन्धेन तादृशात्यन्ताभावस्य प्रतियोगित्वे अनुयोगितया तादृशप्रतियोगित्वस्याभावे तस्याश्रयतया वह्निमत्पदोपस्थापिते वह्नौ वह्निमतश्च धूमवत्पदोपस्थापिते धूमवत्यभेदेनान्वयः । धूमवतश्चाभेदेन महानसे महानसस्य निरूपितत्वसम्बन्धेन यथापदार्थसादृश्ये सादृश्यस्य चाश्रयतासम्बन्धेन प्रतिज्ञाहेतुभ्यामुपस्थापिते धूमज्ञानज्ञाप्यवह्निमत्पर्वते तादृशपर्वतस्य वह्निव्याप्यधूमवद्रूपोपनयार्थे ऽभेदेन तस्य च वह्निव्याप्यधूमज्ञानज्ञाप्यवह्निमदभिन्नोऽयमिति निगमनार्थेऽन्वय इत्येवं प्रतिज्ञादिपञ्चावयवैरेकवाक्यतया स्वार्थविशिष्टबोधो जन्यते इति ॥ शिरोमणिचरणास्तु । उदाहरणस्यावयवान्तरेण साकाङ्क्षत्वाभावादवयवान्तरेण समं न सम्भूयैकार्थप्रतिपादकत्वं किं तु प्रतिज्ञाहेतुभ्यां धूमज्ञाप्यवह्निमदभिन्नः पर्वत इत्यन्वयबोधः प्रतिज्ञार्थैकदेशे वह्नौ प्रकारतया धूमज्ञानज्ञाप्यवह्निमदभिन्नत्वान्वयस्वीकारात् । एवमुपनयनिगमनाभ्यामपि वह्निव्याप्यधूमवदभिन्नवह्निव्याप्यधूमज्ञानज्ञाप्यवह्निमदभिन्न इत्यन्वयबोधो जन्यत इति पञ्चावयवानां न सम्भूयैकार्थप्रतिपादकत्वं तर्हि कथं निखिलतान्त्रिकाणामेकवाक्यताव्यवहार इति चेत् तादृशव्यवहारस्त्वनुमितिकार्ये प्रत्युद्देश्यतामात्रेणेत्याहुः । श्रीविश्वनाथस्य कृपाकटाक्षाच्छ्रीमनृसिंहात्मजयादवेन । अनेकसत्तर्कविभावनेन द्वितीयखण्डो रचितो यथार्थः ॥

अथोपमानं निरूप्यते । तत्रोपमितिकरणमुपमानम् । उपमितित्वं चोपमिनोमीत्यनुभवसिद्धो

जातिविशेषः । शब्दविषयकत्वाव्यभिचारिजातिमत्परोक्षत्वं वा । अनुमित्यादिवारणाय जातिमदन्तं । अनुमितित्वादीनां वह्निमानित्यादिज्ञाने शब्दविषयकत्वव्यभिचारित्वात् श्रावणवारणाय परोक्षपदं प्रत्यक्षान्यपरम् ।

—o—

श्रीवरदमूर्त्तिर्ज्जयति ॥

नृसिंह पितरं नत्वा गङ्गामासहित शिवम् ।
उपमानपरिच्छेदे मञ्जरीसार उच्यते ॥ १ ॥

अवसरसङ्गत्योपमान निरूपयति अथेति ॥ अनुमाननिरूपणानन्तरमित्यर्थः ॥ तत्र उपमाने निरूपणीये । ननूपमितिकरणमुपमानमुपमानकरणकज्ञानमुपमितिरित्यन्योन्याश्रय इत्यत आह उपमितित्वमिति । तथा च तादृशजातिविशिष्टविजातीयकार्यम्प्रति कारणवैजात्यावश्यकत्वात्सिद्धमुपमान मानान्तरमिति भाव. । नन्वेतत्प्रतीतिविषयीभूतमनुमितित्वमिति कार्यवैलक्षण्याभावान्नोपमानस्य मानान्तरत्वमित्यत आह शब्देति । अनुमितित्व तु नेदृशमिति भावः । शब्दविषयकानुमितौ शब्दविशयकत्वसत्वेपि वह्निविधेयकामितौ व्यभिचार दर्शयति । अनुमितित्वादीनामिति । परोक्षत्व वेति । श्रावणनिर्विकल्पकस्यातीन्द्रियत्वेन परोक्षत्वात्तत्रातिव्याप्तिरित्यत आह प्रत्यक्षान्येति श्रावण तु प्रत्यक्षमिति भावः ।

ननूपमितित्वमेव कथं शब्दविषयकत्वाव्यभिचारीति चेत् उपमितिर्हि पदवाच्यत्वविषयिका न च पदमविषयीकृत्य तद्वाच्यत्वं विषयीकर्तुमर्हति । पदञ्च शब्दात्मकमित्युपमितेः शब्दविषयकत्वनियमः ।

कुत इयमुत्पद्यत इति चेत् सादृश्यादिज्ञानादिति गृहाण। तथा हि सामान्यतो गवयपदवाच्यं किञ्चिदस्तीति जानतो विशिष्यापरिचिन्वानः कीदृशो गवयपदवाच्य इति कञ्चित्पृच्छति तेन च गोसदृशो गवयपदवाच्य इति उक्तः सन् विपिनमनुसरन् यदा गोसदृशं पिण्डं पश्यति तदा पूर्वानुभूततादृगतिदेशवाक्यार्थं स्मरन् परिच्छिनत्ति अयङ्गवयशब्दवाच्य इति सेयमुपमितिर्नाम।

उपोद्घातसङ्गत्याऽऽह नन्विति। उपमितिर्हीति। अय गवयपदवाच्य इत्याकारिकायामुपमितौ गवयपदवाच्यत्वविषयकत्वमित्यर्थः। ननु वस्तुगत्या यत्पदवाच्य तदुपमितौ विषयो न तु पदमपीत्यत आह। नचेति। भवतु पदविषयकत्व न तु शब्दविषयकत्वमित्यत आह पदमिति। ननूपमितौ कुत्रचिच्छब्दविषयकत्व भवतु न तु सर्वत्रेत्यत आह उपमितेरिति। कुतः। कस्मात् कारणात्। इय सादृश्यकरणिकोपमितिः। सादृश्य तु पादार्थान्तरं तच्च प्रतिपदार्थं नैक। किं तु प्रत्याश्रयभिन्न अन्यथा सर्वत्र सर्वसादृश्यापत्तिः। नन्वनेकत्वेनुगतप्रत्ययो न स्यादिति चेन्न सादृश्यत्वरूपजात्यनुगतव्यवहारजननात्। यदि च सादृश्यनिष्ठजातौ सादृश्यसत्वात्तत्रापि सादृश्य वाच्य तर्हि जातेः स्ववृत्तिवृत्तितापत्तिः जात्यन्तरस्वीकारेत्वनवस्थेति सूक्ष्ममीक्षते तदा सप्तपदार्थभिन्नाभावत्वमेवोच्यतामिति। तच्च न द्रव्यादित्रयान्तर्गत गुणादावपि सत्वात्। नापि सामान्य। एकव्यक्तिवृत्तित्वात्। सामान्येपि सत्त्वात्। सप्रतियोगित्वाच्च। न च विशेषः प्रत्यक्षत्वात्। न समवायः वृत्तिमत्त्वादभावेपि सत्त्वाच्चेति तस्मात्सादृश्य पदार्थान्तरमिति। अत्र मणिकारः। सादृश्यस्य क्लृप्तेऽन्तर्भावस्तथा हि। असाधारणभिन्नतद्गतभूयो धर्म-

वत्व सादृश्यम् न च भूयस्त्वस्यैकस्याभावादननुगम इति वाच्यम् । तस्य त्रिचतुरादिसाधारण्यात् । न चैव पिपीलिकाकुञ्जरयोरपि शरीरित्वसुखित्वादेः सत्त्वात्सादृश्य स्यादिति वाच्यम् । तेन रूपेणेष्टापत्तेः । इत्थ च चन्द्र इव मुखमित्यत्र चन्द्रसादृश्यमाह्लादकत्वादिना मुखे चतुश्चरणवत्त्वादिना गोसादृश्यद्वये वराह गावोऽनुधावन्तीत्यत्र गोसादृश्य वराहे वह्निव्याप्यधूमवत्त्वेन दृष्टान्तसादृश्य पक्ष इति केनचिद्धर्मेण क्वचित्कस्यचित्सादृश्यमित्यतस्तद्धर्मेणोपमानोपमेयभाव इत्याह ।

**न ह्येतत्प्रत्यक्षं चक्षुरादिव्यापारविगमेपि जायमानत्वात् । न च मानसं ततो विलक्षतयाऽनुभूयमानत्वात् । अन्यथाऽनुमितेरपि मानसत्वापत्तेः । नाप्यनुमितिः व्याप्तिज्ञानाद्यभावेप्युत्पत्तेः । नापि शाब्दं गवयत्वविशिष्टोपस्थापकपदाभावात् । उपमितावयं गवयपदवाच्य इत्याकारिकायां गवयत्वावच्छेदेन गवयपदवाच्यत्वावगाहनात् न तु गोसादृश्यावच्छेदेन तस्य गौरवेणानवच्छेदकत्वात् । अन्यथाऽप्रतीति मूलव्यवहारप्रसङ्गः । न वा स्मृतिरियं पूर्वमननुभवादतोऽतिरिक्तैवेयं तस्याः करणं तादृश्यविशिष्टे तत्पदवाच्यत्वरूपवाक्यार्थानुभवस्तत्स्मृतिद्वारः गवयत्वादिरूपावच्छेदकविशिष्टे सादृश्यज्ञानं च सहकारीति सम्प्रदायः । तत्रोपलक्षणं वैधर्म्यज्ञानादप्युपमित्युत्पत्तेः ।**

अथ चक्षुरादिसन्निकृष्टे गवयत्वविशिष्टे गवयपदवाच्यत्वविशिष्टबुद्धिसम्भवाच्चाक्षुषादिक भविष्यतीति शङ्कते न हीति । तत् । उपमि-

त्यात्मक ज्ञान प्रत्यक्षं। चाक्षुषादिप्रत्यक्ष । गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थज्ञानोत्तरं तादृशस्मरणोत्तरं च चक्षुरादिसन्निकर्षविरहदशायामपि अय गवयपदवाच्य इत्युपमितेर्जायमानत्वादिति समाधत्ते चक्षुरादीति । ननु मास्तु चाक्षुषादिक पर तु चक्षुरादिसन्निकृष्टे गवयत्वविशिष्टे व्यवसायोपनीते पदवाच्यत्ववैशिष्ट्यसम्भवान्मानस भविष्यत्येवेत्यत आह । न चेति । तत. मानसप्रत्यक्षात् । विलक्षणतयेति । सन्नासन्निपरिच्छेदकतयानुभूयमानत्वादित्यर्थ । ननु तादृशमपि मानस भविष्यत्येवेत्यत आह । अन्यथेति । अय भावः। उपमितेर्मानसत्वेऽनुमितेपि तथात्वापत्तिः। तथा च मानान्तरविलोपप्रसङ्गः। अनुमितावनुमिनोमीत्यनुव्यवसाय एव मानमिति चेद्दीयतामुपमिनोमीत्यनुव्यवसायेपि दृष्टिरिति । अथानुमानान्तर्गतार्थमेवोपमानमस्तु । तथा हि । गवयपद गवयत्वतदितरान्यतरप्रवृत्तिनिमित्तक पदत्वात्। यत्पद तत्सप्रवृत्तिनिमित्तकमिति सामान्यतो दृष्टादनुमानाद्गवयत्वप्रवृत्तिनिमित्तत्व परिच्छिद्यते । अन्यथा पीनो देवदत्तो रात्रिदिवान्यतरभोजनवान् रोगियोगिभिन्नत्वे सति पीनत्वादित्यनुमानगतार्थत्वमर्थापत्तेरपि न स्यात्तथा च त्यज्यता मानान्तरत्वमुपमानस्य स्वीकुरु वार्थापत्तेः प्रमाणान्तरत्वमित्यत आह नापीति । व्याप्तीति अत्रादिना परामर्षपरिग्रहः इत्य च व्याप्तिज्ञानाद्यभावे जायमान कार्यं तदनुमितितो विलक्षण वाच्य । तत्करणमपि विलक्षण वाच्य तदेवोपमानमिति भावः । अथोपमितिः शाब्दबोधात्मिका भविष्यतीत्यत आह नापीति गवयपदजन्यपदार्थोपस्थितिः शाब्दबोधे कारण वनगतपुरुषस्य तु गवयत्वविशिष्टोपस्थापकपदमन्तरेणाप्युपमितिरित्यर्थः । ननु गवयत्वविशिष्टोपस्थितिर्नापेक्षिता किं तु गोसादृश्यविशिष्टोपस्थितिरित्यत आह उपमिताविति । तस्य गोसादृश्यस्य गौरवेणेति । सर्वत्र जातिरेव शक्यतावच्छेदिका नोपाधिरिति नियमात्तथा च गवयत्वरूपजातिः शक्यतावच्छेदिका न तु गोसदृश्यरूपोपाधिरिति भाव । एतन्नियमास्वीकारे बाधकमाह अन्यथेति ।

अप्रतीतिः । अनियामक । तथा च घटे चैत्रावलोकितत्वमैत्रनिर्मितत्वकूप्याण्डसादृश्यादेः सत्त्वेपि घटत्वावच्छिन्न एव शक्तिर्न चैत्रावलोकितत्वादिरूपगुरुधर्म्मावच्छिन्न इति नियामकरूपो व्यवहारो न स्यादित्यर्थ । ननु तथापि स्मृतिरूपैवोपमितिर्भविष्यतीत्यत आह । न वेति । अननुभवात् । गवयपदवाच्यत्वाननुभवात् । इय उपमितिः । तस्याः करणमिति गोसादृश्यविशिष्टे गवयपदवाच्यत्वरूपो यो वाक्यार्थस्तदनुभव इत्यर्थ. । व्यापारवदसाधारण कारणं करणमिति नियमाद्व्यापारं दर्शयति तदिति अतिदेशवाक्यार्थस्मृतिर्व्यापार इत्यर्थः । ननु तर्हि गवयो गोसदृश इति ज्ञानस्यानुपयोग' स्यादित्यत आह गवयत्वादीति साम्प्रदायिकमते न्यूनता दर्शयति तच्चेति तत् सादृश्यकरणकोपमितिदर्शन । उपलक्षण दिक्प्रदर्शनमात्र यद्वा ननु गुरुधर्मावच्छिन्ने शक्तिर्लघुधर्मावच्छिन्ने लक्षणेत्येवोच्यता । तथा च गवयत्वावच्छेदेन गवयपदवाच्यताबोधो लक्षणया गोसादृश्यावच्छेदेन गवयपदवाच्यताबोध. शक्त्येत्यत आह । तच्चेति । अथ वा सादृश्यावच्छेदेनैव तादृशपदवाच्यताबोधो जायत इत्यत्र व्यभिचार दर्शयितु वैधर्म्यकरणिकामुपमिति दर्शयति । तच्चेति । तच्च लघुधर्मावच्छिन्न एव शक्तिरिति समाधानकथन च वैधर्म्येति । यथा सादृश्यज्ञान करण तथा वैधर्म्यज्ञानमप्युपमितिविशेषे करणमित्यर्थ नन्वेव व्यभिचारः । साधर्म्यज्ञान विनापि वैधर्म्यज्ञानादप्युपमितेर्जायमानत्वादिति चेन्न । साधर्म्यकरणिकोपमितौ साधर्म्य ज्ञानस्य वैधर्म्यकरणिकोपमितौ वैधर्म्यज्ञानस्य हेतुत्वमिति न व्यभिचारः ।

**यथा कीदृशी पृथिवीति शिष्येण पृष्टे जलादिविधर्मगुणवती पृथिवीति गुरुणोत्तरितः सन् स यदा जलादिविधर्मगुणवतीयमित्यनुभवति तदा तच्छब्दार्थस्मरणादस्य मतिरुत्पद्यत इयं पृथिवीपदवाच्येति । एवं गन्धवती पृथिवीत्युत्तरेऽपि ज्ञेयम्**

तस्माद्यत्किञ्चिद्धर्मविशिष्टे विशिष्यापरिचितसङ्गतिकपदवाच्यतारूपवाक्यार्थानुभवः करणं । किञ्चिद्धर्मविशिष्टे तद्वृत्ताधीः सहकारिणी । यदा च सत्यपि लघुधर्मे तदस्फुरणे गुरुधर्मविशिष्ट एव सादृश्यादिज्ञानं जायते तदा तदवच्छेदेनैव वाच्यता ग्रहो जायते परन्तु स भ्रमो गौरवेण बाधादिति संक्षेपः ॥

इति श्रीभट्टाचार्यचूडामणिकृतायां न्यायसिद्धान्तमञ्जर्यामुपमानपरिच्छेदः ।

वैधर्म्यकरणिकामुपमितिं दर्शयति यथेति । वैधर्म्यं तदवृत्तिधर्मवत्त्व । तथा च जलाद्यष्टकावृत्तिधर्मः पृथिव्यामेवेति भावः । तद्वाक्यार्थज्ञान करणं तादृशस्मरणं व्यापार इति । तादृशोपमित्याकारं दर्शयति इयमिति जलादिवैधर्म्यगुणवती पृथिवी पदवाच्येत्युपमितिरित्यर्थः । सहकारिणं दर्शयति । एवमिति । गन्धवत्वावच्छेदेन पृथिवीपदवाच्यता धीरत्र वैधर्म्यकरणिकोपमितावपि सहकारिणीत्यर्थः । सादृश्यविशिष्ट एव पदवाच्यताग्रह इत्यत्र व्यभिचारं दर्शयन्नुपसंहरति । तस्मादिति । तथा च न सादृश्यविशिष्ट एव तद्वृत्ता धीः सहकारिणीति भावः । यद्वा कीदृशी पृथिवीति शिष्यपृष्टे गन्धवती पृथिवीतिगुरुणोत्तरितेपि गन्धवतीपृथिवीपदवाच्येत्युपमितिरुत्पद्यत इति ज्ञेयमिति । तस्मात् । साधर्म्यज्ञानाद् वैधर्म्यज्ञानादुपमितिजननात् । विशिष्येति । विशेषेणापरिचिता अज्ञाता शक्तिर्येन तस्य पदवाच्यतारूपवाक्यार्थानुभवः करणम् । वाक्यार्थस्मरणं व्यापारः । किञ्चिद्धर्मविशिष्टे सादृश्यवृत्ताधीः सहकारिणीत्यर्थः । अथ यत्र गुरुरूपेणैवोपस्थितिर्न लघुरूपेणेत्यत्राह यदा चेति । तदवच्छेदेनैव वाच्यताग्रहः । पदवाच्यताग्रहः । स गुरुधर्मावच्छेदेन पदवाच्यताग्रहः । गौरवेणेति । सम्भवति लघौ शक्यतावच्छेदकत्वे गुरौ तदभावा-

इतरानपि भोजनधर्मान् पष्ठ वक्ष्यति।

षट्कर्माभिरत इत्यनेन चातुर्वर्ण्यस्य साधारणान् धर्मान्विहाय सुपात्रे निक्षिपेद्धनमित्यादिना ब्राह्मणस्य प्रतिग्रहादींश्चासाधारणान् समूच्येदानीं क्रमप्राप्तानभिषिक्तस्य क्षत्रियस्यासाधारणधर्मानाह।

**अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः।**
**तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः॥६०॥**

व्रतानि ब्रह्मचारिधर्माः मधुमांसादिवर्जनादयस्तद्राहिताः स्वाध्यायमप्यनधीयाना द्विजास्त्रैवर्णिका ब्रह्मचारिणो यत्र भैक्ष्यमाचरन्ति त ग्राम राजाभिषिक्त. क्षत्रियो दण्डयेद् द्रव्यापहारादिना दमयेत्। ननु अव्रतादीना भैक्षचरत्वे ग्रामस्य कोऽपराध इत्यत आह। यतोऽसौ ग्रामचौरेभ्य इव भक्तमन्न प्रददातीति। ननु एतेनाव्रतादिभ्योऽन्नदान निषिद्धमिति गम्यते। तच्चानुपपन्न पापादीनामप्यन्नदानविधानात्। सत्यम्। यत्र भिक्षासौकर्यमदेन द्विजा नाधीयते न च व्रतमनुतिष्ठन्ति तस्य तादृशेभ्यो भिक्षादान निवार्य भिक्षादान त्वपूर्वेभ्यस्तादृशेभ्यो ऽपि विधीयत इति न विरोध। "विद्वद्भोज्यान्यविद्वांसो येषु राज्येषु भुञ्जते। तान्यनावृष्टिमृच्छन्ति महद्वा जायते भयमिति" वसिष्ठेन तादृशानामदण्डने राजानिष्टप्रतिपादनात्। यद्यप्यत्र राजपदोपादानाद्राज्ञ एवाय धर्म इति प्रतीयते तथापि तस्य क्षत्रियमात्रपरत्वात्तद्धर्म एवायमिति। द्विविधो हि राजधर्मो दुष्टशिक्षा शिष्टपरिपालन च तत्राद्येन दुष्टशिक्षोक्ता।

इदानीं शिष्टपरिपालनमाह।

**क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रदण्डवान्।**
**निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्॥६१॥**

क्षत्रियः परेषा क्षतत्राणयोग्यो धर्मेण धर्मोऽयमिति मत्वा नार्थादिलोभेन क्षिति पृथिवीं पालयेद्धत्यर्थं धर्मार्थं च। तथा च याज्ञवल्क्यः। "प्रधान क्षत्रिये कर्म प्रजाना परिपालनमिति"। पालन नाम व्याघ्रचौरशत्रुभ्यो भयापनयन तत्र व्याघ्रादिभयापनयनोपाय शस्त्रपाणिपदेनाह।

तेन शस्त्रधारणस्य दृष्टार्थत्वाद्व्याघ्रादीन् निहन्यादेवेति तस्यार्थः । चौरादिभयापनयनोपायमाह प्रदण्डवानिति । ततश्च देशकालानुबन्धापराधपरीक्षणरूपेण प्रकर्षेण चौरादष्टादशव्यवहारपदपराजितेषु धिग्वाग्धनवधान्यतमं दण्डं कुर्यादित्यर्थः । शत्रुभयापनयनोपायमाह निर्जित्येति पार्ष्णिग्राहादिभिर्निजप्रजां रक्षित्वा परेषामरितन्मित्रादीनां सैन्यानि हस्त्यश्वरथपदातिसहितानि सामादिप्रयोगासंभवे सेनाप्रयोगेण नितरां तद्राष्ट्रापपीडनादिभिर्जित्वा स्ववशमानयेदित्यर्थः । एतैश्चतुर्भिर्विशेषणैः सकलव्यवहाराध्यायप्रतिपाद्योऽर्थ उपलक्षितस्तस्य सर्वयुगसाधारणत्वात् अन्यथाऽऽचारप्रायश्चित्तवत्सोऽप्युच्छिद्येतेति ।

वृत्त्यर्थं क्षितिं पालयेदित्युक्तं तत्र वृत्त्युपायमाह ।

**पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।**

**मालाकार इवारामे न यथाङ्गारकारकः ॥ ६२ ॥**

अत्र शक्तिलक्षणाभ्यां दृष्टान्तदार्ष्टान्तिके उभे अपि प्रतिपाद्येते यथा राजा पुष्पं पुष्पोत्पन्नं फलं व्रीहियवादि वीप्सया तत्तत्कालोपपन्नं यथा स्वांशं विचिनुयाद्गृह्णीयान्न तु मूलस्य तज्जनकबीजवृक्षादेरुच्छेदमत्यन्तापहारं कुर्यात् । अत्र चान्वयदृष्टान्तो मालाकारो यथारामे यदा यदा यद्यत्पुष्पं विकसति तत्तद्विचिनोति तद्वदिति । व्यतिरेके त्वङ्गारकारो यथा वृक्षं समूलमुन्मूल्य दहति तथा न स्यादिति ।

तथाह मनुः ।

यथाल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः ।
तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः कर इति ॥

अथ वैश्यासाधारणधर्मानाह ।

**लाभकर्म तथा रत्नं गवां च परिपालनम् ।**

**कृषिकर्म च वाणिज्यं वैश्यवृत्तिरुदाहृता ॥ ६३ ॥**

लाभो द्रव्यवृद्धिस्तदर्थं कर्म लाभकर्म वृद्ध्यर्थं धनप्रयोग इत्यर्थः । लोहकर्मेतिपाठे लोहानां सुवर्णरजतादीनां कर्मार्घादिपरिज्ञानमित्यर्थः ।

लोहाना तान्तवस्य चेति मानवात्। रत्न मणिमुक्तादि तस्य परीक्षा क्रयविक्रयाः कर्मशब्दानुवृत्त्या गृह्यन्ते। तथाशब्देन गन्धरसादीनामप्यर्घादिपरिज्ञान गृह्यते।

तथा च मनुः।

मणिमुक्ताप्रवालाना लोहाना तान्तवस्य च।
गन्धाना च रसाना च विद्यादर्घबलाबलमिति॥

गवा परितः शीतवर्षातपेभ्य. पालन तृणजलदान बन्धमोक्षदोहादि चकारादन्येषामपि पशूनाम्। तथा च वाराहे।

स्वाध्याय यजन दान कुसीद पशुपालनम्।
गोरक्षाकृषिवाणिज्य कुर्याद्वैश्यो यथाविधीति॥

कृषिकर्म द्वितीयाध्याये वक्ष्यमाणलक्षण चकाराद्भृतिभाषादिविज्ञान च। तथा च मनुः।

भृत्याना च भृतिं विद्याद्भाषाश्च विविधा नृणामिति।

वाणिज्य विक्रयद्रव्याणा क्रयविक्रयौ एषा सर्वा वैश्यस्य वृत्तिर्जीवनोपाय उदाहृत इति।

अथ शूद्रासाधारणधर्मानाह।

**शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते।**
**अन्यथा कुरुते किंचित् तद्भवेत्तस्य निष्फलम्॥१४॥**

द्विजाना विप्राणा शुश्रूषा सेवा शूद्रस्य परमो धर्मो दृष्टादृष्टसाधनत्वात्। अन्यथा विप्रसेवामन्तरेण यदि किंचित्पाकयज्ञादिक करोति तत्सर्व तस्य निष्फल भवति।

तदाह मनुः।

विप्रसेवैव शूद्रस्य साधनं कर्म कथ्यते।
यदतोऽन्यद्धि कुरुते तद्भवेत्तस्य निष्फलम्॥
स्वर्गार्थमुभयार्थं वा ब्राह्मणानेव राधयेत।
जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यतेति॥

यत्र शूद्रधर्मास्त्रिवर्णशुश्रूषेत्यादिदेवलवाक्ये क्षत्रियवैश्यसेवाश्रवण तत्केवलवृत्त्यर्थत्वेन। अत एव मनु.।

शूद्रस्तु वृत्तिमाकाङ्क्षेत क्षत्रमाराधयेद्यदि ।
धनिनं वाप्युपाराध्य वैश्यं शूद्रो जिजीविषेदिति ॥

यदा द्विजशुश्रूषया न जीवति तदा किं कार्यमित्यत आह ।

**लवणं मधु तैलं च दधि तक्रं घृतं पयः ।**
**न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम् ॥ ६५ ॥**

लवणं शम्भलादि मधु क्षौद्रं तैलादिस्नेहं दधि प्रसिद्धम् । तक्रमुदश्वित् घृतं सर्पिः पयः क्षीरं चकारादन्यदपि फलपुष्पादि विक्रीयमाणं शूद्रजातीनाञ्च दूष्येच्च दोषमावहेत्तस्माच्छूद्रः सर्वेषु लवणादिषु विक्रयं कुर्यात्। शूद्रपदेनार्थसिद्धौ जातिपदोपादानं सूतादिप्रतिलोमजातीनामपि प्राप्त्यर्थं "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" इति स्मरणात् । लवणादिपरिगणनेऽपि सर्वपदोपादानमप्रतिषिद्धानां सर्वेषामपि विक्रयप्राप्त्यर्थम् ।

तथा च कालिकापुराणे ।

विक्रयं सर्ववस्तूनां कुर्वन् शूद्रो न दोषभाक् ।
मधु चर्म सुरां लाक्षां मुक्त्वा मांसं च पञ्चममिति ।

मध्वत्र मद्यं तस्यैवात्र प्रतिषेधात् ॥

इदानीं शूद्रस्य वर्ज्यानाह ।

**विक्रीणन् मद्यमांसानि ह्यभक्षस्य च भक्षणम् ।**
**कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥ ६६ ॥**

मद्यं पानसादि द्वादशविधं तथा च पुलस्त्यः ।

पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् ॥
मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम् ।
समानानि विजानीयान्मद्यान्येकादशैव तु ॥
द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतमिति ।
मांसं भक्ष्यमभक्ष्यं च बहुवचनाच्चर्मलाक्षयोर्ग्रहणम् ॥

तदुक्तं कालिकापुराणे ।

विक्रयं सर्ववस्तूनां कुर्वन् शूद्रो न दोषभाक् ॥
मधु चर्म सुरां लाक्षां मुक्त्वा मांसं च पञ्चममिति ।

एतानि विक्रीणन्नभक्ष्यं गोमांसादि तस्य भक्षणमगम्या मातृभगिन्यादयस्तासां गमनं च कुर्वन् शूद्रस्तत्क्षणात् सद्यः सकृद्विक्रयभक्षणागमनैरपि पतति द्विजातिपरिचर्यानर्हो भवति । तदाह व्यतिरेकमुखेन मनुः

यैः कर्मभिः सुचरितैः शुश्रूष्यन्ते द्विजातयः ।
तानि कर्माणि कुर्वीत शिल्पानि विविधानि चेति ॥

ननु मद्यादिविक्रयस्याभक्ष्यभक्षणादीनां च साधारणनिषेधेनैव सिद्धौ पुनर्निषेधो व्यर्थ इति चेन्न । सद्यः पातित्यप्रतिपादनार्थत्वात् । नन्वेवमप्यगम्यागमननिषेधो न कार्यस्तस्य सद्य एव पातित्यहेतुत्वादिति चेत् । मैवं मात्राद्यतिरिक्तपरदारमात्रगमनेऽपि तस्य पातित्याभिधायकत्वात् ।

अत एवाह योगीश्वरः भार्यारतिः । अयमत्रार्थः स्वदारनिरत इत्यनेन साधारणेनैव सिद्धौ पुनः शूद्राणां भार्यारतत्वाभिधानं पारदार्यमात्रे द्विजातिपरिचर्यानर्हत्वप्रतिपादनाय तदेव च स्पष्टीकृतमाचार्यैरिति ।

किञ्च ।

**कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।**
**वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् ॥ ६७ ॥**

कपिलाया गोः क्षीरस्य पानेन । यद्यप्येतद्धुतशेषाभावे ब्राह्मणस्य क्षत्रियवैश्ययोश्च जात्यैव निषिद्धम् ।

क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽपि वा पुनः ।
यः पिबेत्कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत् ॥

इत्यापस्तम्बस्मरणात् ।

कपिलायाः पिबेच्छूद्रो नरके स विपच्यते ॥
हुतशेषं पिबेद्विप्रः सोऽपि स्यादन्यथा पशुः ।

इति भविष्यवचनाच्च । तथापि शूद्रचाण्डालतापादककर्मसामान्येनात्राभिहितम् । एकवचनं तु सकृत्कृतस्याप्यस्य जात्यन्तरापादकत्वं स्पष्टयितुम् । एवमुत्तरत्रापि जातिमात्रेण ब्राह्मणीगमनेन । न चागम्या-

गमननिषेधेनास्य पौनरुक्त्यं शङ्क्यम् । प्रत्यवायभेदात् । तथा हि पूर्वं पातित्यमात्रं प्रायश्चित्तापनोद्यमगम्यागमनेन जन्यत इत्युक्तमत्र तु चाण्डालत्वरूपजात्यन्तरत्वं प्रायश्चित्तानपनोद्यं ब्राह्मणीगमनेन जन्यत इत्युच्यत इति न पौनरुक्त्यम् । चकाराच्छालग्रामपूजनेन । तदाह आपस्तम्बः ।

प्रणवोच्चारणाच्चैव शालग्रामशिलार्चनात् ।
ब्राह्मणीगमनाच्चापि शूद्रश्चाण्डालतामियादिति ॥

विशेषस्त्वत्रोपपादितोऽधस्तात् । वेदाक्षराणां विचारेण विचारोनामात्र ज्ञानम् ।

चरधातोर्गत्यर्थत्वात्तदर्थानां च ज्ञानार्थत्वात् । ज्ञानं च श्रवणोच्चारणार्थजिज्ञासाभिर्जायत इति श्रवणादीनां निषेधः । तथा च श्रूयते अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणमिति । पद्यु वा एतच्छ्मशानं यच्छूद्र इति भवति चोदाहरणे जिह्वाच्छेदो धारणे शरीरभेद इति । एतदेवाभिप्रेत्योक्तं व्यासेन श्रवणाध्ययनप्रतिषेधात् स्मार्तश्चेति । अर्थजिज्ञासा तु स्वाध्यायाध्ययनविधेरर्थज्ञानफलकत्वादध्ययननिषेधेनैव निषिद्धा अर्थज्ञाननिषेधे च तत्साधनानां पुराणन्यायमीमांसाधर्मशास्त्राङ्गानामपि निषेधः । तथा च कालिकापुराणे ।

मोहाद्वा कामतः शूद्रः पुराणं संहिता स्मृतिम् ।
पठन्नरकमाप्नोति पितृभिः सह कूदनम् ॥
पुराणं धर्मशास्त्राणि संहिता च मुनीरिताः ।
नाध्यापयेन्नृपः शूद्रैर्विहितानि यदृच्छयेति ॥

कूदनं नरकविशेषः । धर्मशास्त्रपदेन न्यायमीमांसयोरपि ग्रहणं तयोरपि धर्मप्रतिपादकत्वात् । एवं वेदज्ञानसाधनानां श्रवणादीनां निषेधेऽपि पुराणश्रवणे प्रतिप्रसवो महाभारते "श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रत" इति । अत्र श्रावणस्य वृत्त्यर्थत्वेनाविधेयत्वाच्चतुर्णामपि वर्णानां श्रवणं विधीयते । एतया निषादस्थपतिं याजयेदितिवत् । अत एव पुराणमुपक्रम्य

श्रोतव्यमिति शूद्रेण नाध्येतव्यं कदा चन ।
पुराणं शृणुयाच्चैव नरसिंहस्य पूजनम् ॥

इति भविष्यनारसिंहयोरप्युक्तम् ।

यत्तु

अध्येतव्यमिदं नित्यं विप्रैः पर्वणि पर्वणि ।

नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ ॥

योऽधीते चैव मोहात्मा स याति नरकान्बहून् ।

इति कौर्मेऽभिहितम् यच्च वायवीयसंहितायाम् ।

नावेदविद्भ्यः कथनीयमेतत्पुराणरत्नं पुरशासनस्य ।

नाभक्तशिष्याय च नास्तिकेभ्यो दत्तं हि यत्तन्निरयं ददाति ॥

इति तच्छ्रावयितुर्दोषाभिधानाय न श्रोतुरिति व्याख्येयम् । एतैः प्रत्येकमनुष्ठितैः शूद्रश्चाण्डालतां व्रजेत् । शूद्रजातिं परित्यज्य चाण्डालजातिं सर्वधर्मबहिष्कृतां प्राप्नोति ।

ननु नित्यामूर्तायाः जातेरुपगमापगमौ न स्त इति चेत् । मैवं येषां प्रत्यक्षजातिस्तेषामस्तु तथा येषां तु शास्त्रैकसमधिगम्या तेषां यथाशास्त्रमुपगमापगमयोरपि स्वीकारात् । अन्यथा

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।

व्यत्यये कर्मणा साम्यं पूर्ववच्चाधरोत्तरम् ॥

इत्याद्यनेकवाक्योपप्लवः स्यादित्यादिविशेषमष्टमे वक्ष्यामः ।

प्रतप्तकनकच्छविं श्रियमवेक्ष्य वामाङ्कगाम्

अलक्ष्यतनुना समच्छवितया विधाय च्छलात् ।

यदीय(?)मसितद्युतिः श्रयति दक्षिणा कन्धरा

स मे दिशतु मङ्गलं सततमेव नारायणः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-

श्रीरामपण्डितसुतेन विनायकेन ।

शास्त्रे पराशरकृते विवृतोऽयमाद्यो

ऽध्यायः कलौ समुदितान्हिकनिर्णयाय ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहराया प्रथमोऽध्यायः ।

---

श्रीगणेशाय नमः ॥

द्विजाङ्कधरमेकतो विधृतकौस्तुभं मध्यतो
रमाचरणपङ्कजस्खलितयावकं चान्यतः ॥
सुरोदितमुरो निजं मतनमोक्षमाणं मुदा
सदाभिमतसिद्धये नमत माधवं साधवः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते विवृतिर्द्वितीया-
ध्याये विधीयत इहोदित वृत्तिसिद्ध्यै ॥ २ ॥

प्रथमाध्याये चतुर्णामपि वर्णानामैहिकामुष्मिकफलहेतू साधारणासाधारणधर्मौ निरूपितौ ।

इदानीं सर्ववर्णानां जीवनहेतुं साधारणधर्मं निरूपयितुं द्वितीयाध्यायमारभते ।

**अतः परं गृहस्थस्य कर्माचारं कलौ युगे ।**
**धर्मं साधारणं शक्त्या चातुर्वर्ण्याश्रयागतम् ॥ १ ॥**
**तं प्रवक्ष्याम्यहं पूर्वं पराशरवचो यथा ।**

अतः परं चातुर्वर्ण्यस्यैहिकामुष्मिकफलहेतुसाधारणासाधारणधर्मनिरूपणानन्तरमैहिकफलहेतुधर्मनिरूपणेन बुद्धिस्थ गृहस्थस्यैव न ब्रह्मचारिवानप्रस्थसन्यासिनां, कर्मणो जीवनहेतुक्रियाया आचारः कर्तव्यतेति कृषिपदपरित्यागेन यत्कर्माचारपदोपादानं तद्युगान्तरे लौकिकव्यापारभूताया अपि कृषेः कलौ शास्त्रीयत्वबोधनाय, कर्माचारपदयोर्लोके लौकिकालौकिकव्यापाराभिधायकत्वात् । युगान्तरेषु कृषेर्वैश्यमात्रधर्मत्वात्सामान्येन गृहस्थाभिधानं कथमित्यत आह । कलौ युग इति । कलौ कृषेस्सर्ववर्णधर्मत्वात् । तदेव स्पष्टयति धर्मं साधारणमिति सर्ववर्णसाधारणः कृष्याचारो धर्मश्च शास्त्राभ्यनुज्ञात इत्यर्थः । साधारण्ये हेतुमाह

शक्त्येति । शक्त्या सामर्थ्येन कलौ विप्रादीनां याजनादिस्वस्ववृत्त्या जीवनस्य दुर्लभत्वात् कृष्यादेश्चात्यन्तमिष्टत्वादित्यर्थः । चत्वारो वर्णाश्चातुर्वर्ण्यं तस्याश्रयेण पूर्वपूर्वकल्पियुगक्रमेणागतमिष्टम् । आश्रम इति पदच्छेदे चतुर्णामप्याश्रमिणां तत्प्राप्तिर्गृहस्थमात्रपरत्वे तु पूर्वेण पुनरुक्तिश्चेति । तत्पूर्वप्रतिज्ञातं कृषिधर्ममहं पराशरः प्रकर्षेण दृष्टादृष्टेतिकर्तव्यताप्रतिपादनपुरस्सरं वक्ष्यामि । स्वोत्प्रेक्षामात्रमूलत्वशङ्कामपनुदति । पूर्वेति । पूर्वकल्पीयपराशरवचनानतिक्रमेणेत्यर्थः । प्रतिज्ञातं धर्ममाह ।

**षट्कर्मसहितो विप्रः कृषिकर्म च कारयेत् ॥ २ ॥**

षड्भिः कर्मभिः पूर्वोक्तैः मन्व्यादिभिः सहितो युक्तोऽपि विप्रः कृषिकर्म कर्षणं सेवकैः शूद्रैः कारयेत् "कृषिवाणिज्ये चास्वयङ्कृते" इति गौतमस्मरणात् । चकारात्तदभावे स्वयमपि कुर्यात् । तदाह कूर्मः ।

स्वयं वा कर्षणं कुर्याद्वाणिज्यं वा कुसीदकम् ।
कष्टा पापीयसी वृत्तिः कुसीदं तां विवर्जयेत् ॥

बृहस्पतिरपि ।

कुसीदं कृषिवाणिज्यं प्रकुर्वीत स्वयं कृतम् ।
आपत्काले स्वयं कुर्यान्नैनसा युज्यते द्विजः ॥ इति ।

एतेन स्वयं कर्षणनिषेधो युगान्तरविषय इति सिद्धम् ।

कृषौ वर्ज्यान् बलीवर्दानाह ।

**क्षुधितं तृषितं श्रान्तं बलीवर्दं न योजयेत् ।**
**हीनाङ्गं व्याधितं क्लीबं वृषं विप्रो न वाहयेत् ॥ ३ ॥**

क्षुधितो बुभुक्षितस्तृषितः पिपासितः श्रान्तः श्रमातुरः तं बलीवर्दं हलोद्वहनादौ न योजयेत् । हीनाङ्गं पादविकलं व्याधितोऽतिसारादियस्तः क्लीबः पुंस्त्वरहितस्तमपि न हलादिकं वाहयेत् ।

तदुक्तमाश्वमेधिके ।
'न क्षुत्तृष्णाश्रमश्रान्तं वाहयेद्विकलेन्द्रियमिति" ।

एकेनैव सिद्धौ निषेधद्वयोपादानमत्यन्तादरार्थम् ।

कीदृशस्तर्हि योज्य इत्यत आह ।

**स्थिराङ्गं नीरुजं दृप्तं सुनर्दं षण्ढवर्जितम् ॥**
**वाहयेद्दिवसस्यार्द्धं पश्चात्स्नानं समाचरेत् ॥ ४ ॥**

स्थिराङ्गम् ।

द्वौ मासौ पाययेद्वत्सं द्वौ मासौ द्वौ स्तनौ दुहेत् ।
द्वौ मासावेकवेलायां शेषकालं यथारुचि ॥

इत्यापस्तम्बोक्तरीत्या दृढाङ्गं न तु कोमलाङ्गं वत्सम् "अक्षय्य सबलप्रायामनड्वाहं तु वाहयेदि"ति बृहत्पराशरस्मरणात् । नीरुजं निर्गता रुजा यस्य सुनर्दं शुभनर्दनं नादिनं षण्ढवर्जितं षण्ढैर्वृषभैस्तद्रूपासहनेन दूरतः परिहृतं न तु षण्ढत्ववर्जितं क्लीबनिषेधेनैव तदर्थसिद्धेः । तं दिवसस्यार्द्धमामध्याह्नं वाहयेत् । तदुक्तमाश्वमेधिके ।

अन्हः पूर्वं द्वियामे वा धुर्याणां वाहनं स्मृतम् ।
विश्राम्यन्मध्यमे भागे भागे चान्ते यथासुखमिति ॥

पूर्वप्रहरे प्रहरद्वयं वा वाहयित्वा मध्यमे प्रहरे विश्राम्य चतुर्थे प्रहरे इच्छयेत्यर्थः । बलीवर्दमित्यादावेकत्वमविवक्षितम् ।

अष्टगवं धर्महलं षड्गवं जीवनार्थिनाम् ।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम् ॥

इति हारीतेन संख्यान्तरविधानात् । दिवसार्द्धमित्युत्सर्गेण क्वचिद्यामत्रयमपि वाहयेत् । तदुक्तमाश्वमेधिके ।

यत्र वा त्वरया कृत्यं संशयो यत्र वाध्वनि ।
वाहयेत्तत्र धुर्यांस्तु न स पापेन लिप्यत इति ॥

इदमप्यष्टगवाभिप्रायेण ।

द्विगवं वाहयेत्पादं मध्यान्हे तु चतुर्गवम् ॥
षड्गवं तु त्रिपादोक्तं पूर्णमष्टगवं स्मृतम् ।

इति अत्रिस्मरणात् । पश्चाद्बलीवर्द्दस्नापनानन्तरं स्वयं माध्याह्निकं स्नानं कुर्यात् । तथा च हारीतः । "स्नापयित्वानडुहोऽलङ्कृत्य ब्राह्मणान् भोजयेदि"ति सन्ध्यास्नानमित्यत्र प्रातःस्नानमुक्तमत्र तु माध्याह्निकमिति न पुनरुक्तिः ।

प्रातर्मध्यान्हयोः स्नानं वानप्रस्थगृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥

इति दक्षेण वानप्रस्थगृहस्थयोः स्नानद्वयाभिधानात् । तच्च प्रातःस्नानवदेव नित्यम् । "यथाहनि तथा प्रातर्नित्यं स्नायादनातुर" इति कात्यायनस्मरणात् । तद्विधिमाह सङ्क्षेपेण योगियाज्ञवल्क्यः ।

स्नानमन्त्रैर्जले चैव मार्ज्जनाचमने तथा ।
जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतदुपदिष्टं महात्मभिरिति ॥

मन्त्रास्तु प्रातःस्नानविधित एवावगन्तव्याः ।

मध्यान्हस्नानानन्तरकृत्यमाह ।

**जप्यं देवार्चनं होमं स्वाध्यायं चैवमभ्यसेत् ।**
**एकद्वित्रिचतुर्विप्रान्भोजयेत्स्नातकान् द्विजः ॥ ५ ॥**

जप्यं मध्याह्नसन्ध्याप्रधानत्वेन गायत्र्यास्तेनात्र सन्ध्योपासनमुपलक्ष्यते । तद्विधिरपि प्रागुक्तः मन्त्रेषु तु विशेषमाह नारायणः ।

आपः पुनन्तु मन्त्रेण आपोहिष्ठेति मार्जनम् ।
प्रक्षिप्य वाञ्जलिं सम्यगुदुत्यं चित्रमित्यपि ॥
तच्चक्षुर्देव इति च हंसः शुचिषदित्यपि ।
एतज्जपेदूर्ध्वबाहुः सूर्यं पश्यन्समाहितः ॥
गायत्र्या तु यथाशक्ति उपस्थाय दिवाकरमिति ।

देवार्च्चनं मध्यान्हेऽपि कर्तव्यमिति अपुनरुक्तिः । "प्रातर्मध्यं दिने सायं विष्णुपूजां समाचरेदिति" शौनकस्मरणात् । होमो वैश्वदेवस्तस्य पुनर्वचनं स्वाध्यायस्य तदुत्तरकालताबोधनार्थम् । तदाह बृहस्पतिः ।

स चार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने च नान्यदत्रे निमित्तत इति ॥

स्वाध्यायाभ्यसन ब्रह्मयज्ञः "यत्स्वाध्यायमधीते स ब्रह्मयज्ञ"-इति स्मरणात् । स वापूर्वोऽत्रैव विधीयते कुर्यादिति यथायोग्य सम्बध्यते । एको वा द्वौ वा त्रयो वा चत्वारो वा इत्येकद्वित्रिचतुरास्ते च ते विप्राश्चेत्येकद्वित्रिचतुर्विप्राश्छान्दसः स्वरलोपस्तान् स्नातकानन्यान्वा यथाशक्ति भोजयेत् । एतच्च विप्रभोजन कर्षणोत्थप्राण्युपघातदोषापनयनायापूर्व विधीयते । अत एव हारीतः । स्नापयित्वानडुहोऽलङ्कृत्य ब्राह्मणान्भोजयेदिति ।

ननु यद्दोषापनयनाय प्रत्यह विप्रा भोज्यास्तदुत्पन्नाना धर्मोपयोगिता कथ स्यादित्यत आह ।

**स्वयं कृष्टे यथा क्षेत्रे धान्यैश्च स्वयमर्जितैः ।**
**निर्वपेत्पञ्चयज्ञांश्च क्रतुदीक्षां च कारयेत् ॥ ६ ॥**

यथा स्वय शिलोञ्छादिवृत्त्या अर्जितैर्धान्यैः श्रौतस्मार्तक्रियानुष्ठानमभ्युदयकारि तथा स्वयङ्कृष्टेऽपि क्षेत्रे चकाराद् भृतकादिद्वारा कर्षिते वार्जितैरुत्पन्नैर्धान्यैः पञ्चयज्ञान्निर्वपेत्क्रतूनामग्निहोत्रादीना दीक्षा च कारयेत्कुर्यात् । ततश्च द्रव्यार्जनस्य तन्नियमाना वा पुरुषार्थत्वेन तदतिक्रमे पुरुषस्यैव प्रत्यवायो न क्रतुवैगुण्यमिति ।

अत एव कूर्मपुराणे ।

लब्धलाभः पितृन्देवान् ब्राह्मणांश्चापि पूजयेत् ।
ते तृप्तास्तस्य त दोष शमयन्ति न सशयः ॥

इत्यर्जकस्यैव दोषमभिधाय तदभाव उपपादितः ।

वस्तुतस्तु कलौ कृषेरभ्यनुज्ञातत्वात्कर्षणस्यापि न दोष इति ॥

इदानीं कृष्युत्पन्नाना धान्याना धनार्थविक्रये विशेषमाह ।

**तिला रसा न विक्रेया विक्रेया धान्यतस्समाः ।**
**विप्रस्यैवंविधा वृत्तिस्तृणकाष्ठादिविक्रयः ॥ ७ ॥**

तिलाः श्यामा श्वेताश्चाविशेषा न रसादयः गुडादयस्ते मूल्यकल्पनया धनेन न पणनीयाः यदि धान्यान्तररहितस्य तिलादिविक्रयमन्तरेण दृष्टादृष्टकार्यं न सिध्येत्तर्हि धान्येना धान्येन समास्तिलप्रस्थेन धान्यप्रस्थ इति प्रक्रियया विक्रया विमातव्याः । तदाह नारदः ।

अशक्तो भेषजस्यार्थे यज्ञे होमे तथैव च ।

यद्यवश्य तु विक्रेयास्तिला धान्येन तत्समा इति ।

एव रसादिविनिमयोऽपि द्रष्टव्य. । तदाहापस्तम्बः । अन्नेन चान्नस्य मनुष्याणा च मनुष्यै रसाना च रसैर्गन्धाना च गन्धैर्विद्यया च विद्यानामि"ति । यत्तु काम वा कृष्योत्पाद्य तिलान्विक्रीणीरन्निति वसिष्ठवचन तत्क्रय विद्विनिमयासम्भवे विक्रयाभ्यनुज्ञार्थम् । अत एव तिलतण्डुलपक्वान्नविद्यामनुष्याश्च विहिताः परिवर्तकेनेति तेनैव स परिवर्तः पृथगभिहितः । योऽय तिलादिविनिमयस्तृणकाष्ठादिविक्रयश्च सेयमिव विधाविप्रस्य वृत्तिर्जीवनोपायः । तथा च नारद. । "ब्राह्मणस्य तु विज्ञेय शुष्कदारुतृणादि चेति" ।

इदानीं कर्षकस्य नैमित्तिक खलयज्ञ विधास्यन्नादौ निमित्तमुपन्यस्यति ।

**ब्राह्मणश्चेत्कृषिं कुर्यात्तन्महादोषमाप्नुयात् ।**

भूमिकर्षणे तदाश्रितप्राणिहिंसाया अपरिहार्यत्वात्सावधानस्यापि कर्षकस्य ब्राह्मणस्य महान्दोषो भवत्येव । ब्राह्मणग्रहण कृषिवृत्तेर्वैश्यस्य तद्दोषाभावबोधनार्थम् । अत एव मनु ।

वैश्यवृत्त्या तु जीवस्तु ब्राह्मणः क्षत्रियोऽपि वा ।
हिंसाप्राया पराधीना कृषि यत्नेन वर्जयेत् ॥

इत्युभयोरेव तन्निषेधमुक्तवान् ।

उक्तदोषस्य महत्त्व विशदयति ॥

**संवत्सरेण यत्पापं मत्स्यघाती समाप्नुयात् ॥ ८ ॥**
**अयोमुखेन काष्ठेन तदेकाहेन लाङ्गली ।**

मत्स्यघातेन जीवन् कैवर्त्तादिः सवत्सरेण यत्पाप प्राप्नोति तदयोमुखेन काष्ठेन हलेन भूमि भिदन्नेकाहेन लाङ्गली कर्षकः प्राप्नोति । अत एव मनु ।

कृषि साध्विति मन्यन्ते सा वृत्तिः सद्भिर्गर्हिता ।
भूमि भूमिशयाश्चैव हन्ति काष्ठमयोमुखम् ॥

इति कृषि विनिन्द्य उक्तदोषस्य कर्षकमात्रे प्रसक्तौ विशेषमाह ।

**पाशको मत्स्यघाती च व्याधः शाकुनिकस्तथा ॥ ६ ॥**
**अदाता कर्षकश्चैव सर्वे ते समभागिनः ।**

वागुरया मृगग्राही पाशकः, मत्स्यघातिनः पुनरुपादान पाशकादीनां तत्साम्यबोधनाय व्याधो मृगवधाजीवः शाकुनिकः पक्षिघाती अदाता खले राशिमूलमुपागतेभ्योऽप्रदाता ते सर्वेऽपि समानप्रत्यवायभागिनः।

एव निमित्तमभिधाय नैमित्तकमाह ।

**वृक्षं छित्वा महीं भित्वा हत्वा च कृमिकीटकान् ॥१०॥**
**कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते ।**

वृक्षभूमिकृम्यादीनां छेदनभेदनहननैर्यानि पापानि भवन्ति तेषा सर्वेषा पापाना कर्षकस्य खलयज्ञप्रायश्चित्त भवति ।

खलयज्ञस्वरूपमाह हारीतः ।

भूमि भित्वौषधीः छित्वा हत्वा कीटपिपीलिकाः ।
पुनन्ति खलयज्ञेन कर्षका नात्र सशय. ॥
यूपोऽय निहितो मध्ये मेढिर्नामा हि कर्षकैः ।
तस्मादतन्द्रितो दद्यादत्र धान्यार्थदक्षिणाम् । इति ।

खलयज्ञाकरणे प्रत्यवायविनाशमुपसहरति ।

**यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागते ॥ ११ ॥**
**स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत् ।**

यः कर्षको धान्यराशौ कृते समागतेभ्यो विप्रेभ्यो वक्ष्यमाण त्र्यश भाग न ददाति स चौरो ब्रह्मभागहरणात् पापिष्ठः खलयज्ञाकरणाद्ब्रह्मघ्नः कृषिव्यासङ्गेन वेदाध्ययनपरित्यागात् । तदुक्त शिवपुराणे ।

अदत्वा कर्षको देवि यस्तु धान्यं प्रवेशयेत् ।
तस्य तृष्णाभिभूतस्य देवि पापं ब्रवीम्यहम् ॥
दिव्यं वर्षसहस्रं तु दुरात्मा कृषिकारकः ।
मरुदेशे भवेद्वृक्षः स पुष्पफलवर्जितः ॥
तस्यान्ते मानुषो भूत्वा कदाचित्कालपर्ययात् ।
दरिद्रो व्याधितो मूर्खः कुलहीनश्च जायत इति ॥

देयधान्यपरिमाणमाह ॥

**राज्ञे दत्वा तु षड्भागं देवानां चैव विंशतिम् ॥१२॥**
**विप्राणां त्र्यंशकं भागं सर्वपापैः प्रमुच्यते ।**

खले राशीकृताद्धान्यात्षष्ठं भागमंशं राज्ञे प्रजापालनाधिकृताय देवेभ्यश्च विंशतितमं चकारात् पितृभ्य विंशतितमं विप्रेभ्यः त्र्यंशकं च भागं दत्वा पूर्वोक्तैः पापैः प्रमुच्यत इति पूर्वोक्तोपसंहारः ।

तथा च कूर्मः ।

देवेभ्यश्च पितृभ्यश्च दद्याद्भागं तु विंशकम् ।
त्रिंशं भागं ब्राह्मणानां कृषिं कुर्वन्न दुष्यतीति ॥

बृहस्पतिरपि ।

राज्ञे दत्वा तु षड्भागं देवानां चैव विंशकम् ।
त्रिंशद्भागं तु विप्राणां कृषिं कुर्वन्न दोषभागिति ॥

विप्रस्य सेतिकर्तव्यतां कृषिमुक्त्वा वर्णान्तराणामपि तामाह ॥

**क्षत्रियोऽपि कृषिं कृत्वा देवान्विप्रांश्च पूजयेत् ॥१३॥**
**वैश्यः शूद्रस्तथा कुर्यात्कृषिवाणिज्यशिल्पकम् ।**

क्षत्रियवैश्यशूद्रा अपि पूर्वोक्तेतिकर्तव्यतया कृषिं कृत्वा देवान् विप्रान् चकारात् राजानं विषाणिनश्च तथा यथोक्तभागकल्पनया पूजयेयुः । यद्यपि वैश्यस्य कृषिः पूर्वाध्याये विहिता तथाप्यत्रेतिकर्तव्यताविधानाय पुनरुपन्यासः कृषिवद्वाणिज्यशिल्पकर्मापि तथैव देवतादिभ्यो भागं दत्वा जीवनाय चत्वारोऽपि वर्णाः कुर्युः । वाणिज्यं क्रयविक्रयौ शिल्पं चित्रलेखनादि । भागकल्पना चोक्ता बृहत्पराशरेण ।

प्रतिग्रहचतुर्थांश वणिग्लाभतृतीयकम् ।
कृषितो विंशतिं चैव ददतो नास्तिपातकमिति ॥

ननु शूद्रस्यापि कृष्यादिजीवनहेतुसद्भावे किं पराधीनया द्विजशुश्रूषयेत्यत आह ।

**विकर्म कुर्वते शूद्रा द्विजशुश्रूषवर्जिताः ॥ १४ ॥**
**भवन्त्यल्पायुषस्ते वै निरयं यान्त्यसंशयम् ।**

द्विजशुश्रूषावर्जिताः शूद्रा विकर्मरागद्वेषादि कुर्वते ततश्चाल्पायुषो भवन्ति अनन्तरं नरकं गच्छन्ति तेन कृष्यादिदर्पेणैहिकामुष्मिकश्रेयःप्रतिबन्धकं द्विजशुश्रूषाराहित्यं नाभ्युपगन्तव्यमित्यर्थः ।

अत एवानुशासिके ।

रागो द्वेषश्च मोहश्च पारुष्यं च नृशंसता ।
शाठ्यं च दीर्घवैरत्वमतिमानमनार्जवम् ।
अनृतं चातिवादं च पैशून्यमतिलोभता ॥
निकृतिश्चाप्यवज्ञानं जनने शूद्रमाविशत ।
दत्वा पितामहः शूद्रमभिभूतं तु तामसैः ॥
द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान् ।
नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः ॥
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ।
अहिंसकः शुभाचारो देवताद्विजपूजकः ॥
शूद्रो धर्मफलैरिष्टैः स्वधर्मेणैव पूज्यत इति ।

द्विजशुश्रूषायाः शूद्रदोषाभिभावकत्वमभिहितम् ॥

उक्तमध्यायार्थं निगमयति ।

**चतुर्णामपि वर्णानामेष धर्मः सनातनः ॥ १५ ॥**

ब्राह्मणक्षत्रियवैश्यशूद्राणामेष कृषिवाणिज्यशिल्पलक्षणो धर्मः सनातनः तेष्वपि कलियुगेषु पारम्पर्यागत इति ।

गोभिः स्वस्तन्यधाराधवलितवपुषः पुष्णतः कृष्णमूर्त्ते-
स्तारानाथस्य पारावतसदृशरुचः कान्तिमाराद्यपाराम् ।

अन्तराऽन्तराले वर्त्तमानो विधुरः । तस्य किं ब्रह्मविद्यायामधिकारोऽस्ति न वेति सन्देहे, यज्ञादिश्रुत्याऽऽश्रमकर्मणामधिकारेऽपि विधुरकृतकर्मणां ज्ञानहेतुत्वाभावान्नास्त्यधिकार इति प्रत्युदाहरणेन प्राप्ते ब्रूमः । अन्तरा चाप्याश्रमसन्तरा वर्त्तमानस्याप्यस्त्यधिकारः, तस्य ब्रह्मविद्याऽधिकारस्यानाश्रमिणो रैक्वादेः श्रुतौ स्मृतौ च दर्शनादित्यर्थः । पूर्वपक्षेऽनाश्रमकर्मणां जपादीनां विद्याहेतुत्वासिद्धिः फलम्, सिद्धान्ते तत्सिद्धिः, इति बोध्यम् ॥

अपि च स्मर्यते ॥ ३ । ४ । ३७ ॥

संवर्त्तकप्रभृतीनां च नग्नचर्यादियोगादनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यत इतिहासे ॥

ननु रैक्वादीनां जन्मान्तरकृतादपि कर्मणो विद्यासम्भवान्न तेषां विद्यादर्शनमाधुनिकानाश्रमिणो विद्याऽधिकारे लिङ्गम्, विद्याहेतुभूतकर्माभावात्, इत्यत आह ।

विशेषानुग्रहश्च ॥ ३ । ४ । ३८ ॥

अनाश्रमिणो जपोपासनदेवताराधनादिभिः कर्मविशेषैर्ज्ञानहेतुभिरस्ति विद्यायामनुग्रह इत्यर्थः । तथाहि ''जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः'' इति स्मृतिर्ब्राह्मणमात्रसम्बन्धित्वं जपस्य दर्शयन्ती विधुरस्यापि विद्यायामधिकारं दर्शयति । तस्मादस्त्यनाश्रमिणोऽधिकारः ॥

ननु यदि विधुरस्यापि ब्राह्मणवर्णमात्रसम्बन्धिजपादिनैव विद्यासिद्धिस्तर्ह्याश्रमित्वं व्यर्थमित्यत आह ।

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३ । ४ । ३९ ॥

अतस्त्वनाश्रमित्वादितरदाश्रमित्वं बहुज्ञानसाधनसमानाधिकरणं ज्यायः शीघ्रमेव विद्याहेतुः, श्रुतिस्मृतिसिद्धत्वात् । "तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च" इति श्रुतौ पुण्यकृद्विशेषणरूपश्रुतिलिङ्गाच्चेत्यर्थः । 'तेन' ज्ञानेन 'एति' ब्रह्म प्राप्नोति ब्रह्मवित् 'पुण्यकृत्' स्वाश्रमोक्तकर्मकृत् । तेजसि परमात्मन्यात्मत्वेन वनन इति 'तैजसः' । तत्र पुण्यकृत्त्वविशेषणादाश्रमित्वं ब्रह्मप्राप्तिहेतुतया ज्याय इति गम्यते ॥

नन्वनाश्रमिणामपि कर्म विद्याहेतुश्चेदुत्तमाश्रमात्पूर्वाश्रमं प्राप्तस्य कर्म विद्याहेतुरिति किमु वाच्यम्, इति कैमुतिकन्यायसङ्गत्याऽऽक्षेपे, समाधत्ते ।

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ३ । ४ । ४० ॥

किमुत्तमाश्रमात्पूर्वाश्रमं प्राप्तस्य कर्म विद्याहेतुर्वा न वेति सन्देहे, पूर्वपक्ष आश्रमप्रच्युतस्याश्रमिणः कर्मणा विद्याहेतुत्वाभाव आश्रमज्यायस्त्वं न स्यादिति फलम्, सिद्धान्ते प्रच्युतेरप्रमाणकत्वादाश्रमज्यायस्त्वमिति मन्तव्यम् । तत्राश्रमात्प्रच्युतस्यापि कर्म ज्ञानहेतुरिति प्राप्ते, ब्रूमः । तद्भूतस्य प्राप्तोत्तमाश्रमस्यातद्भाव उत्तमाश्रमात्प्रच्युतिर्न कथमपि सम्भवतीति जैमिनेरप्याचार्यस्य सम्मतम् । अपिशब्देन स्वस्य बादरायणस्य सम्मतमेवेति दर्शितम् । कुतः । "अरण्यमियात्" इत्यादिनियमात् । अरण्यशब्देनैकान्तोपलक्षित उत्तमाश्रम उच्यते । तमियाद्गच्छेदित्ययं शास्त्रमार्गः । तस्मादुत्तमाश्रमान्न प्रत्यवरोहेदित्युपनिषद्रहस्यमित्यर्थः । अतद्रूपशब्देन प्रत्य-

वरोहबोधकश्रुत्यभाव उच्यते । अभावशब्देन शिष्टाचाराभावः । ततोऽप्याश्रमप्रत्यवरोहो न युक्त इत्यर्थः । तस्मात्प्रच्युतेरप्यप्रामाणिकत्वान्न प्रच्युतस्य कर्मापि विद्याहेतुरिति सिद्धम् ॥

एवं प्रत्यवरोहोऽशास्त्रीय इत्युक्तम् । यदि प्रमादात्प्रत्यवरोहो नैष्ठिकब्रह्मचारिणा कृतस्तस्य किं प्रायश्चित्तमस्ति न वेति सन्देहे, नास्तीति पूर्वपक्षमाह ।

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ३ । ४ । ४१ ॥

पूर्वं प्रच्युतस्य कर्म न विद्याहेतुरित्युक्तम् । तदानीं प्रच्युतस्यापि कृतप्रायश्चित्तस्य कर्म विद्याहेतुरिति पूर्वसिद्धस्योत्सर्गस्यापवादात्सङ्गतिः । पूर्वपक्षे प्रच्युतस्योर्ध्वरेतसः पातित्यमेवेति फलम्, सिद्धान्ते कृतप्रायश्चित्तस्य तस्य फलसिद्धिरिति मन्तव्यम् । "ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत" इति प्रायश्चित्तं श्रुतम् । तदधिकारलक्षणे "अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्" इत्यत्र निर्णीतम् । अवकीर्णशब्देन योनौ निक्षिप्तं रेत उच्यते । तदस्यास्तीत्यवकीर्णी । तस्य यः पशुः स लौकिकाग्नौ होतव्यः । यथोपनयनकाले लौकिकाग्नौ होमस्तद्वत् । आधानस्य पत्नीपरिग्रहोत्तरकालतया पूर्वमप्राप्तकालत्वादिति । तदिदमधिकारलक्षणे सिद्धं प्रायश्चित्तमाधिकारिकम् । तदपि नैष्ठिकस्यावकीर्णिनो नैवास्ति । कुतः । "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा ॥" इति पतनानुमानाद्विवक्षितपातित्यश्रुत्यनुमापकस्मरणात्, तस्य प्रायश्चित्तस्यायोगादित्यर्थः ॥

समाधत्ते ।

**उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ३।४।४२॥**

नेदं महापातकं येनोक्तप्रायश्चित्ताभावः स्यात् । अपि त्वेक आचार्या उपपदपूर्वकमेवेद पातकं मन्यन्ते, यद्गुरुदारादिभ्यो ऽन्यत्र गमनम् । तस्मादेतस्योपपातकत्वादुपकुर्वाणस्येव नैष्ठिकस्याप्युक्तप्रायश्चित्तभावमिच्छन्ति । उभयोर्ब्रह्मचारित्वे सत्यवकीर्णित्वाविशेषात् । अशनवत् । यथा ब्रह्मचारिणा मधुमांसाशिना व्रतलोपः पुनः संस्कारश्च, तद्वत् । प्रायश्चित्ताभावस्य शास्त्रप्रसिद्ध्याभावात्प्रायश्चित्तस्य तत्सत्त्वात्, प्रायश्चित्तं पुनर्युक्तमभ्युपगन्तुम् । अस्मिन्नर्थे यववराहाधिकरणसम्मतिमाह "तदुक्त"मिति । "यवमयश्चरुर्वाराही उपानहावुपमुच्यन्ते"इत्यत्र यववराहशब्दाभ्यां किं प्रियङ्गुकृष्णशकुन्योर्ग्रहः, उत दीर्घशूकसूकरयोरिति सन्देहे, उभयत्र प्रयोगसाम्याद्विकल्प इति प्राप्ते, प्रियङ्गुकृष्णशकुन्योः शास्त्रप्रसिद्धिसत्त्वात्तयोरेव ग्रहणमिति प्रमाणलक्षणे सिद्धान्तितम् । तथेहापीत्यर्थः । तस्मात् "प्रायश्चित्तं न पश्यामी"ति स्मृतिः कृतप्रायश्चित्तेनाप्यवकीर्णिना सह व्यवहाराभावे यत्नगौरवं सद्भिः कर्तव्यमित्येतत्परेत्यदोषः ॥

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ३ । ४ । ४३॥**

कृतप्रायश्चित्तेन सह शिष्टाचाररूपं कर्म किं विद्यासाधनं न वेति सन्देहे, प्रागुक्तप्रायश्चित्तेनैव तस्य शुद्धेर्विद्यासाधनमिति पूर्वसिद्धहेतुमुपजीव्य पूर्वपक्षे, सिद्धान्तः । ऊर्ध्वरेतसां स्वाश्रमात्प्रच्युतिर्महापातकमुपपातकं वाऽस्तु । उभयथाऽपि ते कृतप्रायश्चित्ता अपि शिष्टैर्बहिष्क-

तेश्चाः, "प्रायश्चित्तं न पश्यामि" "आरूढपतितं विप्रं दृष्ट्वा चान्द्रायणं चरेत्" इत्यादिनिन्दास्मृतेः, शिष्टाचाराच्च । न ह्यवकीर्णिना सह शिष्टानामध्ययनाद्याचारोऽस्ति । तस्मात्प्रायश्चित्तेन परलोकशुद्धेनापि तेन कृतश्रवणादिकं न विद्यासाधनमिति फलितम् ॥

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३ । ४ । ४४ ॥**

किमङ्गाश्रितोपासनानि यजमानकर्तृकाणि, आहोस्विदृत्विक्कर्तृकाणीति सन्देहे, यः कृतप्रायश्चित्तः स संव्यवहार्य इत्युत्सर्गस्य निन्दास्मृत्या बाधवत् इहाप्यङ्गानुष्ठातुरेवाङ्गाश्रितोपास्तिकर्तृत्वमित्युत्सर्गस्य "वर्षति हास्मै य उपास्ते" इत्यादिफलश्रुत्या 'यो यत्फलभोक्ता स एव तस्मिन्कर्मणि कर्ता' इति न्यायोपबृंहितया बाधेन फलभाजो यजमानस्यैव कर्तृत्वमिति दृष्टान्तेन पूर्वपक्षमाह "स्वामिनः" इति । स्वामिनो यजमानस्यैवाङ्गाश्रितोपास्तिषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते । पञ्चविधसाम्नि वृष्ट्युपासकस्य "वर्षति हास्मै" इत्यादिफलश्रवणादित्यर्थः । तस्मात्फलभाजो यजमानस्यैव कर्तृत्वमिति प्राप्ते ॥

समाधत्ते ।

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ३ । ४ । ४५ ॥**

अङ्गोपासनमार्त्विज्यमृत्विक्कर्तृकमेवेत्यौडुलोमिराचार्यो मन्यते । तस्मै हि साङ्गाय कर्मणे ऋत्विक्परिक्रियते यजमानेन । तथा च यजमानगामिफलकमप्यङ्गोपासनं यजमानेन स्वागामिफलककर्मार्थं परिक्रीतर्त्विक्कर्तृकमेव, कर्माङ्गप्रणयनाश्रितगोदोहनवत्, इति न फलश्रुतिविरोधः ॥

किञ्च ।

## श्रुतेश्च ॥ ३ । ४ । ४६ ॥

तं ह प्रणवमुद्गीथाख्यं प्राणदृष्ट्या विदित्वा बकनामर्षिः सत्रिणामुद्गाता बभूवेति श्रुतिवाक्यशेषादुपासनस्यर्त्विक्कर्तृकत्वमेवेति । अत्र स्वतन्त्रफलानामुपासनानामृत्विक्कर्तृकत्वेऽपि यजमानगामिफलकत्वोक्तेरस्ति पादसङ्गतिः । पूर्वपक्षे कर्तृत्वभोक्तृत्वयोरैकाधिकरण्य सिद्धान्त ऋत्विजः कर्तृत्वं स्वाम्यधीनमिति परम्परयैकाधिकरण्यमिति मन्तव्यम् ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३ । ४ । ४७ ॥

बृहदारण्यके श्रूयते "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इति । यस्मात्पूर्वे ब्राह्मणा आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थाय भिक्षाचर्यं चरन्ति तस्मादधुनातनोऽपि ब्राह्मणः पण्डाऽध्ययनजाऽऽपातब्रह्मधीस्तद्वान्पण्डितस्तस्य कृत्यं पाण्डित्यं श्रवणं तन्निर्विद्य निश्चयेन लब्ध्वा बाल्येन ज्ञानबलभावेन मननेन शुद्धान्तःकरणत्वेन वा स्थातुमिच्छेत् । तद्द्वयं लब्ध्वाऽथ श्रवणमननानन्तरं मुनिर्मननशीलो निदिध्यासनपरः स्यात् । अमौनं श्रवणमनने मौनं निदिध्यासनं च लब्ध्वा, उक्तत्रयस्य ब्रह्मसाक्षात्कारहेतुत्वात्तत्त्रयानन्तरं ब्रह्मावगच्छतीति ब्राह्मणः साक्षात्कृत ब्रह्मा भवतीत्यर्थः । तत्र संशयः, किमत्र निदिध्यासनाख्य मौनं विधीयते न वेति । पूर्वपक्षे मौनस्यानुष्ठेयत्वासिद्धिः, सिद्धान्ते ज्ञानं प्रत्यन्तरङ्गस्यानुष्ठेयत्वसिद्धि-

रिति बोध्यम् । तत्र "तं ह बको दाल्भ्यो विदाञ्चकार स ह नैमिशीयानामुद्गाता बभूव" इति वाक्यशेषादुद्गीथोपासकस्य बकनाम्न ऋत्विक्त्वबोधकादङ्गोपासनस्यर्त्विक्कर्मत्ववत्, इहापि "अथ ब्राह्मण" इति वाक्यशेषाद्विधिविधुरा"दथ मुनि"रित्यत्र न मौनविधिरिति दृष्टान्तेन प्राप्ते, ब्रूमः "सहे"ति । फलभूतसाक्षात्कारे श्रवणाद्यपेक्षया सहकारित्वात्तस्य मौनस्य निदिध्यासनाख्यस्य विधिरित्यर्थः । ननु "गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ-" मित्यत्र मौनशब्दस्य पारिव्राज्ये प्रयोगात्कथमत्र मौनं निदिध्यासनं स्यादित्यत आह "तृताय"मिति । श्रवण मननद्वयापेक्षया तृतीयं निदिध्यासनमेवात्र मौनं विधेयमित्यर्थः । तत्रेतराश्रमसमभिव्याहारबलान्निदिध्यासनप्रधानं पारिव्राज्यं मौनशब्देन लक्ष्यत इति भावः । कस्यायं मौनविधिस्तत्राह "तद्वत" इति । ब्रह्मपरोक्षज्ञानवतः पूर्ववाक्ये प्रकृतस्य संन्यासिन इत्यर्थः । ननु सूक्ष्मवस्तुसाक्षात्कारे निदिध्यासनस्य प्राप्तत्वान्न विधेयत्वम्, अत आह "पक्षेणे"ति । यस्मिन्पक्षे भेददर्शनप्राप्तिस्तस्मिन्पक्षे प्राप्त्यभावाद्विधिरर्थवानित्यर्थः । ननु ब्रह्मपरवाक्ये कथं मौनविधिरित्याशङ्क्य दृष्टान्तमाह "विध्यादिव"दिति । यथा दर्शपौर्णमासप्रधानपरे वाक्येऽन्वाधानादेरङ्गजातस्य विधिस्तद्वदित्यर्थः । प्रधानमारभ्याङ्गपर्यन्तो विधिः । तदादिर्विध्यादिः प्रधानमिति यावत् । अत एव प्रयाजादिर्विध्यन्त इत्युच्यते । ब्राह्मण्यस्य फलत्वात्तत्र विधिकल्पना विफलेति भावः ॥

ननु श्रवणादिप्रधानो यद्यस्ति संन्यासः, कथं तर्हि छान्दोग्ये गृहिणोपसंहारः "अभिसमावृत्य कुटुम्बे" इ-

त्यत्र । तेन हि तदतिरिक्तः संन्यासो नास्तीति द्योत्यते । इत्यत आह ।

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३ । ४ । ४८ ॥**

गृहिणः कर्मबाहुल्यात्तेनोपसंहारो न तु संन्यासाभावादित्यर्थः । कृत्स्नाश्रमकर्मणां शमादीनां यथासम्भवं गृहिणि भावादित्यक्षरार्थः ॥

एवं सन्यासगार्हस्थ्याश्रमद्वयोक्त्या मन्दबुद्धेरितराश्रमाभावशङ्का स्यात् । तन्निरासार्थमाह ।

**मौनवदितरेषामप्युपदेशात् ॥ ३ । ४ । ४९ ॥**

मौनशब्देन संन्यासगार्हस्थ्ययोर्ग्रहः । तद्वदितरयोरपि ब्रह्मचर्यवानप्रस्थयोः "तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः" इत्यादावुपदेशादनुष्ठेयत्वमित्यर्थः । बहुवचनं त्ववान्तरभेदापेक्षया । गायत्री ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारिभेदाः । फेन औडुम्बरो वैखानसो वालखिल्यश्चेति वानप्रस्थभेदा इति ॥

**अनाविष्कुर्वन्नन्वयात् ॥ ३ । ४ । ५० ॥**

पूर्वोदाहृतवाक्ये मौनं विधेयमित्युक्त्वा, तत्रत्यबाल्यं किमित्यपेक्षायां, तत्स्वरूपमत्र निरूप्यत इति सङ्गतिः । तत्र किं बाल्यशब्देन बालस्य कर्म तिष्ठन्मूत्रत्वादिकमुच्यते, उत वर्णप्ररूढेन्द्रियत्वाद्यभावरूपभावशुद्धिरिति संशयः । पूर्वपक्षे पूर्वस्य ज्ञानाङ्गत्वेनानुष्ठानं फलम्, सिद्धान्त उत्तरस्येति बोध्यम् । तत्र प्रसिद्धिबलात्तिष्ठन्मूत्रत्वादिकं बाल्यमिति प्राप्ते, ब्रूमः । उक्ता भावशुद्धिरेवात्र बाल्यं, विद्याऽङ्गत्वात्, सर्वस्य बालकर्मणो विद्या-

विरोधात् । तदिदमाह "अनाविष्कुर्वन्" निदिध्यासनादिभिरात्मानं परार्थमविज्ञापयन् गर्वादिरहितः स्थातुमिच्छेदिति "बाल्येन तिष्ठासे"दित्यस्यार्थः । कुतः । "अन्वयात्" अस्य बाल्यस्य विद्याऽङ्गान्वयस्यैवमेव सम्भवादित्यर्थः ॥

एवं यज्ञादिकर्मारभ्य बाल्यान्तं विद्याहेतुमुक्त्वा तत्फलं विद्यायाः कालमाह ।

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३ । ४ । ५१ ॥

किमिहैव जन्मनि विद्योत्पत्तिरुत कदाचिदमुत्रापीति संशयः । पूर्वपक्षे श्रवणादीनां विद्याहेतुत्वानियमः, विद्याया ऐहिकत्वेन क्वचित्तद्दर्शनादिति । सिद्धान्ते त्वप्रतिबद्धश्रवणादेस्तन्नियम इति मन्तव्यम् । तत्रेहैव जन्मनि विद्याजन्मास्त्विति कामनया श्रवणादिषु प्रवृत्तेरैहिकमेव विद्याजन्मेति प्राप्ते, ब्रूमः । विद्याऽविरुद्धफलकं देशकालविशेषापेक्षं फलोन्मुखं कर्म प्रस्तुतम् । तेन प्रतिबन्धाभावे सत्यैहिकं विद्याजन्म सति श्रवणादिपौष्कल्ये भवत्येव, चित्राफलपशुवत् । सति तु प्रतिबन्धेऽमुत्रापीत्यनियम एव । न त्विहैवेति नियमः । कुतः । "तद्दर्शनात्" प्रतिबन्धाप्रतिबन्धाभ्यामनियमस्य श्रुतौ दर्शनात् । तथाहि श्रुतिर्जन्मान्तरानुष्ठितश्रवणादेः फलं जन्मान्तरे दर्शयति "गर्भस्थ एव च वामदेवः प्रतिबुबुधे ब्रह्मभाव"मिति । सति तु प्रतिबन्धे विद्या दुर्लभेत्यप्याह श्रुतिः "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा

ऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः" इति । आत्मश्रवणमपि बहूनां दुर्लभम् । कुतश्चिद्भाग्याच्छ्रवणलाभेऽपि तत्फलं ज्ञानं दुर्लभम् । तत्र हेतु "राश्चर्य" इति । यथा परस्यात्मनो वक्ताऽऽचार्यो ऽद्भुतवत्कश्चिदेव सम्भवति, सम्यगाचार्यलाभेऽपि तस्माच्छ्रुत्वाऽप्यात्मनो लब्धा साक्षात्कर्ता ऽऽश्चर्यः । तिष्ठतु साक्षात्कारः । कुशलेनाचार्येणानुशिष्टोऽपि शास्त्रेणास्यात्मनः परोक्षत्वेन ज्ञाताऽप्याश्चर्य एवेत्यर्थः । तस्मादनियमो विद्याजन्मन इति सिद्धम् ॥

## एवं मुक्तिफलानियमस्तदवस्थाऽवधृतेस्तदवस्थाऽवधृतेः ॥ ३ । ४ । ५२ ॥

यथा विद्यायाः श्रवणादिसाधनोत्कर्षापकर्षाभ्यामैहिकामुष्मिकत्वरूपोपचयापचयवत्त्वनियमः, एवं तत्फले मुक्तावुपचयापचयवत्त्वनियमोऽस्ति न वेति सन्देहे, पूर्वपक्षे स्वर्गादिवत्कर्मसाध्यत्वं मोक्षस्येत्येतत्पादाद्याधिकरणासिद्धिः फलम्, सिद्धान्ते तस्य निर्विशेषस्य ज्ञानैकलाभ्यत्वमिति तत्सिद्धिरिति मन्तव्यम् । तत्र पूर्वोक्तविद्यादृष्टान्तेन फलत्वेन हेतुना मोक्षस्य सातिशयत्वनियमे प्राप्ते, ब्रूमः । "एवं" विद्यावत्, मुक्तिरूपफलस्यानियमो निर्विशेषत्वमेव । कुतः । तदवस्थाऽवधृतेः । मुक्त्यवस्थाया निर्विशेषब्रह्मरूपत्वेन "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिष्ववधारणादित्यर्थः । तथा च फलहेतुकानुमानस्यागमबाधः । न हि साक्षात्काररूपविद्यायामुपचयापचयवत्त्वमस्ति । न हि पूर्वोत्तरभाविघटसाक्षात्कारयोश्चिरत्वाचिरत्वमतिशय इति कश्चिदभ्युपैति । तस्मान्निर्विशेषब्रह्मसाक्षात्कारस्यैकरूपत्वात्तल्लाभो मोक्षो निरतिशया-

नन्दात्मकरूप एवेति सिद्धम् । अभ्यासोऽध्यायसमाप्तिद्योतनार्थः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणशिष्यितश्रीरामकिङ्करवर्यकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां तृतीयस्याध्यायस्य चतुर्थः पादः ॥

तृतीयाध्यायश्च समाप्तः ॥



श्रीगणेशाय नमः ॥

पूर्वाध्यायान्त्याधिकरणे मोक्षे विशेषनियमाभाव उक्तः। सम्प्रति मोक्षहेतुज्ञानसाधनेषु श्रवणादिष्वावृत्त्याद्यनुष्ठाननियममाह।

आवृत्तिरसकृदुपदेशात् ॥ ४ । १ । १ ॥

पूर्वस्मिन्नध्याये परापरविद्यासु साधनविषयो विचारः कृतः। अत्र तत्फलविचारः क्रियते। अतोऽनयोरध्याययोर्हेतुहेतुमद्भावसङ्गतिः। अत्र प्रथमे पादे श्रवणाद्यावृत्त्या निर्गुणमुपासनया सगुणं वा ब्रह्म साक्षात्कुर्वतः प्रारब्धकर्मातिरिक्तपुण्यपापनिवृत्तिरूपा जीवतो मुक्तिः प्रतिपाद्यते। द्वितीये पादे म्रियमाणस्योत्क्रान्तिः। तृतीये पादे सगुणविदो मृतस्योत्तरो मार्गश्च प्रसङ्गान्निरूप्यते। चतुर्थे पादे पूर्वार्धेन निर्गुणब्रह्मविदो विदेहकैवल्यं, उत्तरार्धेन सगुणविदो ब्रह्मलोकप्राप्तिश्च निरूप्यते। इति तत्तद्विचारात्मकाधिकरणानां तत्तत्पादसङ्गतिर्बोध्या। तदुक्तं "चतुर्थे जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा। ब्रह्मप्राप्तिब्रह्मलोकाविति पादार्थसङ्ग्रहः॥" इति। पूर्वाध्याये साक्षात्कृत्युक्तसाधनविचारः कृतः। इदानीं फलार्थापत्तिलभ्यस्यावृत्त्यादेर्विचारस्तृतीयशेष एवाधाश्लेषाधिकरणपर्यन्तं क्रियते। तत्र साक्षात्कारसाधनत्वेन श्रुतश्रवणादिषु संशयः, किं सकृदेव श्रवणादि कर्तव्यम्, उत श्रवणाद्यावृत्तिरिति। पूर्वपक्षे श्रवणादीनामदृष्टार्थत्वं फलम्, सिद्धान्ते यावत्फलमावर्तनीयत्वादवघातादिवद्दृष्टार्थत्वमिति बोध्यम्। तत्रैकवारमेव श्रवणादि प्रया-

जादिवत्कर्तव्यमिति प्राप्ते, ब्रूमः । श्रवणाद्यावृत्तिरेव कर्तव्या । कुतः । "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यसकृदुपदेशात् । नन्वत्र श्रवणाद्यावृत्तिर्न श्रूयत इति चेदुच्यते । साक्षात्कारस्यैवाविद्यानिवर्तनक्षमत्वेनाहि-भ्रमादौ दृष्टत्वात्, सूक्ष्मवस्तुसाक्षात्कारस्य चावृत्तिविशिष्टश्रवणादिसाध्यत्वस्य षड्जादिस्वरे दृष्टत्वात्, दुर्विज्ञेयात्मश्रवणादावपि संसारानर्थमूलाविद्यानिवर्तनक्षमसाक्षात्कारायावृत्तिः कर्तव्या, दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेः, इति तात्पर्यम् । एवमुपास्यसाक्षात्कारद्वारा फलहेतूपासनेष्वावृत्तिर्बोध्या, दृष्टार्थत्वात्, "उपासीते"-त्यावृत्तिश्रवणाच्च, प्रत्ययप्रवाहस्यैवोपासनत्वात्, "वेदे"-त्यस्याप्युपासनार्थत्वात् । तथाहि सवर्गविद्यायां विदिनोपक्रम्योपास्तिनोपसंहारो दृश्यते, "यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्युपक्रम्य "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इत्युपसंहारात् । यत्स रैक्वो वेद प्राणतत्त्वं सर्वं धर्मफलं प्राप्नोति । एवं रैक्वादन्योऽपि यस्तद्रैक्ववेद्यं वेद सोऽपि तथैव फलं प्राप्नोति । स एवम्भूतो रैक्वो मयैतदुक्त इत्थमुक्त इति हंसं प्रति हंसान्तरवचनम् । हे भगवो रैक्व यां देवतां त्वमुपास्से तामेतां मेऽनुशाधि शिक्षय ज्ञापयेति जानश्रुतेर्वचनम् । तस्मात्साक्षात्कारसाधनेष्वावृत्तिसिद्धिः ॥

## लिङ्गाच्च ॥ ४ । १ । २ ॥

तथाहि, उद्गीथोपासनं प्रकृत्य, "आदित्य उद्गीथ" इत्युपासनमेकपुत्रतादोषेणापोद्य "रश्मींस्त्वं पर्यावर्तयात्" इति रश्मिबहुत्वोपासनं बहुपुत्रतायै विदधद्वाक्यं

प्रत्ययावृत्तिं सूचयन्ति । तन्न्यायेन साक्षात्कारसाधनेष्व-प्यावृत्तिसिद्धिः । हे पुत्र त्वं रश्मीनादित्यं च प्रत्येकं पर्यावर्तयात् । तकारमन्तर्भाव्य पर्यावर्तयतादिति मध्यमपुरुषैकवचनम् । उपास्स्वेत्यर्थः ॥

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४ । १ । ३ ॥**

पूर्वं श्रवणमननिदिध्यासनानामावृत्तिरुक्ता । तामुपजीव्य सन्दिह्यते, किं निदिध्यासनावृत्तिकाले प्रत्यक्त्वेनेश्वरध्यानं कर्तव्यमुत भिन्नत्वेनेति । पूर्वपक्षे श्रुतीनामभेदपराणां गौणार्थत्वं, सिद्धान्ते मुख्यार्थत्वम् । यद्यप्यभेदश्रुतीनां प्रत्यक्षादिविरोधपरिहारात्मकमिदमधिकरणमविरोधाध्यायसङ्गतम्, तथाऽपि महावाक्यार्थविरोधपरिहारस्य समाधावन्तरङ्गत्वादेतत्पादसङ्गतिः । तत्राभेदस्य प्रत्यक्षेण सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविरुद्धधर्मलिङ्गकानुमानेन च बाधात्, भिन्नत्वेन ध्यानमिति प्राप्ते, ब्रूमः । आत्मेत्येवेश्वरो ध्येयः । तथाहि जाबाला आत्मत्वेनेश्वरमभ्युपगच्छन्ति "त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसी"ति । तथा ग्राहयन्ति चेश्वरमात्मत्वेन 'तत्त्वमस्या'-दिवाक्यानि । न च तेषां नामब्रह्मेत्यादिवद्गौणार्थत्वं, सति मुख्यार्थत्वसम्भवे गौणत्वायोगात् । न च प्रत्यक्षादिविरोधादसम्भवः, तेषां मिथ्याभेदगोचरत्वेन पारमार्थिकाभेदविरोधित्वाभावादिति भावः ॥

**न प्रतीके न हि सः ॥ ४ । १ । ४ ॥**

"मनो ब्रह्मेत्युपासीत" "नाम ब्रह्मेत्युपास्ते" इत्यादिषु प्रतीकोपासनेषु संशयः, किं प्रतीके मनआदौ स्वात्मत्वबुद्धिः कर्तव्या न वेति । पूर्वपक्षे प्रतीकोपास्तीनाम-

हंग्रहोपास्तिभ्यो विशेषासिद्धिः, सिद्धान्ते तु विशेषसिद्धिरिति बोध्यम् । एतदारभ्याधिकरणत्रयस्य प्रासङ्गिकपादसङ्गतिः । तत्र ब्रह्मणः स्वाभिन्नत्वाद्यथा स्वात्मत्वेन बुद्धिः, एवं प्रतीकस्य ब्रह्मविकारत्वेन जीवाभिन्नब्रह्माभिन्नत्वादुपासकजीवात्मत्वबुद्धिः कार्येति दृष्टान्तेन प्राप्ते, ब्रूमः । न प्रतीके स्वात्मबुद्धिः कार्या । न हि स उपासक आत्मत्वेन प्रतीकमनुभवति । अत्रायं विकल्पः । किमनुभवबलात्प्रतीकस्यात्मत्वेन बुद्धिः कार्या, उत श्रुतत्वात्, आहोस्वित्स्वाभिन्नब्रह्माभिन्नत्वात् । नाद्य इत्युक्तं "न हि स" इति । न द्वितीयः, अश्रवणात् । न तृतीयः, प्रतीकस्य स्वरूपेण ब्रह्माभिन्नत्वायोगात्, प्रतीकस्य पृथक्सत्त्वबाधे चोपासनाविध्यभावप्रसङ्गादिति भावः ॥

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ४ । १ । ५ ॥

पूर्वोक्तप्रतीकोपासनेषु किं ब्रह्मणि मनआदिदृष्टिः कर्तव्या, उत मनआदौ ब्रह्मदृष्टिरिति संशयः । पूर्वपक्षे निकृष्ट उत्कृष्टबुद्धिः कर्तव्येति न्यायानपेक्षा, सिद्धान्ते तदपेक्षेति मन्तव्यम् । एकविषयत्वमवान्तरसङ्गतिः । अत्र ब्रह्मण्येव मनआदिदृष्टिर्ब्रह्मणः प्राधान्येनोपास्यत्वोपपत्तये कर्तव्येति प्राप्ते, ब्रूमः । मनआदावेव ब्रह्मदृष्टिः कार्या, ब्रह्मण उत्कर्षात् । उत्कृष्टदृष्टौ हि निकृष्टे कृतायां निकृष्टस्योत्कृष्टता भवति, यथाऽमात्ये राजबुद्धिः फलाय, न तु राज्ञ्यमात्यबुद्धिः । न चैवं ब्रह्मणः प्राधान्याभावः, इष्टत्वादिति भावः ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४ । १ । ६ ॥

"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादीन्यङ्गाश्रितोपासनानि सन्ति । तत्र संशयः, किमादित्यादिषु-

द्गीथादिदृष्टिः कर्तव्या, उतोद्गीथादिष्वादित्यादिदृष्टिरिति । तत्रोद्गीथादीनां कर्मरूपाणां फलहेतुत्वेनोत्कृष्टत्वादादित्यादीनां सिद्धरूपाणां तदभावेन निकृष्टत्वात्पूर्वन्यायेनादित्यादिषूद्गीथादिदृष्टिरिति दृष्टान्तेन प्राप्ते, ब्रूमः । उद्गीथादौ कर्माङ्गआदित्यादिमतय एव कर्तव्याः । कुतः । उपपत्तेः । यथा प्रोक्षणादिना व्रीह्यादिषु संस्कृतेषु प्रकृतकर्मापूर्वमुत्पद्यते, तथा कर्माङ्गेषूद्गीथादिष्वादित्यादिदृष्टिभिः संस्कृतेषु प्रकृतस्य कर्मणः फलाधिक्यलक्षणा समृद्धिर्भवति । अन्यथा न भवेत्, आदित्यादीनामनङ्गत्वात् । तथा च कर्मसमृद्धिरूपफलापपत्तेरङ्गेष्वनङ्गमतिरित्यर्थः । आदित्यादावुद्गीथादिमतिप्रक्षेपे फलासिद्धेर्नोद्गीथादीनामुत्कर्ष इति भावः ॥

## आसीनस्सम्भवात् ॥ ४ । १ । ७ ॥

किं कर्माङ्गानाश्रितान्युपासनानि तिष्ठन्नासीनः शयानो वा कुर्यादित्यनियमः, उत आसीन एवेति नियमः, इति संशयः । पूर्वोत्तरपक्षयोः पूर्वोत्तरकोटिसिद्धिरेव फलम् । निदिध्यासनादौ विद्यासाधन आसननियमोक्तेः पादसङ्गतिः । तत्र पूर्वोक्तकर्माङ्गोपासनेष्विवानियम इति प्राप्ते, ब्रूमः । आसीन एव कर्मानङ्गोपासनानि कुर्वीत । कुतः । समानप्रत्ययप्रवाहात्मकोपासनस्यासीन एवोपासके सम्भवात् । न हि तिष्ठतः पुंस उपासनं सम्भवति, शरीरधारणे यत्नान्तरापेक्षया चित्तविक्षेपात् । नापि शयानस्य, निद्राप्रसङ्गात् । अङ्गावबद्धानां त्वङ्गारतत्क्रियानुकूलत्वात्तत्रानियम इति ॥

## ध्यानाच्च ॥ ४ । १ । ८ ॥

इति कालमाधव ब्रह्मपुराणवचनदर्शनात् ।

तथा च विष्णुधर्मोत्तरपुराणान्तर्गतब्रह्मसिद्धान्ते श्रीमद्भगवद्गुणगाढे भगवद्वाक्यम् –

'लङ्कायामर्कोदये चैत्रशुक्लप्रतिपदारम्भेऽर्कदिनादावश्विन्यादौ किंस्तुघ्नादौ रौद्रादौ कालप्रवृत्तिः' ।

इत्यपि प्रमाणं मत एव ब्रह्मगुप्त ।

* चैत्रसितादेरुदयाद्भानोर्दिनमासवर्षयुगकल्पाः ।

सृष्ट्यादौ लङ्कायां सम प्रवृत्ता दिनेऽर्कस्य' –इति ॥ १५ ॥

इदानीं कालमानानां विभागकल्पनां श्लोकत्रयेणाह ।

योऽक्ष्णोर्निमेषस्य खरामभागः
स तत्परस्तच्छतभाग उक्ता ।
त्रुटिर्निमेषैर्धृतिभिश्च काष्ठा
तत्त्रिंशता सद्गणकैः कलोक्ता ॥ १६ ॥
त्रिंशत्कलाऽक्षी घटिका क्षणः स्या-
न्नाडीद्वयं तैः खगुणैर्दिनं च ।
गुर्वक्षरैः खेन्दुमितैरसुस्तैः
षड्भिः पलं तैर्घटिका खषड्भिः ॥ १७ ॥
स्याद्वा घटीषष्टिरहः खरामै-
र्मासो दिनैस्तैर्द्विकुभिश्च वर्षम् ।
क्षेत्रे समाद्येन समा विभागाः
स्युश्चक्रराश्यंशकलाविलिप्ताः ॥ १८ ॥

**वा भा.**–योऽक्ष्णोर्लोचनयोः पक्ष्मपातः स निमेषः । स यावता कालेन निष्पद्यते तावान् कालोऽपि निमेषशब्देनोच्यते । उपचारात् । तस्य त्रिंशद्विभागस्तत्परसंज्ञः । तत्परस्य शतांशस्त्रुटिरिति । अथ च निमेषै-रष्टादशभिः काष्ठा । क्वचित्पुस्तकान्तरे 'तिथिभिः'-इति पाठः । काष्ठा-

* ब्रह्मस्फुटसिद्धान्तस्य २ श्लो ।

त्रिंशता कलोक्ता । कलानां त्रिंशता घटिका । सा चार्वी । भभ्रमस्य षष्टिभाग इत्यर्थः । घटिकाद्वयेन क्षणो मुहूर्तः । क्षणानां त्रिंशता दिनम् । अथ प्रकारान्तरेण दिनमुच्यते । गुर्वक्षरैः खेन्दुमितैरसुरिति । एकमात्रो लघुः । द्विमात्रो गुरुः । तथा

"सानुस्वारो विसर्गान्तो दीर्घो युक्तपरस्तु यः ।"

इति छन्दोलक्षणे प्रतिपादितम् । यदक्षरं सानुस्वारं विसर्गान्तं दीर्घं यस्याक्षरस्य परतः संयोगस्तल्लघ्वपि गुरुसंज्ञं ज्ञेयम् । गुर्वक्षरस्योच्चार्यमाणस्य यावान् कालस्तद्दशकेनैकोऽसुः प्राणः । प्रशस्तेन्द्रियपुरुषस्य श्वासोच्छ्वासान्तर्वर्त्ती काल इत्यर्थः । षड्भिः प्राणैरेकं पानीयपलम् । पलानां षष्ट्या घटी । घटीनां षष्ट्या दिनम् । त्रिंशद्दिनैरेको मासः । मासैर्द्वादशभिर्वर्षमिति कालस्य विभागो दर्शितः । अथैतत्प्रसङ्गेन क्षेत्रविभागोऽपि कथितः । क्षेत्रे समाद्येन समा विभागा इति । क्षेत्रे कक्षाया समाद्येन वर्षाद्येन समास्तुल्याः क्षेत्रविभागा ज्ञेयाः । ते के । चक्रराश्यंशकलाविलिप्ताः । यथैकस्य वर्षस्य मासदिनादयो विभागा एवं भगणस्य राश्यंशादयः ॥ १६--१८ ॥

**वा भा**—इदानीं कालमानानां विभागकल्पनां श्लोकत्रयेणाह योऽस्त्वोरिति । न केवलं सूर्यादय एव कालव्यक्तिव्यञ्जकाः किन्तु निमेषादयोऽपीत्युच्यते । अत्र निमेषस्य सहस्रत्रयमितोऽंशस्त्रुटिरित्युक्तम् । शास्त्रान्तरे निमेषद्वयं त्रुटिरभिहिता । अत्र क्षणपदेन मुहूर्त्त उक्तः । अन्यत्र निमेषाष्टकं क्षण इति । अत्र द्विसप्ततिसहस्राधिकनवलक्ष—९७२००० निमेषैरहोरात्रमभिहितम् । क्वचित् षष्टिसहस्राधिकैकविंशतिलक्षै-२१६०००० निमेषैरहोरात्रमुक्तम् । अन्यत्रापि द्वात्रिंशत्सहस्राधिकाष्टपञ्चाशल्लक्ष ५८३२००० निमेषैरहोरात्रमिति ।

तथा च गार्ग्यः ।

"अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः ।

द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः ॥

द्वे लवो क्षण इत्युक्तः काष्ठा प्रोक्ता दश क्षणाः ।
त्रिंशत् काष्ठाः कला प्रोक्ता कलास्त्रिंशन्मुहूर्तकः ॥
ते तु त्रिंशदहोरात्रमित्याह भगवान् हरः"-इति ।

तथा च मनुस्मृतौ शाकल्ये च परिभाषान्तरमुक्तम् । निमेषतारतम्यादद्दोषः । मनुष्यलक्ष्य परिभाषान्तरमुक्त गुर्वक्षरे स्वेदुमितैरिति । पूर्वपरिभाषाया मनुष्यदृष्टिविषयातीतत्वाच्चिमेषपरिमाणस्याव्यवस्थितिर्स्वीकारदर्शनाच्च तेत्र समाधेनेति ।

"विकलाना कला षष्ट्या तत्षष्ट्या भाग उच्यते ।
तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते" ॥

इति क्षेत्रपरिभाषोक्ता ॥ १६-१८ ॥

**मरीचिः**—अथ मूलभूतभचक्रग्रहचारप्रवृत्तिकालमुक्त्वा त्रुट्यादिप्रलयान्तकालनिरूपणं विवक्षु' प्रतिज्ञातत्वात् प्रवृत्तिकाले दिनमासवर्षादीना प्रवृत्तेरुक्तत्वाच्च त्रुट्यादिवर्षान्तकालस्य कलन क्षेत्रपरिभाषा चोपजात्येन्द्रवज्राभ्या च क्रमेणाह योऽक्ष्णोरित्यादीति । अक्ष्णोर्नीरोगमनुजनेत्रयोर्निमेषस्य पक्ष्मपातकालस्येत्युपचाराल्लभ्यते । द्वयोर्नेत्रयोरुत्सर्गतो युगपन्निमेषादक्ष्णोरिति द्विवचनम् । यद्यत्सख्यामितः स्वरामभागः । 'अङ्कानां वामतो गति.'—इत्यनेन त्रिंशदशः । आकाशस्य महत्त्वेनेयताभावात् तद्वाचकशब्दाना सङ्केतेन वा स्थानाभावद्योतकशून्याभिधेयत्वात् । परशुरामदाशरथिबलभद्राणा त्रयाणा रामपदवाच्यत्वेन रामशब्देन त्रिसख्योक्तेश्च । एतेन रावणरिपुदाशरथिशब्दादिना त्रिसख्याग्रहणमाधुनिकोक्तं परास्तम् । अत्र गुरुतराः । नन्वस्ति लिपिषु सव्यक्रमः शिष्टसम्मतो माङ्गलिकत्वादादरणीयश्च । तत्कथं तमपहायापसव्यक्रम आदृत इति चेन्न । शतसहस्रायुतलक्षादीनामुत्तरोत्तरमभ्यर्हितत्वेन तदुचितसव्यक्रमद्वारैतत्क्रमस्य युक्तत्वात् । न चाभ्यर्हितसख्यातः सव्यक्रमार्थमुत्तरावधितः प्रदक्षिणक्रमेणैव द्वितीयादिस्थानाना सज्ञाऽस्त्विति । अत एवार्यभटसिद्धान्ते सर्वत्राऽभ्यर्हितसख्यातः सव्यक्रमेणैव सख्याङ्कनिबन्धनम् । तद्वाक्य च यथा—

“कल्पे सूर्यादीनां भगणा घडफिननेननुनीना: ।
मयथमगम्नभननुना” ... .. .. .. * ॥

इत्यत्र रूपात् ।

“कटपयपूर्वा वर्णाद् वर्णक्रमतो भवन्त्यङ्काः ।
ञनौ शून्यं प्रथमार्थे आ छेदे ऐस्तृतीयार्थे” † ॥

इति स्वोक्तपरिभाषयाऽर्कभगणसंख्या ४३२०००००००० चन्द्रस्य ५७७५३३३४०००। एवमन्यात्रापि दर्शनादिति वाच्यम् । उत्तरावधेरभावात् । परिच्छिन्नसंख्यासु तन्मत्त्वे तस्यानियतत्वात् । प्रथमावधेस्तु नियतत्वात् । तत्स्थानमारभ्य स्थानसंज्ञाऽपसव्यक्रमेण युक्ततरा । अत एव सूर्यसिद्धान्ताद्यार्षग्रन्थे एतत्क्रमस्यैव निबन्धनमिति प्राचु: । स कालस्तत्परस्तत्पराभिधेय. ।

तदुक्तम् ।

“स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम् ।
तस्य त्रिंशत्तमो भागस्तत्पर:” . इति ॥

तच्छतभागस्तस्य तत्परकालस्य शतांश: कालस्त्रुटिरुक्ता तत्कालस्य त्रुट्यभिधेयतोक्तेत्यर्थ: । उक्तेत्यनेन

“प्राणादि: कथितो मूर्त्तस्त्रुट्याद्योऽमूर्त्तसंज्ञक: ।
तद्यथाऽक्ष्णोर्निमेषस्य वियत्काल-३० लवो मत: ॥
स तत्पर: शतांश: स्यात् तस्य सोऽपि भवेत् त्रुटि.” ।

इति ज्ञानभास्करे सूर्यारुणसंवादे कालज्ञाननिरूपणे उक्तत्वादागम एव प्रमाणम् । नात्र युक्तिरिति सूचितम् । भूतवर्त्तमानभविष्यत्वेन कालशब्दाभिधेयास्त्रयो गृहीता इति । नन्वेतत् त्रुटिनिरूपणं व्यर्थम् । न च त्रुट्यादिप्रलयान्तेत्याद्युद्देशादिति वाच्यम् । निमेषकालात् प्रलयान्तकालस्य निरूपणेन त्रुट्याद्यसम्भवादुद्देशे त्रुटेर्निमेषपरत्वात् ।

* महार्यभटसिद्धान्ते मध्यमाधिकारे ७ श्लो० ।
† महार्यभटसिद्धान्ते मध्यमाधिकारे ३ श्लो० ।

सिद्धान्तशेखरेऽपि ।

"काष्ठा स्मृताऽष्टादशभिर्निमेषैः कला च काष्ठादशकत्रयेण ।
त्रिंशत्कला स्याद्घटिका घटीभ्यां क्षणः, नर्गाञ्जगदुर्निशं च" ॥

इति त्रुटिकालं विना निमेषकालमारभ्याभिधानाच्च । न च तत्र

"अन्तर्गतनिमेषः कथितो निमेषस्त्रिंशद्विभागोऽस्य च तत्परः स्यात् ।
शतांशकस्तस्य त्रुटिर्निरुक्ता सर्वज्ञगम्या यदि स्यान्न सा स्यात्" ॥

इति त्रुट्यादिनिरूपणमस्ति निमेषेऽत्र कृतम् । तथाऽत्र कृतमिति वाच्यं त्रुट्यादिप्रलयान्तकालकलनेत्यादिकालनिर्देशसमत्वस्य विहाय तत्र 'शतानन्दध्वस्तिप्रभृतित्रुटिपर्यन्तमन्वय'-इत्यादिना त्रुटिमहाकल्पावच्छिन्नकालस्योद्देशात् तत्रोक्तत्वाद्वर्त्तमित्यस्यापरम्परया गौणे निरामाच्च । न च योऽन्त्योरित्याद्यस्य त्रुटिभागैनैकस्तत्परस्तत्परत्रिंशता निमेष इति व्यत्यये तात्पर्यमिति लल्लोदाहृतोक्तोऽर्थो युक्तः । अथ निमेषादिना कालप्रतिपादनाच्चेति वाच्यम् । निमिषज्ञाने त्रुटिज्ञानं त्रुटिज्ञाने निमेषज्ञानमित्यन्योन्याश्रयात् । अन्यथा त्रुटेः प्रकारान्तरेण निरूपणाय तैरिति चेन्न । निमेषैर्धृतिभिश्च काष्ठेति वक्ष्यमाणे निमेषपदं त्रुटिपरम् । धृतिपदं चतुःपञ्चसहस्रसंख्यापरमित्यनन्यगत्याऽर्थकरणेन चतुःपञ्चसहस्रत्रुटिभिः काष्ठेति सिद्धे रुक्तदोषाप्रसक्तेः । यद्वा योऽक्ष्णोरित्यादित्रुट्यन्तेनोक्तं परिभाषान्तरम् । तद्यथा यत्राद्यग्रन्थे त्रुट्यादिप्रलयान्तकालनिरूपणं निमेषान्तर्गतेन त्रुटिनिरूपणपूर्वकं कृतं तत्र त्रुटिज्ञानार्थमस्य भागस्य कथनात् तत्परिभाषोक्तप्रायेव सिद्धा ।

तदुक्तम् ।

"वेदेषुत्रुटिभिः कालो मुहूर्ताख्यो मुहूर्त्तकैः ।
काष्ठा सहस्रैस्तस्याश्च त्रिंशता गदिता कला" ॥

इत्यादिपूर्वग्रन्थे । अत्र तात्पर्यम् । ननु त्रुटेरतीन्द्रियत्वेन घट्यादीनामपि तथात्वात् कथं परिभाषया व्यवहारोपयुक्तदिनकालज्ञानमित्य-

स्वरसात् परिभाषान्तरमाह निमेषैरित्यादि । अत एव पूर्वपरिभाषा सम्पूर्णा नोक्तेति युक्तं पश्यामः । निमेषैरित्यादि छन्दःशास्त्रेऽष्टादशाक्षरचरणपद्यस्य धृत्यभिधायकत्वादष्टादशनिमेषकालमानैः काष्ठा । अत्र तिथिभिरित्ययुक्तः पाठः । आर्षयन्थे तद्दर्शनाभावात् । तत्त्रिंशता काष्ठाकालमानत्रिंशता कला । सङ्ख्याकैरुक्तेति प्रत्येकं सम्बन्ध. । अत्र कालविशेषाभिधायककलाया उक्तत्वेन क्षेत्रान्तर्गतकलाभिन्नत्वं स्पष्टत्वं सङ्ख्याकैरुक्तेत्यनेनात्रागम एव प्रमाणं सूचितम् । त्रिंशत्कला त्रिंशन्मितकला । जात्यभिप्रायेणैकवचनम् । घटिका आर्क्षी नाक्षत्री भभ्रमकालस्य षष्ठ्यंश इत्यर्थ. । नाडीद्वयं घटिकाद्वितयं क्षणो मुहूर्त्तः । तै. क्षणैः खगुणैः । सत्त्वरजस्तमसां त्रयाणां शास्त्रे गुणत्वप्रतिपादनाद्गुणास्त्रयः सङ्केतेन च गृह्यन्ते । त्रिंशन्मुहूर्त्तैर्दिनम् । चकाराचाक्षत्रघटीभ्यो नाक्षत्रमहोरात्रं षष्टिघटीमितमुक्तम् ।

एतदुक्तं ज्ञानभास्करे ।

"निमेषैर्धृतिभिः काष्ठा कला तत्त्रिंशता मता ।
त्रिंशत्कला द्युघटिका तद्युग्मं च भवेत् क्षणः ॥
तत्त्रिंशद्भिर्दिनं सूत भवेत् ········ "इति ।

ननु कालसामान्यपरिभाषाकथनोपक्रमे घट्यादीनां नाक्षत्रकथनमयुक्तम् । नाक्षत्रकालस्य मानविशेषत्वेन मानानिरूपणे निरूपितत्वात् । अन्यथा सौरचान्द्रादीनामपि घटीमानस्य निरूपणापत्तेः । अत एव ज्ञानभास्करे 'द्युघटिका'—इति सामान्यमुक्तमित्यार्क्षपदप्रयोगो व्यर्थ एवेति चेन्न । सामान्यपरिभाषाया अपि विशेषाश्रयत्वेनार्क्षघटीनामेकरूपतया तदन्यमानानां घटीनां प्रतिक्षणविलक्षणत्वेन चार्क्षघट्यङ्गीकारात् । सामान्यस्य विशेषानतिरिक्तत्वेन तर्कशास्त्रे साधनात् । नाक्षत्रमानेन घट्यादिग्रहणेऽपि सामान्यानुरोधेन केवलं घटीग्रहणे व्याकुलता स्यादिति तत्परिहारार्थमार्क्षपदस्य सार्थकत्वात् । अत एवानन्तरोक्तपरिभाषायां नाक्षत्रघट्यादिग्रहणेऽपि सामान्यानुरोधात् पूर्वोक्तेन चार्क्षपदप्रयोग इति विशे-

योक्तावपि सामान्ये तात्पर्यम् । नन्वस्मदादीनां निमेषकालानीन्द्रियत्वेन दिनमानस्यातीन्द्रियत्वात् कथं परिभाषया व्यवहारसिद्धिरतः परिभाषान्तरमाह गुर्वक्षरैरित्यादि । खेन्दुमितैः सङ्केतेनेन्दुपर्यायशब्दानामेकसंख्याभिधेयत्वाद्दशसंख्यैर्गुर्वक्षरैः पूर्वोक्तगुरुलक्षणाक्रान्तस्वरवर्णैर्दशगुर्वक्षराव्यवहितकथनलक्षितकालावयवैरसुः स्वस्थसुखासीनस्य श्वासोच्छ्वासान्तर्वर्त्तिकालस्य तत्पदोपचारलाभात् प्राणः ।

स्वस्थलक्षणं च ।

"समधातुः समाग्निश्च समदोषमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते" इति ॥

तैः प्राणैः षड्भिः पलम् । तैः पलैः खषड्भिः षष्ट्या घटिका वा परिभाषान्तरेण स्यात् । इयं घटी पूर्वपरिभाषोक्तनाक्षत्रघटीतुल्येति सूचनाय दिनपरिभाषामाह घटीषष्ट्यारिति । घटीषष्ट्याहोऽहोरात्रं स्यात् । तथा च पूर्वषष्टिघटिकाभिरेतत्षष्टिघटिकाभिश्चाहोरात्रस्योभयथा तुल्यत्वकथनाद्भचक्रभ्रमेण चक्रकलाभिर्नाक्षत्रदिनसम्भवादहोरात्रासूनां कलासमत्वदर्शनाच्च षष्टिपलात्मकघट्या नाक्षत्रत्वं युक्तम् । तेन न पौनरुक्त्यं दिननिरूपणे इति भावः । अहोरात्रासुभिः पूर्वपरिभाषया नवलक्षद्विसप्ततिसहस्रमिता निमेषास्तदैकेनामुना के इत्यनुपातेन पञ्चचत्वारिंशन्निमेषैरेकोऽसुरित्यादि ज्ञेयम् । अथ मासादीनाह खरामैरिति । त्रिंशदहोरात्रैर्मासः । तैर्मासैर्द्विकुभिर्भूपर्यायशब्दानां सङ्केतेन चैकसंख्यावाचकत्वाद्द्वादशभिर्वर्षैः । च. समुच्चये । इति कालपरिभाषायाम् ।

" ... . . ... ... .. .. .. गुर्वक्षरैरसुः ।
"दशभिस्तैर्भवेत् षड्भिः पलं व्योमर्त्तुभिर्घटी ॥
अहः खर्त्तुघटीभिश्च मासो व्योमाग्निवासरैः ।
द्विकुभिस्तैर्भवेद्वर्षम्" ... ... ... ... इति ॥

अनेन ज्ञानभास्करोक्तेनागम एव प्रमाणम् । अथ प्रसङ्गाद्वक्ष्यमाणोपयुक्तत्वेन क्षेत्रपरिभाषामाह क्षेत्र इति । क्षेत्रे कक्षावृत्तात्मके ।

समाद्येन वर्षमासदिनघटीपलान्तविभागेन समास्तुल्याः । चक्रराश्यंशकलाविलिप्ता विभागा भगणांशकलाविकलाख्यकलाविभागा इत्यर्थः । स्युर्भवन्ति । तथा चैकवर्षस्य मासदिनघटीपलानि यथाऽवयवास्तथैकभगणस्यापि राश्यंशकलाविकला अवयवास्तेन विकलाषष्ट्या कला कलाषष्ट्या भागः । भागत्रिंशद्राशिः । द्वादशराशिरेको भगण इति क्षेत्रपरिभाषोक्तसिद्धा विकलालिप्तांशराशिभगणान्ताः क्षेत्रविभागास्तुल्याः । कालेन विनाडिकाद्येनेति ब्रह्मगुप्ताचार्योक्तत्वात् ।

तथा च स्पष्टं सूर्यसिद्धान्ते ।

"विकलानां कला षष्ट्या तत्षष्ट्या भाग उच्यते ।
तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते"* ॥

इत्युक्तमत आगम एव प्रमाणम् ॥ १६–१८ ॥

इदानीमनयैव कालविभागपरिभाषया सौरादीनि तन्मानान्याह ।

**रवेश्चक्रभोगोऽर्कवर्षं प्रदिष्टं**
**द्युरात्रं च देवासुराणां तदेव ।**
**रवीन्द्वोर्युतेः संयुतिर्यावदन्या**
**विधोर्मास एतच्च पैत्रं द्युरात्रम् ॥ १९ ॥**
**इनोदयद्वयान्तरं तदर्कसावनं दिनम् ।**
**तदेव मेदिनीदिनं भवासरस्तु भभ्रमः ॥ २० ॥**

**वा. भा.**—रविर्यावता कालेन पूर्वगत्या मेषादिभचक्रं भ्रमति तावत्प्रमाणं रविवर्षं प्रदिष्टम् । तस्य द्वादशभागो रविमासः । मासस्य त्रिंशदंशोऽर्कदिनम् । दिनषष्ट्यंशोऽर्कघटिका । तत्षष्ट्यंशोऽर्कविघटिकेति पूर्वपरिभाषया सर्वत्र वेदितव्यम् । इत्यर्कमानम् ।

अथ दैवमानम् । द्युरात्रं च देवासुराणां तदेवेति । यदर्कवर्षं तदेव देवानां दैत्यानां च द्युरात्रमहोरात्रम् । एकमेव तेषामहोरात्र

* सूर्यसिद्धान्ते मध्यमाधिकारे २८ श्लो. ।

किन्तु यद्देवाना दिन सा दैत्याना रजनी । तथा च गोले वक्ष्यति । अस्मादहोरात्रान्मासवर्षादिकल्पना तथैव परिभाषया । तत्र देवाना वर्ष रविवर्षशतत्रयेण पञ्चषष्ट्यधिकेन भवति । इति दैवमानम् ।

अथ चान्द्रमानम् । रवीन्द्वोर्युतेः संयुतिर्यावदन्या विधोर्मास इति । रवीन्द्वोर्युतिरमावास्यान्ते भवति । तस्या युतेरन्ययुतिपर्यन्तं यावान कालस्तावान विधुमास. । तत्र योऽमावास्यान्तो मास स चान्द्रमास इत्युक्त भवति । तस्मान्मासात् पूर्ववत् परिभाषया वर्षादिकल्पनेति चान्द्रमानम् ।

अथ पैत्रम् । तदन्त्ये पैत्र दिवारात्रमिति । यो विधुमासस्तदेव पितॄणामहोरात्रम् । अतः पूर्ववन्मासवर्षादिकल्पना । इति पैत्रम ॥ ५९ ॥

अथ सावनम् । इनोदयद्वयान्तरमिति । अर्कोदययोरन्तर यत् तदर्कसावन दिनम । तदेव कुदिनमत्र ज्ञेयम् । अतोऽपि पूर्ववन्मासवर्षादिकल्पना । अत्रार्कग्रहणमुपलक्षण तेनान्येषामपि ग्रहाणा तदुदयद्वयान्तर तत्सावनमिति । इति सावनम ।

अथ नाक्षत्रमानम । भचक्रभ्रमस्तु भभ्रम इति । भभ्रमो नक्षत्रसावनमित्यर्थः । इति नाक्षत्रम ॥ ६० ॥

**वा वा** –एवं वर्षादिपरिभाषोक्ता । अधुना देववर्षादि सौरादिभेदेन नवधा भिद्यत इति मानान्याह रवेश्चक्रभोग इति । रवेर्द्वादशराश्यात्मक चक्रस्य पूर्वगत्या यावता कालेन भोगः स कालो रविवर्षमित्युक्तम् । अंशभोगो दिनप्रमाणम् । रविदिवसे सावनघटीप्रमाणज्ञानमनुपातेन । गतिकलाभिः षष्टिघटिकाः सावना लभ्यन्ते तदा षष्टिकलाभिः किमिति लब्ध सौरदिवसे सावनघटिकामान मध्यगत्या ६० । ५२ । मध्यगतिमान 'महीमितादहर्गणात् फलानि यानि तत्कला.'–इत्याचार्यो वक्ष्यति । अंशस्य कलाकरणमिच्छायाः प्रमाणसजातीयकरणायानुपातलक्षण च पाट्यामुक्तम् ।

"प्रमाणमिच्छा च समानजाती आद्यन्तयोः स्तः फलमन्यजाति ।
मध्ये तदिच्छाहतमाद्यहृत् स्यादिच्छाफल व्यस्तविधिर्विलोमे" इति ॥

"   ...... . . . . . . . ... .. गुणस्त्वावृत्तिलक्षणः ।
आवर्त्तको गुणः प्रोक्त आवर्त्या गुण्य उच्यते" ॥

गुण्यसंख्याया गुणकसंख्यातुल्यावर्त्तने यावती संख्या सा गुणनफलसंज्ञां लभते । भाज्यसंख्याया भाजकसंख्यामितोऽशो भाग इति । तत्संज्ञा भागहारफलमित्युच्यते । गतः कलाद्यवयवान् भागप्रभागभागानुबन्धभागापवाहजातिभिर्यथासम्भवं सवर्णयित्वा भिन्नाभिन्नभागहारप्रकारेण षष्टिकलागुणितषष्टिघटीभ्यो गत्या भागो ग्राह्यः । तत् सौरे सावनमानं भवति । द्युरात्रं च देवासुराणां तदेवेति । तदेव सौरवर्षं देवासुराणामहोरात्रं प्रदिष्टम् । दिनेशदर्शनयोग्यः कालविशेषो दिनमदर्शनं रात्रिरिति । एकप्रदेशस्थद्रष्टुः सूर्योदयद्वयदर्शनान्तरालकालोऽहोरात्रम् । अन्यथा प्रदेशद्वयद्रष्टृसूर्योदयद्वयदर्शनान्तरालकालस्य भिन्नत्वादहोरात्रभेदः स्यात् । यावद्दिनेशदर्शनं तावद्दिनमित्यत्रापि सौम्यायनं दिनं दक्षिणायनं रात्रिरिति दोषः प्रसज्येत । सङ्कल्पादावेवोक्तकालसिद्धयः सिद्धाः । स्वच्छन्दचारिणः सौम्यायनप्रवृत्तेः सौरमासत्रयं यावत् वडवानलप्रदेशमाश्रयन्ते । ततो मेषादिराशित्रयार्कभोगं यावन्मेरुं सश्रयन्ते । ततः पुनः कर्कादित्रयेण वडवानलं पुनस्तुलादित्रयेण मेरुस्थितिसुखमनुभवन्ति । मृगादिभचक्रार्धार्कभोगं यावद्दिनेशस्य दृष्टत्वात् सौम्यायनं दिनमापद्येत । न चैतादृशदिनप्रमाणं शास्त्रेण प्रतिपाद्यते प्रदेशविशेषमधिकृत्यैव दिनप्रमाणस्योक्तत्वात् । तस्मादेकप्रदेशस्थद्रष्टुर्यावद्दिनेशदर्शनयोग्यः कालविशेषस्तावद्दिनमिति युक्तम् । अभ्रादिव्यवधानेनादर्शननिवारणाय योग्य इति पदम् । यद्वा स्वक्षितिजोपरि यावद्रविबिम्बसंचरणं तावद्दिनम् । स्वक्षितिजाधो यावद्रविबिम्बसंचारस्तावती रात्रिः । यावत् स्वक्षितिज एव रविबिम्बसंचरणं तावती सन्ध्येति लक्षणं युक्तम् । एतद्द्वीपवर्त्यन्याप्रविष्टनिरस्तसमस्तरविरश्मिजालं कालविशेषो रात्रिरिति लक्षणेऽत्यन्तं गौरवम् । यद्देवानां दिनं तदसुराणां रात्रिरिति भाष्ये देवपदं मेरुस्थोपलक्षणार्थं दैत्यपदं वडवानलस्थोपलक्षकम् । पातालस्थ-

लाद्यवस्थितानां तादृशदिनाभावात् । एतत्कारणं गौणे वक्ष्यते । रवीन्द्वार्युतेः सयुतिर्यावदन्येति । रविचन्द्रबिम्बकेन्द्रयुतेर्यावदन्या युतिः स चान्द्रो मास इति दर्शावधिरिति यावत् । 'मास' परिमाणे—इत्यस्माद्धातोर्निष्पन्नोऽयं मासशब्दः । मस्यते परिमीयते यावता कालेन चन्द्रवृद्धिक्षयौ स चान्द्रो मासः । यद्वा चन्द्रवृद्धिक्षयाभ्यां मस्यत इति मासः ।

"उक्तं च ।

"मस्यन्ते परिमीयन्ते स्वकला वृद्धिहानितः ।
मास एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः" इति ॥

एतेन मासाभिधा चान्द्र एव मुख्या । सौरादिषु गुणवशात् एकस्मिन् मासे चान्द्रे रविचन्द्रान्तरं भगणांशाः । एकस्मिंस्तिथावन्तरं द्वादश भागाः । चान्द्रमध्ये सावनघटीमानमनुपातेन । यदि गत्यन्तरकलाभिः षष्टिघटिकास्तदा द्वादशभागकलाभिः किमिति मध्यगत्या चान्द्रं सावनघट्यः ५९ । ४ । चान्द्रमास एव पित्र्यमहोरात्रम् । पितृशब्देन विधुपृष्ठस्था उच्यन्ते ॥ १९ ॥

अधुना सावननाक्षत्रदिनप्रमाणमाह इनोदयद्वयान्तरमिति । दिनशब्देनाहोरात्रमुच्यते । दिनशब्दः सावने मुख्योऽन्यत्र गौणः । भानां भ्रमो यावता कालेन सम्पद्यते तद्दिनम् । नाक्षत्रमध्ये सावनज्ञानमनुपातेन । रविगतियुक्तचक्रकलाभिः षष्टिघटिकास्तदा केवलाभिश्चक्रकलाभिः किमिति जातम् ५९ । ५० । चन्द्रेण यावता कालेन चेत्र भुज्यते तद्दिनम् । तज्ज्ञानं त्रैराशिकेन । यदि चन्द्रगत्या ७९० । ३५ षष्टिघटिका अर्कसावना लभ्यन्ते तदाऽष्टशतकलाभिः किमिति जातम् ६० । ४२ । एवं सप्तविंशतिदिनैर्मास इति । इदं नाक्षत्रमानं प्रवर्षणमेघगर्भपरिज्ञाने उपयुज्यत इति नारदः । अत्राचार्येण भभ्रमशब्देन नाक्षत्रसावनमेव घटिकादिज्ञानार्थम् ॥ २० ॥

**मरीचिः**—अथ सामान्यतः कालपरिभाषामुक्त्वा नवमानात्मकविशेषेण कालं विवक्षुः प्रथमं तत्र सौरदैवचान्द्रपैत्रमात्रमानानि चत्वार्याह रवेश्च-

क्रभोग इति । रवेः सूर्यस्य । चक्रभोगो वृत्तभोगः कक्षावृत्तस्थित-द्वादशराशिभ्रमणम् । अर्कवर्षं सौरवर्षं प्रदिष्टमुक्तम् । मुनिभिरिति शेषः । तथा च प्रतिदिनं प्रवहवायुकृतभ्रमणेन चक्रभोगेऽपि रवेर्गति पश्चान्तेन स्वपूर्वगत्या द्वादशराशिभोगो यावता कालेन तन्मितकालः सौरवर्षम् । 'रविचक्राणि रव्यब्दा'' इति लघुवसिष्ठसिद्धान्तोक्तेः । प्रदिष्टमित्यनेनागम एव मानमिदम् । अस्मात् पूर्वपरिभाषयैकराशिभोगकालः सौरमासः । एकांशभोगकालः सौरदिनम् । एतत्प्रमाणं सौरषष्टिघट्यः । अत्रानुपातेन सावनचान्द्रनाक्षत्रघटिकाश्चानीयन्ते । एकसावनदिने गतिकलाभोगमि-द्गतिकलाभिः षष्टिसावनघटिकास्तदैकांशकलाभिः का इत्यनुपातेन सौरदिनमध्ये सावनघटिका गतिवशात् प्रत्यहं भिन्ना अपि मध्यगत्यैताः ६०। ५८ । चान्द्रदिनसावनघटीभिर्वक्ष्यमाणानीताभिश्चान्द्रषष्टिघटिकास्तदा सौरसावनागतघटीभिः का इत्यनुपातेन सौरदिने चान्द्रघटिकाः । मध्यमचान्द्रसावनघटीभिः ५९ । ४ मध्यास्तु ६१ । ५१ । नाक्षत्रसावनवक्ष्यमाणघटीभिर्नाक्षत्रषष्टिघटिकास्तदा सौरसावनागतघटीभिः का इत्यनुपातेन सौरदिने नाक्षत्रघटिकाः । मध्यमनाक्षत्रसावनघटीभिः ५९ । ५० मध्यास्तु ६१ । ३ । अत्र 'संक्रान्त्या सौर उच्यते'*—इति सूर्यसिद्धान्ताच्च मासाद्यन्यतममूलनिरूपणात् सौरमान वक्तुं शक्यमपि लाघवार्थं सौरवर्षस्य मुख्यत्वनिरूपणार्थं च सौरवर्षा-द्युक्तमिति ध्येयम् । अथ कल्पादौ प्रथमं मेषादिना सौरवर्षप्रारम्भान्मेषादिद्वादशराशिभोगोऽर्कवर्षं मुख्यम् । देवासुराणां मान-माह द्युरात्रमिति । तदेव मेषादिद्वादशराशिभोगोऽर्कवर्षं मुख्यम् । एवकारोऽन्ययोगव्यवच्छेदार्थः । तेन मकरादिद्वादशराशिभोगोऽर्कव-र्षस्य पुराणोक्तगौणस्य निरासः । देवासुराणां देवदैत्यानाम् । बहुत्वाद्बहुवचनम् । द्युरात्रमहोरात्रम् । चः समुच्चये । यद्यपि देवदैत्ययोः

* सूर्यसिद्धान्ते मध्यमाधिकारे १३ श्लो० ।

'सुरासुराणामन्योन्यमहोरात्रं विपर्ययात्' *—इति सूर्यसिद्धान्ते दिनरात्रि-विपर्ययोक्तेर्न स्वाहोरात्रकथनं युज्यते तथाऽपि अहोरात्रमानस्य तुल्यत्वेन तदुक्तौ तात्पर्यात् । अत एव न दैवासुरमानं भिन्नम् ।

"भचक्रपरिवर्त्तेन भानोर्दैवसुरद्विषाम् ।

अहोरात्रम्' † ॥

इति सूर्यसिद्धान्तो मानम् । 'अर्कवर्षं दिनं दिव्यम्'—इति लघु-वसिष्ठोक्तेश्च । तथा च यदस्माकं सौरवर्षं तत् तेषामहोरात्रम् । त्रिंशद्वर्षाणि मासः । षष्ठ्यधिकशतत्रयवर्षाणि वर्षमित्यादिपरिभाषया घट्याद्यपि ज्ञेयम् । इदं सौरं सौरमूलकत्वादिति सत्त्व । अथ चान्द्रमानमाह रवीन्द्वोरिति । सूर्यचन्द्रयोर्युतेः क्रान्तिवृत्तस्थतच्चिह्नैक्यकालमारभ्येत्यर्थः । यावत् यत्कालेनेत्यर्थः । अन्या द्वितीया सयुतिर्भवति स कालो विधोश्चन्द्रस्य मासः । अत्र योगः पूर्वापरान्तराभावः । कक्षावृत्ते तेनोर्ध्वाधरान्तरसत्त्वेऽपि न क्षतिः । अत्र शास्त्रे तस्यैव योगसंज्ञात्वात् । युतिद्वयान्तरकालश्चान्द्रो मास इत्यर्थः । 'दर्शान्तकालेऽवयवैर्गृहाद्यैः'-इत्युक्तेन 'राश्यादिसाम्ये मासान्ते' इति वसिष्ठोक्तेन च दर्शान्ते तयोरैक्यस्य सत्त्वाद्दर्शावधिरिति यावत् । 'मासो दर्शावधिश्चान्द्रः'—इति वसिष्ठोक्तेश्च द्वादशचान्द्रमासाश्चान्द्रवर्षम् । चान्द्रमासत्रिंशदंशश्चान्द्रदिनं तिथिः । अत्रापि दिनद्वारा मासादिनिरूपणम् । चान्द्रमासस्य मुख्यत्वसूचनार्थं लाघवाच्च । अन्यथा चान्द्रदिनस्य मासकरणेन पितृमानोक्तौ गौरवापत्तेः । चान्द्रदिनमानं चान्द्रषष्टिघट्यः । आसु सावनसौरनाक्षत्रघटिकाश्चिन्त्यन्ते । तत्र युतिद्वयान्तरकालस्य मासत्वोक्तेः प्रथमयुतिकाले सूर्यचन्द्रयो राश्याद्यवयवैनैकत्वाच्चन्द्रस्य शीघ्रगतित्वेन यावच्चान्द्रमासे सूर्यराश्यादिभोगस्तदधिकद्वादशराशिचन्द्रभोगे द्वितीययुतिसम्भवादन्यथा तद्योगानुपपत्तेः सूर्यचन्द्रयोर्द्वादशराश्यात्मकभगणान्तरेण चान्द्रमास इति सिद्धे—

* सूर्यसिद्धान्ते मध्यमाधिकारे १४ श्लो मानाध्याये च २५ श्लो ।
† सूर्यसिद्धान्ते मानाध्याये ४ श्लो० ।

"मस्यन्ते परिमीयन्ते स्वकला वृद्धिहानितः ।
मास एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः" ॥

इत्युक्तत्वात् त्रिंशत्तिथिदिनात्मकः । ततस्त्रिंशत्तिथिभिर्भगणाशतुल्यमन्तरं तदैकतिथ्या किमित्यनुपाताद्द्वादशभागान्तरम् । तथा चैकसावनदिने गत्यन्तरमधिकं चन्द्रः सूर्याद्गच्छति गत्यन्तरकलाभिः षष्टिसावनघटिकास्तदा पुष्पवतोरन्तरद्वादशभागकलाभिः का इति द्वादशभागान्तरात्मकैः चान्द्रदिने तिथौ सावनघट्यः । मध्यमगत्य-(५९ । ८ ॥ ७९० । ३५) न्तरेणा-७३१ । २७ नीतमध्यास्तु ५९ । ४ । सौरसावनघटिकाभिः षष्टिसौरघट्यस्तदा चान्द्रसावनघटीभिः का इत्यनुपातेन चन्द्रदिने सौरघटिका मध्यमसौरसावनघटीभि-६० । ५० मध्यास्तु ५९ । १२ वक्ष्यमाणनाक्षत्रसावनघटीभिर्नाक्षत्रषष्टिघटिकास्तदा चान्द्रसावनघटीभिः का इति चान्द्राहे नाक्षत्रघटिका मध्यमनाक्षत्रसावनघटीभिः स्वल्पान्तराभिः ६० । ५० मध्यास्तु ५९ । १४ । पितृमानमाह एतदिति । एतच्चान्द्रमासमानं पैत्रं पितॄणामिदं पैत्रं ह्युरात्रम् । चः समुच्चये । प्रदिष्टमित्यत्राप्यन्वेति ।

"त्रिंशता तिथिभिर्मासश्चान्द्रः पित्र्यमहः स्मृतम्"* ।

इति सूर्यव्याससिद्धान्तोक्तेः । तथा चैकचान्द्रमासः पित्र्यहोरात्रम् । त्रिंशच्चान्द्रमासाः पितृमासः । षष्ट्यधिकशतत्रयचान्द्रमासाः पितृवर्षमित्यादि सामान्यपरिभाषयाऽन्यदपि ज्ञेयम् । इदं पितृमानं चान्द्रं तन्मूलकत्वादिति सक्षेपः ।

"भुञ्जङ्गप्रयातं भवेद्यैश्चतुर्भिः" इति लक्षणाद्भुजङ्गप्रयाताख्यं पद्यम् ॥ १९ ॥

अथ सावननाक्षत्राख्यकालविशेषमाह इनोदयद्वयान्तरमिति । इनोदयद्वयान्तरं सूर्यविम्बक्षितिजयोर्योग उदयः । एवमेकदेशस्थद्व्युदयान्तर

* सूर्यसिद्धान्ते मानाध्याये १५ श्लो ।

यत्कालमितं तत् तत्कालमानं दिनमहोरात्रमर्कसावनं भवति । अत्र सावनानि स्युरेतेषाम्'*–इति सूर्यसिद्धान्तात् । सूर्योपलक्षणाद्ग्रहोद यद्वयान्तरं दिनषष्टिघटिकात्मकं ग्रहसावनं स्यादपि सूर्यसावनेनाखिल-व्यवहारात् सूर्यग्रहणं प्राधान्यज्ञानार्थम् । एतन्मानं सावनषष्टिघटिकाः । अत्र स्वस्वसावनमानघटिकाभिर्यथायोग्यस्वस्वषष्टिघटिकास्तदा षष्टि-सावनघटिकाभिः का इत्यनुपातत्रयेण सौरचान्द्रनाक्षत्रघटिकाश्चिन्त्याः । तास्तु मध्यममानेन सौराः ५९ । ८ । चान्द्राः ६० । ५० नाक्षत्रा-श्च ६० । ८ । अथ प्रतिप्रदेशं भिन्नकाले उदयसम्भवात् देशविशेषे-णानन्तसावनेभ्यो मानानामानन्त्यं स्यादत सर्वसावनानामनुगमार्थमाह तदेवेति । तत् सावनम् । एवकारोऽत्र सौरचान्द्रयोगव्यवच्छेदार्थः । तयोः सर्वत्रैककालसम्भवात् । मेदिनीदिनं कुदिनं भूक्षितोदयभेदात् । तथा चानन्त्येऽपि भूमेः सर्वत्र तुल्यत्वेन सामान्यात् तत्पदपूर्वकदिन-शब्देनानुगमादेकमानत्वसिद्धिरिति भावः ।

"सावनं स्यादिदं भानोरुदयादुदयं भवेत् ।
तदेव भूदिनम्" .. ...... ॥

इति वसिष्ठोक्तिश्च । अत्र त्रिंशद्दिनैः सावनो मासः । षष्ट्यधिकशत-त्रयदिनैः सावनं वर्षमित्यादि परिभाषया ज्ञेयम् । नाक्षत्रमाह भवासर इति । भभ्रमः । भानां नक्षत्राणां क्रान्तिवृत्तप्रदेशविशेषाणां भ्रमो वृत्ताका-राकाशमार्गगमनेन वृत्तपरिवर्त्तो भवासरो नक्षत्रसावनदिवसः । वासरस्य तावताऽभिधेयत्वात् । तुरेवकारार्थे । तेनास्य सावनत्वेऽपि न कुदिनव्यव-हारः किन्तु यथानिर्दिष्टत्वमिति भावः । अत्र कुदिनाभिधेयत्वे कुदिन-गुणे भक्ते इत्यादौ सूर्यकुदिनसत्त्वेऽपि नक्षत्रकुदिनैर्व्याकुलतापत्तेः । तथा प्रयोगाभावाच्च । भ्रमस्याकाशे इतस्ततः सम्भवेनोदयस्यैवाग्रहणात् कुदि-नाभिधेयत्वहेतोरभावाच्च । अत एव क्षितिजाकाशविशेषप्रदेशात् नक्षत्र-भ्रमेण प्रत्येकं नक्षत्रोदयद्वयान्तरकालात्मकेन नाक्षत्रदिनं मुख्यम् । प्रथमो

* सूर्यसिद्धान्ते मानाध्याये १६ श्लो- । तत्र 'सावनानि स्युरेतेन' इति पाठः ।

दयात्। नान्यत । अनेकत्वेन गौणात्। तद्भिन्नप्रमाणं नाक्षत्रषष्टिर्घटिका । आसु सावनसौरचान्द्रघट्यश्चिन्त्यन्ते । तत्र वारप्रवृत्तिकाले सूर्यनक्षत्रयोरेकस्यान्वत तद्भिन्ने युगपदुदयान प्रवहवायुव्याघातेन भचक्रे प्रत्येक चलिते नाक्षत्रषष्टिकाभिः केवला पूर्वगतिर्नक्षत्रोदयकाले स्वत पूर्वचलितस्य किञ्चिच्यूनद्युगतिकलाभि क्षितिजादन्तरेनस्यार्कस्य तदुदयात् नक्षत्रोदयद्वयान्तरकालादकभचक्रपश्चिमभोगजात् किञ्चिच्यूनगतिकलाङ्कितप्रवहवायुचलितभचक्रावयवक्षितिजयोगकाले सूर्योदयासम्भवाच्च । एतत्कालेऽपि सूर्यस्य किञ्चिच्यूनतुल्यपूर्वचलनेन क्षितिजतत्प्रदेशयोगे सूर्योदयावश्यसम्भवाच्च सूर्योदयद्वयान्तरेऽपि क्रमाज्जनदिने गतिकलायु क्रमचक्र भोगः सिद्धः । ततो गतियुक्तचक्रकलाभि षष्टिसावनघट्यस्तदा चक्रकलाभिः का इत्यनुपातेन नाक्षत्रदिने सावनघटिका मध्यास्तु ५९ । ५० । सौरचान्द्रसावनघटीभिः सौरचान्द्रषष्टिघट्य क्रमेण तदा नाक्षत्रसावनेन का इत्यनुपातद्वयेन नाक्षत्रदिने सौरचान्द्रघटिका । मध्यास्तु सौरा. ५८ । ५९ । चान्द्राः ६० । ४१ त्रिंशन्नाक्षत्रदिनानि नाक्षत्रमास. । षष्ट्यधिकशतत्रयनाक्षत्रदिनैर्वर्षमित्यादि पूर्वपरिभाषया ज्ञेयम् । ननु व्याख्यानमिदमयुक्तम् । इनोदयद्वयान्तरमित्यत्रेनपदस्योपलक्षणत्वेन भोदयद्वयान्तरमिति सिद्धेनोक्तनाक्षत्रस्वरूपेण पौनरुक्त्यापत्ते. । अतो भभ्रम श्चन्द्रेण सहेत्यध्याहृत्य चन्द्राधिष्ठितनक्षत्रभ्रम इत्यर्थाद्भ्रमपदेन भोगसिद्धेश्चन्द्रस्य नक्षत्रभोगकालो नाक्षत्रदिनमिति युक्ता व्याख्या । न चाध्याहारे सर्वग्रहाणामनुक्तानां तुल्यत्वेन चन्द्रासिद्धेरनेकनाक्षत्रापत्तश्चायुक्तमिति वाच्यम् ।

"चन्द्रनक्षत्रभोगेन नाक्षत्र दिनमुच्यते" ।

इति विष्णुधर्मोत्तरवचनात् । अत्र नाक्षत्रषष्टिर्घटिकात्मकदिने सावनसौरचान्द्रघट्यश्चिन्त्यन्ते । यदि चन्द्रगत्या सूर्यसावनषष्टिघट्यस्तदाऽष्टशत–८०० कलाभिः का इति नाक्षत्राहे सावनमध्य तु ६० । ४२ । अनेनोक्तप्रकारेण सौरम् ५९ । ५० । चान्द्रम् ६१ । ४० । एवं चन्द्रस्य

मुक्तादामाभिरामाभिनवमरकतग्रावमर्म्मुहूर्तं
गोविन्दस्यास्तु भूत्यै मदृशमसदृश दुग्धमुग्ध वपुर्नः ॥ १ ॥
धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते विवृतौ द्वितीयो
ऽध्याय. कलावुचितवृत्तिविनिर्णयाय ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेय-
विनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायां
द्वितीयोऽध्यायः ।

---

श्रीगणेशाय नमः ।

विश्वस्यानन्दकारिण्यास्त्रिभुवनजभरस्याप्यखिन्नः सहिष्णु-
र्वार वार भवेर्विनिजभजनकृतामर्थमिद्धो वरिष्णुः ।
भक्ताना वर्द्धयिष्णुर्दितितनयभुवा सम्पदामाहरिष्णु-
र्देवाना मर्त्त्यकारिण्युः सहृदयहृदयेऽप्याविष्क्रान्ता स विष्णुः ॥ १ ॥

धर्माधिकारिकुलकैरवकानेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते विवृतिस्तृतीया-
ध्याये विधीयत इहोदितशुद्धिसिद्धौ ॥ २ ॥

पूर्वोक्तधर्माणामपवादकमाशौच निर्णिनीषुस्तदपगमनोत्तम्भिता शुद्धि प्रतिपादयितु तृतीयाध्यायमारभते ।

तत्राध्यायार्थं प्रतिजानीते ।

अतः परं प्रवक्ष्यामि जनने मरणे तथा ।
दिनत्रयेण शुध्यन्ति ब्राह्मणाः प्रेतसूतके ॥ १ ॥

अतः पर प्रथमद्वितीयाध्यायाभ्यामैहिकामुष्मिकफलसाधनधर्म-प्रतिपादनानन्तर जननमरणयोर्नित्यनैमित्तिकादिकर्माधिकारपरिपन्थ्याशौचोपगमे, यथा पराशरवचः, यावता कालेन येन च स्नानादिना पूर्वं पराशरेण चतुर्वर्णशुद्धिरभिहिता तथा ता प्रवक्ष्यामि । तत्र ब्राह्मणाना शुद्धिकालमाह । प्रेतसूतके मरणाशौचे ब्राह्मणाः दिनत्रयेण शुध्यन्ति । ननु शुद्ध्येद्विप्रो दशाहेनेत्यादिवचनैर्विप्रस्य दशाहाशौचविधानात्त्रिरात्राशौच विरुद्धमिति चेत् । मैवम् । अस्य त्र्यहात्तूदकदायिन इति मनुवचनेन समानोदकविषयत्वात् । दशाहाशौचस्य तु सपिण्डविषयत्वेन वक्ष्यमाणत्वादित्याचार्याः । तच्चिन्त्यम् । (?) सयमतुदिनगेणाङ्गस्पर्शाभिप्रायम् । विशुद्धावङ्गस्पर्शविधिवशात् । वर्णाशौचोपक्रमभङ्गाच्च । तस्मादिदमेव व्याख्येयम् । त्रय च त्रय च त्रय चेति त्रयाणि, दिन च त्रयाणि च तेषा

समाहारो दिनत्रयं तेन च शब्दशक्त्यैव दशाहानि सिध्यन्ति । मनुरप्येवं दशाहपदं व्याचष्टे ।

अह्ना चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः ।
शवस्पृशो विशुध्यन्ति त्र्यहात्तूदकदायिनः ॥ इति ।

अत एवाह हारीतः ।

दशाह एव विप्रस्य सपिण्डमरणे सति ।
कल्पान्तराणि कुर्वाणः कलौ व्यामोहमृच्छतीति ॥

क्षत्रियादिशुद्धिकालमाह ।

**क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशाहकैः ।**
**शूद्रः शुद्ध्यति मासेन पराशरवचो यथा ॥ २ ॥**

क्षत्रियवैश्यशूद्रा द्वादशपञ्चदशत्रिंशद्दिनैः शुध्येयुरिति पूर्वपराशरवचनम् ।

यानि त्वेकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा ।
शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके ॥

इत्यादीनि शातातपादिप्रतिपादिताशौचसङ्कोचकराणि पक्षान्तराणि तानि युगान्तरविषयाणि । दाहकादिसमर्गाभावे वा । सम्पर्कं चेच कुर्वन्तीत्युपसंहारात् । सम्पर्के तु द्वयं ह्याशौचेन जायते कर्मायोग्यत्वं स्पर्शायोग्यत्वं च ।

तदुभयापवादे निमित्तमाह ।

**उपासने तु विप्राणामङ्गशुद्धिश्च जायते ।**
**ब्राह्मणानां विशुद्धौ तु देहस्पर्शो विधीयते ॥ ३ ॥**

उपासने गृह्याग्निहोमे स्वस्मिन्विप्राणामङ्गशुद्धिराशौचाभावो भवति । अत्र चरमोद्दिष्टस्यापि प्रेताशौचस्यास्पृश्यताधिक्येन प्रथमोपन्यासः । इयं चाङ्गशुद्धिः । द्रव्यस्य स्वत्वत्यागमात्रे, न तु सर्वेतिकर्तव्यतायां तस्या अन्यनिष्पाद्यत्वात् ।

यथाह जाबालः ।

"शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैरिति" ।

पारस्करोऽपि । "शालाग्नौ चैके अन्य एतानि कुर्युरिति" । ब्राह्मणादीनामङ्गस्पर्शस्तु प्रेताशौचे, सति सपर्के विशुद्धाविवाशौचापगम एव नान्तरा, सपर्काभावे त्वस्थिसञ्चयनविशिष्टाशौचत्रिभागानन्तरम् ।

चतुर्थेऽहनि कर्त्तव्यमस्थिसञ्चयनं बुधैः ।
ततः सञ्चयनादूर्ध्वमङ्गस्पर्शो विधीयते ॥

इति स्मरणात् । न प्रथमद्वितीयतृतीयदिनकृतकेवलास्थिसञ्चयनानन्तरम् । "अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च"ति कलिवर्ज्यप्रकरणे निषेधात् । एतेन

दशाहादित्रिभागेन कृते सञ्चयने क्रमात ।
अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः ॥

इत्यादिदेवलादिवाक्यानामुक्तविषयत्वमाविष्कृतम् । जननाशौचे तु स्पर्शनिर्णयं वक्ष्यति ।

इदानीं जननेऽपि वर्णानां शुद्धिकालमाह ।

**जातौ विप्रो दशाहेन द्वादशाहेन भूमिपः ।**
**वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥ ४ ॥**

जातौ जनने विप्रक्षत्रियवैश्यशूद्राः दशद्वादशपञ्चदशत्रिंशद्भिर्दिनैः शुध्यन्ति कर्मार्हा भवन्ति । यत्तु "नाशौचं सूतके प्रोक्तं सपिण्डानां क्रियावतां"मित्यङ्गिरोवाक्यं तत्प्रथमषष्ठदशमदिवसेषु पुत्रजन्मनिमित्तकदानषष्ठीपूजासुवासिनीपूजादिविषयम् ।

तथा च व्यासः ।

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥ इति ।

द्विविधस्याप्यशौचस्य पुरुषविशेषे सङ्कोचमुपपादयति ।

**एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ।**
**त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥ ५ ॥**

अग्निभिः श्रौतैर्वेदेन वेदाभ्यां वेदैरङ्गादिसहितेन च यः समन्वितो युक्तो विप्रः स एकाहाच्छुध्यति यस्तु केवलं वेदमात्रमेवाधीते नाग्निमान्

स त्र्यहाद् होमस्वाध्याययोरधिकारी भवति। यः पुनर्द्वाभ्यां हीनो द्वाभ्यामप्यग्निवेदाभ्यां हीनस्स दशाहेन इति।

तथा च दक्षः।

सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा।
षड्दशद्वादशाहाश्च पक्षो मासस्तथैव च॥
मरणान्तं तथा चान्यद्दश पक्षाश्च सूतके।
उपन्यासक्रमेणैव तन्मे निगदतः शृणु॥
ग्रन्थार्थभावं जानाति वेदमङ्गैः समन्वितम्।
सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम्॥
एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः।
हीने हीनतरे वापि त्र्यहश्चतुरहस्तथा॥
ततो हीनतमे चैव षडहः परिकीर्तितः।
ये दशाहादयः प्रोक्ता वर्णानां ते यथाक्रमम्॥
अस्नात्वा चाप्यहुत्वा च अदत्वाश्नंस्तथा द्विजः।
एवं विधस्य विप्रस्य सर्वदा सूतकं भवेदिति॥

अस्यार्थः। ग्रन्थार्थभावो भाष्यम्। अङ्गानि शिक्षादीनि। कल्पेतिहासः। रहस्यमुपनिषदः। क्रियावान्कर्मानुष्ठाता। एते वेदाग्न्यादयः षड्गुणाः। उपनिषदां वेदेष्वेवान्तर्भावः। एतैः षड्भिरुपेतो जननमरणयोः सद्यः स्नानेनैव शुध्यति। पञ्चभिर्युक्त एकाहेन चतुर्भिर्युक्तस्त्र्यहेण त्रिभिर्युक्तश्चतुरहेण द्वाभ्यां युक्तः षडहेन द्वाभ्यामपि विहीनो दशाहादिना वर्णक्रमेणेति। एषां च षण्णां पक्षाणां मध्ये त्रय एव पक्षाः पराशरस्य समता इत्युक्तं पराशरवचो यथेत्यनेन।

यस्तु कलिवर्ज्येषु वृत्तस्वाध्यायसापेक्षोऽघसङ्कोचनिषेधस्सोऽवशिष्टसद्यः शुध्यादिपक्षत्रयाभिप्रायेणेति न विरोधः। यः स्मृत्यन्तरीयाशौचसङ्कोचस्स साम्प्रतं तु नेत्यर्थः। तुशब्दस्य निषेधार्थत्वात्। विधिनात्वेकवाक्यत्वादितिवत्। वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथेति कलिवर्ज्ये स्मरणात्। इदमित्थमेव व्याख्येयमन्यथा कलिधर्मप्रवचनप्रवृत्तस्य कलिवर्ज्यधर्माभिधानेनाचार्यस्याश्रद्धेयवचनता स्यात्। यत्तु एकाहाशौचमश्वस्तनिकस्य त्र्यहाशौचं च त्र्याहिकस्य अग्निवेदसमन्वितत्वकेवलवेद-

त्वयोरुपादानमेकाहत्र्याहाशौचविधिस्तुत्यर्थत्वेनाधिकारिविशेषणत्वाभावादिति। तन्न। आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनितया तथेति कलावश्वस्तनिकादिवृत्तेर्निषेधात्। तस्माद्यथोक्तमेव साधीयस्तेन सर्वेषामविशेषेण दशाहाद्येवाशौचमिति।

एवं गुणोत्कर्षेणाशौचसङ्कोचमपोह्य गुणापकर्षेणाशौचाधिक्यमपि अपवदति।

जन्मकर्मपरिभ्रष्टः सन्ध्योपासनवर्जितः।
नामधारकविप्रस्तु दशाहं सूतकी भवेत्॥ ६॥

जन्म निमित्तं कर्म गर्भाधानजातकर्मादिसंस्कारस्तत्परिभ्रष्टः सन्ध्यावन्दनमुपासनं गृह्याग्निपरिचरणं ताभ्यां वर्जितः स नामधारको विप्रस्तस्य दशाहमेवाशौचमिति। नामधारकस्वरूपमाह व्यासः।

गर्भाधानादिभिर्मुक्तस्तथोपनयनेन च।
न कर्मविन्न वाधीते स भवेन्नामधारकः॥ इति।

यत्तु।

क्रियाहीनस्य मूर्खस्य महारोगिण एव च।
यथेष्टाचरणस्याहुर्मरणान्तमशौचकम्॥

इति कूर्मस्मरणं तत्, तन्निन्दार्थं न यावज्जीवाशौचविधायकं न वर्द्धयेदघाहानीति मनुस्मरणात्।

इदानीमसवर्णसपिण्डाशौचमाह।

एकपिण्डास्तु दायादाः पृथक्दारनिकेतनाः।
जन्मन्यपि विपत्तौ च तेषां तत्सूतकं भवेत्॥ ७॥

एकः पिण्डो ब्राह्मणादेर्देह उत्पादको येषां ते एकपिण्डाः पृथक् भिन्नजातीया दाराः स्त्रियो निकेतनान्युत्पत्तिस्थानानि येषां ते पृथग्दारनिकेतनास्ते दायादाः दायं पिण्डमाददतीति दायादास्सपिण्डास्तेषामुत्तमवर्णसम्बन्धिनि जनने मरणे च तत्सूतकं तेषामुत्तमवर्णानां यत्सूतकमाशौचं तत्कालेनैव शुद्धिरिति। यद्यपि "कन्यानामसवर्णानां विवाहश्च द्विजा-

तिभिरि''त्यनेन कलावमवर्णाकन्यापरिणयनिषेधेनैव विजातीयमपिण्डाभावेन तदाशौचाभिधानमनुपपन्नं तथापि पूर्वयुगोत्पन्नानामेव तेषामत्रापि कियत्कालमनुवृत्तेर्युक्तमेव तदाशौचाभिधानम् । एतेनासवर्णसापिण्ड्यवचनमनन्तरोच्यमानं व्याख्यातम् । तदाह देवल ।

सर्ववर्णेषु दायादा ये स्युर्विप्रस्य बान्धवाः ।
तेषां दशाहमाशौचं विप्राशौचे विधीयते ॥ इति ।
एतच्चाविभक्तानां, विभक्तानां तु मातृजातीयमेव ।
तथाचापस्तम्बः ।
क्षत्रविट्शूद्रजातीनां स्पर्शेन्मृतकसूतके ।
तेषां तु पैतृकाशौचं विभक्तानां तु मातृकमिति ॥

विभाग पितृमरणस्याप्युपलक्षणम् ।
तथा च जाबाल. ।

नानाजातिषु पारक्यं पैतृकं जीवतः पितुः ।
अतीते मातृकं विद्यात्पारक्यमुभयोरपीति ॥

नानाजातिषु मूर्द्धावसिक्तादिष्वाशौचविशेषाभावात्पारक्यं तच्च जीवतः पितु जीवति पितरि मातृकमुभयथाप्युभयोर्जननमरणयोः पारक्यमेवेति । एवं विजातीयपत्नीनामपि । तदाह हारीतः ।

मृतसूतेषु दासानां पत्नीनां चानुलोमतः ।
स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौतकमिति ॥

यौतकं स्वजातीयम् । एवमुत्तमस्याप्यधमाशौचे स्वकालेनैव शुद्धिः ।
तदुक्तं ब्राह्मे ।

ब्राह्मणेषु च विप्रस्य क्षत्रविट्शूद्रजातिषु ।
मृतेषु वाथ जातेषु दशाहाच्छुद्धिरिष्यते ॥
क्षत्रियस्याथ वैश्यस्तु वैश्यस्य वृषलस्तथा ।
जायते म्रियते बन्धुस्तत्राशौचं स्वकं भवेदिति ॥

इदानीं सवर्णासवर्णसापिण्ड्यनिर्णयमाह ।

**तावत्तत्सूतकं गोत्रे चतुर्थपुरुषेण तु ।**
**दायाद्विच्छेदमाप्नोति पञ्चमे वात्मवंशजः ॥ ८ ॥**

तेषां विजातीयानां सूतकमाशौचं तत्सूतकं तावत्पर्यन्तं प्राप्नोति यावच्चतुर्थपुरुषेण विच्छेदमाप्नोतीति सम्बन्धः। ततश्च चतुर्थपुरुषे सापिण्ड्यनिवृत्तिहेतुकाशौचाभावप्रतिपादनेन त्रिपुरुषमेव सापिण्ड्यं विजातीयानामुक्तं भवति।

तथा च वृद्धपराशरः।

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजास्विति ॥

शङ्खोऽपि।

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिष्विति ॥

य एकस्माद् ब्राह्मणादेर्जाताः पृथक्क्षेत्रा विजातीयमातृकाः पृथग्जना विजातीयाः एकपिण्डाः सपिण्डाः पृथक्शौचाः विजातीयाशौचास्तेषां त्रिपुरुषमेव सापिण्ड्यमिति। आत्मवंशजस्समानजातीयस्तु पञ्चम एव दायात्पिण्डाद्विच्छेदं प्राप्नोति सापिण्ड्यान्निवर्तत इति। ततश्च चतुःपुरुषमेव सापिण्ड्यं समानजातीयानां सिध्यति, दायपदग्रहणाद्दायग्रहणेऽपि चतुःपुरुषमेव सापिण्ड्यं गमयति।

तदाह देवलः।

अविभक्तविभक्तानां कुल्यानां वसतां सह।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः ॥
तावत्कुल्याः सपिण्डाः स्युः पिण्डभेदस्ततः परम्।
समं तत्र सपिण्डानां दायार्थस्य विभाजनम् ॥ इति।

वाशब्दस्त्वर्थः। न सप्तमादिपुरुषग्रहणार्थः। तत्र सापिण्ड्यनिमित्तपूर्णाशौचाप्रतिपादनात्। तथा च गौतमः। पिण्डनिवृत्तिः पञ्चम इति। यत्तु सप्तमे वेति तदीयमेव, यश्च मानवीयं यच्च बृहत्पराशरीयं सप्तमे विनिवर्तत इति तन्नितयमप्युक्तरीत्या न प्रकृतोपयोगियुगान्तरविषयत्वात्। समानासमानजातीयसापिण्ड्यं गोत्रैक्य एव पूर्णाशौचनिमित्तमिति वक्तुं गोत्रे इत्युक्तं तथा च शङ्खलिखितौ।

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।
पिण्डश्चोदकदानं तु शौचाशौचं तदानुगमिति ॥

गोत्रतो गोत्र एव सपिण्डता, पिण्डोदकपूर्णाशौचनिमित्तं न प्रत्येकमत एव दत्तपुत्रादिषु सत्यपि जनकसापिण्ड्ये सगोत्रत्वाभावाच्च परस्पराशौचादि ।

तथा च मनुः ।

गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ इति ।

पुत्र ददतः पितुस्तत्कृता स्वधा व्यपैति यतो गोत्राद्यनुगः पिण्ड-इति । यद्वा वाशब्दो विकल्पार्थः । स च विवाहे षष्ठपरिग्रहार्थः । तदाह सत्यशङ्कः ।

चतुर्थीमुद्वहेत्कन्या चतुर्थः पञ्चमोऽपि च ।
पाराशर्यमतात्षष्ठीं पञ्चमो न तु पञ्चमीमिति ॥

अस्यार्थः । चतुर्थीमुद्वहेत्कन्या चतुर्थ इति विजातीयसापिण्ड्यविषयम् । तेषां त्रिपुरुषसापिण्ड्याभिधानात् । स जातीयसापिण्ड्ये विशेषमाह । पञ्चमोऽपि निवृत्तसापिण्ड्योऽपि चतुर्थी विद्यमानमूलपुरुषसापिण्ड्या त्रीनतीत्य पितृत इति पैठीनसिस्मरणात् । त्रीनतीत्येति विजातीयसापिण्ड्याभिप्रायम् । पञ्चातीत्येति सजातीयसापिण्ड्ये ज्ञेयम् । तस्मात्सिद्धमाशौचे च नोद्वहेत् । असपिण्डः, असपिण्डामुद्वहेदिति नियमात् । स च नियमः याज्ञवल्कीये । असपिण्डाम्, एतैरेव गुणैर्युक्त इत्यत्र स्पष्टः । तदेव स्पष्टयति । पञ्चमः चतुर्थीमुद्वहेदिति । पञ्चपुरुषसापिण्ड्यपक्षे षष्ठः षष्ठीं तत्र त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः षष्ठ पुरुष विवाहे चतुर्थं पुरुष पञ्चमपुरुष वेति । पञ्चमो न पञ्चमीमुद्वहेदिति ।

एवमुक्तस्य सापिण्ड्यस्यान्वयव्यतिरेकाभ्यां पूर्णाशौचनिमित्ततामाह ।

**चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पञ्चमे ।**
**षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात् ॥ ६ ॥**

कूटस्थमारभ्य गणनया चतुर्थपुरुष यावद्दशरात्रमाशौच तावदेव सापिण्ड्यानुवृत्तिः। पञ्चमे षड्रात्र षष्ठे चतूरात्र सप्तमे त्रिरात्रमिति। ननु "सपिण्डता तु पुरुषे सप्तमे विनिवर्तते। दशाह शावमाशौच सपिण्डेषु विधीयत" इत्यादिवाक्यैः सप्तमपुरुष यावत्सापिण्ड्य तन्निमित्तमाशौच च बोधितमतः कथमिद पञ्चमादीना षड्रात्रादिकमाशौचमिति। सत्यम्। पञ्चमादिषु सापिण्ड्यनिवृत्तिबोधनेन तन्निमित्तपूर्णाशौचाभावप्रतिपादन न विरुध्यते निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात्। सापिण्ड्यनिवर्तकवचनविरोधस्य च युगभेदेनैव परिहृतत्वात्। नन्वेव पञ्चमादीना समानोदकत्वेन त्र्यहात्तूदकदायिन इति त्रिरात्रमाशौचमेव स्यान्न षड्रात्रादिकमिति चेत्। सत्यम्। विशेषविधिना-त्रापोदितत्वन तस्य सप्तमादिपुरुषविषयत्वात्।

उक्तस्य प्रेताशौचस्य क्वचिदपवादमाह।

**भृग्वग्निमरणे चैव देशान्तरमृते तथा।**
**बाले प्रेते च सन्यस्ते सद्यः शौचं विधीयते ॥ १० ॥**

भृगुप्रपाताग्निप्रवेशाभ्या चकारादनाशकादिभिश्च बुद्धिपूर्वकविहितप्रकारेण मरणे सद्य शौच कार्यम्। अविहितमरणे त्वाह च गौतम। "गोब्राह्मणहतानामन्वक्ष राजक्रोधाच्चायुद्धे प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतामिति।

अन्वक्ष यावच्छवदर्शनमाशौच नेदमाशौचान्तरविधान किं तु प्राप्तदशाहाद्यपवादमात्रबोधनम्।

व्यापादयेदिहात्मान स्वय योऽग्न्युदकादिभिः।
विहित तस्य नाशौच नापि कार्योदकक्रिया॥

इत्यापस्तम्बेन विहिताशौचापवादबोधनात्। अयमप्याशौचापवादो यावत्सवत्सरमेव न सर्वात्मना।

गोब्राह्मणहताना च पतिताना तथैव च।
ऊर्ध्वं सवत्सरात्कुर्यात्सर्वमेवौर्ध्वदैहिकमिति॥

यद्विशन्मते संवत्सरानन्तरं सर्वौर्ध्वदैहिकविधानात् । संवत्सरानन्तरमौर्ध्वदैहिके विशेषं पञ्चमाध्याये स्वयमेव वक्ष्यति अभ्यनुज्ञातमरणे तु विशेषमाह शातातपः ।

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेदिति ॥

स न प्रकृतोपयोगी "भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथेति" कलिवर्ज्यस्मरणात् । तथा च वायवीयसंहितायाम् ।

तथापि मरणं शस्तं भृग्वग्न्यनशनादिभिः ।
शास्त्रविस्रम्भधीरेण मनसा क्रीयते यतः ॥
एतेष्वन्यतमोपायं कथमप्यवलम्ब्य वा ।
सद्यः सिद्धिमवाप्नोति वान्यथा म्रियते यदि ॥
पशूनामिव तस्येह न कुर्यादौर्ध्वदैहिकम् ।
नैवाशौचं प्रसज्येत तत्पुत्रादेर्विशेषतः ॥
अथैनमपि चोद्दिश्य कर्म चेत् कर्तुमीप्सितम् ।
कल्याणमेव कुर्वीत भक्त्या भक्तांश्च पूजयेत् ॥ इति ।

कल्याणं महोत्सवं शैववैष्णवादिपूजनमिति यावत् । देशान्तरमृते तथा असपिण्डे श्वशुरश्यालादौ देशान्तरमृते सद्यः शौचम् । तदाह मनुः ।

बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥ इति ।

अत्र देशान्तरस्थेनासपिण्डो विशेष्यते । अन्यथा "विगतं तु विदेशस्थमि"त्यनन्तरेण पौनरुक्त्यं स्यात् । देशान्तरलक्षणं तु मनुराह ।

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥ इति ।

बृहस्पतिरपि ।

देशान्तरं वदन्त्येके षष्ठियोजनमायतम् ।
चत्वारिंशद्वदन्त्येके त्रिंशदन्ये तथैव चेति ॥

योजनलक्षणं तु स्मृत्यन्तरेऽभिहितम् ।

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ॥
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ।
वितस्तेर्द्विगुणोऽरत्निस्तस्मात्किष्कुस्ततो धनुः ॥
धनुःसहस्रे द्वे क्रोशो योजनं तच्चतुष्टयमिति ।

बाले अजातदशाहे प्रेते मृते तत्सपिण्डानां सद्यः शौचम् । तथा च कात्यायनः ।

अनिवृत्ते दशाहे तु पञ्चत्वं परिगच्छति ।
सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रियेति ॥
इयं च सद्यः शुद्धिः प्रेताशौच एव न सूत्याशौचेऽपि ।
दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥

इति हारीतस्मरणात् । एवं मृतजातेऽपि जातमृते मृतजाते वा सपिण्डानां सद्यः शौचमिति स्मरणात् । एतच्च नाभिच्छेदनादूर्ध्वं वेदितव्यम् ।

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥

इति जैमिनिस्मरणात् ।

नाभिच्छेदनात्पूर्वं बृहन्मनुराह ॥

जीवञ्जातो यदि ततो मृतः सूतक एव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकमिति ॥

सन्यस्ते प्रव्रजिते मृते तत्सपिण्डानां सद्यः शौचं चकारात् क्लीबवैखानसयोरपि ग्रहणम् ।

देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः ॥

इति स्मरणात् ।

इदानीं प्रोषितसपिण्डमरणाशौचमाह ।

**देशान्तरगतः कश्चित्सगोत्रः श्रूयते यदि ।**
**न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत् ॥२१॥**

सगोत्रः सपिण्डः पूर्वोक्तलक्षणो देशान्तरगतो नेति यदि श्रूयते मृतः श्रूयत इति यावत् । तदा दशाहानन्तरं त्रिपक्षं यावत्त्रिरात्रं, तदूर्ध्वं षण्मासं यावत्पक्षिणी, सा च एकरात्रमध्यस्थितमहर्द्वयमेकदिनमध्यस्थितरात्रिद्वयं वोपलक्ष्यते । तदूर्ध्वमानवममहोरात्रं तदूर्ध्वं सद्यः स्नानेन शुद्धिस्तत्सपिण्डानां भवति । तदाह वृद्धविष्णुः ।

> अर्वाक्त्रिपक्षात्त्रिनिशं षण्मासाच्च दिवानिशम् ।
> अहस्संवत्सरादर्वाग्देशान्तरमृते सतीति ॥

दिवानिशं पक्षिणी ।

देवलोऽपि ।

> आत्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः ।
> परमेकाहमावर्षादूर्ध्वं स्नानेन शुध्यतीति ॥

स्नानमुदकदानस्याप्युपलक्षणम् । "सर्वथा संवत्सरे पूर्णे स्नात्वा दत्त्वोदकं शुचिरिति" स्मरणात् । यत्तु दूरदेशमृते जाते सद्यः शौचमुदाहृतमिति बृहस्पतिवाक्यं तदूर्ध्वं वेदितव्यम् । दशाहान्तःश्रवणे तु शेषाहोभिरेव शुद्धिः ।

> विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।
> यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥

इति मनुस्मरणात् । एतच्च ज्ञातिमात्रविषयम् ।

पितृविषये तु ।

> पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।
> श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥

इतिपैठीनसिना विशेषस्मरणात् । दशाहान्तस्तु पित्रोरपि मरण-श्रवणे शेषाहोभिरेव शुद्धिः ।

असमीपे पितु. प्रेत श्रुत्वा देशान्तरे सुतः ।
तिलमिश्रोदक कृत्वा तच्छेषेण विशुध्यति ॥

इति शातातपस्मरणात् । सपत्नमातरि तु दशाहानन्तर त्रिरात्र-मेव तदाह दक्षः ।

पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमः ।
संवत्सरेऽप्यतीतेऽपि त्रिदिनमशुचिर्भवेदिति ॥

एतश्चातिक्रान्ताशौचमुपनीतोपरम एव ।

तथा च व्याघ्रः ।

तुल्य वयसि सर्वेषामतिक्रान्ते तथैव च ।
उपनीते तु विषम तस्मिन्नेवातिकालजमिति ॥

आदन्तजन्मनः सद्य इत्यादिवक्ष्यमाणमिद चातिक्रान्तमाशौच सर्ववर्णसाधारण उपनयनानन्तर स्वस्वजातिविहितमतिक्रान्ताशौच चेत्य-र्थः । जनने त्वतिक्रान्ताशौच नास्ति "नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपीति" देवलस्मरणात् । पुत्रजन्मश्रवणे तु पितुः स्नानमस्त्येव ।

निर्दश ज्ञातिमरण श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥

इति मनुस्मरणात् । इद दशाहान्तस्तत्रापि शेषाहोभिरेव शुद्धिः ।

देशान्तरगत श्रुत्वा कल्याण मरण तथा ।
यच्छेष दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ इति शङ्खस्मरणात् ।

इदानीं प्रोषितमरणात्तिथ्याद्यज्ञाने कदा श्राद्धादि कार्यमित्यत आह ।

**देशान्तरं गतो विप्रः प्रवासात्कालकारितात् ।**
**देहनाशमनुप्राप्तस्तिथिर्न ज्ञायते यदि ॥ १२ ॥**
**कृष्णाष्टमी त्वमावास्या कृष्णा चैकादशी च या ।**
**उदकं पिण्डदानं च तत्र श्राद्धं च कारयेत् ॥ १३ ॥**

पूर्वोक्तलक्षणे देशान्तरे गतो यो विप्रोऽन्यो वा क्षत्रियादिर्देहनाशं मरणमनुप्राप्तस्तत्र तस्मिन्मृते कालेन पञ्चदशवर्षादिना कारित कालकारित प्रतीक्षणमिति शेषस्तस्मात्कालकारितात्प्रतीक्षणादनन्तरमर्थात् प्रवसत्यस्मिन्काले इति प्रवासो मासपक्षतिथ्यादिस्तस्मादिति ल्यब्लोपे पञ्चम्यन्तं प्राप्य उदकमुदकदानं पिण्डदानं चकाराद्दाहाशौचादि च कारयेत्कुर्यात् ।

तदाह जातूकर्ण्यः ।

प्रोषितस्य पितुर्यत्र न वार्ता नैव चागमः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ।
तदानीमेव सर्वाणि प्रेतश्राद्धानि कारयेदिति ॥

तदानीं तत्प्रवासतिथावित्यर्थः ।

जाबालिरपि ।

यन्मासे यत्र दिवसे यो गतस्तस्य तद्दिने ।
कुर्यात्प्रतिकृतिर्दाह दिनाज्ञानेऽपि तत्कृतैरिति ॥

प्रोषितमृतस्य तु यदि तिथिरर्थान्मरणतिथिर्वं ज्ञायते तिथिमात्रस्य विशिष्योपादानान्मासो विज्ञायत इति सिध्यति । तथा च मरणमासे ज्ञाते तिथिमात्रे चाज्ञाते यास्तन्मासकृष्णपक्षाष्टम्येकादश्यमावास्यास्तत्र तासु श्राद्धं मासिकवार्षिकादि चकारात्पूर्वोक्तं दाहाशौचादि कर्मापि कारयेत्कुर्यात् ।

तदाह बृहस्पतिः ।

न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति ।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शं स्यात्तदाब्दिकमिति ॥

मरीचिरपि

श्राद्धविघ्ने समुत्पन्ने त्वविज्ञाते मृताहनि ।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥
मार्गशीर्षे तदा मासि माघे वा तद्दिनं भवेदिति ।

तदा मार्गशीर्षे मासीति वाचवः। एतदुभयाज्ञाने प्रवासमासतिथावित्युक्त प्रवासादित्यनेन।

तथा च बृहस्पतिः।

दिनमासौ न विज्ञातौ मरणस्य यदा पुनः।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशेति॥

प्रस्थानदिनमासयोरप्यन्यतराज्ञाने तन्मासदर्शादाषाढादिमासेषु वा तद्दिनमिति पूर्वोक्तादितिदिक्। सर्वाज्ञाने तु श्रवणदिन एव। तदाह प्रचेताः। अपरिज्ञातेऽमावास्यायां श्रवणदिवसे चेति।

इदानीं दशाहानन्तरं बालमरणे कथमित्यत आह।

**अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः।**
**न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया॥ १४॥**

न जाता उत्पन्ना दन्ता येषां ते अजातदन्ता बालास्तेषां मरणे अग्निना संस्कारो दाहः आशौचमुदकक्रियोदकदानं च न कर्तव्यमिति तदाह विष्णुः। "एवं अजातदन्ते बाले प्रेते सद्य एव नाग्निसंस्कारो नोदकक्रियेति"। असंस्कार्यप्रसङ्गेन स्मृतमाह। ये च गर्भाद्गर्भकोशाद्विनिसृताः पतितास्तेषामपि पूर्वोक्तदाहादि न कर्तव्यम्।

तथा च ब्रह्मपुराणे।

स्त्रीणां तु पतितो गर्भः सद्यो जातो मृतोऽथ वा।
अजातदन्तो मासैर्वा मृतः षड्भिर्गतैस्तथा॥
वस्त्राद्यैर्भूषितं कृत्वा प्रक्षेप्तव्यः स काष्ठवत्।
खनित्वा तु शनैर्भूमिं सद्यः शौचं विधीयते॥ इति।

चकारस्त्वकृतचूडत्रिवर्षयोरपि दाहोदकक्रियानिषेधज्ञापनार्थः। पक्षे तदभावस्य वक्ष्यमाणत्वात्। आशौचे तु तयोर्विशेषमादन्तजन्मन इत्यत्र स्वयमेव वक्ष्यति।

इदानीं मातुर्गर्भस्रावाद्याशौचमाह।

**यदि गर्भो विपद्येत स्रवते चापि योषितः।**
**यावन्मासस्थितो गर्भो दिनं तावत्तु सूतकम्॥१५॥**

*Objection* "We find fire under certain conditions produc- 'ing the effect of burning, and at another time we find "that the same fire under the same conditions does not produce "any such effect when brought into close touch with certain "incantations or medicinal herbs, and if the visible form of "the fire were the cause of the burning, then as the visible form "of fire remains the same in the latter case also, there could "not be an absence of burning As a matter of fact however "we do find this absent, and this clearly shows that there is "some sort of incapacity in the invisible form of the fire and "thereby proves the fact of potency itself being something "quite imperceptible, a potency the suppression or destruction "whereof is brought about by the incantation &c In cases "where counter-remedies are found to revive the potency "there has been a mere suppression, whereas when there is an "absolute absence of the necessary effect, there is destruction of the potency

[Page 145] "*Objection* 'The incantation is neither in contact "with, nor inherent in the fire, and as such how could it destroy "the potency that existed in a wholly different substratum from "itself? If it does destroy such things, then it would destroy "anything and everything'

"*Reply* But the fact is that the incantation is aimed "at the potency of the fire Just as the 'murderous rites,' "even though having no material connection with any person "kill only that person against whom they are aimed, and no "other person,—so, in the same manner, the incantation would "destroy the potency only of that individual fire against which "it would be aimed, and not of all fires

"*Objection* 'If Potency is of the nature of Substance, "then it could be destroyed only by the destruction either of "its material or of its immaterial cause, and if it be held "to be of the nature of Qualities, then it could be destroyed

"either by the destruction of its substratum, or by the produc-
"tion of another Quality of a contrary nature'

"*Reply* We do not admit of these conventional laws of "yours Whenever we find the destruction of one thing following from something else we always regard this latter "to be the cause of that destruction and we do not accept "any such hard and fast rule as you speak of, as all such "rules are condemned by facts of direct perception Even if "it be absolutely necessary to accept your laws we might accept "them as applicable only to the destruction of those Substances "and Qualities wherein they are found to be operative Potency "however is something like Similarity, wholly different from "Substance Quality and the other categories, and as such it "could be open to other modes of destruction also

"*Objection* 'The potency of fire is inferred from the pro- "duction or non-production of its effects, but how is it that you "assume its existence in all things?'

"*Reply* Having in one case, that of fire, assumed its "existence on the strength of its effects, we infer, from similar "circumstances, its existence in other things, whenever we find "these latter also producing definite effects'

To the above we make the following reply —The absence of the proper effects (of fire), in the presence of incantations &c, does not indicate any invisible form Because, just as of *burning* we regard fire to be the cause,—inasmuch as it has its power of burning fully known by positive as well as negative concomitance,—so in the same manner is also the *prior non-existence of obstacles in the shape of incantation &c* accepted as the cause (of burning), and when this 'non-existence' would be set aside by the reciting of the incantation, it is only natural that there should be no burning, for the simple reason that the necessary accessory circumstances in the shape of the non-existence of obstacles would not be present,—and the absence of

burning thus would not be due to the absence of due '*potency*' in the fire.

*Objection:* "A positive effect is always found to proceed from a positive cause,—and as such no positive effect (like *burning*) could have a negative cause (in the shape of the '*non-existence* of obstacles')."

*Reply:* Not so; because we find sin (a positive thing) being produced by the *non-performance* of the necessary religious duties; if it were not so, then the laying down of expiatory rites for such omissions would be absolutely useless and superfluous.

*Objection:* "The sin, involved in the non-performance of necessary duties, is produced by the *performance* of some other acts (at the time for which the necessary duties are laid down),—and it is not due to the mere non-existence, or absence, of the performance of those duties."

*Reply:* The non-performance of the necessary duties must be regarded at least as an aid in the producing of the sin,—specially as Sin is always found to appear when there is such a *non-performance.*

*Objection:* "In regard to the case of the burning by fire when there are counter-incantations, you have said that when the obstacle (to burning) in the form of the incantation is put forth, the absence of this obstacle ceases, and hence there is burning. But in that case, when the obstacle would be set aside after having been brought in once, then too there could be no *burning*; as there would be no *prior* non-existence of the abstacle (which will have disappeared after having come in); and it is such non-existence that you hold to be the cause of the burning. As a matter of fact however, we find that when obstacles to burning are set aside by means of counter-incantations, *burning* does appear. And hence we conclude that no negative entity can be the cause; and it is only positive Potency

that could be accepted as the cause, and even in a case where after the burning has been stopped by one incantation, and revived again by means of another incantation, we can safely assume that the former incantation held the potency in check, and the latter let it lose and made it operative again"

*Reply* This is not admissible because so long as a visible explanation is available, we cannot rightly have recourse to any invisible factors As causes of certain effects (put forward above) we may have certain circumstantial accessories aided sometimes by the absence of preventive incantations, at other times by the presence of favouring incantations, and what objection have you got to this explanation that you seek to assume the existence of invisible substances? As a matter of fact we often find that a single effect has got various kinds of circumstantial accessories for its cause For instance, Fire is produced out of the rubbing together of two sticks as well as from the solar gem This is the secret of the Logican's theory The secret of the Mímansa theory I have explained in the *Tattvaprabodha*

**[Page 146]** *Question* "We have understood that Conjunction is the basis of the notion of two things being *joind together*, but what is the form of this Conjunction? and what are its varieties? In the text we have the expression '*kathamlakshanah*', and here '*katham*'=*kim*, 'what,' as in the expression '*ko dharmah kathanlakshanakah*' (*Sābara-Bhashya*), and '*lakshana*' is '*Svarūpa*,' 'form.'"

The author gives the answer to this question, and in doing this, he supplies the definition of Conjunction *Conjunction is the coming together of two things that were apart from each other* The qualification 'apart from each other' is added with a view to distinguish Conjunction from Inherence

The author next proceeds to point out the different kinds of Conjunction *It is of three kinds only* (1) *Anyatarakar-*

*maja*—the conjunction brought about by the action of one of the two substances in contact; (2) *Ubhayakarmaja*—that brought about by the action of both substances, and (3) *Sanyogaja*—that due to another Conjunction. To the former kind belongs the conjunction of an active or mobile,—substance with another substance which is inactive or immobile,—e. g. the conjunction of the fixed post with the flying kite alighting upon it; and also that of all-pervading substances with corporeal substances,—the all-pervading substances being immobile and inactive, and the corporeal substances being mobile and of limited extension.

*Objection*: "In the case of two things or persons, both of which are moving, though with different degrees of speed,—we find them coming in contact with each other; and in this case the Conjunction is surely due to the action of any one of the two things; why then should the first kind of Conjunction be specified as that between an *active* and an *inactive* substance?"

*Reply*: True; but what is meant by 'inactive' is only that one of the two substances is devoid of the action that tends to bring about the Conjunction (and not that it has no action at all).

Some people say that in the case of the Conjunction of the kite with the post, there is first, the Conjunction of the atoms of the kite's feet with the head of the post; and then that of the whole substance *kite* with the whole substance *post*; and here the former Conjunction of the parts is 'due to action' *Karmaja*, and the latter Conjunction of the two *wholes* is 'born of Conjunction,' *Sanyogaja*.

But this is not admissible; specially as the Conjunction is between one active *whole* with another *whole*. If this be not accepted, then, inasmuch as the parts also would be *whole* in comparison with their own constituent parts, the Conjunction 'born of action' among *wholes* would become altogether im-

possible And then it would become necessary to deny the activity of all *wholes*, or to set aside the definition of *Action*, as 'the independent cause Conjunction and Disjunction,'—atleast in so far as the action of wholes is concerned How many of such pitfalls shall I point out in the way of those people who renounce the paths of reasoning and the teachings of great masters'

[Page 147] As an instance of the Conjunction of the second kind we have the collision of two things moving in opposite directions By 'opposite directions are meant those directions, by moving towards which two things come finally to obstruct each other,—e g North and South, East and West The compound '*Viruddhadikkriyayoh*' is to be taken as '*Karmadhāraya*' in the first instance—'*Viruddhē diçāu*' 'opposite directions,'—and then as *Bahuvrīhi*—'*Viruddhadiçoh kriyā yayordravyayoh*' 'of the two substance whose actions are towards opposite directions' The collision of two substances—e g, that between two wrestlers or two fighting rams—is cited as an instance of '*ubhayakarmaja*' Conjunction, because it is due to the action of both the things concerned

The third kind of Conjunction—the '*Sanyogaja*' kind,—is produced by one, two or many Conjunctions As an example of Conjunction produced by a single Conjunction, we have the *Conjunction of the shuttle with the duplicate-thread*, brought about by the Conjunction of the same shuttle with one of the threads In this case we find that from the previous single Conjunction of the shuttle and the one thread, there proceeds the Conjunction of the thread-duplicate, with that same shuttle, which is in contact with the single thread that forms the material cause of that 'duplicate,'—which in its turn, is without any action of its own, and is the product of that thread which being in contact with the shuttle is conjoined to the other thread This kind of Conjunction is also called 'one brought about by the contact of the cause with the non cause,'—the

thread being the 'cause,' and the shuttle the 'non-cause,' of the 'thread-duplicate', and the Conjunction of the shuttle with this 'duplicate,' inhering in both of these.

Of this Conjunction we accept the previous Conjunction to be the cause, as we cannot lay our hands upon any other cause; and as such this declaration is based upon the law of '*Pariçesha*,' and the '*pratyāsatti*,' or 'proximity' in this case, will be in the form of the co-inherence of the cause in the same substance as its effect,'—in as much as the cause, the contact of the shuttle with the single thread, would inhere in the shuttle, wherein would also inhere the effect viz: the contact of the shuttle with the 'thread-duplicate.'

*Objection:* "If one Conjunction were to produce another Conjunction, then this would be something opposed to the *Sūtra* '*gunāçcha gunāntaram ārabhante*,' wherein it is said that '*Qualities*' (in the Plural) produce another *Quality*."

*Reply:* Not so; the objector apparently does not understand the sense of the *Sutra* referred to; as what the *Sutra* means is that even Qualities have the causal efficiency of producing a quality; and it does not mean that it is only *many* Qualities,—and not one or two of them—that can produce another quality. Some people hold that the *sutra* does specify more than two Qualities as being productive of a quality, and that this specification is with reference to those Qualities that belong to the cause—and produce, in the effect, qualities homogeneous to themselves, and it does not refer to all qualities; (and that as such there is no contradiction of this *Sutra* by the assertion that one Conjunction produces another Conjunction). Such explanations can suit only exceptionally clever people who can invent unheard of explanations; it can never satisfy us.

As an instance of Conjunction produced by two Conjunctions we have that of the 'thread-duplicate' with *Ākāça*, brought about by the contact of each of the two threads with *Ākāça*.

As soon as the 'thread-duplicate' is produced there immediately comes about a contact of this with *Ākāça*,—because *Ākāça* is in contact with the causes (the single threads) of this 'duplicate,' like the shuttle in contact with the material causes of the 'thread-duplicate' There is no other cause for this contact, save the contact of the *Ākāça* with the two single threads that go to make up the duplicate and hence the contact of the duplicate with *Ākāça* cannot but be regarded as produced by this contact of the *Ākāça* with the constituent threads

**[Page 148]** As an example of Conjunction produced by many Conjunctions we have the *contact of the Cloth with the Brush*, which proceeds from the many contacts of the Brush with the many threads that make up the Cloth

The threads are productive of the Cloth through many intervening wholes—that is to say, some threads combine to make up a certain substance, which forms an intervening link between the threads and the fully prepared piece of cloth In regard to corporeal substances, there is no chance of any such anomaly as that of two wholes occupying the same point in space, as we do not admit of any whole inhering over exactly the same number of constituent parts as another whole, for instance the Thread Duplicate—which is a whole made up of two threads, inheres in two threads, while the Thread Duplicate inheres in these two threads and also in a third, how then could these two occupy the same point in space? It is for this very reason that when a large piece of cloth has been torn, we have notions of several piece-wholes of varying dimensions, and when these are destroyed, then, if we were to begin to make a cloth out of the same threads, it would be a well nigh impossible task

*Objection* "If such were the case, then the constituent particles of the child's body, accompanied by the particles of food eaten, would produce quite a new body, even while the previous body has not been destroyed"

*Reply*: Yes, they might so produce it; if all the previous bodies were perceptible while the old body existed, or even when it is destroyed,—as we find in the case of the pieces of cloth which are quite perceptible while the entire piece exists, as well as when it is torn to pieces. If however, the previous bodies be not thus perceptible, then the same process could not rightly be applied to their case; as we apply processes only in accordance with the facts as we actually perceive them in ordinary experience.

This same reason meets the assertion that, 'in accordance with the theory of the production of the producible, there would be no perception or comprehension of the universe in the atomic state';—as we have shown in the section on 'Earth,' that atoms have the nature of producing such perceptible things as the Triad and the like. Or even if the atoms were to produce the Diads, and then along with these Diads the Triads, and along with the Triads, other substances,—then too, how could there be any imperceptibility in the universe? As in any case, there would be present such conditions of perceptibility as *largeness, multiplicity of constituent molecules, the presence of particular colours*, and so forth. If even when these would be present, the Universe were imperceptible by the senses, on account of its having an imperceptible and supersensous substratum in the shape of the atom, then, in that case, in accordance with your theory also, the Triads made up of Diads (which are imperceptible) would be imperceptible, and thence the whole universe also, made up of these Triads, would become imperceptible. Hence the objection cannot apply to the case in question. And as for the Triads not being made up directly of atoms themselves, we can only refer to the arguments we have put forward in the section on 'Earth.'

A question is here put by the ignorant: "How can *two* Conjunctions proceed from a *single* Conjunction."

In reply to this the author says—*Yadā &c.*, when there is a conjunction of two atoms of Earth and Water, there comes

about simultaneously a conjunction of this Earth-atom with another Earth-atom, and that of this water-atom with another water-atom and from these two Conjunctions there result simultaneously the two diads of Earth and Water, as the Conjunction of two homogeneous things always results in a third substance And at the same time that there are produced, in the Earth and Water diads, the Colour &c, in accordance with the Colour &c of these respective causes,—at that very time, there are produced, out of the conjunctions of material cause and non-causes, conjunctions of the effects of each of these two The 'two' meant here are the Earth and Water Diads, and the 'material cause and non causes' of these are the Earth and Water atoms in contact with each other —the Earth-atoms being the cause of the Earth-Diad, and the non-cause of the Water-diad and similarly the Water-atoms being the cause of the Water-diad, and the non-cause of the Earth-Diad and from the Conjunction of these 'two,' there results the conjunction of the Earth-Diad,—which is the effect of the Earth-atom—with the Water-diad which is the non-effect of the Earth atom, and similarly also the conjunction of the Water-Diad, which is the effect of the Water-atom, with the Earth diad, which is not an effect of the Water-atom, and thus from a single Conjuction we have two Conjunctions

[**Page 149**] *Question* "What are your proofs for accepting the Conjunction of two heterogeneous atoms, in the Earth and Water Diads?"

The author says in answer *Kāranasamyogīnā &c* That is to say the Earth-atom becomes related to the Water-diad,—because it is in contact with its cause,—like the Cloth in contact with the Brush (through its cause, the Threads) The same argument may be applied to the case of the Water-atom also In as much as the effect is always in contact with whatever may be in contact with its material cause,—the Earth-diad becomes conjoined with the Water-atom which is in contact with the Earth-atom constituting that Earth-diad, and similarly

the Water-diad becomes conjoined with the Earth-atom which is in contact with the Water-atom constituting that Water-diad.

*Question:* "How can there be any connection between the Earth and the Water Diads, which may be in contact with the cause and non-cause of each other? That is to say, how can there be any connection between the Earth diads [which may be connected with the Water-atom which is the cause of the Water diad and the non-cause of the Earth diad] and the Water diad [which may be connected with the Earth-atom which is the cause of the Earth diad, and the non-cause of the Water diad]?

In answer, the author says: *Tayorapi &c.* That is to say, between the Earth-diad and the Water-atom, and also between the Water-diad and the Earth-atom, there is the '*Sanyogaja*' Conjunction (i. e. Conjunction produced by Conjunction); and from these two Conjunctions of the Earth and Water-atoms follows the mutual Conjunction between the two Diads. In this case too we have the same law as before—viz., that the effect is in contact with something which, though not its cause, is in Conjunction with its cause.

*Objection*: "It is not right to say that Conjunction is of three kinds only; because there is a possibility of a Conjunction that may be eternal (and this would not be included in any one of the three kinds enumerated above)."

With a view to deny this, the author adds that there is no Conjunction that is not *produced*; and this fact we deduce from the fact of the omniscient sage, in course of describing all things in the universe, not having mentioned any such eternal Conjunction, as he did with regard to the "atomic" dimension. On this we can safely assert that an unproduced (eternal) Conjunction is as great an impossibility as the 'sky-flower.' To explain this further: what we mean is that *Conjunction is never unproduced*, and not that *there is no unproduced Conjunction*: as the latter form of the proposition would involve the

fallacy of an *impossible (non-existent) major term* ('unproduced Conjunction')

*Objection* 'The Conjunction of the atom with *Ākāça* is eternal as both of them are eternal, and they are never separate from each other As for Kanáda not having spoken of this, that may have been mistake on his part, and to err is but human"

To this the Author replies—*Paramānubhih* &c The Conjunction and Disjunction of the atom with the all-pervading *Ākāça* is only partial (at least as regards the latter), and are *produced* by the action of the atom, just as the conjunction and disjunction of a man with the banyan tree (which extends all over from the roots to the top), are due to his movements up and down the tree Consequently there can be no eternity for the Conjunction of the atom with *Ākāça*

**[Page 150]** *Objection* "This you have succeeded in proving, but what have you got to say to the Conjunction of two all-pervading substances? This Conjunction cannot be produced by the action of any one of the two, for the simple reason that both are devoid of action Nor could it be produced by any Conjunction, as a Conjunction born of Conjunction is possible only when an effect is in contact with something that is not its cause, but is in contact with this cause, and no such contact is possible in the case of omnipresent things as they are all eternal, and as such can have no causes There is however a Conjunction among omnipresent things, as can be proved by the following argument—*Ākāça* is in Conjunction with non-corporeal things also, because it conjoins with corporeal things,—like the Cloth And as there can be no cause for this Conjunction it must be regarded as eternal, and hence we cannot admit that there is no unproduced Conjunction"

*Reply* *Vibhūnām &c* As a matter of fact, we find that Conjunction exists only among substances that have had sepa-

rate existences; in the case of all-pervading substances there can be no such separate existence; and hence the condition of greater extension (i. e., separate existence) is not found to exist in these substances; consequently the resultant condition of lesser extension cannot possibly exist. As for the argument the opponent has put forward, that does not prove anything; as it applies equally to both sides of the question. That is to say, just as it lays down the Conjunction of omnipresent things, so also does it prove their Disjunction also, by the very same premiss and example.

*Objection*: "It may be so; and so we must accept both, as proved by convincing arguments."

*Reply*: That cannot be; as between Conjunction and Disjunction, if one is eternal, the other is absolutely impossible; and as the two are contradictory, and the argument applies equally to both, it cannot be accepted to prove either.

*Question*: "What is this 'separate existence,' on the absence whereof in omnipresent substances, you base your denial of Conjunction in them?"

*Answer*: *Sā punah &c.* By '*yutasiddhi*,' 'separate existence,' is meant the moving apart of one or both of the things concerned, as regards eternal substances; as regards non-eternal substances, what is meant by it is the having of a receptacle or substratum apart from that of the other. And none of these two kinds of 'separate existence' is possible in the case of *Ākāça*.

---

The destruction of all Conjunction follows from the Disjunction inhering in the same substrata as the Conjunction. That is to say, whenever there is a disjunction of two things, Conjunction is destroyed forthwith. Though at the time of the Disjunction the Conjunction exists, yet the two are never found to co-exist; and this may be due either to the destruction of the Conjunction appearing very quickly (after the Disjunc-

*prone to produce its effect After this that same action produces, out of the conjunctions of the cause and the non-cause, the conjunctions of the effect and the non-effect And if after the Disjunction of the cause there appear the disjunction of the effect, then after the Conjunction of the cause there would be the Conjunction of the effect*

Objection "*This would involve the absurdity of the whole and its parts having existences apart from one another*"

Reply *Not so, as apparently you do not understand what is meant by 'separate existence' In the case of eternal things it only means 'separate or distinct movement or action', and in that of the transitory things, it means the 'inherence or existence in distinct substrata' In the case of the Organ of Touch and the Body there is no 'distinct movement,' but they are 'inherent in distinct substrata', and it is for this reason that the relationship between these two is that of Conjunction (and not of 'Inherence' which would have to be admitted if 'separate existence' meant only 'distinct motion,' as there would be absence of this in the case in question, and it is only this absence that is the necessary condition of Inherence) In the case of the Atom and the Ākāça however, even though they have no other substrata (and as such the two would appear to bear the relationship of Inherence,) yet in as much as each of them is capable of independent action or motion (there can be no Inherence), and Conjunctions and Disjunctions between them become possible In the case of the Yarn and the Cloth however, both of which are transient, in as much as they do not inhere*

**दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्यो-ऽन्यतरस्याम् । ४ । १ । ८१ ॥**

एभ्यश्चतुर्भ्यः ष्यङ् वा ॥ अगोत्रार्थमिदं गोत्रेऽपि परत्वात्प्रवर्तते । पक्षे इतो मनुष्येति ङीष् । दैवयज्ञ्या । दैवयज्ञीत्यादि । इति स्त्रीप्रत्ययाः ॥

**समर्थानां प्रथमाद्वा । ४ । १ । ८२ ॥**

इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् । सामर्थ्यं परिनिष्ठितत्वं कृतसन्धिकार्यत्वमिति यावत् ॥

**प्राग्दीव्यतोऽण् । ४ । १ । ८३ ॥**

अनेन दीव्यतीत्यतः प्रागणधिक्रियते ॥

**अश्वपत्यादिभ्यश्च । ४ । १ । ८४ ॥**

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु ॥ वक्ष्यमाणस्य ण्यस्यापवादः । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् । गाणपत्यो मन्त्र इति तु प्रामादिकमेव ॥

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४ । १ । ८५ ॥**

दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् ॥ अणोऽपवादः । दैत्यः । अदितेरादित्यस्य वा आदित्यः । प्राजापत्यः । यमाच्चेति काशिकायाम् । याम्यः । वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् ॥ * ॥ वाच्यः । मात्यः । पैतृमत्यः ॥ पृथिव्या ञाञौ ॥ * ॥ पार्थिवा । पार्थिवी ॥ देवाद्यञञौ ॥ * ॥ दैव्यम् । दैवम् ॥ बहिषष्टिलोपो यञ्च ॥ * ॥ बाह्यः । ईकक् च ॥ * ॥ बाहीकः ॥ ईकञ् छन्दसि ॥ * ॥ बाहीकमस्तु भद्रं वः ॥ स्थाम्नोऽकारः ॥ * ॥

भाष्योदाहरणात्तदन्तविधिः । अश्वस्येव स्थाम बलं यस्य तस्यापत्यादिरश्वत्थामः । पृषोदरादित्वात्सस्य तः । भवार्थेऽन्तः पूर्वपदाट्ठञिन्त्यच लुग्वक्ष्यते । अश्वत्थामा । लोम्नोऽपत्येषु बहुषु ॥ * ॥ केवललोम्नोऽपत्येन योगाभावात्तदन्तविधिः । बाह्वादीञोऽपवादः । उडुलोमाः । उडुलोमान् । बहुषु किम् । औडुलोमिः ॥ सर्वत्र गोरजादिप्रसङ्गे यत् ॥ * ॥ न त्वपत्ये एव । गोरपत्यं गवि भवं गोरिदं गोर्देवताऽस्येत्यादि गव्यम् । यद्वा प्राग्दीव्यतीयेऽन्यत्र च । तेन गवा चरति गव्य इत्याद्यपि भवतीति केचिदाहुः । अजादिप्रसङ्गे किम् । गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् ॥ ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेन ॥ * ॥ ण्यादयो येननाप्राप्तिन्यायेन णः एवापवादाः ढगादिभिरणपवादैस्तु सह सम्प्रधारणायां परत्वात्त एव स्युरिति वार्तिकारम्भः । ण्यादीनामवकाशः । दितिरदितिर्बृहस्पतिर्देवताऽस्य दैत्यः । आदित्यः । बार्हस्पत्यम् । अर्थविशेषलक्षणस्याणपवादस्य । दुलेरपत्यं दौलेयः । अपूपानां समूह आपूपिकम् । इहोभयप्रसङ्गे ण्यादय एव । दितेरदितेरपत्यं दैत्यः । आदित्यः । वनस्पतीनां समूहो वानस्पत्यम् । इतश्चानिञः, अचित्तहस्तिधेनोष्ठगिति ढक्ठकौ न भवतः । अर्थविशेषेति किम् । औष्ट्रपतम् । उष्ट्रपतिर्नाम पक्षः तस्येदं पक्षाध्वर्युपरिषदश्चेत्यञ् । न च पक्षाद्ग्राह इत्युक्तेरयमप्यर्थविशेषलक्षण इति वाच्यम् । इदमिति सामान्यशब्देनैव तद्विशेषसंग्रहात् । विशेषशब्देन बोधितार्थकस्यैवार्थविशेषलक्षणत्वस्वीकारात् । अथ कथं दैतेयादितेयौ । क्तिजन्तात्कृदिकारादिति ङीषि स्त्रीभ्यो ढक् । ण्यस्तु लिङ्गविशिष्टपरिभाषाया अनित्यत्वात् ॥

## उत्सादिभ्योऽञ् । ४ । १ । ८६ ॥

अणस्तदपवादानामिञादीनाञ्चापवादोऽयम् ॥ औत्स । इह पठ्यते । बष्कयाऽसे । असे असमासे । बष्कयस्यापत्य बाष्कयः । असे किम् । गोबष्कयिः । असे इत्येतदेवेह तदन्तविधिं ज्ञापयति । तेनाधेनूना समूहः आधेनवं सिद्धम् । धेनुशब्दस्येह पाठात् । न चैव धैनुकं गोधेनुकं च न सिध्येत् । धेनोरनञिकमुत्पादयतीति विशेषवचनस्य खण्डिकादिभ्यश्चेति सूत्रे भाष्ये आपिशलिमतत्वेनोक्तत्वात् । इकमिति ठकमित्यर्थः । एतच्च ऋतृश्यादिसूत्रान्ताट्ठगितिसूत्रस्थविद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृत इति वार्तिके इकगिति ठगित्यर्थं इति कैयटाल्लभ्यते । आपिशलिमतपरतयोक्तवचनस्य धैनुकमिति भाष्योदाहरणाच्च ॥ ग्रीष्मादछन्दसीति वक्तव्यम् ॥ * ॥ छन्दश्चेह वृत्तम् । यस्य गायत्र्यादयो विशेषाः । ग्रैष्मम् । अछन्दसि किम् । ग्रीष्मो देवता अस्याः ग्रैष्मी त्रिष्टुप् । अञः प्रतिषेधादणेव । यदा तु ग्रीष्मे भवेति शेषार्थविवक्षा तदा तु शैषिकऋत्वण् सिद्ध एव । न चाञा शैषिकस्य बाधप्रसङ्गः । अर्थविशेषलक्षणानां तुल्यकक्ष्याणामेव प्रत्ययानां ण्यादिभिर्बाधनात् । ऋत्वण् तु कक्ष्यान्तरप्राप्तत्वादञो बाधकः । तथाहि । कालाट्ठञ् अणोऽपवादः । ठञो ऋत्वण् । दृष्टं सामेत्यधिकारे कलेर्ढगिति सोऽस्यदेवतेत्यधिकारे अग्नेर्ढगिति सूत्रद्वयमपनीय प्राग्दीव्यत इति प्रकरणे अग्निकलिभ्यां ढग्वक्तव्य इति पाठ्यम् । अग्नेरपत्यादि आग्नेयम् । कालेयम् । एतच्च दृष्टं सामेति सूत्रे अपर आह । सर्वत्राग्निकलिभ्यां ढग्वक्तव्य इति भाष्यात्सर्वेषु प्राग्दीव्यतीयेष्वर्थेष्वित्यर्थं इति कैयटाच्च लभ्यते ।

इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ॥

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् । ४ । १ । ८७ ॥**

धान्यानां भवने इत्यत. प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमात् नञ्स्नञौ स्त ॥ स्त्रैणः । पौंस्नः । वत्यर्थे न । स्त्रीपुंवच्चेति ज्ञापकात् । स्त्रीवत् । पुंवत् ॥

## द्विगोर्लुगनपत्ये । ४ । १ । ८८ ॥

द्विगोर्निमित्तं यस्तद्धितो ऽनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् ॥ पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः । द्वयो रथयोर्वोढा द्विरथः । तस्येदं रथाद्यतो लुक् । द्विगुनिमित्तस्येति किम् । पञ्चकपालस्येदं खण्डं पाञ्चकपालम् । पञ्चकपाल्यां संस्कृत इति विग्रहे तु वाक्यमेव न तु प्रत्ययः । अव्यविकन्यायात् । अत एव च्यवयवा विद्या तामधीते त्रैविद्य इत्येव भवति न तु तिस्रो विद्या अधीते इति द्विगुः । अन्यथा त्रिविद्य इत्यपि स्यात् । वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणान्नेह । पञ्चगर्गरूप्यम् । अनपत्ये किम् । द्वयोर्मित्रयोरपत्यं द्वैमित्रिः । प्राग्दीव्यतः किम् । द्वैपारायणिकः । द्वौ रथौ वहति द्विरथ्यः । तद्वहतिरथेति यत् ॥

## गोत्रे ऽलुगचि । ४ । १ । ८९ ॥

अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात् ॥ गर्गाणां छात्रा गार्गीयाः । वृद्धाच्छः । आपत्यस्येति यलोपः । विदानामपत्यं वैदः । वैदौ । अत्र विदस्यापत्यानि बहूनि । अनृष्यानन्तर्यइति गोत्रेऽञ् तदन्ताद्यूनि अत इञ् । तस्य ण्यक्षत्रियार्षञित इति लुक् । तत्राञो बहुषूत्पन्नत्वाल्लुक् प्राप्तः प्रत्ययलक्षणान्न भवति । अचीत्यस्य विषयसप्तमीत्वेऽपि प्रत्ययलक्षणेन तद्विषयताप्रयुक्तस्यातिदेशस्याङ्गीकारात् । न च वर्णाश्रये नास्ति प्रत्ययलक्षणम् । वर्णप्राधान्यविषयत्वात्तस्य । न लुमतेति निषेधोऽपि न । अङ्गसं-

लुकोऽद्रैश्यकत्वाभावात् । विदानामपत्यानि विदाः । अत्र तु प्रत्ययल-
क्षणेनालुक्यपि अञन्तस्यैव युवबहुत्वे प्रवर्तनात्पुनर्लुग्भवत्येव । ननु
गोत्रातिरिक्तप्राग्दीव्यतीयार्थविषयस्य सत्त्वात् पुनर्लुक्तस्मान्न भवतीति
चेन्न । समर्थानां प्रथमस्य प्रथमार्थवृत्तेरर्थान्तरमनुपसङ्क्रान्तस्य गोत्र-
प्रत्ययान्तस्यालुक्स्वीकारात् । अत्र गर्गाविभरद्वाजानां मैथुनिका
अत्रिभरद्वाजिकेत्यादौ अञो नालुक् । अत्र ह्यत्रेरपत्यानि बहूनि
इतश्चानिञ इति ढक् । तदन्ताद्युवबहुत्वे ऽत इञ् । तस्य ण्यक्ष-
त्रियार्षेति लुक् । अत्रिभृगवित्ति ढको लुक् । भरद्वाजशब्दाद्विदाद्यञ् ।
ततो यूनीञ् । पूर्ववल्लुक् । अञोऽपि बहुत्वे लुक् । अत एव च
गोपवनादिषु गर्गभार्गविकाग्रहणं चरितार्थम् । गर्गाद्यञो लुक् । भृगो-
रृष्यण् । यूनीञो लुक् । अत्र ह्यणो ऽत्रिभृगवित्ति लुक् प्राप्तो न गोप-
वनादिभ्य इति प्रतिषिध्यते । तत्र वैदस्य वैदयोर्वापत्यानि विदाः ।
अत्रापि लुग्भवत्येव । गोत्रार्थकस्याप्यञो युवबहुत्वे प्रवर्तनाद्दोषकृत-
बहुत्वस्य सत्त्वात् । लौकिकस्य गोत्रस्य तत्र ग्रहणात् । काश्यपप्र-
तिकृतयः काश्यपाः । कश्यपस्यापत्यं विदादित्वादञ् । तत एक-
स्यैव काश्यपस्य बह्व्यः प्रतिकृतयो यदा विवक्षिता भवन्ति तदा
इवे प्रतिकृताविति कन्प्रत्ययस्तस्य देवपथादित्वाल्लुप् । हरीतक्या-
दिषु व्यक्तिरितिवचनाल्लिङ्गमेव युक्तवद्भावेन भवति वचनन्त्वभिधे-
यगतमेव । यद्वैकशेषः क्रियते । अत्र तु काश्यपइत्यञन्तं प्रतिकृ-
तिबहुत्वे वर्तते न तु गोत्रबहुत्वे इत्यञो न लुक् । गोत्रे किम् ।
कुवलस्येदं कौवलम् । बादरम् । अत्र फलेऽञो लुक् । प्राग्दीव्यतीय
किम् । गर्गेभ्यो हितं गर्गीयम् । अचि किम् । गर्गेभ्य आगतं गर्ग-
रूप्यम् ॥

– यूनि लुक् । ४ । १ । ९० ॥

प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात् ॥ ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः । प्राचामवृद्धादिति वक्ष्यमाणः फिन् । ततो यून्यण् । ग्लौचुकायनः । तस्य छात्रोऽपि ग्लौचुकायनः । अणो लुकि वृद्धत्वाभावाच्छो न । अजादौ किम् । ग्लौचुकायनरूप्यम् । प्राग्दीव्यतीये किम् । तस्मै हितं ग्लौचुकायनीयम् ॥

**फक्फिञोरन्यतरस्याम् । ४ । १ । ९१ ॥**

यूनि लुगिति नित्ये लुकि प्राप्ते विकल्पार्थं सूत्रम् ॥ कात्यायनस्य छात्राः कातीयाः । कात्यायनीयाः । यस्कस्यापत्यं यास्कः । शिवाद्यण् । तस्यापत्यं युवा यास्कायनिः । अणो द्व्यच इति फिञ् । तस्य छात्राः यास्कीयाः । यास्कायनीयाः ॥

**तस्यापत्यम् । ४ । १ । ९२ ॥**

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥ उपगोरपत्यमौपगवः ॥

तस्येदमित्यपत्येऽपि बाधनार्थं कृतं भवेत् ।
उत्सर्गः शेष एवासौ वृद्धान्यस्य प्रयोजनम् ।

भानोरपत्यं भानवः । कृतसन्धेः किम् । सौत्थितिः । अकृतव्यूहपरिभाषया सावुत्थितिर्माभूत् । समर्थपरिभाषया नेह । वस्त्रमुपगोरपत्यं चैत्रस्य । प्रथमात्किम् । अपत्यवाचकात्षष्ठ्यर्थे माभूत् । वाग्रहणाद्वाक्यमपि । दैवयज्ञीतिसूत्रादन्यतरस्यां ग्रहणानुवृत्तेः समासोऽपि । उपग्वपत्यम् । जातित्वान्ङीष् । औपगवी । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ॥

**एको गोत्रे । ४ । १ । ९३ ॥**

गोत्रे यस्क यत्रापत्यप्रत्ययः स्यात् ॥ उपगोर्गोत्रापत्यमौपगवः । गार्ग्य. । नाडायन. ॥

गोत्रे स्वैकानसंख्यानां प्रत्ययानां परम्परा ।
यद्वा स्वद्यूनसंख्येभ्यो ऽनिष्टोत्पत्तिः प्रसज्यते ॥
अपत्यं पितुरेव स्यात्ततः प्राचामपीति च ।
मतभेदेन तद्वान्त्यै सूत्रमेतत्तथोत्तरम् ॥

पितुरेवापत्यमिति पक्षे हि उपगोस्तृतीये वाच्ये औपगवादिञ् स्यात् । चतुर्थे त्वर्जीवज्ज्येष्ठे मृतवंश्ये औपगवे फक् । इत्थं फगिञो परम्परया मूलाच्छततमे गोत्रे शतानशत प्रत्यया स्युः । पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगोरण इष्टसिद्धेऽपि अणन्तादिञपि स्यात् । चतुर्थे तत फगिति फगिञोः परम्परया शततमे गोत्रे ऽष्टनवतेरनिष्टप्रत्यया स्युः । अतो नियमार्थमिदं सूत्रम् । एवमुत्तरसूत्रेऽप्यूह्यम् ॥

## गोत्राद्यून्यस्त्रियाम् । ४ । १ । ९४ ॥

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् स्त्रियां तु न युवसंज्ञा ॥ गर्गस्य युवापत्यं गार्ग्यायणः । स्त्रियां गोत्रत्वादेक एव प्रत्ययः ॥

## अत इञ् । ४ । १ । ९५ ॥

अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यादपत्येऽर्थे ॥ दाक्षिः

## बाह्वादिभ्यश्च । ४ । १ । ९६ ॥

बाहविः ॥ औडुलोमि । आकृतिगणोऽयम् ॥

## सुधातुरकङ् च । ४ । १ । ९७ ॥

चादिञ् ॥ सुधातुरपत्य सौधातकि ॥ व्यासवरुडनिषाद-चण्डालबिम्बाना चेति वक्तव्यम् ॥ * ॥ वैयासकिः । वारुडकिरित्यादि ।

## गोत्रे कुञ्जादिभ्यश्चफञ् । ४ । १ । ९८ ॥

तदन्ताद्व्रातच्फञोरस्त्रियामिति स्वार्थे ञ्यः ॥ कौञ्जायन्य । ब्राध्नायन्यः । बहुत्वे तद्राजत्वाल्लुक् । कौञ्जायनाः । स्त्रियां कौञ्जायनी । गोत्रत्वेन जातित्वान्ङीष् । अनन्तरापत्ये कौञ्जि. ॥

## नडादिभ्यः फक् । ४ । १ । ९९ ॥

गोत्रे इत्येव । नाडायनः । चारायण. । अनन्तरो नाडिः ॥

## हरितादिभ्यो ऽञः । ४ । १ । १०० ॥

एभ्योऽञन्तेभ्यो यूनि फक् ॥ हारितायनः । इह गोत्राधिकारेऽपि सामर्थ्याद्यून्ययम् । नहि गोत्रादपरो गोत्रप्रत्ययः । विदाद्यन्तर्गणो हरितादिः ॥

## यञिञोश्च । ४ । १ । १०१ ॥

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥ अनातीन्युक्तेरापत्यस्येति यलोपो न । गार्ग्यायण. । दाक्षायण ॥

## शरद्वच्छुनकदर्भाद् भृगुवत्साग्रायणेषु । ४ । १ । १०२ ॥

अञिञोरपवादः । आद्यौ विदादी । शारद्वतायनो भार्गवश्चेत् । शारद्वतोऽन्य । शौनकायनो वात्स्यश्चेत् । शौनकोऽन्यः । दार्भायण आग्रायणश्चेत् । दार्भिरन्यः ॥

## द्रोणपर्वतजीवन्तादन्यतरस्याम् । ४ । १ । १०३ ॥

एभ्यो गोत्रे फञ् वा ॥ द्रौणायनः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः । अनादिरिह द्रोणः । अश्वत्थाम्न्यनन्तरे तूपचारात् ।

**अनृष्यानन्तर्ये बिदादिभ्योऽञ् । ४ । १ । १०४ ॥**

एभ्योऽञ् गोत्रे ये त्वत्रानृषयस्तेभ्योऽनन्तरे । सूत्रे स्वार्थे ष्यञ् ॥ बिदस्य गोत्रं बैदः । अनन्तरो बैदिः । बाह्वादेराकृतिगणत्वादिञ् । पुत्रस्यापत्यं पौत्रः । दौहित्रः ॥

**गर्गादिभ्यो यञ् । ४ । १ । १०५ ॥**

गोत्र इत्येव ॥ गार्ग्यः । वात्स्यः ॥

**मधुबभ्र्वोर्ब्राह्मणकौशिकयोः । ४ । १ । १०६ ॥**

गोत्रे यञ् ॥ माधव्यो ब्राह्मणः । माधवोऽन्यः । बाभ्रव्यः कौशिकः । बाभ्रवोऽन्यः । बभ्रुशब्दस्य गर्गादिपाठान्नियमार्थमिदम् । गर्गादिपाठस्तु लोहितादिकार्यार्थम् ॥ बाभ्रव्यायणी ॥

**कपिबोधादाङ्गिरसे । ४ । १ । १०७ ॥**

गोत्रे यञ् स्यात् ॥ काप्यः । बोध्यः । आङ्गिरसे किम् । कापेयः । बौधिः ॥

**वतण्डाच्च । ४ । १ । १०८ ॥**

आङ्गिरसे इत्येव ॥ वातण्ड्यः । अनाङ्गिरसे तु गर्गादौ शिवादौ च पाठाद्यञणौ । वातण्ड्यः । वातण्डः ॥

**लुक् स्त्रियाम् । ४ । १ । १०९ ॥**

वतण्डाच्चेति विहितस्य यञो लुक् स्यात् स्त्रियाम् ॥ शार्ङ्गरवादित्वान्ङीन् । वतण्डी । अनाङ्गिरसे तु वातण्ड्यायनी । लोहितादित्वात्ष्फः । अणि तु वातण्डी । ऋषित्वात्ष्यङ् न ॥

**अश्वादिभ्यः फञ् । ४ । १ । ११० ॥**

गोत्रे ॥ आश्वायनः । पुंसि जाते । पुंसीति प्रकृतिविशेषणम् । जातस्य गोत्र जातायन । पुसीति किम् । जाताया अपत्य जातेय ॥

**भर्गात्त्रैगर्ते । ४ । १ । १११ ॥**

गोत्रे फञ् ॥ भार्गायणस्त्रैगर्तः । भार्गिरन्यः ॥

**शिवादिभ्यो ऽण् । ४ । १ । ११२ ॥**

गोत्रे इति निवृत्तम् ॥ शिवस्यापत्य शैवः । गाङ्गः । पक्षे तिकादित्वात्फिञ् । गाङ्गायनिः । शुभ्रादित्वाड्ढक् । गाङ्गेयः ॥

**अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः । ४ । १।११३॥**

अवृद्धाभ्यो नदीमानुषीनामभ्यो ऽण् स्यात् ॥ ढकोऽपवादः । यामुनः । नार्म्मदः । चिन्तिताया अपत्य चैन्तितः । अवृद्धाभ्यः किम् । वासवदत्तेयः । नदीत्यादि किम् । वैनतेयः । तन्नामिकाभ्यः किम् । शोभनाया अपत्य शौभनेयः ॥

**ऋष्यन्धकवृष्णिकुरुभ्यश्च । ४ । १ । ११४ ॥**

ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः । श्वाफल्कः । वृष्णिभ्य । वासुदेवः । आनिरुद्धः । शौरिरिति तु बाह्वादित्वात् । कुरुभ्यः । नाकुल । साहदेवः । इञ एवायमपवादो मध्येऽपवादन्यायात् । अत्रिशब्दात्तु परत्वाड्ढक् । आत्रेयः ॥

**मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः । ४ । १ । ११५ ॥**

सङ्ख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण्प्रत्ययश्च ॥ द्वैमातुरः । षाण्मातुरः । साम्मातुरः । भाद्रमातुरः । आदेशार्थं वचनं

प्रत्ययस्तूत्सर्गेण सिद्धः । स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः । तेन धान्यमातुर्न । सङ्ख्येति किम् । मैमातः । शुभ्रादित्वाद्वैमात्रेयः ॥

**कन्यायाः कनीन च । ४ । १ । ११६ ॥**

ढकोऽपवादोऽण् तत्सन्नियोगेन कनीनादेशश्च । कानीनो व्यासः कर्णश्च । अनूढाया एवापत्यमित्यर्थः ।

**विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु । ४ । १ । ११७ ॥**

अपत्येऽण् ॥ वैकर्णो वात्स्यः । वैकर्णिरन्यः । शौङ्गो भारद्वाजः । शौङ्गिरन्यः । छागल आत्रेयः । छागलिरन्यः । केचित्तु शुङ्गेत्याबन्तं पठन्ति तेषां ढक् प्रत्युदाहरणम् । शौङ्गेयः ॥

**पीलाया वा । ४ । १ । ११८ ॥**

तन्नामिकाण् बाधित्वा द्व्यच इति ढकि प्राप्ते पक्षेऽण् विधीयते ॥ पीलाया अपत्यं पैलः । पैलेयः ॥

**ढक् च मण्डूकात् । ४ । १ । ११९ ॥**

चादण् ॥ पक्षे इञ् । माण्डूकेयः । माण्डूकः । माण्डूकिः ॥

**स्त्रीभ्यो ढक् । ४ । १ । १२० ॥**

स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् ॥ वैनतेयः । बाह्वादित्वात्सौमित्रिः । शिवादित्वात्सापत्नः ॥ वडवाया वृषे वाच्ये ढग्वक्तव्यः ॥ * ॥ वडवाया वृषो वाडवेयः । वृषो बीजाश्वः । तेन चार्थेन विशेषविहितेनाऽपत्यलक्षणोऽर्थो ढको बाध्यते । तेनापत्ये वाडव इति भवति । न च चतुष्पाद्भ्यश्चेत्वाड्ढञ् प्राप्तिः स्वरे च विशेष इति वाच्यम् । देवताविशेषस्य सूर्यस्त्रीरूपगृहीताश्वारूपस्य वाचकवडवाशब्दस्यैवात्र ग्रहणात् । बीजाश्वशब्देनापि गृहीताश्वाकारस्तत्पुमा-

न्सूर्य्य एव । एवञ्च तस्य चतुष्पाज्जातित्वाचित्वाभावान्न दोष ॥ अण् कुञ्चाकोकिलात्स्मृत ॥ * ॥ समाहारद्वन्द्वः । वृष इति नापेक्ष्यते । अपत्ये एवायम् । ढगपवादः । क्रौञ्चः । कौकिल ॥

**द्व्यचः । ४ । १ । १२१ ॥**

द्व्यच स्त्रीप्रत्ययान्तादपत्ये ढक् स्यात् ॥ तन्नामिकाणोऽपवाद । दात्तेय । पार्थ इत्यत्र तु तस्येदमित्यण् ॥

**इतश्चानिञः । ४ । १ । १२२ ॥**

इकारान्तात् द्व्यचोऽपत्ये ढक् स्यात् न त्विञन्तात् ॥ दौलेयः । नैधेयः । आत्रेय. ॥

**शुभ्रादिभ्यश्च । ४ । १ । १२३ ॥**

शुभ्रस्यापत्य शौभ्रेय. ॥

**विकर्णकुषीतकात्काश्यपे । ४ । १ । १२४ ॥**

अपत्ये ढक् ॥ वैकर्णेय. । कौषीतकेय. काश्यपः । अन्यो वैकर्णि । कौषीतकिः ॥

**भ्रुवो वुक् च । ४ । १ । १२५ ॥**

चाड्ढक् ॥ भ्रौवेयः ॥

**कल्याण्यादीनामिनङ् । ४ । १ । १२६ ॥**

एषामिनङादेशः स्याड्ढक् च ॥ काल्याणिनेयः । बान्धकिनेयः ॥

**कुलटाया वा । ४ । १ । १२७ ॥**

इनङ्गात्र विकल्प्यते ढक् तु नित्य पूर्वेणैव ॥ कौलटिनेयः ।

कौलटेयः । सती भिक्षुकात्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तस्याः क्षुद्राभ्यो वेति पक्षे द्रक् । कौलटेरः ॥

**चटकाया ऐरक् । ४ । १ । १२८ ॥**

चटकादिति वाच्यम् ॥ * ॥ लिङ्गविशिष्टपरिभाषया स्त्रिया अपि । चटकस्य चटकाया वा अपत्यं चाटकैरः ॥ स्त्रियामपत्ये लुग्वक्तव्यः ॥ * ॥ तयोरेव स्त्र्यपत्यं चटका । अजादित्वाट्टाप् ॥

**गोधाया ढ्रक् । ४ । १ । १२९ ॥**

गौधेरः ॥ शुभ्रादित्वात्पक्षे ढक् । गौधेयः ॥

**आरगुदीचाम् । ४ । १ । १३० ॥**

गौधारः ॥ रका सिद्धे आकारोच्चारणमन्यतोऽपि विधानार्थम् । जडस्यापत्यं जाडारः । पण्डस्यापत्यं पाण्डारः ।

**क्षुद्राभ्यो वा । ४ । १ । १३१ ॥**

अङ्गहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो वा ढ्रक् ॥ पक्षे ढक् । काणेरः । काणेयः । दासेरः । दासेयः ॥

**पितृष्वसुश्छण् । ४ । १ । १३२ ॥**

अणोऽपवादः । पैतृष्वस्रीयः ॥

**ढकि लोपः । ४ । १ । १३३ ॥**

पितृष्वसुरन्त्यलोपः स्याड्ढकि ॥ अत एव ढक् । पैतृष्वसेयः ॥

**मातृष्वसुश्च । ४ । १ । १३४ ॥**

पितृष्वसुर्यदुक्तं तदस्यापि स्यात् ॥ मातृष्वस्रीयः । मातृष्वसेयः ॥

## चतुष्पाद्भ्यो ढञ् । ४ । १ । १३५ ॥

कामण्डलेयः ॥ कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे । ढे लोपोऽकद्र्वा इत्युकारलोपः ॥

## गृष्ट्यादिभ्यश्च । ४ । १ । १३६ ॥

गम्यो ढञ् स्यात् ॥ अणढकोरपवादः । गार्ष्टेयः । मित्रयोरपत्य ऋष्यणि प्राप्ते ढञ् । यादेरिय इतीयादेशे प्राप्ते दाण्डिनायने-त्यत्र निपातनाद्युलोपः । मैत्रेयः । बहुत्वे यस्कादित्वादित्वाल्लुक् । मित्रयवः ॥

## राजश्वशुराद्यत् । ४ । १ । १३७ ॥

अणिञोरपवादः ॥ राज्ञो जाताविवेति वाच्यम् ॥ * ॥ ये चाभावकर्मणोरिति प्रकृतिभावः । राजन्यः । श्वशुर्यः । जातिग्रहणाच्छूद्रादावुत्पन्नो राजनः । अन्निति प्रकृतिभावाट्टिलोपो न ॥

## क्षत्राद् घः । ४ । १ । १३८ ॥

क्षत्रियः ॥ जातावित्येव । क्षात्रिरन्यः ॥

## कुलात्खः । ४ । १ । १३९ ॥

कुलीनः । तदन्तादपि । उत्तरसूत्रे ऽपूर्वपदादिति लिङ्गात् । आढ्यकुलीनः ॥

## अपूर्वपदादन्यतरस्यां यड्ढकञौ । ४ । १ । १४० ॥

कुलादित्येव । पक्षे खः । कुल्यः । कौलेयकः । कुलीनः । पदग्रहणं किम् । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः ॥

## महाकुलादञ्खञौ । ४ । १ । १४१ ॥

अन्यतरस्यामित्यनुवर्तते । पक्षे खः । माहाकुलः । माहाकुलीनः । महाकुलीनः ॥

दुष्कुलाड्ढक् । ४ । १ । १४२ ॥

पूर्ववत्पक्षे खः ॥ दौष्कुलेयः । दुष्कुलीनः ॥

स्वसुश्छः । ४ । १ । १४३ ॥

स्वस्रीयः ॥

भ्रातुर्व्यच्च । ४ । १ । १४४ ॥

चाच्छः । अणोऽपवादः । भ्रातृव्यः । भ्रात्रीयः ।

व्यन्सपत्ने । ४ । १ । १४५ ॥

भ्रातुर्व्यन्स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये ॥ भ्रातृव्यः शत्रुः । सर्वस्मिन्सपत्ने । पाप्मना भ्रातृव्येणेति तूपचारात् ॥

रेवत्यादिभ्यष्ठक् । ४ । १ । १४६ ॥

रैवतिकः ॥

गोत्रस्त्रियाः कुत्सने ण च । ४ । १ । १४७ ॥

गोत्रं या स्त्री तद्वाचकाच्छब्दाण्णठकौ स्तः कुत्सायाम् ॥ सामर्थ्याद्यूनि । गार्ग्या अपत्यं गार्गो गार्गिको वा जाल्मः । युवद्वावाद्गार्ग्यशब्दाण्णठकौ । यस्येतिलोपः । आपत्यस्येति लोपः । ग्लुचुकायन्या अपत्यं ग्लौचुकायनः ॥ ग्लौचुकायनिकः । गोत्रे किम् । कारिकेयः । स्त्रियाः किम् । औपगवस्यापत्यं युवा औपगविः । कुत्सने किम् । गार्गेयः ॥

वृद्धाट्ठक् सौवीरेषु बहुलम् । ४ । १ । १४८ ॥

सुवीरदेशोद्भवाः सौवीराः । वृद्धात्सौवीरगोत्राद्यूनि बहुलं

ठक् स्यात्कुत्सायाम् ॥ भागवित्तेर्भागवित्तिकः । पक्षे फक् । भागवित्तायनः ।

**फेश्छ च । ४ । १ । १४९ ॥**

फेरिति फिञो ग्रहणं न फिनः । वृद्धाधिकारात् । फिञन्तात्सौवीरगोत्रादपत्ये छः ठक् च कुत्सने गम्ये ॥ यमुन्दस्यापत्यं यामुन्दायनिः । तिकादित्वात्फिञ् । तस्यापत्यं यामुन्दायनीयः । यामुन्दायनिकः । कुत्सने किम् । यामुन्दायनिः । औत्सर्गिकस्याणो ण्यक्षत्रियेति लुक् । सौवीरेषु किम् । तैकायनिः ।

**फाण्टाहृतिमिमताभ्यां णफिञौ । ४ । १ । १५० ॥**

सौवीरेषु ॥ नेह यथासङ्ख्यम् । अल्पाच्तरस्य परनिपाताल्लिङ्गादिति वृत्तिः । भाष्ये तु यथासङ्ख्यमेव स्थितम् । फाण्टाहृतः । फाण्टाहृतायनिः । मैमतः । मैमतायनिः ॥

**कुर्वादिभ्यो ण्यः । ४ । १ । १५१ ॥**

अपत्ये ॥ कौरव्याः ब्राह्मणाः । बावदूक्यः । सम्राजः क्षत्रिये । साम्राज्यः । साम्राजोऽन्यः । रथकारशब्दोऽत्र पठ्यते । स जातिवचनः । त्रैवर्णिकेभ्यः किञ्चिन्न्यूनरथकारजातिः । कारिणस्तु रथकारात्तरेणैव ण्यः सिद्धः ॥ वामरथस्य कण्वादिवत्स्वरवर्जम् ॥ * ॥ प्रकरणात् ण्यप्रत्ययान्तस्येति विज्ञेयम् । कण्वादीनां यञन्ताना यत्कार्यं तदतिदेशः । केवलानां तेषां कार्यस्य कस्यचिदविधानात् । वामरथ्यस्य छात्राः वामरथाः । कण्वादिभ्यो गोत्रे इत्यण् । यदयं स्वरवर्जमित्याह तज्ज्ञापयत्याचार्य्यः प्रत्ययाश्रितमप्यतिदिष्टं भवतीति । बहुषु वामरथाः । स्त्री वामरथी । वामरथ्यायनी । युवा

यदि गर्भो विपद्येत पतेत स्रवेत वा तदा योषितो मातुर्याव-न्मासो गर्भस्रावदिनं सूत्याशौचं भवेत् । तथा चादित्यपुराणे ।

षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥ इति ।

इयं च माससमसंख्यदिनैः शुद्धिर्मासत्रयादूर्ध्वं ज्ञेया । तत्र त्रिरा-त्रादिस्मरणात् ।

तथा च मरीचिः ।

गर्भस्रुत्या यथामासमचिरे तूत्तमे त्रयः ।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु ॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता ॥ इति ।

अचिरे आद्यमासत्रये उत्तमे ब्राह्मणे त्र्यहम् । इदं च स्रावाशौचं मातुरेव न सपिण्डानां, पाते तु तेषां त्रिरात्रम् ।

स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् ।
पाते मातुर्यथामासं पित्रादीनां दिनत्रयम् ॥

इति मरीचिस्मरणात् ।

इदानीं स्रावपातौ लक्षयति ।

**आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।**
**इत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥ १६ ॥**

मासचतुष्टयाभ्यन्तरे गर्भनाशः स्रावः, पञ्चमषष्ठयोर्गर्भनाशः पात इति स्वशास्त्रे व्यवहाराय संज्ञा क्रियते प्रसङ्गात्प्रसूतिमपि लक्षयति अतः षष्ठमासादूर्ध्वं सप्तममासमारभ्य गर्भनिर्गमः प्रसूतिस्तत्र सर्वथा दशाहं सूत्याशौचं भवेत् ।

इदानीं तस्याग्निसंस्करणे आशौचमाह ।

**दन्तजातेऽनुजाते च कृतचूडे च संस्थिते ।**
**अग्निसंस्करणे तेषां त्रिरात्रमशुचिर्भवेत् ॥ १७ ॥**

जाता दन्ता यस्यासौ दन्तजातः, आहिताग्न्यादित्वात्पूर्वनिपातः ।

अनुपश्चाज्जात जन्म प्रकरणाद्दन्तानां, यस्यामावनुजात. । अजातदन्त इति यावत्, कृता चूडा चौल यस्य तस्मिन्नस्थिते मृते तेषामग्निसंस्कारपक्षे तत्सपिण्डः पित्रादिस्त्रिरात्रमशुचिर्भवेदिति । अयमभिसन्धिः । जातदन्तस्याकृतचूडस्य दाहे त्र्यहमाशौचम् । तदाहाङ्गिराः ।

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।
दाहयित्वा तथाप्येनमाशौच त्र्यहमाचरेत् ॥ इति ।

अजातदन्तस्य तु कृतचूडस्य दाहे त्रिरात्रम् । तदाह षट्त्रिंशन्मते ।

यद्यप्यजातदन्तः स्यात्कृतचूडस्तु संस्थितः ।
तथापि दाहयेदेन त्र्यहमाशौचमाचरेत् ॥ इति ।

कृतचूडस्य दाहे त्रिरात्र "निवृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते" इति मनुस्मरणात् । यद्यप्यत्र नित्यवदग्निसंस्कारः सर्वेषु वाक्येषु श्रुतस्तथापि कृतचूडेऽसौ नित्योऽन्यत्र पाक्षिक इति द्रष्टव्यम् ।

तूष्णीमेवोदक कुर्यात्तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ॥

इति लौगाक्षिस्मरणात् ।

करणपक्षे कालविशेषमाह मनुः ।

नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।
जातदन्तस्य वा कुर्यान्नाम्नि वापि कृते सति ॥

एव च जातदन्ताजातदन्तयोश्चूडाकरणाग्निसंस्काराभावे आशौचान्तरमिति सिद्धम् ।

तदेव वयोविशेषेणाह ।

**आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता ।**
**त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥ १८ ॥**

दन्तोत्पत्तेः प्राक् शिशौ प्रेते सपिण्डानां सद्यः स्नानमात्रेण शुद्धिः । "अजातदन्ते बाले प्रेते सद्य एव नास्याग्निसंस्कारो नोदकक्रियेति"

त्रिपुरुषस्मरणात् । यच्चाप्यजातदन्ताः ये बाला इत्यनेनैव पुनरुक्तं सद्यः-शौचं तथापि तत्र दाहाभावप्रतिपादनायैवाजातदन्तानामुपादानं न सद्यःशौचविधानायात्र तु प्राधान्येनाशौचविधानमतो न पौनरुक्त्यम् । दन्तोत्पत्त्यनन्तरमाचूडाकरणाद्वैशिकी निशयाहोरात्रेण यथा शुद्धिः । "दन्तजातेऽप्यकृतचूडे त्वहोरात्रेण शुद्धिरिति त्रिपुरुषस्मरणात् । चौलात्प्रभृति वर्षत्रयादूर्ध्वमाव्रतादेशादोपनयनात्त्रिरात्रमाशौचम् ।

चौलं न क्रियते यस्य स्वकाले तस्य तावपि ।
चतुर्थवर्षमारभ्य चौलाभावे त्र्यहं मतम् ॥

इति गर्गादिस्मरणात् ।

स उपनयनानन्तरं दशरात्रम् । दशरात्रमिति स्वस्वाशौचकालोपलक्षणम् "स्वजात्युक्तमतः परमिति" ब्रह्मस्मरणात् । इदमाशौचवैलक्षण्यं सपिण्डानां पित्रोस्तु दशाहानन्तरमोपनयनात्त्रिरात्रमेव ।

निरस्य तु पुमान् शुक्रमुपस्पृश्य विशुध्यति ।
वैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम् ॥

इति मनुस्मरणात् । वैजिकः सम्बन्धो जन्यजनकभावः । तदपि पुमपत्यमरणे स्त्र्यपत्ये तु विशेषमाह ब्रह्मपुराणे ।

आजन्मनस्तु चौलान्तं कन्या यदि विपद्यते ।
सद्यः शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।
ततः परं प्रवृद्धाया त्रिरात्रमिति निश्चयः ॥
वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ।
पितुर्वरस्य च ततो दत्ताना भर्तुरेव हि ॥
स्वजात्युक्तमशौचं स्यात्सूतके मृतके तथा ॥ इति ।

पित्रोस्तत्रापि त्रिरात्रमेव ॥

प्रत्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥

इति शङ्खस्मरणात् । वाग्दत्तादत्तयोः कृतचूडाचूडयोश्चेत्यर्थः ।

अदन्तासु तु विशेषमाह कार्ष्णाजिनिः । "अजातदन्तासु पित्रोरेकरात्रमिति" । ऊढाना पितृगृहे प्रसवमरणयोः पित्रोस्त्रिरात्रमन्येषामेकाहः ।

दत्ता नारी पितुर्गेहे सूयते म्रियते तथा ।
तद्बन्धुवर्गस्त्वेकेन शुध्येत्तज्जनकस्त्रिभि. ॥

इति ब्रह्मपुराणात् । पितुरुपरमे तु तासा त्रिरात्रम् ।

पित्रोरुपरमे स्त्रीणामूढाना तु कथ भवेत् ।
त्रिरात्रेणैव शुद्धि. स्यादित्याह भगवान्यमः ॥

इति वृद्धमनुस्मरणात् । तथा मातामहोमातामहाचार्यर्त्विग्गुरुभागिनेयदौहित्रमातृपितृष्वसृतत्सुतजामातृश्वशुरश्यालकमहाध्यायीभगिनीमातुलमातुलानीमित्रश्रोत्रियादिषु स्वगृहमरणे त्रिरात्रमन्यत्र पक्षिणी देशान्तरादौ त्वेकाह इति विवृत षडशीतिविवृतौ शुद्धिचन्द्रिकायामस्माभिरिति नेहोच्यते ।

उक्ताशौचस्य पुरुषविशेषेणापवादमाह ।

**ब्रह्मचारी गृहे येषां हूयते च हुताशनः ।**
**सम्पर्कं चेन्न कुर्वीत न तेषां सूतकं भवेत् ॥ १६ ॥**

ब्रह्मचारी उपकुर्वाणको नैष्ठिकस्यात्राभावात् । चकारात्सन्यस्तस्य ग्रहण तेषा सपिण्डजननमरणयोराशौच नास्ति । तदाह देवलः ।

नैष्ठिकाना वनस्थाना यतीना ब्रह्मचारिणाम् ।
नाशौच सूतके प्रोक्त शावे वापि तथैव च ॥ इति ।

चकाराच्छैववैष्णवदीक्षावतोऽपि शिवविष्णवर्चने नाशौचम् ।

तदाह वृद्धविष्णु. ।

शिवविष्णवर्चने दीक्षा यस्य चाग्निपरिग्रहः ।
ब्रह्मचारियतीना च शरीरे नास्ति सूतकम् ॥ इति ।

ब्रह्मचारिण आशौचाभावः पित्रोरन्यत्र ब्रह्मचारिभावमिच्छतः ।

न त्यजेत्सूतके कर्म ब्रह्मचारी स्वयं क्वचित् ।
न दीक्षणात्पर यज्ञे न कृच्छ्रादितपश्चरन् ॥

पितर्यपि मृते नैषा दोषो भवति कर्हिचित् ।
दशौच कर्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणाम् ॥ इति ।

येषा गृहे हुताशनो गृह्याग्निर्हूयते तेषामप्याशौचं नास्ति यद्य
प्येतत्सामान्येनोक्तं तथापि गृह्याग्निहोमे स्वद्रव्यत्यागमात्रे नाशौचमिति
य त स्यानन्यसाध्यत्वात् । हावनविधानाच्च । तथा च बृहस्पतिः ।

मृतके मृतके चैव अशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत् ॥ इति ।

तेषामप्याशौचे व्यतिरेकमुखेन निमित्तमाह । यदाशौचिभि सह
सपर्कमेकत्र शय्यासनभोजनादिरूपत्र कुर्वन्ति तदैवाशौचाभावोऽन्यथा
त्वाशौचमेवेति

सम्पर्कस्यान्वयव्यतिरेकाभ्यामाशौचापादकत्वमुपपादयति ।

**सम्पर्काद् दुष्यते विप्रो जनने मरणे तथा ।**
**सम्पर्काच्च निवृत्तस्य न प्रेतं नैव सूतकम् ॥ २० ॥**

सम्पर्कादुक्तलक्षणाद्विप्रो ब्रह्मचार्यादिः सपिण्डजननमरणयोर्दु-
ष्यत्यशुचिर्भवति तन्निवृत्तौ च न शावसूत्याशौचभागिति ।

अनेन सपिण्डानामपि ब्रह्मचार्यादीना सम्पर्कासम्पर्काभ्यामाशौ
चानाशौचप्रतिपादनेनासपिण्डानामाशौचिसम्पर्के कैमुतिकन्यायेनैवाशौच-
सिद्धिरभिहिता ।

अत एव बृहस्पतिः ।

यस्तै सहासपिण्डोऽपि प्रकुर्याच्छयनासने ।
बान्धवोऽबान्धवो वापि स दशाहेन शुध्यतीति ॥

सपिण्डाना तु सूतकान्नभोजने न दोषः ।

सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् । इति यमस्मरणात् ।

किं च ।

**शिल्पिनः कारुका वैद्या दासी दासाश्च नापिताः ।**
**राजानः श्रोत्रियाश्चैव सद्यः शौचाः प्रकीर्तिताः ॥ २१ ॥**

शिल्पिनश्चित्रकाराद्याः कारुकाः सूपकाराद्याः, वैद्याश्चिकित्सकाः, दासीदासाः गर्भदासाद्याः, नापिता केशश्मश्रुकर्त्तारः, राजानोऽभिषिक्ताः क्षत्रिया , श्रोत्रिया अध्यापनैकवृत्तयस्ते सर्वे सद्यः शुद्धाः स्वस्वकर्मसु न तु धर्मादौ । तथा च विष्णु. । "आशौच न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्मणि न राजाज्ञाकारिणां तदिच्छायामिति" ।

किं च ।

**सव्रतः सत्रपूतश्च आहिताग्निश्च यो द्विजः ।**
**राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः ॥ २२ ॥**

व्रतेन कृच्छ्रचान्द्रायणादिना सह वर्तमानः सव्रतः सत्रे गवामयनादौ पूतो दीक्षितः । शस्त्रपूत इति पाठे शस्त्रविद्योपजीवी वा आहिताग्निरग्निहोत्री राज्ञः पुनरुपादानं पार्थिवमात्रस्य सद्यः शुद्धिबोधनाय यस्य च पार्थिवो मन्त्रिपुरोहितादेः शुद्धिमिच्छति तेषां सर्वेषामशौचं नास्ति तत्तत्कर्ममात्रे न तु सर्वत्र तेनाहिताग्नेरप्यग्निहोत्रहोममात्रे शुद्धि ।

वर्जयेत्सूतके कर्म नित्यनैमित्तिकादिकम् ।
आहिताग्नेः सदा शुद्धि सद्य एव विधीयते ॥
अग्निहोत्रस्य होमार्थं स्नानोपस्पर्शनात्परम्। इति स्मरणात् ।

किं च ।

**उद्यतो निधने दाने आर्तो विप्रो निमन्त्रितः ।**
**तदैव ऋषिभिर्दृष्टं यथाकालेन शुद्ध्यति ॥ २३ ॥**

निधने उद्यतो मुमूर्षुः आर्तो व्याधिपीडितः तयोर्दाने मरणकालकर्तव्ये वैतरण्यादिधेनुदाने व्याध्युपशामकज्वरकुम्भादिदाने च तदैव तावन्मात्रकार्ये शुध्यतीति ऋषिभिः पूर्वैर्दृष्ट यथाकालेन दशाहादिना तथेति ।

जन्मप्रभृतिपापानां निरासे च मरिष्यतः ।
उत्क्रान्तिवैतरण्यादिदाने प्रेताहुतिष्वपि ॥

इति बहुशास्त्रस्मरणात् ।

दाने विशिष्टे आरब्धे व्याधिना शङ्कितात्मने ।
यो नित्यदोऽपि यो वस्तु दातुं स्मादिदं वाञ्छति ॥

इति स्मृत्यन्तरस्मरणाच्च । नित्यदो मया दानव्यतिरेकेण न भोक्तव्यमिति कृतसङ्कल्प, विप्रो निमन्त्रितः श्राद्धे दत्तस्तेन सद्यः शुद्ध इति ।

निमन्त्रितस्य विप्रस्य स्वाध्यायादिरतस्य वा ।
देहे पितृषु तिष्ठत्सु नाशौच विद्यते क्वचित् ॥

इति स्मृत्यन्तरस्मरणात् । तदैवेत्युपादानात्तत्कालसमाप्तकर्तव्येऽनन्यगतिके यज्ञस्नानदानादावप्याशौचाभावो ध्वनितः । अत एव वसिष्ठ. ।

सूतके मृतके चैव न दोषो राष्ट्रविप्लवे ।
तावदेव भवेच्छुद्धिर्यावत्कर्म न दुष्यति ॥ इति ।

एवमन्यत्राप्यनन्यगतिके कर्मणि सद्यः शुद्धिरूहनीया न्यायसाम्यात् ।

जातो विप्र इत्यनेन सपिण्डानां जननाशौचमुक्त्वा पित्रोस्तदाह ।

**प्रसवे गृहमेधी तु न कुर्यात्सङ्करं यदि ।**
**दशाहाच्छुध्यते माता त्ववगाह्य पिता शुचिः ॥१९॥**

प्रसवे प्रसवाशौचे गृहमेधी गृहस्थः पिता यदि सूतिकया सह संसर्गं सहशय्यासनभोजनादिरूपं तद्गमनं वा न करोति तदा अवगाह्य स्नात्वा शुचि स्पर्शयोग्यो भवति माता तु दशाहेनैव तदाह संवर्त. ।

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥ इति ।

गृहमेधीतिविशेषणादाश्रमान्तरगतस्य तन्नेति सूचितं "वनस्थानां यतीनां च नाशौचमिति" देवलस्मरणात् ।

न कुर्यात्सङ्करमित्यनेन सङ्करे दशाहमस्पृश्यत्वं सूचितं तच्च स्वयमेव वक्ष्यति । अत एव वसिष्ठः ।

नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति ।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते ॥ इति ।

मातृपदोपादानात्सर्ववर्णसूतिकानां दशाहमेवास्पृश्यत्वमुक्तम् ।

तदाह प्रचेताः ।

सूतिका सर्ववर्णानां दशरात्रेण शुध्यति ।
ऋतौ च न पृथक् शौचं सर्ववर्णेष्वयं विधिः ॥ इति ।

तुशब्दात्सपत्नमातॄणामपि स्नानमुक्तम् । "अन्याश्च मातरस्तद्वत्-द्गृहं न व्रजन्ति चेदिति" ब्रह्मपुराणात् । तद्वत्पितृवत्स्नानेन शुद्धास्तद्गेहगमने तत्सम्पर्के पितृवदेव दशाहम् । अन्येषां सूतिकास्पर्शे स्नानमात्रमेव

सूतके सूतिकावर्जमङ्गस्पर्शो न दुष्यति ।
संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ॥

इत्याङ्गिरःस्मरणात् ।

ब्राह्मणानां विशुद्धिस्त्रित्यनेन प्रेताशौचे स्पर्शं निर्णीय सूत्याशौचे तन्निर्णयमाह ।

**सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ।**
**सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ २५ ॥**

यथा शावं शवनिमित्तमाशौचं स्पर्शायोग्यत्वं सर्वेषां सपिण्डानां तथा सूतकं सूतिनिमित्तमस्पृश्यत्वं मातापित्रोरेव न सपिण्डानां तदाह पैठीनसिः ।

जनौ सपिण्डाः शुचयो मातापित्रोस्तु सूतकमिति" । शुचयः स्पृश्याः "सूतके तु सपिण्डानामङ्गस्पर्शो न दुष्यतीति" कौर्मात् । तत्रापि विशेषमाह सूतकेऽस्पृश्यत्वमात्यन्तिकं मातुरेव "पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद् ध्रुवमिति" याज्ञवल्क्यस्मरणात् । पितुस्तु स्नानानन्तरमुपस्पर्शमाचमनं यावत् । तथा च पैठीनसिः । "सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिरिति" यद्यप्ययमर्थः पूर्वश्लोकेऽभिहित एव तथापि मातापित्रोस्तु सूतकमित्युक्तिं विवरीतुं पुनरुपन्यस्तः । तदुक्तिस्तु सपिण्डानामस्पृश्यत्वाभावबोधनायेति ।

विवाहश्चौलादीनामुपलक्षणं संस्कारत्वाविशेषात् । उत्सवो देव- प्रतिष्ठारामोत्सर्गादिः यज्ञो ज्योतिष्टोमादिस्तस्मिन्पूर्वं प्रवृत्ते "यज्ञे सम्भृत सम्भारे विवाहे श्राद्धकर्मणीति" स्मरणात् । अन्तरा मध्ये मृतं सूतकं च तयोः समाहारस्तस्मिन्सति पूर्वं विवाहाद्यारम्भकाल एव सङ्कल्पितं व्ययितव्यत्वेनावधारितं देवब्राह्मणेभ्यो दीयमानं स्वयमपि त्यज्यमानं न दूष्यति न दोषमावहति "पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दूष्यतीति" कूर्मस्मरणात् ।

विवाहोत्सवयज्ञेषु यात्रायां तीर्थकर्मणि ।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् ॥

इति पैठीनसिस्मरणाच्च । यत्तु

द्रव्याणि स्वामिसम्बन्धादघानि त्वशुचीनि च ॥
स्वामिशुध्यैव शुध्यन्ति वारिणा प्रोक्षितानि च ॥ इति ।

तत्सङ्कल्पितद्रव्यविषयम् । क्वचिदसङ्कल्पितेऽपि द्रव्ये शुद्धिमाह मरीचिः ।

लवणे मधुमांसे च पुष्पमूलफलेषु च ।
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयस्यपि ॥
तैलौषध्यजिने चैव पक्वापक्वे स्वयं ग्रहः ।
पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ॥ इति ।

पक्वं सिकतादिना भ्राष्ट्रादिषु भर्जितं न तु पक्वान्नं 'भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेदि"ति तत्र प्रायश्चित्तस्मरणात् । इदमपि तद्वृत्ते, परदत्तं तु न दोषः ।

विवाहोत्सवयज्ञादिष्वन्तरामृतसूतके ।
शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत् ॥ इतिस्मरणात् ।

आशौचसन्निपाते प्रतिनिमित्तनैमित्तिकावृत्तिमपवदति ।

**अन्तरा तु दशाहस्य पुनर्मरणजन्मनी ।**
**तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ॥ २९ ॥**

दशाहस्य जननमरणनिमित्तदशाहाशौचस्यान्तरा मध्ये यदि पुन र्दशाहाशौचनिमित्ते त्र्यहाद्याशौचनिमित्ते वा जननमरणे स्याता तदा तावद्विप्रोऽन्या आऽशुचिः स्यात्तावत्पूर्वप्रवृत्तमाशौचमनिर्दश निर्गत दश-भ्यो ऽहोरात्रेभ्य इति निर्दश तच्च भवतीत्यनिर्दशमसमाप्तदशाहमिति यावत पूर्वाशौचशेषेणैव शुद्धिर्न पुनर्दशाहमित्यर्थः । तथा च विष्णु जन नाशौचमध्ये यद्यपर जनन स्यात्तत्र पूर्वाशौचव्यपगमे शुद्धि मरणाशौचमध्य ज्ञातिमरणेऽप्येवमिति । दशाहग्रहणादापादानात्त्र्यहाद्याशौचमध्ये दशाहपाते न पूर्वेण शुद्धि. किं तु स्वकालेनैवेति ध्वनित तदाहोशना ।

स्वाशौन्याचस्य मध्ये तु दीर्घाशौच भवेद्यदि ।
न पूर्वेण विशुद्धिः स्यात्स्वकालेन विशुद्ध्यति ॥ इति ।

मरणजन्मनी इत्यत्र मरणपदस्य पूर्वप्रयोगेण मरणाशौचेन जनना शौचमपैति न जननाशौचेन मरणाशौचमिति ध्वनितम् । तथा च षड्त्रिंशन्मते ।

शावाशौचे समुत्पन्ने सूतक तु यदा भवेत ।
शावेन शुध्यते सूतिर्न सूति. शावशोधिनी ॥ इति ।

अन्तरा तु दशाहस्येति सामान्यविधानेऽप्यानवमदिनाद्दशाहा न्तरपाते पूर्वशेषेण शुद्धिरिति ध्येयम् । अथ यदि दशरात्राघसन्निपाते पुराघ दशरात्रमाशौचमानवमादिति बौधायनस्मरणात् । दशमदिवसे आशौचान्तरपाते द्व्यहेन रात्रिचतुर्थयामे तु त्र्यहेण शुद्धि . तदाह देवल ।

पुन पाते दशाहात्प्राक् पूर्वेण सह गच्छति ।
दशमेऽह्नि पतेद्यस्य त्र्यहात्स तु विशुध्यति ॥
प्रभाते स त्रिरात्रेण दशरात्रेष्वय विधि ॥ इति ।

इय च पूर्वशेषेण शुद्धिः सपिण्डाशौचस्य, पित्राशौचस्य तु स्वका लेनैव

पूर्वेण वा परेणापि पित्रोः शावेन हीतरत् ।
आशौच शुद्धिमायाति न पित्रोः शावमन्यतः ॥

इति षडशीतिस्मरणात् पित्राशौचयोः परस्परसन्निपाते तु विशेषमाह शङ्खः ।

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥ इति ।

पितु शेषेण पित्राशौचशेषेणैव न पूर्वशेषेण, पित्राशौचमध्ये मातृमरणे तु पित्राशौचकालात्पक्षिण्यधिकेत्यर्थ. । उक्तदशाहाशौचमन्यत्राप्यपवदति ।

**ब्राह्मणार्थे विपन्नानां बन्दिगोग्रहणे तथा ।**
**आहवेषु विपन्नानामेकरात्रमशौचकम् ॥ ३० ॥**

ब्राह्मणार्थे ब्राह्मणस्य प्राणरक्षार्थं तथा बन्दिग्रहणे गोग्रहणे च सति तन्मोचनादेकरात्रमशौचकम् ।

आहवे सग्रामे च ये विपन्ना विपदं शस्त्रप्रहार प्राप्ताः कालान्तरे च मृतास्तेषां सर्वेषामेकरात्रमशौचम् । सम्मुखमरणे तु ।

गोब्राह्मणस्य चैवार्थे यस्य वेच्छति भूमिपः ।
शस्त्रेणाभिमुखो यस्तु वध्यते क्षत्रकर्मणा ॥
सद्यः सन्तिष्ठते यज्ञः सद्यः शौच विधीयते ।

इति मनुयमाभ्या सद्यः शौचस्मरणात् । यत्तु सग्रामे देशान्तरगताना जातदन्ताना त्रिरात्रेणेति कश्यपस्मरणम्, तत्पराङ्मुखस्य पलायनसमये हतस्येति ज्ञेयम् । यद्यपि परोद्देशात्मसन्त्याग इत्यनेन गोब्राह्मणाद्यर्थे बुद्धिपूर्वं आत्मत्यागनिषेधेनेदमाशौचाभिधान विरुद्धम, तथापि कथ चित्प्रवृत्तस्य प्रामादिकमरणे आशौचाकाङ्क्षायामिदमुच्यत इति न विरोधः । बुद्धिपूर्वं प्रवृत्तस्य निषेधातिक्रमेणात्मघातितया यावदब्द तदाशौचाभावात् ।

रणहतस्यैकाहाशौचविधिशेषतयाऽऽहवहत प्रशसति ।

**द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।**
**परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ ३१ ॥**

अष्टाङ्गयोगयुक्तः परिव्राजकस्तपोयोगेनैव कलेवरं मुक्त्वार्चिरादि-मार्गेण गच्छन्नादित्यमण्डलं भित्त्वा ब्रह्मलोकं प्रयातीति श्रुतिस्मृतिसिद्धं तद्वदेव सग्रामहतोऽपीति योगिरणहतयोः सादृश्यम् । नन्वतिप्रयास-साध्येन योगेन द्वैधसम्पादितं रणमरणं कथं समानमित्यत आह । अभि-मुख इति देहादिसकलदुर्जयविषयपराङ्मुख एव शत्रुसम्मुखो योगसम्मु-खश्च भवतीति समानायासवत्त्वेनोपपन्नं साम्याभिधानम् ।

ननु कुत्र देशे रणहतस्य ब्रह्मलोकावाप्तिरित्यत आह ।

**यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ।**
**अक्षयान् लभते लोकान् यदि क्लीबं न भाषते ॥ ३२**

यत्र यस्मिन् रणाङ्गणे शत्रुभिः परितस्समन्ताद्द्रुधार्थं परिवेष्टित आवृतः शूरः शत्रुतो निर्भयस्तत्रैव रणाङ्गणे न ततः पलायमानो हतः प्राणैर्वि-योजितोऽक्षयाश्चिरकालावस्थायिनो लोकान् ब्रह्मलोकावान्तरविशेषान् लभते । तथा च याज्ञवल्क्यः ।

य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः ।
अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ इति ।

अपलायनस्यापि काकुभाषणेन तत्फलमाह यदि क्लीबमनूर्जितं मुञ्च मामतिदीनं दीनतरकुटुम्बमेकपुत्रं त्वच्छरणागतमित्यादि न भाषते ।

रणहतस्य सूर्यमण्डलभेदने दृष्टान्तसिद्धिं परिहरति ।

**सन्यस्तं ब्राह्मणं दृष्ट्वा स्थानाच्चलति भास्करः ।**
**एष मे मण्डलं भित्त्वा परं स्थानं प्रयास्यति ॥ ३३ ॥**

सन्यस्तं सन्यासयोगवन्तं ब्राह्मणमालोक्य भास्करो मण्डलाधि-ष्ठात्री देवता स्थानाच्चित्तस्थैर्याच्चलति चञ्चलचित्तो भवतीति यावत् । तत्र हेतुमाह । एष योगी मे मदधिष्ठितं मण्डलं भित्त्वा परं स्थानं ब्रह्म-लोकाभिधं प्रयास्यतीति । एतच्चानिष्टं देवानां यन्मनुष्याणां स्वोपरिवर्त-नमिति । अत एव व्यासः ।

"क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः ।
न चैतदिष्टं देवानां मर्त्यैरुपनिवर्त्तनम् ॥ इति ।

रणमरणाभावेऽपि स्वीयपरित्राणे तदेव फलमाह ॥

**यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः ।**
**परित्राता यदा गच्छेत्स च क्रतुफलं भवेत् ॥ ३४ ॥**

यो योद्धा स्वसैन्येषु भग्नेषु पराभवात्पराङ्मुखेषु समन्ततो दिक्षु विदिक्षु च स्वत्राणपरायणतया विशेषतो द्रवत्सु तेषां परित्राणाय यदा गच्छेत्तस्मादेकैकपदप्रक्षेपेण क्रतोरश्वमेधस्य फलं लभते तदाह याज्ञवल्क्यः "पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्त्तिनामिति" ।

शस्त्रक्षतस्य कालान्तरमरणेऽपि तथैवेत्याह ।

**यस्य छेदक्षतं गात्रं शरमुद्गरयष्टिभिः ।**
**देवकन्यास्तु तं वीरं हरन्ति रमयन्ति च ॥ ३५ ॥**

यस्य योद्धुः शरमुद्गरयष्टिभिर्गात्रं कलेवरं छेदैर्हस्तपादादिच्छेदनैः क्षतं लूनं तं कालान्तरमृतमपि देवकन्या नीत्वोत्तमभोगै रमयन्ति ॥

तत्कालमरणे फलविशेषमाह ।

**देवाङ्गनाः सहस्राणि शूरमायोधने हतम् ।**
**त्वरमाणाः प्रधावन्ति मम भर्त्ता ममेति च ॥ ३६ ॥**

देवाङ्गना अप्सरसः सहस्राणि सहस्रसंख्याः आयोधने रणे हतं शूरं मम भर्त्ता मम भर्तेत्यहंपूर्विकया यद्वोत्सुपतित्वरिताः प्रधावन्तीति ।

नन्वननुष्ठितयज्ञादीनां योधानां युद्धमरणे कथं युगपदनेकविरुद्धफलोपभोग इत्यत आह ।

**ये यज्ञसंघैस्तपसा च विप्राः**
**स्वर्गैषिणो यत्र यथैव यान्ति ।**
**क्षणेन यान्त्येव हि तत्र वीराः**
**प्राणान् सुयुद्धेन परित्यजन्तः ॥ ३७ ॥**

यज्ञसङ्घैर्यज्ञसमूहैर्ज्योतिष्टोमादिभिस्तपसा कृच्छ्रचान्द्रायणादिना स्वर्गैषिणः स्वर्गकामा निष्कामतयानुष्ठितैस्तैरेव मोक्षकामा वा विप्रा यथैव तत्तत्कर्मफलमनुभूय फलान्तरमुपभुञ्जते तत्कर्मोपभोगानन्तरं मोक्षभाजो वा भवन्ति तथैव सुयुद्धेन धर्मयुद्धेन क्षणेन तत्कालमेव प्राणान्परित्यजन्तो वीराः स्वर्गलोके तत्तत्सुखमनुभूय ब्रह्मभूय प्राप्नुवन्तीति नानेकफलभोगविरोध इति ।

नन्वेवं स्वर्गादिफलकामेन तत्फलकसाधनान्तरमेवानुष्ठीयतां किं सर्वानिष्टेन रणमरणेनेत्यत आह ।

**जितेन लभ्यते लक्ष्मीर्मृतेनापि सुराङ्गना ।**
**क्षणध्वंसिनि कायेऽस्मिन्का चिन्ता मरणे रणे ॥ ३८ ॥**

जितेनेति कर्तरि तृतीया ततश्च यदि शत्रुं जयति तदा तदीयां लक्ष्मीं लभते यदि च तेन हतो म्रियते तदा सुराङ्गनामित्यैहिकामुष्मिकफलसाधने सङ्ग्राममरणमन्वयव्यतिरेकाभ्यामतो न कर्मान्तरतुल्यताऽस्येति । न चास्य कर्मान्तरवच्चिरकालसाध्यतापीत्याह । अथ प्रत्यक्षपरिदृश्यमानः कायो देहः क्षणेनैव ध्वंसतीति रणमरणं न चिरकालसाध्यम् । अनेन रणमरणाभावेऽप्यस्य विनश्वरत्वमाविष्कृतम् । ननु यथा रणप्रहारैः स्वर्गो भवति तथा तज्जन्यासृङ्मुखप्रवेशे नरकोऽपि स्यादित्यत आह ।

**ललाटदेशे रुधिरं स्रवच्च**
**यस्याहवे तु प्रविशेच्च वक्त्रम् ।**
**न सोमपानेन किलास्य तुल्यं**
**संग्रामयज्ञे विधिवच्च दृष्टम् ॥ ३९ ॥**

आहवे सङ्ग्रामे ललाटदेशे प्रहारेण स्रवद्रुधिरं यस्य वक्त्रमनुप्रविशेत्तदस्य सोमपानेन तुल्यं सङ्ग्रामलक्षणे यज्ञे तत्प्रतिपादकविधिना दृष्टं बोधितमिति नात्र नरकशङ्कापि ।

अनाथविप्रवहनादौ सद्यः शौचविधेरर्थवादमाह ।

**अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।**
**पदे पदे यज्ञफलमानुपूर्व्या लभन्ति ते ॥ ४० ॥**

अनाथं मरणदेशकालयोर्बन्धुविहीनमसम्बन्धिनं ब्राह्मणमदृष्टार्थं ये द्विजातयो वहन्ति ते पदे पदे यज्ञानामग्निष्टोमादीनां फलान्यानुपूर्व्या क्रमेण प्राप्नुवन्ति ॥

इदानीं सद्यः शौचविधिमाह ।

**न तेषामशुभं किंचित्पापं वा शुभकर्मणाम् ।**
**जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥ ४१ ॥**

तेषामनाथब्राह्मणवाहकानामशुभं क्लेशवापनादि पापं वा शवस्पर्शादिनिमित्तं नास्ति यतस्ते शुभकर्माणो विहितानुष्ठातारोऽतस्तेषां जलावगाहनात्स्नानमात्रात्सद्यः शौचं भवति ।

तदाह बृहत्पराशरः ।

प्रेतस्पर्शनसंस्कारैर्ब्राह्मणो नैव दुष्यति ।
वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुद्ध्यति ॥ इति ।

वहनदहनसमुच्चयेऽधिकं प्राणायाममाह ।

**असगोत्रमबन्धुं च प्रेतीभूतं द्विजोत्तमम् ।**
**वहित्वा दाहयित्वा च प्राणायामेन शुद्ध्यति ॥४२॥**

न समानं गोत्रं यस्यासावसगोत्रस्तं च सपिण्डसोदकसगोत्रभिन्नस्तेषां समानगोत्रत्वात् । अबन्धुं मातापितृभ्रातृबन्धुभिन्नं द्विजोत्तमं ब्राह्मणं प्रेतीभूतं मृतं वहित्वा दहित्वा च चकारात्स्नानाग्निस्पर्शनाभ्यां सह प्राणायामेन शुद्ध्यति । तदाहाङ्गिराः ॥

यः कश्चिन्निर्हरेत्प्रेतमसपिण्डः कथं च न ।
स्नात्वा सचैलं स्पृष्ट्वाग्निं तस्मिन्नेवाह्नि वै शुचिः ॥ इति ।

असगोत्रमित्यनेन समानगोत्रयोः सोदकसगोत्रयोर्दहनवहनयोर्दशाहमित्युक्तम् । तदाह देवलः ।

बामरथ्यायन । बामरथानि सङ्घाङ्कलक्षणानि । स्वरस्तु प्रत्ययस्यैव न त्वातिदेशिकमाद्युदात्तत्वम् ॥

**सेनान्तलक्षणकारिभ्यश्च । ४ । १ । १५२ ॥**

एभ्यो एयः ॥ हारिषेण्य । लाक्षण्य. । कारिशिल्पी । तस्मात् तान्तुवाय्य. । कौम्भकार्य्य. । नापित्य: । प्रावा मतेनेदम् । उदीचान्तु परत्वात्फिञिति वक्ष्यते ॥

**उदीचामिञ् । ४ । १ । १५३ ॥**

हारिषेणि: ॥ लाक्षणि: । तान्तुवायि । कौम्भकारि: । नापितात्तु परत्वात्फिञेव । नापितायनि: । तक्ष्णो ऽण उपसंख्यानम् ॥ * ॥ उदीचामित्येव । इञोऽपवाद. । ताक्ष्ण: । पक्षे ताक्षण्य: ॥

**तिकादिभ्यः फिञ् । ४ । १ । १५४ ॥**

तैकायनि ॥

**कौशल्यकार्मार्य्याभ्याञ्च । ४ । १ । १५५ ॥**

अपत्ये फिञ् ॥ इञोऽपवाद. । परमप्रकृतेरेवायमिष्यते । प्रत्ययसन्नियोगेन प्रकृतिरूप निपात्यते । न तु कोसलस्यापत्य वृद्धेत्कोसलाजादाञ् ज्यङिति ज्यङ् कर्मारस्यापत्यं कारिलक्षणो एय इत्येवं यौ कौसल्यकार्मार्यशब्दौ तयोर्ग्रहणम् । कुसलस्यापत्य कौसल्यायनि: । कर्मारस्यापत्य कार्मार्य्यायणि ॥ दगुकोसलकर्मारच्छागवृषाणा युट् चेति वक्तव्यम् ॥ * ॥ दागव्यायनि. । छाग्यायनि. । वार्ष्यायणि: ।

**अणो द्व्यचः । ४ । १ । १५६ ॥**

अपत्ये फिञ् ॥ इञोऽपवादः । कर्त्तुश्छात्र । कार्त्त । तस्यापत्यं कार्त्तायणि: । अण इति किम् । दाक्षायण: । द्व्यचः किम् ।

औपगविः । त्यदादीनां वा फिञ् वाच्य ॥ * ॥ त्यादायनिः । त्यादः ॥

उदीचां वृद्धादगोत्रात् । ४ । १ । १५७ ॥

आम्रगुप्तायनि ॥ प्राचान्तु आम्रगुप्तिः । वृद्धात्किम् । दाक्षिः । अगोत्रात्किम् । औपगविः ॥

वाकिनादीनां कुक् च । ४ । १ । १५८ ॥

अपत्ये फिञ् च ॥ यदिह वृद्धमगोत्र तत्र फिञि सिद्धे आगमार्थमिदम् । अन्येषामुभयार्थम् । वाकिनस्यापत्य वाकिनकायनि । वाकिनिः । चर्मिवर्मिणोर्नलोपश्च । चार्मिकायणिः । वार्मिकायणि' ॥

पुत्रान्तादन्यतरस्याम् । ४ । १ । १५९ ॥

उदीचा वृद्धादित्येव ॥ अस्माद्वा फिञ् सिद्धस्तस्मिन्परे पुत्रान्तस्य वा कुक् विधीयते ॥ गार्गीपुत्रकायणि । गार्गीपुत्रायणि । गार्गीपुत्रि ॥

प्राचामवृद्धात्फिन् बहुलम् । ४ । १ । १६० ॥

ग्लुचुकायनि' । प्राचां किम् । ग्लौचुकि । अवृद्धात्किम् । राजदत्तिः । उदीचां प्राचां बहुलमन्यतरस्यामिति सर्वे एते विकल्पार्थास्तेषामेकेनैव सिध्यति तथाचार्यग्रहणं पूजार्थम् । बहुलग्रहणं वैचित्र्यार्थम् । क्वचिन्न भवत्येव । दाक्षि ॥

मनोर्जातावञ्यतौ षुक् च । ४ । १ । १६१ ॥

समुदायार्थौ जातिः । मानुष । मनुष्य । अपत्ये व्युत्पादितस्यापि मानुषशब्दस्य जातिवाचित्वादपत्यबोधकत्वाभावात्प्रव-

गाथ्यायप्रसिद्धत्वाभावाच्च बहुषु लुक् न। मानुषः। मनुषाख्या सञ्ज्ञा। सञ्ज्ञाञ्चेत्यणपि न। जातौ किम्। मानवी प्रजा।

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः॥

## अपत्यं पौत्रप्रभृति गोत्रम्। ४। १। १६२।

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसञ्ज्ञं स्यात्॥

## जीवति तु वंश्ये युवा। ४। १। १६३॥

पौत्रप्रभृतीत्यनुवृत्तं षष्ठ्या विपरिणम्यते तुशब्दोऽवधारणार्थः। वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसञ्ज्ञमेव स्यान्न गोत्रसञ्ज्ञम्॥

## भ्रातरि च ज्यायसि। ४। १। १६४॥

ज्येष्ठे भ्रातरि जीवति कनीयान् चतुर्थादिर्युवा स्यात्॥ अवश्यार्थोऽयमारम्भः। भ्राता हि न वंश्यः। अकारणत्वात्॥

## वान्यस्मिन्सपिण्डे स्थविरतरे जीवति॥ ४। १। १६५॥

भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसञ्ज्ञम्॥ एकं जीवतिग्रहणमपत्यविशेषणं द्वितीयं सपिण्डस्य। तरप्निर्देश उभयोरुत्कर्षार्थः। स्थानेन वयसा चोत्कृष्टे पितृव्ये मातमहभ्रातरि वा जीवति। गार्ग्यस्यापत्यं गार्ग्यायणः। गार्ग्यो वा। स्थविरेति किम्। स्थानवयोन्यूने गार्ग्य एव। जीवति किम्। मृते मृतो वा गार्ग्य एव॥ वृद्धस्य च पूजायामिति वाच्यम्॥ * ॥ गोत्रस्यैव वृद्धसञ्ज्ञा प्राचाम्। गोत्रस्य युवसञ्ज्ञा पूजायां गम्यमानायाम्। तत्र भवान् गार्ग्यायणः। पूजेति किम्। गार्ग्यः।

यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम् ॥ * ॥ गार्ग्यो व्रात्यः । कुत्सेति किम् । गार्ग्यायणः ॥

## जनपदशब्दात्क्षत्रियादञ् ॥ ४ । १ । १६६ ॥

जनपदशब्दो यः क्षत्रियवाची तस्मादञ् स्यादपत्ये ॥

दाण्डिनायनेति सूत्रे निपातनाट्टिलोपः । ऐक्ष्वाकः । ऐक्ष्वाकौ । पाञ्चालः । पाञ्चालौ । जनपदशब्दात्किम् । द्रुह्योरपत्यं द्रौह्यवः । अत्रौत्सर्गिकोऽणेव । क्षत्रियात्किम् । ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिः । वैदेहिः । क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् । तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् । पञ्चालानां राजा पाञ्चालः । इहावृद्धादपि बहुवचनविषयादिति प्राप्तो वुञ् बाध्यते । पूरोरण् वक्तव्यः ॥ * ॥ पौरवः । सिद्धे प्राग्दीव्यतीयेऽणि तद्राजसंज्ञार्थमिदं वचनम् । पुरुशब्दो न जनपदवाची । अन्यथा ह्यङ्गमगधेत्यणः सिद्धत्वाद्वचनमनर्थकं स्यात् ॥

## पाण्डोर्ड्यण् ॥ ४ । १ । १६७ ॥

युधिष्ठिरपितृवाचिन एव ॥ गुणवाचिनश्च नेह ग्रहणम् । जनपदशब्दादित्युक्ते हि तदधिपतिवाच्येवोपतिष्ठते । पाण्ड्यः ॥

## साल्वेयगान्धारिभ्यां च ॥ ४ । १ । १६८ ॥

आभ्यामपत्येऽञ् ॥ वृद्धेदिति ञ्यङोऽपवादः । साल्वेयः । गान्धारः । तस्य राजन्यप्येवम् ॥

## द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ ४ । १ । १६९ ॥

अञोऽपवादः । द्व्यच् । आङ्गः । वाङ्गः । सौह्मः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम् ॥

**वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ ४ । १ । १७० ॥**

वृद्धात् ॥ आम्बष्ठ्यः । सौवीर्यः । इतः । आवन्त्यः । कौसल्यः । अजादस्यापत्यमाजाद्यः ॥

**कुरुनादिभ्यो ण्यः ॥ ४ । १ । १७१ ॥**

कौरव्यः । नैषध्यः । स नैषधस्यार्थपतेरित्यादौ तु शैषिकोऽण् ॥

**साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ ४ । १ । १७२ ॥**

साल्वो जनपदस्तदवयवा उदुम्बरादयस्तेभ्यः प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ् स्यात् ॥ अञोऽपवादः । औदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । राजन्यप्येवम् ॥

**ते तद्राजाः ॥ ४ । १ । १७३ ॥**

अञादय एतत्संज्ञाः स्युः । तेन तद्राजस्य बहुष्विति लुक् । इक्ष्वाकवः पञ्चाला इत्यादि ॥

**कम्बोजाल् लुक् । ४ । १ । १७४ ॥**

अस्मात्तद्राजस्य लुक् । कम्बोजः ॥ कम्बोजादिभ्य इति वक्तव्यम् ॥ * ॥ चोलः । शकः । द्व्यञ्मगधेत्यणो लुक् । केरलः । यवनः । अञो लुक् । कम्बोजाः समरे इति पाठः सुगमः । दीर्घादिपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः । सिन्धुतक्षशिलादिभ्योऽणञावित्यनेन सिन्ध्वादित्वादण् ॥

**स्त्रियामवन्तिकुन्तिकुरुभ्यश्च । ४ । १ । १७५ ॥**

तद्राजस्य लुक् स्यात् ॥ अवन्ती । कुन्ती । कुरूः ॥

**अतश्च । ४ । १ । १७६ ॥**

तद्राजस्याकारस्य स्त्रिया लुक् स्यात् ॥ शूरसेनी । मद्री । कथ माद्रीसुतावित । ह्रस्व एव पाठ इति हरदत्तः । भर्गादित्व वा कल्प्यम् ॥

## न प्राच्यभर्गादियौधेयादिभ्यः । ४ । १ । १७७ ॥

एभ्यस्तद्राजस्य न लुक् ॥ पाञ्चाली । वैदर्भी । आङ्गी । वाङ्गी । मागधी । एते प्राच्या । भार्गी । कारुशी । कैकेयी । केकयीत्यत्र तु जन्यजनकभावलक्षणे प्रयोगे ङीष् । युधाशुक्राभ्या ढ्रञ्च इति ढक् । ततः स्वार्थे पर्श्वादियौधेयादिभ्यामणञावित्यञ् । शार्ङ्गरवाद्यञ इति ङीन् । अतश्चेति लुकि तु ढगन्तत्वान्ङीप्युदात्तनिवृत्तिस्वर स्यात् । यौधेयी । शौक्रेयी । एतदेव ज्ञापयति प्राग्रमिकस्यापि तद्राजस्यातश्चेत्यनेन लुग्भवतीति । तेन पर्शू । रक्षाः । असुरीः । पर्शू क्षत्रियो जनपदेन समानशब्दः । तस्यापत्य सङ्घ स्त्रीत्वविशिष्टः द्व्यञ्मगधेत्यण् । तस्यातश्चेति लुक् । पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण् । तस्यापि लुक् । तत ऊङुत इत्यूङ् । रक्षस. क्षत्रियस्यापत्य स्त्रीत्वविशिष्टः सङ्घ पूर्ववदण्द्वयस्यापि लुक् । अत्वसन्तस्येति दीर्घः । असुरशब्दाज्जनपदलक्षणस्याञो लुकि पश्वादिलक्षणस्याणो लुक् । जातिलक्षणो ङीष् । अत्र पर्श्वाद्यण. स्त्रिया लुक् सिद्धो भवतीति सर्वेष्टसिद्धि ॥ इत्यपत्याधिकार ॥

इत्योरम्भट्टेन श्रीघोगडभट्टविश्वरूपात्मजेन वैजनाथभट्टविश्वरूपापरनामधेयेन विरचितायां श्रीव्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ चतुर्थस्याध्यायस्य प्रथम. पादः समाप्त ॥

## अथ चतुर्थाध्यायस्य द्वितीयः पादः ।

## तेन रक्तं रागात्। ४। २। १॥

तेनेति तृतीयान्तात्समर्थाद्रागप्रकृतिकाद्रक्तमित्यस्मिन्नर्थेऽण् प्रत्ययः स्यात्॥ रज्यतेऽनेनेति रागः। कषायेण रक्तं वस्त्रं काषायम्। माञ्जिष्ठम्। रागात्किम्। देवदत्तेन रक्तं वस्त्रम्॥

## लाक्षारोचनाट्ठक्। ४। २। २॥

शकलकर्दमाभ्यामुपसंख्यानम्॥ *॥ लाक्षिकः। रौचनिकः। शाकलिकः। कार्दमिकः। आभ्यामणपीति वृत्तिकारः। शाकलः। कार्दमः॥ नील्या अन् वक्तव्यः॥ *॥ नील्या रक्तं नीलम्। पीतात्कन्॥ *॥ पीतकम्॥ हरिद्रामहारजनाभ्यामञ्॥ *॥ हारिद्रम्। माहारजनम्। कथं हारिद्रौ कुक्कुटस्य पादौ, काषायौ गर्दभस्य कर्णाविति। उपमानाद्भविष्यति॥

## नक्षत्रेण युक्तः कालः। ४। २। ३॥

कथं पुनः पुष्यादिना नक्षत्रेण कालो युज्यते। पुष्यादिसमीपस्थे चन्द्रमसि वर्तमानाः पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति। पुष्येण युक्तं पौषमहः। पौषी रात्रिः। मघाभियुक्तं माघमहः। माघी रात्रिः। नक्षत्रेण युक्त किम्। चन्द्रमसा युक्ता रात्रिः। कालः किम्। पुष्येण युक्तश्चन्द्रमाः॥

## लुबविशेषे। ४। २। ४॥

पूर्वेण विहितस्य लुप् स्यात्॥ यावत्कालो नक्षत्रेण युज्यते अहोरात्रस्तस्य षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः। अत्र न ह्यो न श्व इति विशेषे गम्यमानेऽपि लुप् भवत्येव। यत्र विशेषविवक्षा पौषोऽहोरात्र इति तत्र समुदायप्रतीतावप्यवयवद्वयरूपविशेषस्य शब्देनाश्रयणाल्लुबभावः। प्रसज्यप्रति-

त्यर्थः । स्त्रीपुंसयोरुभयोरप्येतन्निपातनमिष्यते । कौमारेति स्त्रीपुंससाधारणप्रातिपदिकमात्रनिर्देशात् । उभयोश्च प्रत्ययोरपूर्वत्वं स्त्रिया एव न पुंसः । स तु पूर्वकृतोद्वाहो भवतु मा वा भूत् । एतदपि निपातनबलादेव लभ्यते । अपूर्वपति कुमारीमुपपन्नः कौमारः पतिः । कुमारीशब्दात् द्वितीयासमर्थादुपयन्तरि प्रत्ययः । यद्वा अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्य्या प्रथमान्तादेवोपयमनविशिष्टे स्वार्थे प्रत्ययोऽपूर्वत्वे द्योत्ये ॥ न विद्यते पूर्वः पतिर्यस्या इत्युभयत्रापि बहुव्रीहिः ।

## तत्रोद्धृतममत्रेभ्यः । ४ । २ । १४ ॥

शरावे उद्धृत ओदनः शारावः । उद्धरतिरिहोद्धरणपूर्वके निधाने वर्तते तेन सप्तमी । उद्धृत्य निहित इत्यर्थः । अमत्रेभ्यः किम् । पाणावुद्धृत ओदनः ॥

## स्थण्डिलाच्छयितरि व्रते । ४ । २ । १५ ॥

तत्रेत्येव ॥ समुदायेन चेद्व्रतं गम्यते ॥ स्थण्डिले शयितु नियमोऽस्य स्थाण्डिलः । व्रते किम् । स्थण्डिले शेते देवदत्तः ॥

## संस्कृतं भक्षाः । ४ । २ । १६ ॥

सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः ॥ भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा भक्षाः । अष्टसु कपालेषु संस्कृतः पुरोडाशोऽष्टाकपालः । भक्षाः किम् । पुष्पपुटे संस्कृतो मालागुणः ॥

## शूलोखाद्यत् । ४ । २ । १७ ॥

अणोऽपवादः । शूले संस्कृतं शूल्यं मांसम् । उखा पात्रविशेषः । तस्यां संस्कृतमुख्यम् ।

## दध्नष्ठक् । ४ । २ । १८ ॥

दध्नि संस्कृतं दाधिकम् ॥

## उदश्वितोऽन्यतरस्याम् । ४ । २ । १९ ॥

ठक् ॥ पक्षेऽण् । उदकेन श्वयति वर्द्धते इत्युदश्वितक्रम् । तत्र संस्कृतमौदश्वित्कम् । औदश्वितम् ।

## क्षीराड्ढञ् । ४ । २ । २० ॥

अत्र संस्कृतमित्येव सम्बध्यते न तु भक्षा इति । तेन यवाग्वामपि भवति । क्षैरेयी ॥

## साऽस्मिन्पौर्णमासीति । ४ । २ । २१ ॥

इतिशब्दात्सञ्ज्ञायामिति लभ्यते । पौषी पौर्णमासी अस्मिन्पौषो मासः । अर्धमासो वा । नेह । पौषी पौर्णमासी अस्मिन्पञ्चदशरात्रे इति । भृतकमासश्च कर्मकरणादारभ्य त्रिंशद्रात्रलक्षणः स यदा पौष्या पौर्णमास्या तद्वान्भवति वस्तुतश्च माघादिव्यपदेशभाक् तत्रापि न भवति ॥

## आग्रहायण्यश्वत्थाट्ठक् । ४ । २ । २२ ॥

अग्रे हायनमस्या इत्याग्रहायणी ॥ प्रज्ञादेराकृतिगणत्वादण् पूर्वपदात्सञ्ज्ञायामिति णत्वम् । आग्रहायणी पौर्णमासी अस्मिन्नाग्रहायणिको मासः । अश्वत्थेन युक्ता पौर्णमासी अश्वत्थः । निपातनात्पौर्णमास्यामपि लुप् । आश्वत्थिको मासः ॥

## विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः । ४ । २ । २३ ॥

मभ्यणुग्वा स्यात् ॥ पत्वेऽण् । फाल्गुनिकः । फाल्गुनो मासः । श्रावणिकः । श्रावण. । कार्तिकिकः । कार्तिकः । चैत्रिकः । चैत्रः ॥

## साऽस्य देवता । ४ । २ । २४ ॥

इन्द्रो देवताऽस्य ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या च । ऐन्द्रो मन्त्रः । आग्नेयो वै ब्राह्मणो देवतयेति तु शैषिकेऽर्थे अग्नीति ढक् ॥

## कस्येत् । ४ । २ । २५ ॥

कशब्दस्य इकारादेशः स्यात् प्रत्ययसन्नियोगेन ॥ यस्येति-लोपात्परत्वादादिवृद्धि । को ब्रह्मा देवताऽस्य काय हविः । श्रीर्देवता ऽस्य श्राय हविः ॥

## शुक्राद् घन् । ४ । २ । २६ ॥

शुक्रियम् ।

## अपोनप्त्रपांनप्तृभ्यां घः । ४ । २ । २७ ॥

अपोनप्त्रियम् ॥ अपान्नप्त्रियम् । अपोनपात् अपान्नपाच्च देवता । प्रत्ययसन्नियोगेन तूक्त रूप निपात्यते । अत एवापोनपाते अपान्नपातेऽनुब्रूहीति प्रैषः ॥

## छ च । ४ । २ । २८ ॥

योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । अपोनप्त्रीयम् । अपांनप्त्रीयम् ॥ छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानम् ॥ * ॥ पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयम् ॥ शतरुद्राद् घश्च ॥ * ॥ चाच्छः ।

शतं रुद्रा देवताऽस्य शतरुद्रियम् । शतरुद्रीयम् । घच्छयोर्विधानसामर्थ्यात् द्विगोर्लुगनपत्ये इति न लुक् ।

**महेन्द्राद् घाणौ च । ४ । २ । २९ ॥**

चाच्छ ॥ महेन्द्रियं हविः । माहेन्द्रम् । महेन्द्रीयम् ॥

**सोमात् ट्यण् ॥ ४ । २ । ३० ॥**

सौम्यम् । टित्वान् ङीप् । सौमी ऋक् ॥

**वाय्वृतुपित्रुषसो यत् ॥ ४ । २ । ३१ ॥**

वायव्यम् । ऋतव्यम् । रीङ् ऋतः । यस्येति च । पित्र्यम् । उषस्यम् ॥

**द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ ४ । २ । ३२ ॥**

चाद्यत् ॥ द्यावापृथिवीयम् । द्यावापृथिव्यम् । शुनासीरीयम् । शुनासीर्यम् । मरुत्वतीयम् । मरुत्वत्यम् । अग्नीषोमीयम् । अग्नीषोम्यम् । वास्तोष्पतीयम् । वास्तोष्पत्यम् । गृहमेधीयम् । गृहमेध्यम् ॥

**अग्नेर्ढक् ॥ ४ । २ । ३३ ॥**

आग्नेयम् ॥

**कालेभ्यो भववत् ॥ ४ । २ । ३४ ॥**

मासो देवताऽस्य मासिकम् । प्रावृषेण्यम् ॥

**महाराजप्रोष्ठपदाट्ठञ् ॥ ४ । २ । ३५ ॥**

माहाराजिकम् । प्रौष्ठपदिकम् ॥ ठञ्प्रकरणे तदस्मिन्वर्त्तत इति नवयज्ञादिभ्य उपसङ्ख्यानम् ॥ * ॥ नवयज्ञोऽस्मिन्वर्त्तते नावयज्ञिकः कालः । पाकयज्ञिकः ॥ पूर्णमासादण् वक्तव्यः ॥ * । पूर्णमासोऽस्यां वर्त्तते पौर्णमासी तिथिः ॥

**पितृव्यमातुलमातामहपितामहाः ॥ ४ । २ । ३६ ॥**

एते निपात्यन्ते ॥ पितुर्भ्रातरि व्यत् । पितुर्भ्राता पितृव्यः । मातुर्डुलच् । मातुर्भ्राता मातुलः । मातृपितृभ्यां पितरि डामहच् । मातुः पिता मातामहः । पितुः पिता पितामहः ॥ मातरि षिच्च ॥ * ॥ मातामही । पितामही ॥ अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः ॥ * ॥ सकारपाठसामर्थ्यान्न षः । अविसोढम् । अविदूसम् । अविमरीसम् ॥ तिलान्निष्फलात्पिञ्जपेजौ ॥ * ॥ तिलपिञ्जः । तिलपेजः । वन्ध्यस्तिल इत्यर्थः ॥ पिञ्जश्छन्दसि डिच्च ॥ * ॥ तिल्पिञ्जः ॥

**तस्य समूहः ॥ ४ । २ । ३७ ॥**

काकानां समूहः काकम् । बाकम् । प्राणिनां कुपूर्वाणामिति फिट्सूत्रेणाद्युदात्तावेतौ । प्राणिविशेषवाचिनां शब्दानां ये आदिभूताः कवर्गात्पूर्वं तेषामुदात्त इति तदर्थः । अयादि प्राक् शकटेरित्यधिकारात् ।

**भिक्षादिभ्योऽण् ॥ ४ । २ । ३८ ॥**

भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । अनुदात्तादेरञ् प्राप्तः । सति तु तस्मिन्निह भस्याढे तद्धिते इति पुंवद्भावे कृते इनण्यनपत्ये इति प्रकृतिभावाभावाट्टिलोपः स्यात् । आद्युदात्तत्वं च । युवतीनां समूहो यौवनम् । सिद्धश्च प्रत्ययविधाविति प्रागेव तिप्रत्ययनिवृत्तौ कनिन्युवृषीति कनिनन्ततया आद्युदात्तत्वात्पूर्वेणैव सिद्धत्वादस्य पाठं भाष्यकाराः प्रत्याचख्युः । यच्न्नादनुदात्तादेरञि यौवतम् ॥

**गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥ ४ । २ । ३९ ॥**

एभ्यः समूहे वुञ् स्यात् ॥ लौकिकमिह गोत्रम् । तच्चा पत्यमात्रम् । ग्लुचुकायनीनां समूहो ग्लौचुकायनकम् । औक्षकम् । औष्ट्रकम् । औरभ्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् । आजकम् । आपत्यस्येति यलोपः प्राप्तः प्रकृत्याऽकेराजन्यमनुष्ययुवान इति न भवति ॥ वृद्धाच्चेति वक्तव्यम् ॥ * ॥ वार्द्धकम् ॥

## केदाराद्यञ्च ॥ ४ । २ । ४० ॥

चाद्वुञ् । कैदार्यम् । कैदारकम् ॥ गणिकाया यञिति वक्तव्यम् ॥ * ॥ गाणिक्यम् ॥

## ठञ् कवचिनश्च ॥ ४ । २ । ४१ ॥

चात्केदारादपि ॥ कवचिनां समूहः कावचिकम् । कैदारिकम् ॥

## ब्राह्मणमाणववाडवाद्यन् ॥ ४ । २ । ४२ ॥

ब्राह्मण्यम् । माणव्यम् । वाडव्यम् । पृष्ठादुपसङ्ख्यानम् ॥ * ॥ पृष्ठ्यः ॥

## ग्रामजनबन्धुभ्यस्तल् ॥ ४ । २ । ४३ ॥

ग्रामता । जनता । बन्धुता ॥ गजसहायाभ्यां चेति वक्तव्यम् । गजता । सहायता । अन्हः खः क्रतौ ॥ * ॥ अह्नीनः । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । क्रतौ किम् । आन्हः । इह खण्डिकादित्वादञ् । अन्हष्टखोरेवेति नियमाट्टिलोपो न ॥ पर्श्वा णस्वक्तव्यः ॥ * ॥ सिति चेति पदत्वेनाभत्वादोर्गुणो न । पर्शूनां समूहः पार्श्वम् ॥

## अनुदात्तादेरञ् ॥ ४ । २ । ४४ ॥

कापोतम्। मायूरम्। मध्योदात्तावेतौ। लघावन्त इति फिट्सूत्रात्।

## खण्डिकादिभ्यश्च ॥ ४ । २ । ४५ ॥

अञ् स्यात्। आद्युदात्तार्थं वचनम्। अचित्ताट्ठको बाधनार्थम्। खण्डिकानां समूहः खाण्डिकम्। क्षुद्रकमालवशब्दोऽत्र पठ्यते। क्षुद्रकस्यापत्यानीति जनपदशब्दादिति विहितस्य तद्राजस्य लुक्। मालवात्तु वृद्धलक्षणस्य ञ्यङः। ततः क्षुद्रकाश्च मालवाश्चेति क्षत्रियद्वन्द्वः। समासान्तोदात्तत्वे अनुदात्तादित्वात्पूर्वेणैवाञि सिद्धे गोत्रवुञो बाधनार्थम्। ननु च परत्वादञा वुञ् बाधिष्यते। न च गोत्रसमुदायो गोत्रम्। नापि तदन्तविधिरस्ति। एवं तर्ह्येतदेव ज्ञापयति। वुञि पूर्वविप्रतिषेधः सामूहिकेषु तदन्तविधिश्चास्तीति। प्रयोजनमौपगवकम्। वुञ्। वनहस्तिनां समूहो वानहस्तिकम्। गोधेनुकमिति च तदन्तविधेः। अचित्तहस्तीति ठक्। तथाचापिशलेर्वचनम्। धेनुरनञि कमुत्पादयतीति। धैनुकम्। अनञीति किम्। अधेनूनां समूहः आधेनवम्। उत्सादित्वादञिति तत्रैवोक्तम्। पुनरस्यैव नियमार्थमुच्यते। क्षुद्रकमालवात्सेनासंज्ञायामिति। क्षौद्रकमालवी सेना। क्षौद्रकमालवकमन्यत्। उभयत्रापि मालवादुत्पन्नस्य ञ्यङो गोत्रेऽलुगचीति लुक्प्रतिषेधादापत्यस्येति यलोपः। उलूकशब्दोऽत्र पठ्यते। स च यद्यपि वेदे क्वचिदाद्युदात्तः पठ्यते छान्दसत्वात् तथापि लोके लघावन्ते इति मध्योदात्तस्तत्र पूर्वेणैवाञ् सिद्धस्तस्मात्सामर्थ्याद्गर्गादियञन्तो लूक्यशब्दार्थकोलूकशब्दस्य कृतयञ्लुकः पाठ इति विज्ञेयम्। एव

गुरुधर्मस्यावच्छेदकत्वाभावेन तदवच्छेदेन वाच्यताग्रहस्याजननादिति भावः। अत्राय सत्तेपार्थः। यदि गुरुधर्मो न शक्यतावच्छेदकस्तर्हि भावप्रत्ययस्थले तत्त्वमात्रस्य शक्यतावच्छेदकत्वपत्ते घटत्वमित्यादौ घटेतरासमवेतत्वे सति सकलघटसमवेतत्वादिरूपं कथं घटत्वत्वादिकं शक्यतावच्छेदकमिति चेन्न। गुरुसर्मनियतलघुधर्माभावे गुरावपि शक्यतावच्छेदकत्वनियमाद्गुरोरपि घटत्वत्वादेः शक्यतावच्छेदकत्वादिति। अत्रेद विचार्यते। घटत्वमित्यादौ घटेतरासमवेतत्वे सति सकलघटसमवेतत्वादिकं भावप्रत्ययेनोपस्थाप्यते घटाद्युपलब्धिस्तु प्रकृतित एव भावप्रत्ययस्येतरासमवेतत्वादौ शक्तिः। अत्र यद्यपीतरासमवेतत्वमितरसमवेतत्वत्वावच्छिन्नाभावः। स च घटत्वादौ बाधितो घटादेरपि किञ्चिदपेक्षयेतरत्वात्तथापीतरद्वृत्तित्वमभावः साकल्यं वृत्तिश्चेति। विशकलितेष्वेव तेषु भावप्रत्ययस्य शक्तिरिति। अत्र घटसभिव्याहाराद्घटेतरत्वस्य घटवृत्तित्वस्य च प्राप्तिस्तथा च घटेतरत्वस्य सामानाधिकरण्येन समवेतत्त्व घटेतरसमवेतत्वावच्छिन्नप्रतियोगितयाऽभावे स च घटत्वेन्वेति। एवं साकल्यं घटे स च वृत्तित्वे तादृशवृत्तित्वं च घटत्वेन्वेति। न चैवमात्मेतरावृत्तित्वे सति सकलात्मवृत्तित्वस्यात्मगतबहुत्वेऽपि सत्वादात्मत्वपदाद्बहुत्वविशेषप्रत्ययापत्तिरिति वाच्यम्। भावप्रत्ययस्य प्रकृत्यर्थतावच्छेदकबोधकत्वव्युत्पत्तेः। न च घटत्वादेरपि कालिकसम्बन्धादिना घटेतरवृत्तित्वादसम्भव इति वाच्यम्। प्रकृत्यर्थतावच्छेदकसम्बन्धेन तदितरवृत्तित्वाभावस्य विवक्षितत्वात्। नन्वेवं सत्त्वमित्यत्र प्रकृत्यर्थतावच्छेदकसम्बन्धीभूतसमवायेन सदितरवृत्तित्वाप्रसिद्धिः। एवं वाच्यत्वमित्यादौ वाच्येतराप्रसिद्धिः। एवमेकत्वमित्यादौ साकल्याप्रसिद्धिश्चेति चेत्। अत्रोच्यते। सकलतत्समवेतत्वमित्यस्य तन्निष्ठाभावप्रतियोगितानवच्छेदकत्वे सति समवेतत्वमर्थस्तथा च सत्त्वमित्यत्र सद्वृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वे सति समवेतत्वमक्षतम्। तत्र सदितरासमवेतत्वमिति दलं नोपादेयं गौरवादप्रसिद्धेश्च वाच्यत्वमित्यत्र वाच्यत्वत्व-

रूपेण वाच्यत्वमेवार्थः। वाच्यत्वन्तु अस्माच्छब्दादयमर्थो बोद्धव्य इती-च्छाविषयत्वं स च स्वरूपसम्बन्धविशेषः पदार्थान्तरं वा। यद्वा वाच्य-त्वमित्यत्र वाच्यनिष्ठाभावप्रतियोगितानवच्छेदकत्वमर्थः। इतरावृत्तित्वं चात्र नोपादेयमिति एकत्वमित्यत्रेतरावृत्तित्वमात्रमर्थो लाघवात्। इत्थं च तदन्यासमवेतत्वे सति तन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वे सति समवेतत्वं भावप्रत्ययार्थः। घटत्वमित्यादावपि घटेतरासमवेतत्वे सति समवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकघटनिष्ठान्योन्या-भावप्रतियोगितानवच्छेदकत्वमित्याद्यर्थः। एवं च सम्बन्धभेदेन यो घट-त्ववांस्तद्भेदस्य घटे सत्त्वेऽपि न दोषः। अत्राकाङ्क्षावशाद्घटलाभः। घट-तदन्योन्याभावयोर्वारद्वयमन्वयः। घटस्य सामान्यावच्छिन्नप्रतियोगिता-कत्वसम्बन्धेनान्यपदार्थैकदेशेऽन्योन्याभावेऽन्वयः। तादृशान्योन्याभा-वस्य सामानाधिकरण्येन समवेते तादृशसमवेतस्य तादृशप्रतियोगिताक-त्वसम्बन्धेन पुनः पदार्थैकदेशेऽन्योन्याभावे तादृशान्योन्याभाववतश्चाभेदेन घटत्वेऽन्वयः। अन्यथानुपपत्त्यैकदेशान्वयस्वीकारात्। एवं च प्रथमदलेऽपि शक्तिद्वयमन्यस्मिन्समवेते चेति। एवमग्रिमदलेऽपि शक्तिद्वयमन्योन्याभावे प्रतियोगितावच्छेदके चेति। अत्राकाङ्क्षालभ्यघटस्यान्योन्याभावे तदन्यो-न्याभावस्यावच्छेदके तदवच्छेदकस्य पुनरन्योन्याभावे तदन्योन्याभाववतो-ऽभेदेन घटत्वेऽन्वयस्तथा च प्रकृतिप्रत्ययाभ्यां घटत्वमित्यादौ घटान्यास-मवेतान्योन्याभाववदभिन्नं घटनिष्ठान्योन्याभावप्रतियोगितावच्छेदका-न्योन्याभाववदभिन्नं च घटत्वमित्यादिबोध इति। एवमन्यत्रापि व्युत्प-त्तिवैचित्र्यादेकपदार्थस्यापरपदार्थान्वयः। अनयैव च रीत्या एवकार-स्यार्थोऽपि बोध्यः। अत्रैवकारस्यार्थोऽपि प्रसङ्गाद्विचार्यते। विशेष्यसङ्गतै-वकारस्यान्ययोगव्यवच्छेदे शक्तिः। यथा पार्थ एव धनुर्द्धर इत्यादौ पार्था-न्यस्मिन्धनुर्धरत्वस्य व्यवच्छेदः। धनुर्धरत्वं च धनुःसंयोगानुकूलशिक्षा-विशेषः। स च विलक्षणज्ञानादिरूपः पार्थे न त्वन्यत्रेति। विशेषणस-ङ्गतैवकारस्यायोगव्यवच्छेदे शक्तिः। यथा शङ्खः पाण्डुर एवेत्यादौ शङ्ख-

त्वावच्छेदेन पाण्डुरत्वायोगो व्यवच्छिद्यते। क्रियासङ्गतस्यैवकारस्यात्यन्तायोगव्यवच्छेदे शक्तिः यथा नील सरोज भवत्येवेत्यादौ सरोजे नीलभवनात्यन्तायोगो व्यवच्छिद्यत इति । अत्राय निष्कर्षः । क्रियासङ्गतस्यत्वेपि नात्यन्तायोगव्यवच्छेदोऽर्थः । किन्त्वयोगव्यवच्छेद एव पर तु पदार्थतावच्छेदकसामानाधिकरण्येनान्वयः । सरोज नील भवत्येवेत्यादौ सरोजत्वसामानाधिकरण्येन नीलभवनायोगव्यवच्छेद एव भासते । क्वचित्क्रियासङ्गतस्यत्वेपि पदार्थतावच्छेदकावच्छेदेनायोगव्यवच्छेद एव । यथा ज्ञानमर्थ गृह्णात्येवेत्यादौ ज्ञानत्वावच्छेदेनार्थग्राहकत्वायोगव्यवच्छेद इति । तथा यत्र पदार्थतावच्छेदकसामानाधिकरण्येनान्वयस्तत्रात्यन्तायोगव्यवच्छेद इति गीयते । एव चात्यन्तायोगव्यवच्छेदे शक्तिरिति तु निर्युक्तिकप्रवादमात्रम् । इत्थ च सामानाधिकरण्येनान्वये क्रियाविशेष्ययोगादेर्नियामकत्वमिति शिरोमणिमत सङ्गच्छते । अत एव ज्ञान रजत गृह्णात्येव द्विजो वेदानधीत एवेत्यादौ सामानाधिकरण्येन प्रयोगो निःप्रत्यूहः । ज्ञानत्वाद्यवच्छेदेन रजतत्वादिग्राहकत्वायोगव्यवच्छेदाभावात् । वस्तुतस्तु शङ्खः पाण्डुर एवेत्यादौ पाण्डरत्वादेरेकदेशतया योगेनान्वयायोगात्तायोगव्यवच्छेदोऽर्थः । परमार्थतस्तु सर्वत्रान्ययोगव्यवच्छेद एवार्थः । ज्ञानमर्थ गृह्णात्येवेत्यादौ निरूपितत्व द्वितीयार्थः । आश्रयत्व लक्षणया आख्यातार्थः । तथा च ज्ञानमर्थनिरूपितविषयिताश्रयान्यत्वाभाववदित्यन्वयबोधः । परे तु ज्ञानमर्थ गृह्णात्येव नील सरोज भवत्येव जातिमद्द्रव्य भवत्येवेत्यादौ तिङो धर्मिपरतयार्थग्राहकान्ययोगो नीलभवनान्ययोगो नीलान्ययोगो वा जातिमदन्ययोगो वा व्यवच्छेद्य इत्याहुः । अत्रान्ययोगव्यवच्छेदे कथ शक्तिः । सर्वथा सर्वतोऽन्यतयाऽसिद्धत्वादिति चेत । उच्यते । भावप्रत्ययवदत्रापि खण्डशः शक्तिस्वीकारात् । तथा हि । अन्यस्मिन्योगे व्यवच्छेदे चेति । यदि च योगेपि सयुक्तत्वसमवेतत्वतादात्म्यभेदेन नानैव शक्तिरिति सूक्ष्ममीक्षते । तदान्यस्मिन्व्यवच्छेदे च शक्तिरुच्यता योगांशे तु लक्षणैवेति । पार्थ एव धनुर्धर इत्यत्र पार्थो धनुर्धरः

पार्थान्यो न धनुर्द्धर इति। शङ्ख पाण्डुर एवेत्यादौ शङ्ख पाण्डुर. पाण्डुरान्यतादात्म्याभाववानित्यादिबोधः। एव शीत एव स्पर्शो जलवृत्तिरित्यत्र जलवृत्ति शीतस्पर्शः शीतान्यस्पर्शभिन्नश्च। पृथिव्यामेव गन्ध इत्यत्र पृथिव्या गन्ध. पृथिव्यन्यसमवेतत्वाभाववान्। चैत्रो जलमेव भुङ्क्ते इत्यत्र चैत्रो जल भुङ्क्ते जलान्यच्च भुङ्क्ते इति। वह्निमत्येव धूम इत्यत्र वह्निमति धूमो वह्निमदन्यसयुक्तत्वाभाववानिति बोध इति। एव च वह्निमत्येवाकाश पृथिव्यामेवाकाशमित्यादयो न प्रयोगा.। वह्निमदन्यसयुक्तत्वव्यवच्छेदस्य पृथिव्यन्यसमवेतत्वव्यवच्छेदस्य वाकाशे सत्त्वेपि वह्निमद्वृत्तित्वस्य पृथिवीवृत्तित्वस्य वाकाशे विरहान्न दोषः। अन्यस्मिन्योगव्यवच्छेद इति अन्ययोगस्य वाव्यवच्छेद इति भेदेनान्ययोगव्यवच्छेदोऽपि द्विविधः। एव च पृथिव्यामेव गन्ध इत्यत्र पृथिव्यन्यो गन्धाभाववान् गन्ध पृथिव्यन्यसमवेतत्वाभाववानिति द्विविधबोधोऽपि सूपपन्नः। जातिमत्येव सत्तेत्यादौ जातिमदन्यः सत्ताभाववानिति बोधः। जातिमदन्यसमवेतत्वाभावस्याप्रसिद्धेरित्युक्तदिशा सुधीभिर्विभाव्य बोध्यमिति सक्षेपः। अत्रेद बोध्य नील सरोज भवत्येवेत्यादावयोगव्यवच्छेदस्येवान्ययोगव्यवच्छेदस्यापि सामानाधिकरण्यमात्रेण बोध.। ज्ञानमर्थग्राहक भवत्येवेत्यादौ तु ज्ञानत्वावच्छेदेनार्थग्राहकान्यत्वव्यवच्छेदः। ननु नील सरोज भवत्येवेत्यत्र सामानाधिकरण्येन ज्ञानमर्थग्राहक भवत्येवेत्यत्र त्ववच्छेदकावच्छेदेनान्वय इत्यत्र किन्नियामकमिति चेन्न। तत्समभिव्याहारविशेषस्यैव तत्र नियामकत्वात्। एव च सामानाधिकरण्यमात्रेणान्वयबोधे क्रियाविशेषयोगादेर्नियामकत्वाद् अवच्छेदकावच्छेदेनान्वयबोधे त्वेवकारस्यैव हेतुत्वमिति दिक्। अथवाऽन्ययोगव्यवच्छेदे न शक्तिः। पार्थ एव धनुर्द्धर इत्यादौ पार्थान्ययोगस्य पार्थान्ययोगत्वावच्छिन्नप्रतियोगिताकत्वससर्गेण व्यवच्छेदेऽन्वयात्। न च तादृशससर्गलाभः कथमिति वाच्यम्। रक्तो दण्डो नास्तीत्यादौ रक्तोपहितस्य दण्डादेर्नञर्थे न्वयात्। रक्तदण्डत्वावच्छिन्नप्रतियोगिताकत्वस्येव पार्थान्ययोगत्वावच्छिन्न

प्रतियोगिताकत्वस्य व्युत्पत्तिलभ्यत्वात् । अथैवमन्ययोगपदार्थैकदेशेऽन्यत्वे पार्थपदार्थस्य कथमन्वयः पदार्थः पदार्थेनान्वेति न तु तदेकदेशेनेति व्युत्पत्तेरिति । इतरथा लोमवत्साङ्गूलवतः पशुपदार्थस्यैकदेशेन लोम्ना सहान्वयात्पशुर्न पशुरित्यादेरपि योग्यतापत्तेरिति चेत् क्वचिदप्युत्पत्तिवैचित्र्यादेकदेशान्वयस्वीकारात् । अत एव दण्डात्पृथगित्यादौ पदार्थैकदेशे पृथक्त्वादौ अवधित्वादेः पदार्थेतरस्यान्वयः । अथ तथापि नामार्थप्रकारकबोधे प्रत्ययजन्योपस्थितेर्हेतुत्वान्नामार्थस्य पार्थादेः कथमन्यत्वेन भेदान्वयः । अन्यथा पार्थो घट इत्यादिप्रयोगापत्तेरिति चेन्न । नामार्थप्रकारकनिपातार्थातिरिक्तविशेष्यकबोधे प्रत्ययजन्योपस्थितेर्हेतुत्वात्प्रकृते च निपातार्थनामार्थयोर्भेदान्वये बाधकाभावात् । विवेचयिष्यन्ते चेदमुपरिष्टात् । अन्ये तु रूपेण पृथिव्या वर्त्यत एवेत्यत्र पृथिनिरूपितवृत्तित्वायोगव्यवच्छेद एवार्थः । न तु पृथिविवृत्तित्वान्यत्वव्यवच्छेदो रूपवृत्तिरित्यर्थः तस्य बाधितत्वात् । एव ऋतौ स्वदारान्गच्छेदेवेत्यादौ ऋतुकालावच्छिन्नाधिकरणताकः स्वदारगमनायोगव्यवच्छेद इष्टसाधनमित्यर्थात्सर्वत्रायोगव्यवच्छेद एवैवकारार्थोऽस्तु । न चैव ऋत्वन्तरे स्वदारगमने प्रवृत्तिर्न स्याद्यत्किञ्चिदृतौ गमने ऋत्वन्तरे स्वदारगमनाभावेप्येतादृशविध्यर्थसम्भवादिति वाच्यम् । ऋतु कालीनगमनाभावस्य प्रत्यवायजनकतया प्रत्यवायान्तरपरिहारार्थं ऋत्वन्तरगमने प्रवृत्तेः । अत्रेष्ट प्रत्यवायाभावस्तत्साधनत्वमिवकारार्थोऽन्वेति । यद्वा ऋतुकालीनस्वदारगमनमिष्टसाधनत्वायोगव्यवच्छेदवदित्यर्थस्तदेष्टसाधनत्व प्रत्यवायसाधनीभूताभावप्रतियोगित्वमिति। न च तथा ऽपि ऋत्वन्तरगमने प्रवृत्तिर्न स्यादिति वाच्यम् । तत्तदृतुकालावच्छिन्नस्वस्वदारकर्मकस्वकर्तृकगमनाभावस्य प्रत्यवायहेतुतया तत्र प्रवृत्तिसम्भवादित्याहुः । तत्रधातोर्वृत्तिमति लक्षणया पृथिवीवृत्त्यन्यत्वव्यवच्छेदस्य रूपेणेति तृतीयायास्तादात्म्यार्थत्वे तु पृथिवीवृत्त्यन्यतादात्म्यस्य वा लाभात् । ऋतुकालीनतत्तद्गमनमिष्टसाधनान्यत्वव्यवच्छेदवदित्यर्थाच्च दोषलेशोपीति सज्ञेयः । तर्कार्णवे

खेलनचञ्चनाये पश्यन्तु ते ग्रन्थममु मदीयम् ॥ यतो निदेशान्निखिल निरीक्ष्य मूकोऽपि गीर्वाणगुरूपमेयः ॥ श्री ॥

अथ शब्दो निरूप्यते तत्र शाब्दप्रमितिकरणं शब्दः शाब्दत्वं च शब्दात्प्रत्येमीत्यनुभवसिद्धो जातिविशेषः। जन्यशब्दधीजन्यत्वव्यभिचार्यनुभवत्वाव्यापकजातिशून्यत्वे सति पदविषयकत्वाव्यभिचारिजातिशून्यधीत्वं वा।

निधाय शङ्कर देव रामकृष्णं गुरु हृदि।
नय निर्णाय मञ्जर्य्या शब्दव्याख्या वितन्यते ॥ १ ॥

शब्दशक्यशक्तिग्राहकप्रत्यक्षादिप्रमाणोपजीवकत्वात्तन्निरूपणानन्तर शब्दनिरूपणमारभते ॥ अथेति। प्रत्यक्षादिनिरूपणानन्तर वर्त्तमाननिरूपणविषय शब्द इत्यर्थ.। वस्तुतस्तु मङ्गलेरनन्तराभिधानव्याप्यत्वाभावादिच्छैव नियामिकेति। "आप्तोपदेश शब्द" इति सूत्र तत्रोपदेशः शाब्दज्ञानमित्याप्तो यथार्थोपदेशो यस्मादित्यर्थ मनसि निधायाह शब्द इति। शब्दप्रमाणमित्यर्थ.। मणिकारचरणास्तु प्रयोगहेतुभूतार्थतत्वज्ञानजन्य शब्दः शब्दप्रमाणम्। अत्र वाक्यार्थज्ञान विना वाक्यरचनारूपप्रयोगाभावादर्थतत्वज्ञानमाकाङ्क्षायोग्यतासन्निधिमत्पदकदम्बात्मकवाक्यरचनारूपप्रयोगे हेतुस्तथा च प्रयोगहेतुभूत तज्जननानुकूल सहकारिविशिष्ट यत्स्वार्थतत्वज्ञान तज्जन्यो य शब्द स प्रमाणशब्द। अत्र घटःकर्मत्वमानयन कृतिरित्यादिनिराकाङ्क्षेऽतिव्याप्तिवारणाय प्रयोगहेतुभूतेति। अप्रयोगेऽतिव्याप्तिवारणाय तत्वपद। आनुपूर्व्यामतिव्याप्तिवारणाय शब्दपद। न चायोग्येऽतिव्याप्तिः। तत्र प्रयोगहेतुभूतार्थतत्वज्ञानरूपेश्वरज्ञानजन्यत्वादिति वाच्यम्। अर्थपदेन स्वार्थस्य विवक्षितत्वात्। तथा च स्वार्थत्वस्य स्वज्ञाप्यार्थत्वस्य विवक्षितत्वाच तत्वपदवैयर्थ्यं। अथ विमल जल नद्याः कच्छे महिषश्चरतीत्यत्राव्याप्तिः। न च

शब्दप्रमाणत्वन्तस्य नेति वाच्यम् । प्रमितिजनकत्वेन तस्य प्रमाणत्वात् । इतरथा तस्य प्रमाजनकत्वेन प्रमाणान्तरत्वापत्तिरिति चेन्मैवम् । यत्र विमलं जलमित्यश्रुत्वैव नद्याः कच्छे महिषश्चरतीति शृणोति तत्राकाङ्क्षादेः सत्त्वादित्याहुः ॥ अत्र शाब्दत्व शब्दजन्यप्रमात्व शब्दत्व च शब्द जन्यप्रमितिकरणत्वमित्यन्योन्याश्रय इत्यत आह शाब्दत्वमिति । तथा चैतादृशानुव्यवसायो हि जातिविशेषावच्छिन्नमवलम्बते स च जातिविशेषः शाब्दत्वमिति भावः । ननु शब्दात्प्रत्येमीत्यनुव्यवसायोऽप्यनुमितित्वावच्छिन्नमेवावलम्बते न तु शाब्दत्वावच्छिन्न तथा हि गामानयेत्यादि पदानि तात्पर्यविषयवृत्तिस्मारितपदार्थसंसर्गप्रमपूर्वकाणि आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बत्वादित्यनुमानादेव शाब्दबोधाभिमतसिद्धिर्भविष्यतीत्यतोऽनुमितिभेदार्थ शाब्दत्वमाह जन्येत्यादि । यद्वाः शाब्द इतरेभ्यो भिद्यते शाब्दत्वाद् इत्यत्र हेतुपक्षतावच्छेदकयोरैक्यात् सिद्ध साधनमित्यत आह जन्येत्यादि । जन्या या पदधीस्तज्जन्यत्वव्यभिचारिणी याऽनुभवत्वाव्यापिका जाति प्रत्यक्षत्वमनुमितित्व च । पदविषयकत्वाव्यभिचारिणी जातिरुपमितित्व । उपमितेरयङ्गवयपदवाच्य इत्याकारकत्वेन पदविषयकत्वात्तादृशजातिशून्यत्व शाब्दबोध एवेति ।

सत्यन्तं प्रत्यक्षानुमितिस्मृतीनां वारणाय । तत्र तादृशीनां प्रत्यक्षत्वादिजातीनां सत्त्वात् । जातिशून्यत्वमनुभवत्वाव्यापकजातिशून्यत्वं चासम्भवि अनुभवत्वादीनां तदव्यापकशाब्दत्वस्य च सत्त्वात् । जन्यपदधीजन्यत्वव्यभिचारिजातिशून्यत्वमपि तथा तादृशानुभवत्वादीनां सत्त्वात् पदधीजन्यत्वव्यभिचार्यनुभवत्वाव्यापकजातिशून्यत्वं चानुमितावपि अनुमितित्वस्य भगवत्पक्षधीजन्यत्वाव्यभिचारित्वादतः

**समुदितमुपात्तम् । उपमितावतिव्याप्तिवारणाय शू-न्यान्तम् । जात्यादावतिव्याप्तिवारणाय धीपदम् ।**

तत्र प्रत्यक्षादिप्रमाया । तादृशीना जन्यपदधीजन्यत्वव्यभिचार्यनुभवत्वाव्यापकजातीना । पृथग्व्यावृत्तिमाह जातिशून्यत्वमित्यादिना तदव्यापकेति अनुभवत्वाव्यापकेत्यर्थः । तथा असम्भवि । तादृशानुभवत्वादीना जन्यपदज्ञानजन्यत्वव्यभिचारिजातिरूपानुभवत्वादीना । सत्त्वात् शाब्दबोधे सत्त्वात् । प्रत्यक्षत्वस्य पदधीजन्यत्वाभाववदीश्वरज्ञानवृत्तित्वेन प्रत्यक्षे निरुक्तजातिशून्यत्वाभावादनुमित्यादावपीत्युक्तम् । समुदित सत्यन्तपूर्ण । उभयत्र जातिपद समवायेन जातिशून्यत्वला भाय तेन प्रत्यक्षत्वादेरुपमितित्वस्य च कालिकसम्बन्धेन शाब्दबोध वृत्तित्वेऽपि न क्षति. ।

**सोऽयं शब्दः सकलजनानुभवसिद्धो दुरपह्नवस्तज्जनकत्वमपि तथा । आगोपालाङ्गनमाचपण्डितं चैववाक्यादमुमर्थं प्रत्येमीति प्रतीतेः । केवलमनुमानविधयाऽन्यथावेति विप्रतिपद्यन्ते । तत्रानुमानविधयैति वैशिकाः ।**

ननु शब्दो न प्रमाण प्रमारूपफलानुपधायकत्वात् । न च शब्दो न प्रमाणमिति वाक्यस्य प्रामाण्ये शब्दस्य प्रामाण्य सिद्धमेव एतद्वाक्याप्रमाण्ये स्वस्याप्रामाण्यबोधकवाक्यस्याप्रामाण्यादप्रामाण्यरूपविषयबाधात्स्वस्य प्रामाण्य तथा च सुतरा शब्दस्य प्रामाण्यमिति वाच्यम् । शब्दो न प्रमाणमित्यस्य प्रमित्यजनक इत्यर्थात् । तथा चानुपदवक्ष्यमाणानुमानविधया शब्दस्य प्रमाण्यमिति वैशेषिकमतमभिसन्धाय तन्मत निराकर्तुं स्वमतमुररीकर्तुं भूमिकामारचयति । सोऽयमित्यादिना दुरपह्नवः चैत्रशब्दो मया ज्ञात इति

प्रतीतेरिति शेषः । तथा च तादृशप्रतीतेः सत्वाच्छब्दो न निराकर्त्तुं शक्य इत्यर्थः । तज्जनकत्व शब्दजनकत्व । यथा निराकर्त्तुं शक्य । अथ शब्दस्य शाब्दबोधजनकत्व निखिललोकानुभवरूप प्रत्यक्ष प्रमाण दर्शयति आगोपालेति । ननु गोपालानुभवान्न वस्तुसिद्धिरित्यत आचेति । आपण्डित चेत्यर्थ । तत्र विवादाङ्गसंशयजननीं विप्रतिपत्तिमाह । केवलमिति । अन्यथा स्वातन्त्र्येण । अथ शब्दो न मानान्तर पदार्थसंसर्गस्यानुमादेव सिद्धिरिति वैशेषिकमतमाह तत्रेति ॥ तेषामयमाशय. दण्डन गामभ्याजेति पदानि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिपदानि वा तात्पर्यविषयवृत्तिस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बकत्वाद् घटमानयेत्यादिपदकदम्बवत् ॥ तात्पर्यविषयो यो वृत्तिस्मारितपदार्थसंसर्गस्तज्ज्ञानपूर्वकाणीत्यर्थ ॥ अत्र तात्पर्यविषयेण दण्डस्य कर्मत्वादिनार्थान्तरवारणाय तात्पर्यविषयकत्व संसर्गविशेषणम् । न च दण्डकर्मत्वयोरपि संसर्गस्य प्रत्येक तात्पर्यविषयकत्वात्तद्दोषतादवस्थ्यमिति वाच्यम् । कर्मत्वपदार्थे दण्डपदार्थान्वयतात्पर्यस्याविवक्षितत्वात् । न च सैन्धवमानयेत्यादौ प्रथम तुरङ्गबोधे तात्पर्य पश्चाच्च लवणबोधे तत्र प्रथम लवणबोधेनार्थान्तर स्यादिति चेत् । अव्यवधानेन तात्पर्यविषयकत्वस्य विवक्षितत्वात् । यत्र तुरङ्गलवणोभयोपस्थापक सैन्धवमानयेत्युक्त तत्रोभयत्रापि प्रकारान्तरेण तात्पर्यग्रह लवणस्यैव स्मृतिस्तत्रास्मारिततुरङ्गसंसर्गसिद्ध्यार्थान्तरवारणाय स्मारितेति । न च यत्र सैन्धवपदादव्यवधानेन लवणस्मृतिस्तत्राव्यवधानेन लवणसंसर्गसिद्ध्यार्थान्तरत्वमिति वाच्यम् । अव्यवधानेन स्मारितत्वस्य विवक्षितत्वात् । वस्तुपदात्समवायेनोपस्थापिते गगनत्वेन गगने तत्र गगनत्वेन संसर्गसिद्धिवारणाय वृत्त्येति । अयमेति पुत्रो राज्ञ पुरुषोपसार्यतामित्यादौ योग्यासन्नयो राजपुरुषपदयोस्तात्पर्यविषयसंसर्गज्ञानपूर्वकत्वाभावेन साध्याभावसत्त्वाद्व्यभिचार इति हेतावाकाङ्क्षेति । वह्निना सिञ्चतीत्यादौ सेकपदार्थे वह्निकरणत्वपदार्थस्यान्वयाभावेन व्यभिचार इति योग्येति । यत्र प्रथम

तुरङ्गबोधे पश्चाल्लवणबोधे तात्पर्यं तत्र प्रथमं लवणसंसर्गमादाय व्यभिचार इत्यासत्तिपदम्। अव्यवधानेन पदार्थबोधतात्पर्यकपदोच्चारणपरम्। आकाङ्क्षादीनां च ज्ञानं शाब्दबोधे हेतुः। अन्यथा तद्भ्रमाच्छाब्दभ्रमानुपपत्तेः। तथा च पदार्थसंसर्गस्यानुमानादेव सिद्धेः शब्दो न प्रमाणमिति तदपरे न क्षमन्ते। तथा हि। इष्टतावच्छेदकप्रतियोगिकपुरोवृत्त्यनुयोगिकार्यताज्ञानत्वेन प्रवर्तकत्वं न तु तज्ज्ञानज्ञानत्वेन गौरवादिदं रजतमिति ज्ञानजन्यप्रवृत्तौ व्यभिचाराच्चेति। नन्वर्थज्ञानज्ञानमर्थज्ञानं भवत्येवेति चेन्न। तथा सति रजतत्वं समवाय इतिज्ञानादपि प्रवृत्त्यापत्तेः। प्रमेयवदितिज्ञानादपि च रजतार्थिनः प्रवृत्त्यापत्तिरिति दिक्। नन्वेते पदार्थास्तात्पर्यविषयपरस्परसंसर्गवन्तः आकाङ्क्षायोग्यतासत्तिमत्पदस्मारितत्वादित्यनुमानाद्विशिष्टपदार्थसंसर्गसिद्धिः। यद्यदाकाङ्क्षावत्पदस्मारितं भवति तत्तत्पदार्थसंसर्गवद्भवतीति व्याप्तिलाभाय मिथः पदम्। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपुत्रयोः तात्पर्यविषयसंसर्गाभावेन व्यभिचारवारणाय हेतावाकाङ्क्षेति। सेकपदार्थे वह्निकरणत्वपदार्थसंसर्गाभावाद्व्यभिचार इति योग्यतेति। येन संसर्गेणान्वयबोधे तात्पर्यं तेन संसर्गेण योग्यतालाभायासत्तिपदम्। तथा च ब्राह्मणं विद्धीत्यादौ यत्र विद्यात्वावच्छिन्नसंसर्गे तात्पर्यं तत्र विद्यात्वसामानाधिकरण्येन संसर्गस्य न योग्यत्वमिति। स्वरूपसदाकाङ्क्षादेः सत्त्वे शाब्दबोधानुदयात्तद्भ्रमाच्छाब्दभ्रम इति आकाङ्क्षादिज्ञानस्य शाब्दबोधे हेतुत्वमवश्यं वाच्यं तथा चाकाङ्क्षादिमत्पदस्मारितत्वरूपहेतुज्ञानाल्लिङ्गकानुमितिरेव भविष्यतीति चेन्न। योग्यतायाः संशयनिश्चयसाधारणज्ञानस्य हेतुत्वेन तत्संशयेऽपि शाब्दबोधात्तद्घटितलिङ्गनिश्चयाभावेनानुमित्यनुत्पत्तेः। अथ धूमोऽयमालोको वेति संशयाद्व्यानुमितिस्तथास्त्विति चेन्न तत्रोभयस्मिन्नपि व्याप्तिनिश्चयसत्त्वेनान्यतरस्य पक्षे निश्चये व्याप्तिविशिष्टपक्षधर्मतानिश्चयादनुमितिः। अत एव धूमोऽयं धूलीपटलं वेति संशयान्नानुमितिः। अपि च प्रत्यक्षादिना संसर्गनिश्चयेऽपि शाब्दबोधो जायत एव। अनुमितिं प्रति

तु सिद्धेर्विरोधित्वेन भवन्मते सा न स्यात्। न च सिद्धि. शाब्दबोधाय-भिन्नानुमितिविरोधित्वमिति वाच्यम्। तत्प्रकारकानुमितित्वावच्छिन्नं प्रति तत्प्रकारकसिद्धित्वस्यैव लाघवेन प्रतिबन्धकतावच्छेदकत्वादिति। किं च श्रोतव्य इत्यत्र श्रवणस्यानुमित्यात्मकमननभिन्नतयोपदेशाच्छाब्दबोधस्या-नुमितिभिन्नत्वे श्रुतेरपि भार इति सङ्क्षेपः। जरन्मीमांसकास्तु। अथ वक्ता प्रकृतवाक्यार्थयथार्थज्ञानवान् आप्तत्वादिति वक्तृवाक्यार्थज्ञानानुमानेन संसर्गसिद्धौ शब्दस्यानुवादकत्वं तथा च गृहीतग्राहित्वेन लौकिकशब्दस्या-प्रमाणत्वं। वेदे तु वक्तुरभावादेव तादृशानुमानाभावेन स्वातन्त्र्येण प्रमाणत्वमित्याहुस्तन्न। आकाङ्क्षादिघटिताया सामग्र्या वेदे कॢप्ताया लोकेऽपि सत्त्वेन लोके प्रथमं शाब्दबोधोत्पत्तेर्दुर्वारत्वात्। ननु लोके भ्रमजनकत्व-शङ्काया विरोधित्वेन तन्निवृत्त्यर्थं प्रकृतवाक्यार्थगोचरयथार्थज्ञानशालित्व रूपाप्तोक्तत्वनिश्चयोऽपेक्षितस्तथा च लौकिकशब्दस्यानुवादकत्वं वेदे तु नित्यनिर्दोषत्वेनैव भ्रमजनकत्वशङ्का नेति चेन्न। चक्षुरादाविव भ्रमजनकं न वेति शङ्काया विद्यमानायामपि फलजनकत्वमिवात्रापि तच्छङ्काया प्रतिबन्धकत्वाभावात्। न चानाप्तोक्तत्वशङ्काया प्रतिबन्धकत्वेन तन्निवृत्त्यर्थ-माप्तोक्तत्वनिश्चयोऽपेक्षितः। वेदे तु नित्यनिर्दोषत्वेनैव सा नेति वाच्यम् अनाप्तोक्तत्वशङ्काया आप्तोक्तत्वशङ्कापर्यवसिताया ग्राह्याभावशङ्कारूपायाः प्रतिबन्धकत्वाभावात्। न च शाब्दबोधहेतुतयाप्तोक्तत्वनिश्चयोऽपेक्षितः। वेदजन्यशाब्दबोधे व्यभिचारेण कारणत्वाभावात्। लौकिकशब्दजन्यशाब्दबोधे आप्तोक्तत्वनिश्चयस्यापेक्षितत्वमिति चेन्न। आप्तोक्तत्वनिश्चयं विनापि वेदानुकारेण पठ्यमानलौकिकमन्त्रादिवाक्ये वेदत्वभ्रमाद्भौडमि-मांसकस्य शाब्दबोधात्। आप्तत्वरूपहेतुगर्भवाक्यार्थस्य प्रथमं ज्ञातुमश-क्यत्वेन हेतोरज्ञानाच्चेति। यदि च वैदिकशब्दज्ञानात् पूर्वमनाप्तोक्तत्व-शङ्काव्युदासाय नित्यनिर्दोषत्वधीरपेक्षिता तर्ह्येते पदार्था मिथः संसर्ग-वन्तः दोषवत्पुरुषाप्रणीतत्वे सति सत्तात्पर्यकपदस्मारितत्वादित्यनुमाना-त्संसर्गज्ञानोत्पत्तेर्वेदस्याप्यनुवादकतापत्तेस्तदुक्तं कुसुमाञ्जलौ "व्यस्तपू-

न्दूषणाशङ्क्षे' स्मारितत्वाद्दमिपदैरमी । अन्विता इतिनिर्णीते वेदस्यापि न तत्कृत"इति । व्यस्ता निरस्ता पुन्दूषणस्याशङ्का यत्रेत्यर्थस्तेन दोषवत्पुरुषाप्रणीतत्वे सतीति पर्यवसित पदैः सत्तात्पर्यकपदैः अन्विता मिथः संसर्गवन्तस्तथा चामीपदार्था मिथः संसर्गवन्तः । सत्तात्पर्यकपदस्मारितत्वादित्यनुमानलब्ध तत् अनुवादकत्व कुतो नेत्यर्थ' ॥ प्राभाकारास्तु व्यभिचारिशब्दव्यावृत्तमव्यभिचार्यनुगत प्रमाप्रयोजक रूपमभ्युपेय। यदभावादनाप्तोक्तवाक्यचप्रमा । तच्च ज्ञातमुपयुज्यते ज्ञायमानकरणनिष्टत्वे सति ज्ञानोपयोगि व्यभिचारवैलक्षण्यात् प्रमाहेतुत्वाद्वा । व्याप्तिमच्छब्द शक्तिमच्च । अथ यत्र यथार्थतात्पर्यकत्व लिङ्गतयानुमितिजनक तत्र तस्य ज्ञातोपयोगित्वस्य सत्त्वात्सिद्धसाधनमिति चेन्न स्वविषयकव्याप्ति ज्ञानाजन्यज्ञान प्रति ज्ञानोपयोगित्वस्य साध्यत्वात्। न चानुमितेर्व्याप्तिविषयकज्ञानजन्यत्वाद्दृष्टान्तासिद्धिरिति वाच्यम । स्वघटितस्वविषयकज्ञनाजन्यज्ञान प्रति ज्ञानोपयोगित्वस्य साध्यत्वात्स्वस्य स्वाघटितत्वेन व्याप्तेर्व्याप्त्यघटितत्वेन न दृष्टान्तासिद्धिरिति । ज्ञातोपयोगिन व्यभितचारवैलक्षण्यमात्र तु भूयोवयवेन्द्रियसन्निकर्षे गतमतो ज्ञायमानकरणनिष्टेति धूमनिष्टरूपादौ व्यभिचारवारणाय ज्ञातोपयोगीत्युक्तम्। तथा च ज्ञायमानत्वावच्छिन्नकारणताकज्ञानोपयोगीत्यर्थः तच्चात्ममनोयोगेगतमतो व्यभिचारवैलक्षण्येति तच्चाप्रमाप्रयोजकभिन्नत्वार्थक अनुभवमात्रस्यैव तन्मते प्रमात्वादप्रमा स्मृतिरेव । न च स्मृति प्रत्यपि यथार्थतात्पर्यकत्वस्योद्बोधकविधया हेतुत्वादसिद्धिरिति वाच्यम् । ज्ञायमानत्वप्रयुक्तकरणताकप्रमितिभिन्नप्रमितिजनकतानवच्छेदक सत्प्रमिति जनकतावच्छेदक यत्तद्रूपस्य विवक्षितत्वात्। तथा च यथार्थतात्पर्यकत्वस्य तादृशप्रमितिभिन्नप्रमितिजनकतानवच्छेदकत्वान्न दोषः । न च तथापि परामर्षे पक्षतायां तत्तन्मनोयोगादौ तत्तच्छाब्दप्रागभावादौ च व्यभिचार इति वाच्यम्। भावत्वेन विशेषणात्प्रागभावादेर्वारणम्। पक्षतायास्तन्मतेऽहेतुत्वात्। प्रागभावस्यास्वीकाराच्च दोषः । परामर्षेऽपि ज्ञातो-

पयोगित्वं स्वप्रकाशत्वमेति न दोष.। यद्वा। अनेकप्रमितिजनकताव-
च्छेदकत्व विशेषणीयम्। तेन तत्तन्मनोयोगतत्तच्छाब्दप्रागभावयोर्वारणम्
ज्ञानाजन्यत्वेन विशेषणात्पत्ततापरामर्षयोर्वारण पत्ततायाः संशयरूप-
त्वादिति। तच्च तात्पर्य वेदे न्यायगम्य। न्यायश्चानादिमीमांसापरिशो-
धितस्तर्के। तथा हि कपिञ्जलानालभेतेत्यादौ परार्द्धपर्यन्ताना कपिञ्जला-
नामालम्भने प्राप्ते सर्वापदानासामर्थ्यात्पराधं व्यावृत्तिरावश्यकीति बहुत्व-
मवश्य सङ्कोच्य एकत्वपरत्वे बहुत्वासङ्गतिरिति त्रित्वपरत्व न तु चतुरा-
दिपरत्व गौरवात्। चतुरादिपरत्वे त्रित्वस्यावश्यकत्वात्। त्रित्वपरत्वे
चतुरादिपरत्वानावश्यकत्वात्। चतुरादिपरत्वे न हिंस्यात्सर्वा भूतानिति
वेदस्य प्रतिरोधकत्वाच्च। न च त्रित्वपरत्वे कुतो न प्रतिबन्ध इति
वाच्यम्। कपिञ्जलानित्यादिवेदानुरोधेन त्रित्व प्रतिरोधाभावादिति
न्यायाभासाद्यत्र तात्पर्यधीस्तत्रासंसर्गाग्रहमात्र न्यायसिद्धतात्पर्यबुद्धेर-
भावात्। लोके च पुंसा न्यायाविषयेपि तात्पर्यस्य सत्त्वात्। न न्यायगम्य
तात्पर्य किन्त्वनुमानादिगम्य। तथा हि इद वाक्य भ्रमप्रमादिविशिष्टज्ञा
नयोरन्यतरजन्य सतात्पर्यकवाक्यत्वादित्यनेनान्यतरजन्यत्वानुमितौ सत्या
ततोऽय न भ्रमवान् प्रमादवान्वा तदभावावति व्यावर्तकधर्मज्ञानव-
त्त्वात्। प्रमादश्च घटादिपदे पटादिशक्तिभ्रम एव। न प्रतारकः साधु-
त्वात्। साधुत्व तु प्रतीतार्थस्य विपरीतप्रतीतावनिष्टसाधनताज्ञानवत्त्व
प्रतारणा च प्रतीतार्थस्य विपरीतप्रतिपिपादयिषा अय नापटुकरणो
दोषशून्यत्वात्। अपटुकरणत्व चान्यवर्णस्थाने वर्णान्तरानुकूलयत्नवत्त्व
इत्थ च भ्रमाद्यभावेऽनुमिते इद वाक्य यथार्थवाक्यार्थज्ञानजन्य सतात्प-
र्यकभ्रमाद्यजन्यवाक्यत्वात्। मद्वाक्यवत्। यत्तद्गर्भव्याप्त्या विशिष्य यथा
र्थज्ञानजन्यत्व सिद्ध्यति। तथा च लोके यथार्थतात्पर्यग्राहकत्वादिज्ञाने
उक्तरीत्या विशिष्य यथार्थवाक्यार्थज्ञानजन्यत्वे ज्ञाते इद वाक्य यथार्थता-
त्पर्यक यथार्थवाक्यार्थज्ञानजन्यत्वादित्यनुमानेन यथार्थतात्पर्यग्रह इति।
यथार्थवाक्यार्थज्ञानजन्यत्वग्राहकेण वाक्यार्थस्य विषयीकरणाल्लौकिकश-

ब्दोऽनुवादको न तु वैदिकः । वेदे न्यायात्सामान्यतस्तात्पर्यग्रहात् । लोके तु वाक्यार्थस्य बाधितत्वसंशयान्न सामान्यतस्तात्पर्यग्रह इति वेदे तु वेदार्थत्वेनाबाधितत्वनिश्चय इत्याहुः । अत्रोच्यते । आप्तवाक्यादत्र यथार्थतात्पर्यकमिति सामान्यतो निश्चयस्तत्र कथमनुवादकत्वं । एवं यजेतेत्यत्र यजिपदं लिङ्पदार्थान्वितस्वार्थपरमिति तात्पर्यग्रहे को वा द्वेष इति लोकवेदयोस्तौल्यमेव । नन्वेवमेव लोके बाधितत्वशङ्कया न तात्पर्यग्रहः । वेदे तु वेदार्थत्वेनाबाधितत्वाच्छङ्कैव नोदेति । तथा च लोके निरुक्तरीत्यैव तात्पर्यग्रहादनुवादकत्वमिति चेन्न । लोके मन्वादिपुरुषीयतात्पर्यविषयत्वेनाबाधितत्वनिश्चयात् । वेदा नियमेनैव प्रमाणमिति येन न ज्ञायते तस्य वेदेपि बाधितत्वसंशयसम्भवाच्च । किं च । भ्रमाद्यभावादिकं निश्चेतुमशक्यत्वात्संशयेऽपि लोकवेदयोः शाब्दबोधोपपत्तेर्न यथार्थतात्पर्यनिश्चयः कारणमिति । किं च यागो नेष्टसाधनमिति ज्ञानसत्त्वपि यजिपदं लिङ्पदार्थान्वितस्वार्थपरमिति सामान्यतो निश्चयाच्छाब्दबोधः स्यादिति दिक् ॥

**नैयायिकास्तु पृथगेव शब्दो मानं न त्वनुमानं शब्दस्यार्थाव्याप्यत्वात् न हि यत्र शब्दस्तत्र घटानयनादिरूपोऽर्थः शब्दस्याकाशवृत्तित्वाद्घटादेश्च तदवृत्तित्वात् । दृश्यते च व्याप्तिज्ञानविधुराणामपि शब्दादन्वयानुभवः**

स्वमतमाह । नैयायिकास्त्वित्यनेन । परमतं दूषयति । न त्विति यद्वा लाघवादनुमानविधयैव शब्दस्य प्रामाण्यमस्तु किमतिरिक्तप्रमाणान्तरकल्पनयेत्यत आह । न त्विति । अनुमानविधया निरुक्तपदपक्षकपदार्थपक्षकानुमानविधया । अथ वार्थसाध्यकशब्दहेतुकानुमानविधया । तादृशानुमानं त्वानयनादिकं कर्मतासंसर्गेण घटादिमत् । आकाङ्क्षादिम-

त्पदकदम्बात्। पटानयनादिवदेव बोध्यम्। हेतोर्वैयधिकरण्यप्रयुक्तमव्याप्यत्वमाह। शब्दस्येति। व्याप्त्यभाव दर्शयति न हीत्यादिना। अत्र व्याप्तौ हेत्वधिकरण हेतुतावच्छेदकसम्बन्धेन साध्याधिकरण साध्यतावच्छेदकसम्बन्धेन बोध्य प्रकृते हेतुतावच्छेदकसम्बन्ध समवायस्तेन स्वप्रतिपाद्यतादिसम्बन्धेन शब्दस्यानयनादिवृत्तित्वेऽपि नक्षतिः। तदवृत्तित्वात्। साध्यतावच्छेदककर्मतादिसम्बन्धेन गगनाद्यवृत्तित्वात्। तेन येन केनचित्परम्परा सम्बन्धेन घटादेर्गगनवृत्तित्वेपि न क्षति.। ननु स्वप्रतिपाद्यतासमर्ग एव हेतुतावच्छेदकसम्बन्धोऽस्तु तथा च तेन सम्बन्धेन शब्दस्यानयनादिवृत्तित्वात शब्दस्याव्याप्यत्वाभावादित्यत आह। दृश्यते चेति। यद्वा ननु न वय तादृशशब्दार्थयोर्व्याप्यव्यापकभाव ब्रूमः किं तु तादृशशब्दस्मारितत्वार्थसमर्गयोस्तथा चैते पदार्थास्तात्पर्यविषयमिथ ससर्गवन्त आकाङ्क्षादिमत्पदकदम्बस्मारितत्वादित्यनुमानेन कर्मत्वादौ घटादिससर्गसिद्धिरित्यत आह। दृश्यते चेति। व्याप्तिज्ञानविधुराणां व्याप्तिज्ञानशून्याना। तथा च शब्दश्रवणोत्तर झटितिनियमेन व्याप्तिज्ञाने मानाभावादिति भाव.॥

**न चायमनुमितिरूपस्तस्या व्याप्तिधीजन्यत्वात् प्रतीयन्ति च लौकिकाः अननुमितमसाक्षात्कृतं च श्रुतमिदं नैयायिकेभ्य इत्यलमतिविस्तरेण।**

भ्रान्तः शङ्कते न चायमिति। अय अनुभवः तस्याः अनुमितेः। ननु शब्दस्य पृथक्प्रामाण्यकल्पनापेक्षया लाघवात्सर्वत्र शब्दश्रवणोत्तर व्याप्तिज्ञान जायत एवेति कल्पनीयमत आह प्रतीयन्ति चेति। यद्वा न चानुभवानुसारिणी व्यवस्था अन्यथा साक्षात्करोमीत्यनुभवाद्विलक्षणानुमिनोमीति प्रतीत्यानुमितिरपि न सिध्येतेति। शाब्दबोधेपि विलक्षणानुभव दर्शयति। प्रतीयन्ति चेति। प्रतियन्तीदृशप्रत्ययेन निश्चिन्वन्ति। लौकिकाः लोके भवा। शाब्दबोधस्यानुमित्यात्मकत्वे प्रतिपादिते तद्वि-

दसिद्धावुत्कटेच्छावत्त्वात्प्रागननुमितमित्युक्तम् । साक्षात्कारभिन्नत्वस्य परेण प्रतिपादनात्तद्वैर्दसिद्धावुत्कटेच्छाया अभावात् । अत एव नोपमितमिति स्वयं नोक्तम् । तथा चासाक्षात्कृतमिति प्रसङ्गादुक्तं । नैयायिकाभिधाना शास्त्रज्ञाना तत्र विद्वद्ग्रन्नैयायिकेभ्य इत्युक्तम् । एवं च क्रियावैलक्षण्याधीनतया विलक्षणं कारणमवश्य वाच्य स एव शब्द इति भावः । अत्र नैयायिकपदमाप्तस्याप्युपलक्षणमित्याप्तात् श्रुतमित्यर्थे । शाब्दयामि शृणोमीति विलक्षणप्रतीतिसिद्धायाः शाब्दत्वजातेस्तदवच्छिन्नम्प्रत्याकाङ्क्षादिज्ञानस्य हेतुत्वकल्पनावश्यकत्वे पुनर्व्याप्तिज्ञानस्य हेतुत्वकल्पन तत्रानुमितित्वजातिकल्पने गौरवमिति बोध्यम् । विस्तरस्तु शाब्दबोधस्यानुमित्यात्मकत्वे वह्निव्याप्याभाववान्पर्वतो वह्निमानिति शाब्दबोधो न स्यात् । अनुमितौ वह्निव्याप्यवत्ताज्ञानस्य हेतुत्वात् । तादृशशाब्दबोधे वह्निव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वाच्चानुमितिरूपो बोध्यः ।

**ननु यदि स्वातन्त्र्येणैव शब्दो मानं तदा घटमानयेत्यतः पामराणामप्यर्थप्रत्ययः स्यादिति चेन्न । शक्तिग्रहस्यापि सहकारित्वात् पामराणां च घटादिशब्दशक्तेरग्रहात् । अथ केयं शक्तिः अभिधानामपदार्थान्तरं सङ्केतग्राह्यमिति मीमांसकाः । नैयायिकास्त्वावश्यकत्वात्सङ्केत एवाभिधा न पदार्थान्तरं मानाभावात् ।**

ननु घटमानयेत्यादि वाक्यात् पामराणामपि शाब्दबोध. स्यादिति बाधकसत्त्वात्कथं शब्दस्य स्वातन्त्र्येण प्रमाणत्वमित्याह नन्वित्यनेन । अथ वैतावता प्रबन्धेन शाब्दबोधकरणत्व शब्दे सिद्धं । तच्च न स्वरूपतः तस्याशुतरविनाशित्वात् । नापि ज्ञायमानस्य मौनिश्लोकादौ व्यभिचारात् । तत्र पदाभावेऽपि शाब्दबोधोदयात् । किं तु पदज्ञानं करण

*in distinct substrata (and are not capable of separate action or motion), there is no possibility, of Conjunction and Disjunction (and the relationship is that of Inherence) In as much as all Disjunction is momentary, and exists only till the next Conjunction, its destruction also is momentary In the case of Conjunction we have found that it is destroyed by the disjunction of those very things that have been in conjunction, such is not the case with Disjunction, it is not destroyed only by the Conjunction of the two things disjoined, because the idea of two things being disjoined is not continuous like that of their being conjoined (i e, the idea of Disjunction appears only at the moment of separation, while that of Conjunction continues as long as the Conjunction itself lasts) Hence Disjunction is regarded as momentary only on account of its existence being executed by the next Conjunction In some cases Disjunction is destroyed by the destruction of its substratum 'How?' When in a part of one of the yarns of a 'duplicate yarn,' an action is produced, it brings about its disjunction from another part of the same yarn, and at that very time an action is produced in the other yarn also This Disjunction leads to the destruction of the cohesive Conjunction of the substance, and the action in the yarn produces a Disjunction from the other yarn This constitutes one moment of time Then, at the time that the Disjunction brings about the destruction of the Conjunction of the yarns, there also follows from that destruction of the Conjunction, the destruction of the yarn And this being destroyed, there follows the destruction of the Disjunction of the other yarn, which has the former yarn for its substratum*

Objection "*If such were the case then there would be "no chance of the coming about of any subsequent "Disjunction, as there would be no Disjunction "present that could serve as the cause of any "subsequent Disjunction Hence, in as much as 'there would be no Conjunction in a thing in "contact with another point in space, the action "(in the yarn) would continue for a long time, "specially as no contrary quality (in the shape of "another Conjunction) would be appearing, and 'that action which would be inhering in an "eternal substance would be eternal, and all this "could never be admissible 'How so?' When an "action appears in the atom of the Water-diad, 'and brings about its Disjunction from another atom,—at that very time there appears an action 'in the other atom also, and hence at the time that "the disjunction gives rise to the destruction of the "cohesive conjunction of the substance, at that very 'time the action of the other atom brings about "the disjunction of the atom from the Diad, and "then, at the time that Disjunction produces the "destruction of the Conjunction of the Diad and "the Atom, at that very time from the destruction 'of the Conjunction follows the destruction of the "Diad And this being destroyed, the Disjunction "of the Diad and the atom resting therein is also "destroyed And then, there being no possibility "of the appearance of any contrary quality, "there would be an eternality of the action "inhering in the eternal substance (Atom)"*

**[Page 154]** Reply —*In as much as the Disjunction would follow from the Disjunction of the yarn from its other part, there would be none of the absurdity urged above The destruction of the substratum*

*destroys only the Disjunction of the two yarns and that of the yarn and its other parts, and from this latter Disjunction would proceed other subsequent Disjunctions, just like the Disjunction of the Body and ākāsa following from that of the finger-tip and ākāsa, and as the action brings about the Conjunction and becomes destroyed, there is no anomaly in this Or, simultaneously with the appearance of the Disjunction of the yarn from its other part there appears in that same yarn an action, and then from the Disjunction of the yarn from its other part there follows the destruction of the cohesive Conjunction of the yarn, and the action of the yarn brings about its Disjunction from another yarn, all this forming one unit moment of time Then from the destruction of the Conjunction there follows the destruction of the yarn, and this destruction brings about simultaneously the destruction of the Disjunction and the action inhering therein Or, when (during weaving) there is a Conjunction of the yarn with the Brush, as (at that point of time) no substance is produced, we would have the destruction of the Disjunction of the yarn and the brush, brought about by the destruction and Conjunction of the substratum,—all this occuring in the same process as explained before*

---

## Commentary

As Disjunction is always preceded by Conjunction the author having dealt with the latter, proceeds to explain the former The verbal explanation of the first sentence is in the same manner as that of the similar sentence in the preceding section

*Objection* "The notion of 'disjoined' is present only when there is an absence of Conjunction (and hence Disjunction cannot be anything apart from such absence)"

*Reply* Until there is a Disjunction, whence could the absence of Conjunction arise ?

*Objection* "It is brought about by action"

*Reply* That cannot be, as no action is ever found to have the power of destroying a quality It is qualities alone that are found to be destructive of qualities, and hence for the destruction of Conjunction also we must postulate a distinct quality as the cause

And further, in the case of the "absence of Conjunction" the notion that we have is in the negative form—'these two things are *not joined*,' and not in the positive form 'these are *disjoined*', and the reason for this is that a negative entity ('absence of Conjunction') could not be conceived of in the positive form

*Obj* "The form of the notion may be said to be figurative (the positive form could figuratively apply to a negative entity)"

*Reply* Then that would not mean a denial of Disjunction, for unless there be some positive thing to which the form of the notion could apply directly, it could not have any mere figurative implication

[**Page 155**] The effects of Disjunction are next shown —*Śabda-vibhāga etc*, Disjunction is not merely the basis of the notion of *disjoined*,' but it is also the basis of the production of sound As for instance, when a bamboo is torn, the sound that proceeds must be regarded as due to another quality,—because it is a sound, like the sound born of the conjunction of the stick and the drum, the sound in question however could not be due to a Conjunction, as no Conjunction is found to be present in the case, hence it must be accepted to be produced from the separa-

tion or Disjunction of the bamboo-fibres, as it is found to be invariably concomitant with this How Disjunction can be the cause of a further Disjunction we shall explain later on

The definition of Disjunction is given in the form—'*Prāpti-purvikī &c*' Just as the negative word '*Adharma*' is applied not to the mere absence of *Dharma*, but to a distinct quality, the opposite of Dharma, so in the same manner, the negative word '*aprāpti*' is applied, not to the mere absence of *approach* or *contact*, but to a distinct quality, the opposite of *approach* or *contact*, and it is to this quality that the name 'Disjunction' is given

*Question* "Is the '*prāpti*' you speak of a mere antecedent of the Disjunction, or has it any causal efficiency towards the bringing about of the Disjunction?"

*Answer* We hold that it is only an antecedent If Conjunction (which would be the same as '*prāpti*') were the cause of Disjunction, then as soon as the two constituent molecules of a substance would come together, this Conjunction, being endowed with the causal efficiency towards Disjunction, would bring this latter about, and thus there being a disruption of the molecules, no existence would be possible for the whole composite substance

*Objection* "It is not mere Conjunction by itself, but Conjunction aided by certain actions, which must be regarded as the cause of Disjunction"

*Reply* Then we can have for the requisite cause, this action itself with which the Disjunction may be found to be invariably concomitant, (and no causal efficiency need be admitted in the Conjunction) specially as Disjunction is not found to follow always when Conjunction is present Hence we conclude that, as in the case of the production of Destruction, we regard 'existence' as a mere antecedent, so in that of the production of Disjunction also, Conjunction can be regarded as only

preceding it in time, as Disjunction is a quality of a nature contrary to that of Conjunction

*Disjunction is of three kinds only* —the limitation of the number being indicated by the particle '*cha*' The three kinds are—(1) that brought about by the action of any one of the two things concerned, (2) that brought about by the action of both, and (3) that brought about by Disjunction The first two kinds are similar to the corresponding two kinds of Conjunction That is to say, just as the Conjunction of the mobile with the immobile object is of the first kind, so also is the Disjunction of the mobile from the immobile object And as to the second class belongs the Conjunction of two fighting rams or wrestlers, so also does the Disjunction of those belong to the second kind

The third kind of Disjunction is of two kinds (it is this difference from the first two kinds that is meant to be indicated by the particle '*tu*') There is one Disjunction due to the Disjunction of the causes, and another is due to that of the cause from the non-cause The Disjunction due to the Disjunction of causes is thus explained when an action is produced in the cause pervaded by the effect, then it produces in it a Disjunction of one of its component particles from another, a Disjunction that tends to the destruction of the cohesive Conjunction of that substance, and at that time that action does not bring about any Disjunction of the substance from the point of space occupied by it, and at the time that this latter Disjunction is brought about, there is no trace of the former Disjunction of the parts Hence it is on account of this general rule that the action of the component part brings about the Disjunction from another component part and from the point of space &c

**[Page 156]** The sense of all this is as follows The power, in the action, of bringing about the Disjunction from *Ākāça*, is pervaded by (*i e* is always concomitant with) its power of not bringing about any such Disjunction as would be incompatible with (*i e*, destructive of) the cohesive Conjunction of the Substance.

and this latter power is opposed by the power of bringing about a Disjunction that would be incompatible with the cohesive Conjunction of the Substance, consequently, wherever this last power would be present, there that other power of not bringing about such a Disjunction would naturally become excluded, and the exclusion of this would mean the exclusion of its concomitant, the power of bringing about the Disjunction of *Ākāça*, just as the exclusion of fire means the exclusion of smoke

*Objection* Between the power of bringing about the Disjunction of Ākāça, and that of not producing a Disjunction incompatible with the cohesive Conjunction of a substance,—there is mere concomitance, and not an absolutely invariable concomitance (as between Fire and Smoke) (and hence the exclusion of the latter would not necessarily involve the exclusion of the former)"

*Reply* It is not so, because we never find these two powers apart from each other It is only when we, in some cases, perceive two things apart from each other, and in other cases, together,—that we conclude that there is mere occasional concomitance between them,—*e g* the *Earthiness* and *scratchibility by Iron* are not found together in the Thunderbolt, though we find them together in a piece of wood, in the case of the two powers in question however, we never find them apart from each other Even then we might have been led to suspect that they may have separate existence, only if their concomitance were due to certain external conditions, as we find in the case of the meeting of the pupil and the teacher, as a matter of fact, however, such is not the case, as we do not find any such external conditions Then if such a concomitance,—independent as it is of all external conditions, and unfailing as it is actually found to be—were not accepted as absolutely *invariable*, then there would be no invariable concomitance between Fire and Smoke either, and thus all Inferential processes would be done away with at a single stroke

*Question* "Even if the action of the part were to bring about Disjunction from another part, and not from the *Ākāça* what would that prove?"

*Answer* *From the Disjunction follows the destruction of the cohesive Conjunction of the substance* That is to say, if it were to bring about Disjunction from *Ākāça*, then, as no specific disruption within the substance itself would be brought about, there would be no destruction of the cohesive Conjunction of the substance

*Question* "What would follow from the destruction of this Conjunction?"

*Answer* The Conjunction, which is the non-material cause of the substance, having been destroyed, and no effect being possible when there is no cause,—there would follow the destruction of the composite whole And the composite substance having been destroyed, the Disjunction of the component parts would bring about the Disjunction of the active part from that point in space which had been in contact with the composite substance,—this Disjunction being either with reference to the particular point of time, qualified by the destruction of the substance, or to the part itself independently of all other things So long as the composite substance is not destroyed, there is, in the component part, neither independent existence, nor any capability of moving to another place by itself, and hence till then there is no possibility of any Disjunction from the point of space occupied by the part It is for this reason that we have said that what is needed is either the point of time, qualified by the destruction of the substance or 'independent existence'

*Question* "What reason have you got for asserting that the present Disjunction of the component particles brings about the Disjunction of the active part only?"

*Answer* *It could not be that of the inactive part, because of the absence of the requisite cause* In the production

of Disjunction from Disjunction, we have *Action* (Motion) also as the efficient cause, and as in the inactive part, this cause would be absent, there could be no Disjunction of that part

Another reason for the same is all that action or motion appears for the purpose of bringing about a subsequent Conjunction, as it always tends to fulfil the desirable ends of a man by means of the substance that will have reached another point in space Then, if there were no Disjunctoin of the active or mobile part from such point in space as would be in contact with the component substances, then there would be no cessation or removal of the preceding Conjunction, which is an obstacle in the way of the subsequent Conjunction, and thus no subsequent Conjunction appearing, the original action would become wholly futile, and this would be far from desirable Hence it must be admitted that the Disjunction is that of the mobile or active part only Nor is it possible for the action or motion of the two component parts to bring about the Disjunction from *Akāça*, simultaneously with the Disjunction of the component whole

**[Page 157]** *Objection* "We grant that the action does not bring about the two Disjunctions simultaneously, but what would be the objection to its bringing them about, one after the other? It is only on account of some such objection that we could be justified in precluding this action, which has been found to be possessed of the capability of bringing about a Disjunction, and admitting the fact of the Disjunction (from *Akāça* &c) being due to another Disjunction which has never been found to be endowed with the said capability"

*Reply The motion of the part does not bring about Disjunction from the point in space, because of the passing off of the time of its production* The nature of actions is such that they produce, immediately after their own appearance, the Disjunction which is being produced by the actions themselves as the non-material cause And the time of the production of

this Disjunction becomes past at the time of the appearance of another Disjunction, and hence this latter can never be said to be produced from those actions

*Objection* "In that case, how does the action bring about the subsequent Conjunction ? As certainly there are many intervening moments of time between the appearance of the action and that of the Conjunction"

*Reply* *It brings about the Conjunction of another place* Just as the point of time immediately after the appearance of the action is the moment for its bringing about Disjunction, so, in the same manner, the point of time immediately after the previous Conjunction is the moment for the appearance of the Conjunction of another place Specially as the substance located in the former place cannot possibly reach another place Nor is the time for the appearance of the Conjunction past, as the time would have become past if the action had previously brought about the Conjunction of another place, as a matter of fact however, it is not so, hence in as much as the action will not have brought about any Conjunction, the time for its bringing about a Conjunction, will not have passed off, and hence the action would bring about a Conjunction, but not a Disjunction If the Conjunction were not brought about by the action, then,—in as much as there would be no other action, and as nothing could be brought about without a non-material cause,—the only thing that could be regarded as the cause of the Conjunction would be the Disjunction inhering in the same substance with itself The word '*iti*' indicates the end of the process

Having thus understood Disjunction of a thing brought about by the Disjunction of its Material cause, the Enquirer wishes to understand the character of that Disjunction which is brought about by the Disjunction of the Cause and Non-cause And with this view he puts the question—"How &c ?"

The answer is—*When &c* When, by some cause or other, an action or motion is produced in the hand, it does not disjoin the hand from the other parts of the body, but it does bring about its Disjunction from certain points in space, as also its Conjunction with other parts in space, and then we have what has been called the "Disjunction of the cause and the Non-Cause",—there being the Disjunction of the *hand* (which is the component *cause* of the Body) from the points in space (which are *not the cause* of the Body), and this Disjunction brings about the Disjunction of the Body (which is the effect of the Hand) from the point in space (which are not its effects), all these Disjunctions being brought about in that same direction towards which the disjunctive action (or motion) tends, and towards that same point in space where this succeeding *Conjunction* is to be brought about when, for instance, we find the Hand being disjoined from a point in a wall, we have the Disjunction from that point in the wall, of the Body also (to which the Hand belongs), and yet this latter Disjunction is not the effect of the action or motion of the Body,—the Body at that time being absolutely at rest, nor can this Disjunction of the Body be the effect of the action of the Hand, because we have never seen an action producing a Disjunction elsewhere than the substratum in which it itself appears, and it is for this reason that we postulate, as the cause of this Disjunction, the aforesaid Disjunction of the Cause and Non-cause

The word '*ādi*' in the expression '*ākāśādi*' is meant to include other omnipresent things, and it is for this reason that we have the plural ending in '*vibhāgān*'—the Disjunctions of such omnipresent things are of an endless number

Some people argue thus "As a matter of fact we find that the Disjunction of the Body from the wall, is simultaneous with that of the Hand from it, and as such it is contrary to a perceptible fact to assert that these two Disjunctions bear to each other the relation of cause and effect"

But this is most unreasonable, because at the time of the Disjunction of the Hand, there is no cause present for the Disjunction of the Body, as an effect is not possible without its cause, and we have already said above that the action of the Hand cannot be its cause Hence it must be admitted that the said idea of simultaneity is a mistake

*Objection* "The fact of the Disjunction of the Body appearing *after* that of the Hand can be proved only by Inference, while their simultaneity is perceived directly by the Senses, and so long as a contrary fact of Sense-perception is present, no Inference can be effective, as any such Inference would be negatived and set aside by the Sense-perception and as such would not fulfil the only condition of validity Under the circumstances, how can we regard the fact of Sense-perception to be a mistake, on the sole strength of an inferential fact?"

*Reply* How do you find Inference operative in the case of the piercing of the many petals of the lotus—where though the piercing is perceived to be simultaneous, yet such simultaneity is universally regarded to be not true

*Objection* "An Inference contrary to Sense-perception ceases to operate only when the matter is decisively pointed out by the latter to be of a character contrary to that pointed out by the Inference, in the case of the lotus-petals however the matter is doubtful, as it is quite possible that the perception of simultaneity may be due to the extremely quick succession in which one petal is pierced after the other On the contrary however we have the decisive premiss universally recognised that the needle pierces an object only when it is in direct contact with it and not otherwise (and as all the petals cannot be in contact with the needle at one and the same time, the piercing cannot be simultaneous), and hence even though there is a perceptible fact to the contrary, yet, as it appears to be doubtful, there is every room for the operation of this contrary Inference which is fully decisive on the point"

*Reply* The evidential strength of the proposition that, an action does not bring about any Disjunction apart from its own substance,' being quite unimpeachable, and the perceptible fact being capable of being explained away differently, the Inferential reasoning about the sequential Disjunctions becomes fully established And it is on this account that it is regarded as setting aside the aforesaid perceptible fact Specially as the Inference has a distinct object to operate upon, whereas the perception has no basis, being, as it is, due to the extremely quick succession in which the two Disjunctions appear, and that means of knowledge which has an objective basis, is on account of the aid of that basis, stronger in its authority than another which is weaker on account of its being devoid of such objective basis Then again whenever a perceptible fact is said to be set aside by an inferential conclusion, the setting aside is done, not by Inference, but by another perceptible fact upon which the premisses of the inference are based For instance, we find such settings aside in the case of a man having mistaken notions of the directions,—this being admitted by all experienced persons, who declare that in such cases Inference is more authoritative than perception In the case of such perceptions however, as that of the heat of fire, we find that it is not capable of being in any manner explained away, and hence when the object has been once cognised by means of it, it can never be set aside by any Inferential reasoning

[**Page 159**] *Question* "On what ground do you assume the fact of one cognition being set aside by another?"

*Answer* Because we find that while bearing upon the same object, they contradict each other For instance, a single object is apprehended by one Cognition as *Silver*, and by another as *Shell*, and it is not possible for one and the same thing to be both, as we always find *Silver* to be something distinct from the *Shell* Thus then, there being a contradiction between the objects of the two cognitions, we conclude that the cognitions

also are contradictory, and as such one should naturally set aside the other

*Question* "What do you mean by this 'setting aside,' '*Bādhā*'?"

*Answer* It consists in *the taking away (or depriving) of the object*

*Objection* 'In the case of the *shell*, even after it has "been recognized as *shell*, there still continues the object that "was illumined by the previous Cognition of *silver*, and as "for actual *silver* that never existed, and as such what is it "of the previous cognition of *silver*, that has been 'taken away' 'by the succeeding cognition of the *shell*? For certainly 'taking "away' can be nothing more than *destroying the connection* "of one thing with another

"*Objection* 'Though the *silver* did not exist, yet it did "appear in the cognition (and hence it can very well be taken "away by the subsequent cognition)'

"*Reply* True it did appear in the cognition But this "*appearance in the cognition* cannot be taken away, for the "simple reason that it is a fully accomplished fact, certainly "that which has once appeared, can never be reduced to the con-"dition of the *non-appeared*

'*Objection* 'Though in reality the silver did not exist, "yet it was shown by the cognition, as existing, and the "*separation* or *removal* of this as manifested by cognition "would consist merely in the putting forward of the contradictory "of that cognition'

"*Reply* In that case, all that the *setting aside* would do "would be to prove the *non-existence of silver*, and in what way "could that affect the *cognition of silver*? This cognition only "manifested the silver and made it cognisable, it did not bring "it into existence, and this manifestation was duly effected by "the mere appearance of the cognition and then what is there "that could be set aside by the subsequent cognition of the *shell*?'

*Reply* When the *absence of silver* has been cognised, it becomes patent that the previous *cognition of silver* was one that had no basic objective reality,—*i e* it was false, and it is in this way that the idea of the non-existence of silver affects the *cognition of silver*

*Objection* "In this way then, what is taken away from the cognition is its *phala* (the resultant activity of the cogniser), and not the *object* as said before, because whenever a cognition is regarded as false, it does not give rise to any activity"

*Reply* Not so, because the taking away of the *resultant activity* is concomitant with that of the *object* itself It is not always that a cognition rests in its resultant activity, as this activity is always dependent upon the will of the person, and we often find a cognition ending in mere indifference, and not leading to any activity at all Even in cases where it does lead to a resultant activity, this latter is tied down to the object, and the object being in its turn tied to the cognition, any setting aside of the cognition would invariably mean a deprival of the object, and of the resultant activity, as the deprival of the latter would naturally follow upon that of the former We desist from further details on this point, which we have explained in the *Sangrahatīkā*

In as much as what follows after the 'Disjunction born of Disjunction,' is the 'Conjunction born of Conjunction' of the substance that has long been produced, the author now proceeds to explain this Conjunction, which he had promised to do before (in the section on 'Conjunction')

*After that &c* After the 'Disjunction born of Disjunction' the action of the Hand having given rise to the Conjunction of the Hand, which is the component cause, with its non-causes, the points in space,—from this Conjunction follows the Conjunctions of the inactive Body, which is an effect of the Hand, with its non-causes the points in space, and this latter Conjunction is not brought about by the action of the Hand, as all that this action can do is to carry its own subs-

tratum (the Hand) to another point in space The particle '*iti*' indicates the conclusion of the subject

[**Page 160**] An objection is started, "If &c That is to say, if from the Disjunction of the Cause, the Hand, there follow the Disjunction of the Effect, the Body,—then, if from the Conjunction of the cause were to follow the Conjunction of the effect, and there would be no simultaneity in that case, we would have the whole and its parts having a separate existence, and they would be independent of one another That is to say, if the Body really inheres in the Hand, then whenever the Hand would move the Body should also move along with it, and in that case there could be no sequence in the appearance of their Conjunctions and Disjunctions (as described above), and on the other hand, if their Conjunctions and Disjunctions were to appear one after another, then that would mean that the Body would not move when the Hand would move, and the two would be independent of each other"

*Reply* *Not so*, there could be no such anomaly of "separate existence" Because, apparently you do not seem to understand what "separate existence" means what it means is the capability, in the two things concerned, of initiating or containing an action calculated to bring about Conjunction and Disjunction between themselves "Separate existence" in the form of "separate movement" applies only to eternal substances, e g, in the case of two atoms of Ākāça for instance The particle '*tū*' meaning *only*, should be construed with '*nityānām*,'—the sense being that this kind of 'separate existence' belongs to *eternal substances only* As for transitory substances, on the other hand, their "separate existence,' consists in their 'inherence in separate substrates,' that is to say, they are regarded as having 'separate existence' when it is found that one or both of them inheres in substrates different from the other—'Inherence' here meaning *having distinct relationships of the container and the contained* As for instance, in the

हि सावधारणैः सप्तभिर्वाक्यैर्भूम्नः सर्वात्मत्वमेव प्रतीयते न तु सर्वगतत्वम्। एवकारासामञ्जस्यप्रसङ्गात्। सामानाधिकरण्यश्रुतेर्लोके तादात्म्ये प्रसिद्धत्वादुपक्रमस्याव्यवस्थितत्वाच्च। श्रुत्यन्तरे च "[१]इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा" इति स्पष्टं सर्वात्मत्वप्रतिपादनात्। सर्वगतत्वमात्रपरत्वेऽपि स एवाधस्तादहमेवाधस्तादात्मैवाधस्तादिति प्रतिपर्यायमवधारणान्न जीवपरभेदः प्रत्येतुं शक्यते। तस्मादहङ्कारादेशोऽपि निष्कृष्टाहङ्कारचैतन्यमात्रस्यादेश इति श्लिष्टतरम्॥

स एवाधस्तात्स एवेदं सर्वमित्याद्यन्तवाक्ययोः श्रूयमाणमवधारणं सन्दंशन्यायेन मध्यस्थवाक्येष्वप्यनुषज्यते। तथा च कञ्चनपदार्थमवधिं कृत्वा तस्याधश्चोर्ध्वं च चतुर्दिक्षु च यत्किञ्चिदस्ति तत्सर्वं स एवेति षड्भिर्वाक्यैः प्रतीयते स एवेदं सर्वमित्यवधिभूतपदार्थात्मकत्वम्। विभुत्वपक्षे तु अन्यनिषेधकाम्यस्य मानावधारणश्रुतिपीडा स्यादित्याह। तदसदिति। यच्चोक्तं वेदोपक्रमाधिकरणन्यायेनोपक्रमानुरोधेनोपसंहारो नेतव्य इति। तदयुक्तम्। तत्र हि निर्णीतोपक्रमस्यैवोपसंहारनियामकत्वं व्युत्पादितमिह तु साधारणोपक्रमे विभुत्वानिर्णयान्नायमुपसंहारनिया-

१ बृहदारण्यकोपनिषदि २ प्र० । ४ ब्रा० । ६ क० ।

मक इत्याह । उपक्रमस्येति । किं चात्मनः श्रुत्यन्तरेषु स्पष्टं सर्वात्मत्वप्रतिपादनाद्गतिसामान्यन्यायेन सार्वात्म्यश्रुतिर्नान्यपरेत्याह । श्रुत्यन्तरे चेति । इदं ब्रह्म प्रसिद्धब्राह्मणजातिः, क्षत्रं क्षत्रियजातिः, लोका भूरादयः, भूतानि पृथिव्यादीनि, किं बहुना यदिदं सर्वं तदयमात्मेति निरङ्कुशं सर्वात्मत्वश्रवणादित्यर्थः । सार्वात्म्यश्रुतेः सर्वगतत्वाभिप्रायेऽपि जीवेशभेदो न सिद्ध्यतीत्याह । सर्वगतत्वमात्रेति । विशेष्यगतैवकारस्यान्ययोगव्यवच्छेदार्थत्वात् पर्यायत्रयस्याप्येकार्थ्यमित्यर्थः । स्वमतमुपसंहरति । तस्मादिति । निष्कृष्टेति । निष्कृष्टः पृथक्कृतोऽहङ्कारो यस्मात्तन्निष्कृष्टाहङ्कारं तच्च चैतन्यं च तथोक्तम् ॥

ब्रह्माहङ्कारभेदप्रसिद्धेस्तयोरभेदार्थः पृथगुपदेशः स्यादिति यदुक्तं तद्दूषयति । एतेनेति ॥

(पृथगुपदेशो ब्रह्माहङ्कारयोर्नैक्यसाधक) एतेन यद्वैपरीत्यमापादितं तन्निरस्तम् । अध्यस्तोपाधिकल्पितस्याहमात्मनो वास्तवब्रह्माभेदानुपपत्तेः । यदप्युक्तमहङ्कारातिरिक्तस्यात्मनो न ब्रह्मभेदः प्रतीयते तदुपदेशो भेदार्थ इति, तन्नात्मनो ब्रह्मभेदे सार्वात्म्यानुपपत्तेरुक्तत्वात् । अहमिति प्रत्ययस्य चिदचिदुभयविषयताया वक्ष्यमाणत्वेन तत्प्रत्याय्यभेदस्याप्युभयधर्मिकत्वादात्मनो ब्रह्मभेदाप्रतीत्यसिद्धेश्चेति । तथा तैत्तिरीयके

"[1]ब्रह्मविदाप्नोतिपरम्" इत्युपक्रम्य "[2]यो वेद निहितं गुहायाम्" इति तस्य बुद्ध्यनुप्रवेशेन प्रत्यक्त्वमुक्त्वा तं प्रत्यगात्मानं स्थूलसूक्ष्मतरसूक्ष्मतमोपाधिविवेकेन दर्शयन्ती श्रुतिः पञ्चकोशानवतार्य "[3]विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च" इति श्लोकेन विज्ञानमयस्याहंबुद्धिविषयस्य निखिलकर्मकर्तृत्वमुक्त्वा ततोऽन्यत् स्वरूपं तस्य रूपान्तराभिप्रायेणाह "[4]अन्योऽन्तरात्मानन्दमय" इति। अतो न कर्ताहमनुभवगोचर एव जीवः॥

अध्यस्तोपाधिभिरविद्या तत्कल्पितस्येत्यर्थः। यद्यप्यनधिगत एव वाक्यार्थस्तथापि स श्रुत्यन्तराविरुद्ध एव ग्राह्य इत्यभिप्रेत्याह। तन्नात्मन इति। ब्रह्मात्मभेदस्यानधिगतत्वमपि नास्तीत्याह। अहमिति प्रत्ययस्येति। यथा शुक्तिं रजततया गृहीतवदिदं रजतं शुक्तिर्नेति बुद्धिरधिष्ठानस्यापि शुक्तिप्रतियोगिकभेदं गृह्णाति। एवं ब्रह्मस्वभावमात्मानं विकार्य्यहङ्कारात्मतया गृहीतवतोऽहं ब्रह्म न भवामीति बुद्धिरधिष्ठानात्मनोऽपि ततो भेदं गृह्णातीत्यर्थः। तैत्तिरीयकश्रुतिपर्यालोचनयाप्यहङ्कारा-

१ तैत्तिरीयोपनिषद्यानन्दवल्ल्याम १ अनु०।

२ तैत्तिरीयोपनिषद्यानन्दवल्ल्याम ५ अनु०।

३ तैत्तिरीयोपनिषद्यानन्दवल्ल्याम ५ अनु।

४ तैत्तिरीयोपनिषद्यानन्दवल्ल्याम ५ अनु।

त्मभेदसिद्धिरित्याह । तथा तैत्तिरीयक इति । प्रत्यक्त्वमुक्त्वेति । अहम्प्रत्ययप्रकाशमानत्वमुक्त्वेत्यर्थः । अहम्प्रत्यये प्रकाशमानत्वस्य देहादिसाधारणत्वात्ततो विवेकार्थं पञ्चकोशावतरणमित्याह । तं प्रत्यगात्मानमिति । पञ्चकोशानवतार्य दर्शयन्ति दर्शयिष्यन्तीति योजना । अतः कर्त्तुरहङ्कारादन्यत्स्वरूपं तस्य जीवस्य रूपान्तराभिप्रायेणाविद्योपाधिकरूपाभिप्रायेणेत्यर्थः । फलितमाह । अत इति । अन्यस्यानन्दमयस्य ब्रह्मत्वात् ।

कर्त्ता विज्ञानमय एव जीव इति शङ्कते । नन्वानन्दमय इति ।

(विज्ञानमयस्य जीवस्य कर्तृत्वे आक्षेपपरिहारौ) **नन्वानन्दमयो न जीवः, किं तु ब्रह्मैवान्नमयादेरिवानन्दमये पर्यवयादन्यस्यानिर्देशात् । आनन्दमयस्यैव प्रकरणित्वादिति चेत्? न हीदं प्रकरणमानन्दमये पर्यवसितम् । उपक्रमोपसंहारपरामर्शेष्वानन्दमयस्याप्रतीतेः । न च "[1]रसं ह्येवायं लब्ध्वा ऽऽनन्दी भवति" "[2]यदेष आकाश आनन्दो न स्यात्" इत्युपक्रान्तस्यानन्दमयस्य परामर्शोऽस्तीति वाच्यम् । आनन्दप्रकृत्यर्थस्यैवाभ्यस्यमानत्वात् । लक्षणायाश्चान्याय्यत्वात् । उपक्रमे प्यानन्दमयशब्द-**

१ तैत्तिरीयोपनिषदि २ प्र । ६ ख । १ क० ।
२ तैत्तिरीयोपनिषदि २ प्र । ७ ख । १ क० ।

स्यान्नमयादिविकारप्रायपाठेन विकारवाचिनो ब्रह्मणि वर्त्तितुमनर्हत्वात्। आनन्दप्रकृत्यर्थैकरसे ब्रह्मणि प्राचुर्यवाचिनोऽपि मयटः प्रयोगानुपपत्तेः। न हि सैन्धवघने सैन्धवमय इति प्रयोगः सङ्गच्छते। प्रकृत्यर्थविरोधिनो मात्रयाऽनुवृत्तावेव प्राचुर्यार्थमयटः प्रयोगदर्शनात्। यथा ब्राह्मणमयो ग्राम इति। तथा च यदि ब्रह्मानन्दमयः स्यात् तर्हि दुःख्यपि स्यात्, न च परस्मिन्दुःखानुवृत्तिरुपपद्यते॥

ब्रह्मविदाप्नोति परमित्युपक्रान्तब्रह्मण एव प्रकरणित्वात्तत्पर्यवसायित्वादेतस्य प्रकरणस्यानन्दमये च पर्यवसितत्वात्स एव ब्रह्मेत्यर्थः। आनन्दमयस्य प्रकरणित्वमसिद्धं तज्ज्ञापकाभावात्, किं त्वनन्तरनिर्दिष्टपुच्छब्रह्मैव प्रकरणि तस्यैवोपक्रम्यमाणत्वादानन्दमयस्य प्रकरणित्वमाशङ्क्याह। न च रसमिति। उपक्रान्तस्येति। "[1]अथो ऽन्तर आत्मानन्दमय" इत्युपक्रान्तस्येत्यर्थः। आनन्दपदेन आनन्दमयस्याप्रतीतेर्न तस्याभ्यास इत्याह। आनन्दप्रकृत्यर्थस्येति। मुख्यतः प्रतीत्यभावे ऽपि लक्षणया प्रतीभागत्यागलक्षणाङ्गीकारेण मुख्यार्थैकदेशग्रहणान्न श्रुतित्वहानिः। यथा "[2]एतस्यैव रेवतीषु वारवन्तीयमि"ति वार्पदात्तच्छब्दस्य प्रकृतधर्मविशिष्टधर्मिवाचकस्य धर्म-

१ तैत्तिरीयोपनिषदि २ प्र॰। ५ ख। १ क॰।
२ अधिकरणन्यायमालायाम् २ अ। २ पा। १२ अधि॰।

मात्रलक्षकत्वे ऽपि न श्रुतित्वहानिः । तव तु मयडर्थस्यानन्दस्य लक्ष्यत्वाच्छ्रुतिहानिरिति भावः । आनन्दमयशब्देन ब्रह्मोपक्रमोऽप्यसिद्ध इत्याह । उपक्रमे ऽपीति । विकारप्रायपाठेनेति । विकारार्थमयडन्तानेकपदैः सहपाठेनेत्यर्थः । नन्वस्य मयटः प्रकृत्यर्थप्राचुर्यवाचित्वाद्ब्रह्मपरत्वमित्याशङ्क्याह । आनन्दप्रकृत्यर्थेति । सैन्धवघनो लवणपिण्डः । कुत्र तर्हि प्राचुर्यार्थमयट्प्रयोग इत्यत आह । प्रकृत्यर्थविरोधिन इति । मात्रया लेशेनेत्यर्थः । प्रकृत्यर्थविरोधिनो ऽपि ब्रह्मण्यनुवृत्तिरस्त्वित्याशङ्क्य दुःखस्यैवानन्दविरोधित्वात्तस्य च पापफलत्वाद्ब्रह्मण्यनुपपत्तिरित्यभिप्रेत्याह । तथा च यदीति ।

निरवद्यत्वश्रुतिविरोधाद्ब्रह्मणि दुःखापादनमयुक्तमित्युक्ताभिप्रायानभिज्ञः शङ्कते । नन्विति ॥

**ननु परस्मिन्नागमविरोधेन दुःखापादनमयुक्तमिति चेन्न । आपादने प्रमाणविरोधस्यालङ्कारत्वात् । न च वयं परस्मिन्नापादयामो दुःखं किन्तु आनन्दमयो ब्रह्म जीवो वेति संशयदशायां न्यायानुगृहीतश्रुत्यर्थो ग्राह्यो न तु न्यायातिक्रम इति ब्रूमः । न चाल्पत्वनिवृत्तिलक्षणयानन्दमयशब्दः परमात्मनीति वाच्यम् । मनुष्यानन्दादेरुत्तरोत्तरशतगुणाधिक्यप्रतिपादनेनैव ब्रह्मानन्दे तत्सिद्धेः । जीवे मुख्यार्थे संभवति लक्षणायोगाच्च । ननु जीवो ऽपि दुःख-**

प्रचुरोऽनादिश्चेति नानन्दमयं इति चेत् । न अविद्यायामानन्दात्मकब्रह्मप्रतिबिम्बस्य ब्रह्माधीनाग्निमत्ताणसत्ताकतया तद्विकारत्वात् । किं चानन्दमयस्य ब्रह्मत्वे "[1]ब्रह्मपुच्छं प्रतिष्ठा" इति निर्दिष्टब्रह्मपुच्छत्वं तस्यानुपपन्नम् । न ह्येकमेव पुच्छं पुच्छवच्च भवति । तस्मात्प्रतिष्ठापदसन्निधानादाधारलक्षणया सर्वाधारो ब्रह्मैव ब्रह्मपुच्छं प्रतिष्ठेति वाक्यार्थः । तदेव ब्रह्म प्रकरणि "[2]ब्रह्मविदाप्नोति परम्" इत्युपक्रमे "[3]असन्नेव स भवति" "[4]असद्ब्रह्मेति वेद चेत्" इत्यादिपरामर्शादौ च तस्यैव प्रतीतेः । अत आनन्दमयः कर्त्तुरहमनुभवगोचरादन्यो जीव एव ।

आपादनस्य तर्कतया प्रमाणविरोधोऽनुकूल एवेत्याह । न आपादन इति । किं च ब्रह्मणो निर्दुःखत्वायैवानन्दमयशब्दार्थत्वं त्याज्यमित्येव ब्रूम इति स्वाभिप्रायमाह । न च वयमिति । न तु न्यायातिक्रम इति । न्यायस्यातिक्रमो यस्मिन् सोऽर्थो न गृह्यत इत्यर्थः । ननु भूमशब्दवदानन्दमयशब्दोऽप्यल्पत्वनिवृत्तिलक्षणया ब्रह्म-

१ तैत्तिरीयोपनिषदि २ प्र० । ८ ख० । १ क० ।
२ तैत्तिरीयोपनिषदि २ प्र० । ५ ख० । १ क० ।
३ तैत्तिरीयोपनिषदि २ प्र० । १ ख० । १ क० ।
४ तैत्तिरीयोपनिषदि २ प्र० । ६ ख० । १ क० ।

णि वत्स्यतीत्याशङ्क्यते। "[1]ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द" इत्यादिवाक्यैरेव तत्सिद्धेर्मैवमित्याह। न चाल्पत्वेति । किञ्च भूमपदस्य मुख्यार्थासम्भवाद्युक्ता लक्षणा प्रकृते नैवमित्याह। जीव इति। जीवे ऽपि प्राचुर्यार्थस्य विकारार्थस्य वा मयटो नुपपत्तिरिति चोदयति। ननु जीवो ऽपीति। विकारप्रायपाठादानन्दमयशब्दो ऽपि जीवे प्रयुज्यमानो विकारार्थ एव जीवस्याप्यानन्दात्मकब्रह्मप्रतिबिम्बतया तदधीनाग्रिमक्षणसत्ताकत्वेन तद्विकारत्वात् घटादेरपि मृदधीनसत्ताकतया मृद्विकारत्वादित्यभिप्रेत्य परिहरति। न अविद्यायामिति। एवं स्वमते दोषं परिहृत्य परमते दोषान्तरमाह। किं चेति। निर्दिष्टब्रह्मपुच्छत्वमिति बहुव्रीहिः। आनन्दमयशब्दस्य जीवविषयत्वात् पुच्छवाक्यमेव ब्रह्मविषयमित्युपसंहरति तस्मादिति। यद्यपि मतद्वये ऽपि पुच्छपदे लक्षणा तुल्या तथापि प्रतिष्ठापदसन्निधानादाधारलक्षणैवेत्याह। प्रतिष्ठेति। तथा च सर्वाधारभूतं ब्रह्म आनन्दमयस्य प्रतिष्ठापर्यवसितं रूपमिति ब्रह्मैवोच्यत इत्यर्थः। आनन्दमयस्य जीवत्वप्रसाधनफलमाह। अत इति॥

इदानीमानन्दमयस्य स्वशब्देनाभ्यासाभावे ऽपि ब्रह्मशब्देनाभ्यस्यमानत्वात् प्रकरणित्वमित्यश्रुतमीमांसावृत्तान्तस्य वादिनो मतमुत्थापयति। यत्त्विति॥

(जयतीर्थमतोत्थापनम्।) **यत्त्वत्र जयतीर्थेनोक्तमानन्दमयो ब्रह्मैव। असन्नेव स भवति असद्ब्रह्मेति वेद चेदित्यादिनानन्दमयब्रह्मशब्दाभ्यासा-**

१ तैत्तिरीयोपनिषदि २ प्र० । ८ खं० । १ कं० ।

त्प्राचुर्ये ऽपि मयट्प्रयोगात् । यथाश्रुताभिधाने च ब्रह्मण्यनानन्दस्यापि प्राप्तिः । प्रचुरानन्द इति विपरीतसमासेन पूर्णानन्द इति प्रतीतेः । अन्नमयादिपर्यायेष्वपि ब्रह्मण एव निर्देशादाकाशादिकारणत्वेनोक्तस्य तस्यैवान्नमयत्वादिप्रूपप्रतिपादनात् । "[1]ये ऽन्नं ब्रह्मोपासते" "[2]प्राणं ब्रह्मोपासते" "[3]आनन्दं ब्रह्मणो विद्वान्" "[4]विज्ञानं ब्रह्म चेद्वेद" "[5]अस्ति ब्रह्मेति चेद्वेद" इत्यन्नमयादीन् प्रत्युदाहृतश्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणादिति ॥

(जयतीर्थमतखण्डनम् ।) तदसत् । अभ्यासस्य पुच्छब्रह्मविषयत्वेनानन्दमयाविषयत्वात् । न हि तदनभिधायकेन शब्देन तदभ्यासो ऽस्ति । न चानन्दमयप्रकरणे श्रुतं ब्रह्मपदं तस्यैव वाचकमिति वाच्यम् । किमानन्दमयस्य प्रकरणित्वमभ्याससामर्थ्यात् किं वान्यतः । नाद्यः, परस्पराश्रयत्वप्रसङ्गात् । ब्रह्मपदेनानन्दमयस्य कल्प्योप-

१ तैत्तिरीयोपनिषदि २ प्र० । ५ ख० । १ क० ।
२ तैत्तिरीयोपनिषदि २ प्र० । १ ख० । १ क० ।
३ तैत्तिरीयोपनिषदि २ प्र० । ६ ख० । १ क० ।
४ तैत्तिरीयोपनिषदि २ प्र० । ६ ख० । १ क० ।
५ तैत्तिरीयोपनिषदि २ प्र० । ३ ख० । १ क० ।

स्थितिकत्वात् । न द्वितीयः, अभ्यासादिति सौत्रहेतुवैयर्थ्यापातात् । न चानन्दमयस्य "[1]ब्रह्मविदाप्नोति परमि"त्युपक्रमे "[2]सत्यं ज्ञानमनन्तं ब्रह्मे"ति मन्त्र "[3]आत्मन आकाश" इत्यादिब्राह्मणे स्वशब्देनापरामृष्टस्य प्रकरणित्वं मान्त्रवर्णिकत्वं वा कल्पयितुं शक्यते ।

प्राचुर्यार्थत्वे उक्तानुपपत्तिमुद्भाव्य परिहरति । यथा श्रुतेति । प्रायपाठपरित्यागो ऽपि नास्तीत्याह । अन्नमयादीति । न चान्नमयादिवाक्ये ब्रह्मोपस्थापकपदाभावात्कथं तन्निर्देश इत्याशङ्क्य "[4]स वा एष पुरुष" इत्यादितच्छब्देन प्रकृतब्रह्मण एव ग्रहणादस्ति तदुपस्थितिरित्याह । आकाशादीति । अन्नमयादिषु ब्रह्मशब्दप्रयोगादपि तेषां ब्रह्मरूपत्वमित्याह । ये ऽन्नं ब्रह्मेति । असद्ब्रह्मेति वेद चेदित्यादि ब्रह्मशब्दाभ्यासस्यान्यविषयत्वादानन्दमयस्याभ्यस्यमानत्वमसिद्धमिति दूषयति । तदसदिति । ननु तस्यैवायमभ्यास इति नेत्याह । न हीति । आनन्दमयप्रकरणे श्रुतस्य तदनभिधायकत्वमयुक्तमित्यत आह । न चेति । तत्र हेतुं विकल्पमुखेन दर्शयति । किमानन्दमयस्येति । प्रसङ्गमेवोपपादयति । ब्रह्मपदेनेति । ब्रह्मपदेन प्रकरणित्वादानन्दमयाकारप्रतीतेः कल्प्यत्वादित्यर्थः । द्वितीये तव "[5]आनन्दमयो ऽभ्यासात्" इति

१ तैत्तिरीयोपनिषदि २ प्र० । २ ख० । १ क० ।
२ तैत्तिरीयोपनिषदि २ प्र० । १ ख० । १ क० ।
३ तैत्तिरीयोपनिषदि २ प्र० १ ख० । १ क० ।
४ तैत्तिरीयोपनिषदि २ प्र० ८ ख० । १ क० ।
५ ब्रह्मसूत्रम्–१ अ० । १ पा० । १२ सू० ।

सूत्रासामञ्जस्यं स्यादित्याह । न द्वितीय इति । अन्यतो ऽपि प्रकरणित्वं दुःसम्पादमित्याह । न चानन्दमयस्येति । मान्त्रवर्णिकत्वं वेति । मन्त्रवर्णप्रमितस्यैव ब्राह्मणवाक्ये प्रतिपाद्यमानत्वान्मन्त्रवर्णिकत्वेनापि प्रकरणित्वं सिध्यति तदपीह नास्तीत्यर्थः ।

ब्रह्मणि दुःखाभावार्थं विपरीतसमास इत्युक्तमनूद्य दूषयति । यत्त्वित्यादिना ।

( श्रुतौ प्राचुर्यपदाप्रयोग ) यत्तु प्रचुरानन्द इति विपरीतसमास इति । तदसत् । श्रुतौ प्रचुरपदाभावात् । मयट्प्रत्ययस्य प्रकृत्या समासासम्भवात् । आनन्दमयस्य ब्रह्मत्वे तस्यैव तदवयवत्वानुपपत्तिः । न चैकत्वेन ब्रह्मण्यवयवावयवित्वनिराकरणमनुपपन्नं, तस्य तर्कागोचरत्वात् । अनवयवत्वप्रकरणाभावाच्चेति वाच्यम् । विचारानारम्भप्रसङ्गात् । ब्रह्मानवयवमात्मत्वाज्जीववत् "[1]अकायमव्रणम्" "[2]निष्कलं निष्क्रियं शान्तम्" "[3]अपाणिपाद" इत्याद्यनुमानश्रुतिभिरनवयवत्वप्रमितेश्च । न चेश्वरशक्त्या ऽवयविनोऽप्यवयवत्वमविरुद्धं तस्याचिन्त्यप्रभावत्वादिति

१ ईशावास्योपनिषदि ८ क ।

२ श्वेताश्वतरोपनिषदि ६ अध्या० । १९ क ।

३ श्वेताश्वतरोपनिषदि ३ अध्या॰ १९ क ।

साधु । ईश्वरशक्तेरपि शक्यस्वभावानुरोधादशक्त्यभावात् ।

(अवयवित्वखण्डनम्) किं चेदमवयवित्वम् । न तावदवयवारब्धद्रव्यत्वम् । आनन्दमयस्य ब्रह्मणोऽनारब्धत्वात् । अत एव न स्वावयवविशिष्टत्वमपि । अन्यावयववैशिष्ट्ये चावयवब्रह्मण आनन्दमयादन्यत्वेन तदेकत्वं न स्यात् । आनन्दमयो वा ब्रह्म न स्यात् । पुच्छं तु ब्रह्मैव, स्वशब्दात् । न च शरीरित्वमवयवित्वम् । अशरीरश्रुतिविरोधात् । तस्य निरसिष्यमाणत्वाच्च ॥

प्राचुर्य्यवाचकमयट्प्रत्ययोस्तीत्याशङ्क्य समर्थः पदविधिरिति पदाधिकारात्केवलप्रकृतेः प्रत्ययस्य वा अपदत्वान्न समास इत्याह । मयट्प्रत्ययस्येति । किं च ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्मण आनन्दमयपुच्छत्वाभिधानमनुपपन्नं स्यादित्याह । आनन्दमयस्येति । अन्यत्रैकस्यावयवावयविभावाभावे ऽपि ब्रह्मण उपपद्यत इत्याशङ्क्याह । न चेति । तर्कागोचरत्वे मीमांसानारम्भप्रसङ्गः स्यादिति दूषयति । विचारेति । द्वितीयहेतुरप्यसिद्ध इत्याह । ब्रह्मानवयवमिति । निष्कलं निरवयवम् । ननु जीवस्य तादृशशक्त्यभावादनवयवत्वमीश्वरस्याचिन्त्यशक्तिमत्तयावयवावयविभावो न विरुध्यत इत्यत आह । न चेश्वरेति । किमीश्वरावयवी जन्यः उताजन्यः । नाद्यः, अनित्यत्वप्रसङ्गात् । न द्वितीयः, तत्र शक्तेरयोगादित्याह ईश्वरशक्तेरिति ।

किमिदमानन्दमयस्यावयवित्वं किमवयवारब्धद्रव्यत्वमुत स्वावयवविशिष्टत्वमाहोस्विदन्यावयवविशिष्टत्वमथवा शरीरित्वमित्यभिप्रेत्याह । किं चेदमिति । आद्यं दूषयति । न तावदिति । द्वितीयं दूषयति । अत एवेति । अनारब्धत्वादेवेत्यर्थः । स्वावयवो वा नाम स्वारम्भकावयवः स न सम्भवतीत्यर्थः । तृतीयं दूषयति । अन्यावयवेति । ब्रह्मणोऽन्यावयवत्वे स्वावयविनैवैक्यमित्यानन्दमयेनैक्यं न सिद्ध्यतीत्यर्थः । किं चान्यावयवस्याब्रह्मत्वे तदभेदे आनन्दमयस्याप्यब्रह्मत्वं स्यादित्याह । आनन्दमयो वेति । ननु पुच्छपदेन ब्रह्मणोऽवयवत्वप्रतीतेः कथं तन्निरास इत्याशङ्क्य तेन स्वप्रधानब्रह्मशब्दसमभिव्याहारात्सर्वाधारभूतं ब्रह्मोच्यत इत्याह । पुच्छन्त्विति । चतुर्थं दूषयति । न च शरीरित्वमिति ॥

अन्नमयादिवाक्यमपि ब्रह्मविषयमित्युक्तमनूद्य दूषयति । यत्त्वित्यादिना ।

(अन्नमयादिवाक्य न ब्रह्मविषयम्) यत्त्वन्नमयादिपर्यायेष्वप्यन्नमयादिशब्देन ब्रह्मैवाभिधीयत इति । तदयुक्तम् । स वा एष पुरुषोऽन्नरसमय इति वाक्ये स एषः प्रत्यक्षः शिरः पाण्यादिमानाकृतिविशेषः स वै योऽन्नात्पुरुषइति सर्ववाक्येऽन्नविकारत्वेन निर्दिष्ट एव तच्छब्देनाव्यवहितान्नविकारस्यैव परामर्शात् । ब्रह्मणश्च व्यवहितत्वात्सर्वनाम्नः सन्निहिताभिधानेनैव पर्यव-

सानात् । अथवास्य प्रकरणस्य परमात्मविषयत्वेन स इत्यनेन तस्यैव परामर्शे ऽपि स एव जीवभावनानुप्रविष्टोऽन्नरसमयो न तु केवलात्मा, तत्र विकारप्राचुर्यार्थयोरन्यतरस्याप्यसम्भवात् ॥

यत्त्वत्र तेनैवोक्तमाकाशादिपुरुषान्नैः ? शब्दैरुक्तमाकाशादिसारभूतं ब्रह्म स वा इति तच्छब्देनैष पुरुष इत्येतच्छब्देनापि परामृश्यत इति ।

तत्तुच्छम् । अन्यवाचकेनान्याभिधानासम्भवात् । अनेकार्थत्वस्यान्याय्यत्वात् । प्रथमावगतव्युत्पत्तिविरोधाच्च । लक्षणायाश्चायुक्तत्वात् । आकाशादेः कार्यत्वासिद्धिप्रसङ्गाच्च ॥

(जयतीर्थाभिमत सारभूतत्वखण्डनम्) किमिद सारभूतत्वम् । वियदाद्युपादानत्वं. तन्नियन्तृत्वं, तत्सत्तात्मकत्वं,वा । आद्यद्वये ब्रह्मणो नाकाशादिशब्दवाच्यता । न हि गोपालादि मृद्वा गोघटादिशब्दैरभिधीयते । तृतीये तु स्पष्टकार्यस्य मिथ्यात्वम् । अन्यसत्तया वियदादेः सद्बुद्धिगोचरत्वात् ॥

१ पुरुषान्नशब्दैरिति युक्त पाठ ।

ननु सन्निधेः प्रकरणस्य बलीयस्त्वात्प्रकरणिनो ब्रह्मण एव तच्छब्देन परामर्श इत्याशङ्क्यैवमपि जीवरूपेण ब्रह्मणोऽन्नमयादित्वं न स्वरूपेणेत्याह। अथ वेति। तच्छब्देनाव्यवहितपरामर्श इत्यत्र जयतीर्थेनोक्तं यत्सर्गवाक्येप्याकाशादिपदैर्ब्रह्मणोऽभिधानात्तदेवाव्यवहितमिति।

अत्राद्यं हेत्वसिद्ध्या दूषयति। यत्त्वत्रेति। शक्तिभेदेन सम्भवमाशङ्क्याह। अनेकार्थत्वस्येति। ननु तर्हि ब्रह्मण्येवाकाशादिपदशक्तिरस्तु नेत्याह। प्रथमेति। तर्हि लक्षणया ब्रह्माभिधानमित्याशङ्क्य सैव दोष इत्याह। लक्षणायाश्चेति। किं च लक्षणया ब्रह्माभिधाने आकाशादेरनभिधानात्तस्य कार्यत्वासिद्धिः स्यादित्याह। आकाशादेरिति। किं चास्मिन्पक्षे सम्भूतपदानन्वयप्रसङ्गो 'भूतसारत्वादिति[1] हेतुवैयर्थ्यं चेति चशब्दार्थः। ब्रह्मणो भूतसारत्वमपि दुर्निरूपमित्याह। किमिति। गवां नियन्ता गोपालः। घटस्योपादनं मृत्। अनयोर्गोघटपदवाच्यत्वं न दृष्टमिति। हेतुमाह। न हीति। तृतीयं तु तवासिद्धमित्यभिप्रायेणाह। तृतीयेत्त्विति॥

"[2]येऽन्नं ब्रह्मोपासत" इत्यादिनान्नमयादिषु ब्रह्मशब्दः श्रूयत इति चोद्यमनुवदति। यत्त्वन्नमयादीति।

अन्नमयवाक्ये ब्रह्मपदेनान्नार्वाच्छिन्नजीवाभिधानम्।

यत्त्वन्नमयादिविषयश्लोकेषु ब्रह्मशब्दश्रवणादन्नमयादिरपि ब्रह्मैवेति। तन्न। यथा मनसि ब्रह्मशब्दश्रवणेऽपि मनो न ब्रह्म एवमन्नं ब्रह्मेति सामा-

१ सारभूतत्वादिति शोभनः पाठः।
२ तैत्तिरीयोपनिषद्यानन्दवल्ल्याम् २ अनु०।

नाधिकरण्यमात्रेण नान्नस्य ब्रह्मत्वं, किन्त्वन्नरसविकारमेव, तदवच्छिन्नो जीवो वा तथोपास्यः । किं चान्नमयादेरपि ब्रह्मत्वे "[1]अन्यो ऽन्तर आत्मा प्राणमय" इत्यादिना तदन्यत्वतदान्तरत्वव्यपदेशो न स्यात् । न हि ब्रह्म बाह्याभ्यन्तरभूतमनेकमस्ति । न चैकस्याप्यनेकरूपभावादुपपद्यत इति वाच्यम् । रूपान्तरविशिष्टस्य वस्तुनो रूपान्तरविशिष्टाद्भेदे ब्रह्मैकत्वावधारणश्रुतिविरोधात् । अभेदे आन्तरत्वाद्यनुपपत्तेः । भेदाभेदस्य विरुद्धत्वात् । तस्मान्मन्त्रे प्रतिज्ञातम् "[2]आत्मन आकाशः सम्भूत" इत्यादिना "[3]अन्नात्पुरुष" इत्यन्तेनारम्भणाधिकरणन्यायेन समर्थगुहाप्रवेशेन प्रतिज्ञातं सर्वान्तरत्वं, शरीरप्राणादिभ्यो बाह्याभ्यन्तरभावेन स्थितेभ्योऽप्यान्तरताप्रदर्शनेन प्रतिपादयितुं, शाखाचन्द्रन्यायेनान्नमयादीन् कोशान् "[4]स वा एष" इत्यादिनोपन्यस्य, बाह्यात्मबुद्धिनिरासार्थं तत्तत्को-

१ तैत्तिरीयोपनिषद्यानन्दवल्ल्याम् ३ अनु० ।

२ तैत्तिरीयोपनिषद्यानन्दवल्ल्याम २ अनु० ।

३ तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्याम् १ अनु० ।

४ तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्याम १ अनु० ।

च गोत्राश्रयो वुञनेन बाध्यते। उलूकानां समूह. औलूकम्। गोत्रे।लुगचीति लुक्प्रतिषेधादापत्यस्येति यलोपः ॥

**चरणेभ्यो धर्मवत् । ४ । २ । ४६ ॥**

काटकम् । गोत्रचरणाद् वुञ् । छान्दोग्यम् । छन्दोगौक्थिकेति ञ्य. ॥

**अचित्तहस्तिधेनोष्ठक् । ४ । २ । ४७ ॥**

साक्तूकम् । आपूपिकम् । शाष्कुलिकम् । मौदकिकम् । हास्तिकम् । धैनुकम् ॥

**केशाश्वाभ्यां यञ्छावन्यतरस्याम् । ४ । २ । ४८ ॥**

यथासंख्यम् ॥ पक्षे ठगणौ । कैश्यम् । कैशिकम् । अश्वीयम् । आश्वम् ।

**पाशादिभ्यो यः । ४ । २ । ४९ ॥**

पाश्या । तृण्या । धूम्या । वन्या । वात्या ॥

**खलगोरथात् । ४ । २ । ५० ॥**

खल्या । गव्या । रथ्या ॥

**इनित्रकट्यचश्च । ४ । २ । ५१ ॥**

खलादिभ्यः क्रमात्स्युः ॥ खलिनी । गोत्रा । रथकट्या ॥ खलादिभ्य इनिर्वक्तव्य ॥ * ॥ डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् ॥

**विषयो देशे । ४ । २ । ५२ ॥**

षष्ठ्यन्तादणादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः ॥

शिबीनां विषयो देशः शैबः । देशे किम् । देवदत्तस्य विषयो-ऽनुवाकः ॥

**राजन्यादिभ्यो वुञ् । ४ । २ । ५३ ॥**

राजन्यकम् ।

**भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ । ४ । २ । ५४ ॥**

भौरिकीनां विषयो देशः भौरिकिविधम् । भौलिकिविधम् । ऐषुकारिभक्तम् । सारसायनभक्तम् ॥

**सो ऽस्यादिरिति छन्दसः प्रगाथेषु । ४ । २ । ५५ ॥**

स इति प्रथमान्ताच्छन्दोवाचकादस्यादिरित्येतस्मिन्नर्थे अणादयः स्यु. यदस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति ॥ पङ्क्तिरादिरस्येति पाङ्क्तः प्रगाथः । स्वार्थे उपसख्यानम् ॥ * ॥ त्रिष्टुबेव त्रैष्टुभम् ॥

**संग्रामे प्रयोजनयोद्धृभ्यः ४ । २ । ५६ ॥**

सोऽस्येत्यनुवर्त्तते ॥ सुभद्रा प्रयोजनमस्य सग्रामस्येति सौभद्रः । भरता योद्धारोऽस्य सग्रामस्येति भारत. ॥

**तदस्यां प्रहरणमिति क्रीडायां णः ४ । २ । ५७ ॥**

दण्ड प्रहरणमस्या क्रीडाया दाण्डा । मौष्टा ॥

**घञः सा ऽस्यां क्रियेति ञः ४ । २ । ५८ ॥**

घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे स्त्रीलिङ्गे ञः प्रत्ययः स्यात् ॥ घञ इति कृद्ग्रहणाद्गतिकारकपूर्वस्यापि ग्रहणम् । श्येनतिलस्य पाते ञे इति मुमागमः । श्येनपातोऽस्यां वर्त्तते श्यैनंपाता मृगया । तिलपातोऽस्यां वर्त्तते तैलम्पाता स्वधा । दण्डपातोऽस्यां तिथौ वर्त्तते दाण्डपाता तिथिः ॥

**तदधीते तद्वेद ४ । २ । ५९ ॥**

व्याकरणमधीते वेद वा वैयाकरणः ॥

**क्रतूक्थादिसूत्रान्ताट्ठक् ४ । २ । ६० ॥**

क्रतुविशेषवाचिनामेवेह ग्रहणम् । तेभ्यो मुख्यार्थेभ्यो वेदितरि तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः । वाजपेयिकः । उक्थ सामविशेष. तल्लक्षणपरो ग्रन्थविशेषो लक्षणयोक्थ तदधीते तद्वेद वा औक्थिकः । मुख्यार्थात्तूक्थशब्दाट्ठगणो नेष्यते । न्यायं नैयायिकः । वृत्ति वार्तिकः । लोकायत लौकायतिक इत्यादि । सूत्रान्तात्तु अकल्पादेरेवेष्यते । साग्रहसूत्रिक । अकल्पादेः किम् । काल्पसूत्रः ॥ विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम् ॥ * ॥ वायसविद्यिकः । गौलक्षणिकः । आश्वलक्षणिक । पाराशरकल्पिकः ॥ अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम् ॥ * ॥ आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रिविधा विद्या त्रिविद्या तामधीते वेत्ति वा त्रैविद्य ॥ आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ॥ * ॥ यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद्यवक्रीतं तदधीते वेद वा यावक्रीतिकः । वासवदत्तामधिकृत्य कृताऽऽख्यायिका वासवदत्ता । अधिकृत्य कृते ग्रन्थे इत्यर्थे वृद्धाच्छः । तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप् । ततोऽनेन ठक् । वासवदत्तिक. । ऐतिहासिकः । पौराणिकः ॥ सर्वादे सादेश्च लुग्वक्तव्यः ॥ * ॥ सर्ववेदानधीते सर्ववेदः । सर्वतन्त्रः । सवार्तिकः । द्विगोर्लुगिति लुक् । द्वितन्त्र ॥ अनुसूर्लक्ष्यलक्षणे ॥ * ॥ अनुसूशब्दो ग्रन्थविशेषवाची स ठकमुत्पादयति लक्ष्यलक्षणशब्दौ चेत्यर्थः । आनुसुकः । इसुसिति कादेशे केऽण इति ह्रस्वः । लाक्ष्यिकः । लाक्षणिकः ॥ इकन्पदोत्तरपदात् शतषष्टेः षिकन्पथः ॥ * ॥ पूर्वपदिकः । उत्तरपदिकः । शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी ।

## क्रमादिभ्यो वुन् ।४ । २ । ६१ ॥

क्रमकः । क्रम पद शिक्षा मीमांसा क्रमादिः ॥

## अनुब्राह्मणादिनिः । ४ । २ । ६२ ॥

तदधीते तद्वेदेत्यर्थे । ब्राह्मणसदृशो ग्रन्थोऽनुब्राम्हणस्तद-धीते अनुब्राह्मणी । मत्वर्थेनिनैव सिद्धेऽणबाधनार्थमिदम् ॥

## वसन्तादिभ्यष्ठक् । ४ । २ । ६३ ॥

वसन्तसहचरितो ग्रन्थो वसन्तः यत्र वसन्तो वर्ण्यते । यो वा वसतेऽध्येयस्तमधीते वासन्तिकः । । अथर्वाणमधीते आथर्वणिकः । दाण्डिनायनसूत्रे निपातनाट्टिलोपो न ॥

## प्रोक्ताल्लुक् । ४ । २ । ६४ ॥

प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृप्रत्ययस्य लुक् स्यात् ॥ पणनं पणः । घजर्थे कविधानमिति कः । सोऽस्यास्तीति पणी तस्य गोत्रापत्यं पाणिनः । गाथिविदथीत्यादिना प्रकृतिभावाट्टिलोपो न । ततो यूनि इञ् । पाणिनिः । ण्यक्षत्रियेति इञो लुग् न भवति । आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । पाणिनिना प्रोक्तं पाणिनीयम् । वृद्धाच्छः । इञश्चेत्यण् तु न । गोत्रे य इञ् तदन्ता-दिति वक्ष्यमाणत्वात् । पारिभाषिकगोत्रस्यैव च तत्र ग्रहणात् । तदन्तोऽध्येतृवेदित्रणो लुक् । स्वरे स्त्रियाञ्च विशेषः । पाणिनीयः । पाणिनीया ॥

## सूत्राच्च कोपधात् । ४ । २ । ६५ ॥

सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । अप्रोक्तार्थे आरम्भः । अष्टौ अध्यायाः परिमाणमस्य अष्टकं पाणिनेः

सूत्र तदधीते विदन्ति वा अष्टकाः ॥ सङ्ख्याप्रकृतेरिति वक्तव्यम् ॥ * ॥ इह माभूत् । महावार्त्तिकं सूत्रमधीते माहावार्त्तिकः । कलापिना प्रोक्तमधीयते कालापाः । तेषामाम्नायः कालापकम् । वुञ् । कालापकमधीते कालापकः । अचाणो लुकि वुञ्निबन्धनमाद्युदात्तत्वं स्यात् । स्त्रियां ङीप् च न स्यात् । कोपधात्किम् । चतुष्टयमधीते चातुष्टयः ॥

## छन्दोब्राह्मणानि च तद्विषयाणि । ४ । २ । ६६ ॥

छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः ॥ अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासित्वाणिणिनिः । तस्य कठचरकादिति लुक् । ततोऽण् । तस्य प्रोक्ताल्लुक् । ब्राह्मणानि । भल्लु । भाल्लविनः । शाठ्यायन । शाट्यायनिनः । पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति णिन्यन्तादध्येतृवेदितृप्रत्ययस्य लुक् । छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं तद्विशेषप्रतिपत्त्यर्थम् । तेन पुराणप्रोक्तानामेव तद्विषयता । नेह । याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि । कण्वादिभ्यो गोत्रे इत्यण् । आपत्यस्येति यलोपः । सौलभानि । याज्ञवल्क्यादयो नूतना सूत्रकारदृष्ट्या इति वृत्तिकृतां व्यवहारः । चकारोऽनुक्तसमुच्चयार्थः । कल्पे । काश्यपिनः । कौशिकिनः । पाराशरिणो भिक्षवः । शैलालिनो नटाः । कर्मन्दिनः । कृशाश्विनः । छन्दोब्राह्मणानीति किम् । पाणिनीयं व्याकरणम् । पिङ्गेन प्रोक्तः पैङ्गी कल्पः । पुराणप्रोक्तेष्विति णिनिः ॥

## तदस्मिन्नस्तीति देशे तन्नाम्नि ४ । २ । ६७ ॥

उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरः । मत्वर्थापवादोऽयम् ।

सकललोकनिरूढे यथा स्यात् नत्वाधुनिकसङ्केतेऽपीत्येतदर्थं इतिशब्दः। देशे तन्नाम्नीत्युत्तरसूत्रचयेऽप्यन्वेति ॥

**तेन निर्वृत्तम्। ४। २। ६८ ॥**

अन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः। कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी ॥

**तस्य निवासः। ४। २। ६९ ॥**

शिबीनां निवासो देशः शैबः ॥

**अदूरभवश्च। ४। २। ७० ॥**

विदिशाया अदूरभवं नगरं वैदिशम्। चकारेण प्रागुक्तास्त्रयोऽर्थाः सन्निधाप्यन्ते। तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्व सिध्यति ॥

**ओरञ् ४। २। ७१ ॥**

अणोऽपवादः। कचतु। काचतवम्। नद्यान्तु परत्वान्मतुप्। इक्षुमती।

**मतोश्च बह्वजङ्गात् ४। २। ७२ ॥**

बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ्स्यात् नाण्॥ सैध्रकावतम्। बह्वजिति किम्। आदिमतम्। अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान् मत्वन्तविशेषणं माभूत् ॥

**बह्वचः कूपेषु ४। २। ७३ ॥**

अणोऽपवादः। दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः ॥

**उदक् च विपाशः। ४। २। ७४ ॥**

विपाश उत्तरे कूले ये कूपास्तेष्वञ्स्यात् ॥ अवृद्ध्यर्थ आरम्भः। दत्तेन निर्वृत्तः कूपो दात्तः। उदक्किम्। दक्षिणतः कूपेष्वणेव। दात्तः। स्वरे विशेषः। महती सूक्ष्मेक्षिका वर्तते ॥

सङ्कलादिभ्यश्च ४। २। ७५ ॥

कूपेष्विति निवृत्तम् ॥ सङ्कलेन निर्वृत्तः साङ्कलम्। पौष्कलम्।

स्त्रीषु सौवीरसाल्वप्राक्षु। ४। २। ७६ ॥

स्त्रीलिङ्गेषु सौवीरादिषु देशेषु वाच्येषु अण्स्यात् ॥ सौवीरे। दत्तामित्रेण निर्वृता दात्तामित्री नगरी। साल्वे। विधूमाग्निना निर्वृत्ता वैधूमाग्नी। प्राचि। मकन्देन निर्वृता माकन्दी ॥

सुवास्त्वादिभ्योऽण् ॥ ४। २। ७७ ॥

अञोऽपवादः। सुवास्तोरदूरभवं सौवास्तवम्। वर्णु वार्णवम् ॥ अण् ग्रहणं नद्यां मतुपो बाधनार्थम्। सौवास्तवी ॥

रोणी ॥ ४। २। ७८ ॥

रोणीशब्दात्तदन्ताच्चाण् स्यात् ॥ कूपाञोऽपवादः। रौणः। आजकरोणः ॥

कोपधाच्च। ४। २। ७९ ॥

अण् स्यात् ॥ कूपलक्षणस्योवर्णान्तलक्षणस्य चाञोऽपवादः। कर्णच्छिद्रकेन निर्वृत्तः कार्णच्छिद्रकः कूपः। कार्कवाकवम्। त्रैशङ्कवम्।

वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठको ऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥ ४। २। ८० ॥

समदशभ्य' सप्तदश क्रमात्स्युश्चतुरर्थ्याम् ॥ अरीहणादिभ्यो वुञ् । अरीहणेन निर्वृत्त आरीहणकम् । कृशाश्वादिभ्यश्छण् । कार्शाश्वीयम् । ऋश्यादिभ्यः कः । ऋश्यकः । कुमुदादिभ्यष्ठच् । कुमुदिकम् । काशादिभ्य इल । काशिलम् । तृणादिभ्य' सः । तृणसम् । प्रेक्षादिभ्य इनि । प्रेक्षी । अश्मादिभ्यो रः । अश्मरा । सख्यादिभ्यो ढञ् । साखेयम् । सङ्काशादिभ्यो ण्यः । साङ्काश्यम् । बलादिभ्यो यः । बल्यम् । पक्षादिभ्यः फक् । पाक्षायण. । पथ पन्थ च । पान्थायनः । कर्णादिभ्यः फिञ् । कार्णायनिः । सुतङ्गमादिभ्य इञ् । सौतङ्गमि । प्रगद्यादिभ्यो ञ्यः । प्रगदिन् प्रागद्य. । वराहादिभ्य. कक् । वाराहकः । कुमुदादिभ्यष्ठक् । कौमुदिक ॥

## जनपदे लुप् । ४ । २ । ८१ ॥

जनपदे वाच्ये चातुरर्थिकस्य लुप् स्यात् ॥ लुपि युक्तवद्व्यक्ति वचन इति युक्तवद्भाव' । पञ्चालाना निवासो जनपद. पञ्चालाः । कुरवः । अङ्गाः । वङ्गा । कलिङ्गा' । तन्नाम्नीत्येव । नेह । उदुम्बरा सन्त्यस्मिन् औदुम्बरो जनपदः । नह्यत्र लुबन्तन्नामधेयम् ॥

## वरणादिभ्यश्च । ४ । २ । ८२ ॥

अजनपदार्थ आरम्भः । वरणानामदूरभव नगर वरणा: ॥

## शर्कराया वा । ४ । २ । ८३ ॥

अस्माच्चातुरर्थिकस्य लुब् वा स्यात् ।

## ठक्छौ च । ४ । २ । ८४ ॥

शर्कराया एतौ स्तः । कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्ककौ । वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण् । तस्य लुब्वि

कल्प्यः। षट् रूपाणि। शर्करा। शार्करम्। शार्करिकम्। शर्करीयम्। शर्करिकम्। शार्करकम्॥

**नद्यां मतुप्। ४। २। ८५॥**

चातुरर्थिकः। उदुम्बरावती। इक्षुमती।

**मध्वादिभ्यश्च। ४। २। ८६॥**

मतुप्। अनद्यर्थ आरम्भः। मधुमान्।

**कुमुदनडवेतसेभ्यो ड्मतुप्॥ ४। २। ८७॥**

कुमुद्वान्। नड्वान्। वेतस्वान्। आद्ययोर्झय इति अन्त्ये मादुपधाया इति वक्ष्यमाणेन व.॥ *॥ महिषाच्चेति वक्तव्यम्॥ *॥ महिष्मान्नाम देश.॥

**नडशादात् ड्वलच्। ४। २। ८८॥**

नड्वलः। शादो जम्बालघासयोरिति।

**शिखाया वलच्। ४। २। ८९॥**

शिखावलम्॥

**उत्करादिभ्यश्छः। ४। २। ९०॥**

उत्करीयः॥

**नडादीनां कुक् च। ४। २। ९१॥**

नडकीयम्। कुञ्चा ह्रस्वत्व च। कुञ्चकीयम्। तक्षन्नलोपश्च। तक्षकीयम्। इति चातुरर्थिकाः॥

**शेषे। ४। २। ९२॥**

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः॥ चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः

दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्णा औलूखलो यावकः । अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । शेष इति लक्षणञ्चाधिकारश्च । तस्य विकार इत्यतः प्राक् शेषाधिकारः ॥

**राष्ट्रावारपाराद् घखौ । ४ । २ । ९३ ॥**

आभ्यां क्रमाद् घखौ स्तः शेषे ॥ राष्ट्रियः । अवारपारीणः ॥ अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ॥ * ॥ अवारीणः । पारीणः । पारावारीणः । इह प्रकृतिविशेषात् घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ॥

**ग्रामाद्यखञौ । ४ । २ ९४ ॥**

ग्राम्यः । ग्रामीणः ॥

**कत्र्यादिभ्यो ढकञ् । ४ । २ । ९५ ॥**

कुत्सितास्त्रयः कत्रयः । तत्र जातादिः कात्त्रेयकः । नागरेयकः । ग्रामादित्यनुवृत्तेर्ग्रामेयकम् ।

**कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु । ४ । २ । ९६ ॥**

कौलेयकः श्वा । कौलोऽन्यः । कौक्षेयकोऽसिः । कौक्षोऽन्यः । ग्रैवेयकोऽलङ्कारः । ग्रैवोऽन्यः ॥

**नद्यादिभ्यो ढक् । ४ । २ । ९७ ॥**

नादेयम् । माहेयम् । वाराणसेयम् ॥

**दक्षिणापश्चात्पुरसस्त्यक् । ४ । २ । ९८ ॥**

दक्षिणेति आजन्तमव्ययम् । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥

## कापिश्याः ष्फक्। ४। २। ९९॥

कापिश्यां जातादि कापिशायनं मधु। कापिशायनी द्राक्षा। वाल्ह्युर्दिपर्दिभ्यश्चेति वक्तव्यम्॥ *॥ वाल्हायनी। और्दायनी। पार्दायनी॥

## रङ्कोरमनुष्येऽण् च। ४। २। १००॥

चात् ष्फक्॥ राङ्कवो गौः। राङ्कवायणः। अमनुष्ये किम्। राङ्कवको मनुष्यः। मनुष्यतत्स्थयोरिति वुञ्॥

## द्युप्रागपागुदक्प्रतीचो यत्। ४। २। १०१॥

दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्।

## कन्थायाष्ठक्। ४। २। १०२॥

कान्थिकः॥

## वर्णौ वुक्। ४। २। १०३॥

वर्णुनदसमीपदेशो वर्णुः। तद्विषयार्थवाचिकन्थाशब्दात् वुक् स्यात्। यथा हि जातं हिमवत्सु कान्थकम्॥

## अव्ययात् त्यप्। ४। २। १०४॥

अमेहक्वतसित्रेभ्य एव॥ अमान्तिकसहार्थयोः। अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। परिगणनं किम्। उपरिष्टाद्भव औपरिष्टः। अव्ययानां भमात्रे टिलोपः॥ त्यब् नेर्ध्रुव इति वक्तव्यम्॥ *॥ नित्यः॥ निसो गते॥ *॥ ह्रस्वात्तादाविति षत्वम्। निर्गतो वर्णाश्रमेभ्यो निष्ट्यश्चाण्डालादि। अरण्याण्णः॥ *॥ आरण्याः सुमनसः॥ दूरादेत्यः॥ *॥ दूरेत्यः॥ उत्तरादाहञ्॥ *॥ औत्तराहः॥ आविष्ट्यस्योपसङ्ख्यानं छन्दसि॥ *॥ आविष्ट्यो वर्द्धते॥

## ऐषमोह्यःश्वसो ऽन्यतरस्याम् । ४ । २ । १०५ ॥

एभ्यस्त्यब्वा ॥ पक्षे वक्ष्यमाणौ ट्युट्युलौ । ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । पक्षे शौवस्तिकं वक्ष्यते ॥

## तीररूप्योत्तरपदादञ्ञौ । ४ । २ । १०६ ॥

यथासङ्ख्येन । काकतीरम् । पाल्वलतीरम् । शैवरूप्यम् । तीररूप्यान्तादिति नोक्तम् । बहुच्पूर्वान्माभूत् । बाहुरूप्यम् ॥

## दिक्पूर्वपदादसंज्ञायां ञः । ४ । २ । १०७ ॥

अणोऽपवाद । पौर्वशाल. । असञ्ज्ञायां किम् । सञ्ज्ञाभूतायाः प्रकृतेर्माभूत् । पूर्वेषुकामशम्या भव. पूर्वैषुकामशमः । प्राचा ग्रामनगराणामित्युत्तरपदवृद्धि ॥

## मद्रेभ्यो ऽञ् । ४ । २ । १०८ ॥

दिक्पूर्वपदादित्येव । दिशो ऽमद्राणामिति मद्रपर्युदासादादिवृद्धिः । पौर्वमद्र । आपरमद्रः ॥

## उदीच्यग्रामाच्च बह्वचो ऽन्तोदात्तात् । ४ । २ । १०९ ॥

अञ् स्यात् ॥ शैवपुरम् ॥

## प्रस्थोत्तरपदपलद्यादिकोपधादण् । ४ । २ । ११० ॥

उदीच्यग्रामलक्षणस्याञोऽपवादः ॥ माहकिप्रस्थ । पालदः । नैलीनकः ॥

## कण्वादिभ्यो गोत्रे । ४ । २ । १११ ॥

एभ्यो गोत्रप्रत्ययान्तेभ्यो ऽण् स्यात् ॥ कण्वो गर्गादिः । काण्व्यस्य छात्राः काण्वाः ॥

**इञश्च । ४ । २ । ११२ ॥**

गोत्रे य इञ् तदन्तादण् स्यात् ॥ दाक्षाः । गोत्रे किम् । सौतङ्गमीयम् । गोत्रमिह शास्त्रीय न तु लौकिकम् । तेनेह न । पाणिनीयम् ॥

**न द्व्यचः प्राच्यभरतेषु । ४ । २ । ११३ ॥**

इञश्चेत्यणोऽपवादः ॥ प्राष्ठीयाः । काशीयाः । काश्यादिषु तु देशवाचिन. काशिशब्दस्य ग्रहण चेदिशब्दसाहचर्यात् । भरताना प्राच्यत्वेऽपि पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम् ।

**वृद्धाच्छः । ४ । २ । ११४ ॥**

शालीयः । मालीयः । तदीयम् ॥

**भवतष्ठक्छसौ । ४ । २ । ११५ ॥**

वृद्धाद्भवत एतौ स्त' ॥ भावत्कः । जश्त्व भवदीयः । वृद्धादित्यनुवृत्ते. शत्रन्तादणेव । भावतः ॥

**काश्यादिभ्यष्ठञ्ञिठौ । ४ । २ । ११६ ॥**

इकार उच्चारणार्थः ॥ काशिकी । काशिका । चैदिकी । चैदिका । आपदादिपूर्वपदात्कालान्तात् । आपदादिराकृतिगण. । आपत्कालिकी । आपत्कालिका ॥

**वाहीकग्रामेभ्यश्च । ४ । २ । ११७ ॥**

वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ स्तः ॥ छस्यापवादः । कास्तीर नाम वाहीकग्रामः । कास्तीरिकी । कास्तीरिका ॥

**विभाषोशीनरेषु । ४ । २ । ११८ ॥**

उशीनरेषु ये बाह्लीकग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः । सौदर्शनिकी । सौदर्शनिका । सौदर्शनीयः ॥

**ओर्देशे ठञ् । ४ । २ । ११९ ॥**

उवर्णान्ताद्देशवाचिनष्ठञ् ॥ निषादकर्षू । नैषादकर्षुकः । केऽण इति ह्रस्वः । देशे किम् । पटोश्छात्राः पाटवाः ॥ ञिठं व्यावर्तयितुं ठञ्ग्रहणम् । वृद्धाच्छ परत्वादयं बाधते । दाक्षिकर्षुकः ।

**वृद्धात्प्राचाम् । ४ । २ । १२० ॥**

प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम् ॥ आढकजम्बुकः । शाकजम्बुकः । नेह । मल्लवास्तु । माल्लवास्तवः ॥

**धन्वयोपधाद् वुञ् । ४ । १२१ ॥**

धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ्स्यात् ॥ ऐरावतं धन्व । ऐरावतकः । साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ । साङ्काश्यकः । काम्पिल्यकः ॥

**प्रस्थपुरवहान्ताच्च । ४ । २ । १२२ ॥**

एतदन्ताद्वृद्धाद्देशवाचिनो वुञ् स्यात् ॥ छस्यापवादः । मालवप्रस्थकः । नान्दीपुरकः । पैलुवहकः । पुरान्तग्रहणमप्रागर्थम् । प्राग्देशे तूत्तरेण सिद्धम् ।

**रोपधेतोः प्राचाम् । ४ । २ । १२३ ॥**

रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ्स्यात् । पाटलिपुत्रकः । ईतः । काकन्दकः ।

**जनपदतदवध्योश्च । ४ । २ । १२४ ॥**

जनपदवाचिनस्तद्रूपावधिवाचिनश्च वृद्धाद् वुञ् स्यात् ॥ आदर्शकः । त्रैगर्तकः । इहोत्तरसूत्रेण वुञ् । अस्य जनपदत्वेनैव

सिद्धावपि गर्तोत्तरपदाच्छ बाधितुं पुनर्विधानम्। मौञ्जी नाम वाहीकग्रामवधिभूतो ग्रामो न तु जनपदस्तत्र तु भवो मौञ्जीय एव॥

**अवृद्धादपि बहुवचनविषयात्। ४। २। १२५॥**

अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो बहुवचनविषयात्प्रातिपदिकाद् वुञ् स्यात्॥ अवृद्धादयो वृद्धाच्छस्यापवादः। अवृद्धाज्जनपदात्। आङ्गक। अवृद्धाज्जनपदावधेः। आजमीढकः। वृद्धाज्जनपदात्। दार्वकः। वृद्धाज्जनपदावधेः। कालञ्जरक। विषयग्रहणं किम्। एकशेषेण बहुत्वे माभूत्। वर्तनी च ३ वर्तन्यस्तासु भवो वार्तनः। पूर्वसूत्रे जनपदसामान्ये वृद्धाद् वुञ् विहितो यथा ब्राह्मणसामान्ये दधिदानम्। इह तु बहुवचनविषये विशेषे अवृद्धाद् वुञ् यथा कौण्डिन्ये तक्रदानम्। ततश्च बहुवचनादपि वृद्धाद् वुञि प्राप्ते आरभ्यमाणोऽवृद्धाद् वुञ् वृद्धाद् वुञो बाधकः स्यात् किन्तु माभूदित्येवमर्थमपिशब्देन समुच्चीयते। इह बहुवचनविषयादित्येतावता सिद्धम्। अवृद्धार्थोऽयमारम्भ। वृद्धाधिकारविच्छेदार्थं त्ववृद्धादपीति वचनम्।

**कच्छाग्निवक्त्रवर्तोत्तरपदात्। ४। १२६॥**

देशवाचिनो वृद्धादवृद्धाच्च वुञ् स्यात्॥ दारुकच्छकः। काण्डाग्नकः। सैन्धुवक्त्रकः। बाहुवर्तक॥

**धूमादिभ्यश्च। ४। २। १२७॥**

देशवाचिभ्यो वुञ्। धौमकः। तैर्थक॥

**नगरात्कुत्सनप्रावीण्ययोः। ४। २। १२८॥**

कुत्सिते प्रावीण्ये च जातादौ प्रत्ययार्थे नगरशब्दाद्वुञ्स्यात्॥ नागरकश्चोरः शिल्पी वा। एतयोः किम्। नागरा ब्राह्मणाः।

**अरण्यान्मनुष्ये । ४ । १ । १२९ ॥**

वुञ्स्यात् । अरण्याण्ण इत्यस्यापवादः । आरण्यको मनुष्यः ॥ वा गोमयेषु ॥ * ॥ आरण्यका आरण्या वा गोमया. ॥ पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् ॥ * ॥ आरण्यकः पन्थाः । अध्यायो न्यायो विहारो मनुष्यो हस्ती वा ॥

**विभाषा कुरुयुगन्धराभ्याम् । ४ । २ । १३० ॥**

वुञ् । कौरवकः । कौरवः । यौगन्धरकः । यौगन्धर ॥

**मद्रवृज्योः कन् । ४ । २ । १३१ ॥**

जनपदवुञोऽपवाद । मद्रेषु जातो मद्रकः । वृजिक. ॥

**कोपधादण् । ४ । २ । १३२ ॥**

जनपदवुञोऽपवाद. । माहिषिक ॥

**कच्छादिभ्यश्च ॥ ४ । २ । १३३ ॥**

देशवाचिभ्योऽण् ॥ वुञादेरपवादः । काच्छः । सैन्धवः ॥

**मनुष्यतत्स्थयोर्वुञ् । ४ । २ । १३४ ॥**

कच्छादिभ्यः ॥ अणोऽपवादः । कच्छे जातादि काच्छको मनुष्य. । काच्छक हसितम् । मनुष्येति किम् । काच्छो गौः ।

**अपदातौ साल्वात् । ४ । २ । १३५ ॥**

साल्वशब्दस्य कच्छादित्वाद् वुञि सिद्धे नियमार्थमिदम् ॥ साल्वकः । अपदातावेवेति । साल्वः पदातिर्व्रजति ॥

**गोयवाग्वोश्च । ३ । २ । १३६ ॥**

साल्वाद् वुञ् ॥ कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् ॥

सप्तविंशतिनक्षत्रभोगकालो नाक्षत्रमासः । नक्षत्रसंख्याया नियतत्वादुक्तप्रायम् ।

'नाक्षत्रमिन्दोर्भगणभ्रमाच्च' इति श्रीपत्युक्तेरिति चेन्न । अनवबोधात् । तथा हि । सावननिरूपणान्तर्गतनक्षत्रोदयद्वयान्तररूपनाक्षत्रदिने कुदिनव्यवहारापत्तेः । सावनान्तर्गतत्वात् । अतस्तन्निरासाय प्राधान्यज्ञानार्थं च पृथङ्निरूपणा न पुनरुक्तमिति युक्तम् । एतस्य नाक्षत्रसावनस्य घट्यादिज्ञाने उपयोगात् सामान्यकालपरिभाषाया उक्तमानाश्रयेण निरूपणाच्च ।

"भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते"* ।

इति सूर्यसिद्धान्तोक्तस्य त्वद्रीत्याऽर्थासम्भवेन मदुक्तार्थाच्च भवदुक्तनाक्षत्रमानस्य प्रकृतानुपयुक्तत्वात् त्रिंशद्दिनात्मकमासरूपं सर्वत्र क्लृप्तं विहायान्यरूपमासकल्पनेनाध्याहारेण च गौरवाच्चेति संक्षेपः । 'प्रमाणिका जरौ लगौ' इति लक्षणात् प्रमाणिकाख्यं पद्यम् ॥ २० ॥

इदानीं ब्राह्ममानमाह ।

खखाभ्रदन्तसागरैर्युगाग्नियुग्मभूगुणैः ।
क्रमेण सूर्यवत्सरैः कृतादयो युगाङ्घ्रयः ॥ २१ ॥
स्वसन्ध्यकातदंशकैर्निजार्कभागसंमितैः ।
युताश्च तद्युतौ युगं रदाब्धयोऽयुताहताः ॥ २२ ॥
मनुः क्षमानगैर्युगैर्युगेन्दुभिश्च तैर्भवेत् ।
दिनं सरोजजन्मनो निशा च तत्प्रमाणिका ॥ २३ ॥
सन्धयः स्युर्मनूनां कृताब्दैः समा
आदिमध्यावसानेषु तैर्मिश्रितैः ।
स्याद्युगानां सहस्रं दिनं वेधसः
सोऽपि कल्पो द्युरात्रं तु कल्पद्वयम् ॥ २४ ॥

* सूर्यसिद्धान्ते मानाध्याये १६ श्लो० ।

शतायुः शतानन्द एवं प्रदिष्ट-
स्तदायुर्महाकल्प इत्युक्तमाद्यैः ।
यतोऽनादिमानेष कालस्ततोऽहं
न वेद्म्यत्र पद्मोद्भवा ये गतास्तान् ॥ २५ ॥

वा भा—खखाभ्रदन्तसागरैरिति । रविवर्षाणां लक्षचतुष्टयेन द्वात्रिंशत्सहस्राधिकेन चतुर्गुणेन कृत नाम प्रथमो युगचरणः १७२८००० । त्रिगुणेन त्रेतासञ्ज्ञो द्वितीयो युगचरणः १२९६००० । द्विगुणेन द्वापराख्यस्तृतीयः ८६४००० । एकगुणेन कलिश्चतुर्थः ४३२००० । किंविशिष्टा एते युगचरणाः । स्वसन्ध्यंशकातदशकैर्निजार्कभागममितैर्युताश्च । युगचरणप्रमाणस्य यो द्वादशांशस्तत्प्रमाणा तस्य चरणस्य सन्ध्या । सा चरणादौ भवति । तावांश्च सन्ध्यांशः । स चरणस्यान्ते । एवं स्वसन्ध्यासन्ध्यांशैः सह एते युगचरणाः कथिता इत्यर्थ. । कृतादौ सन्ध्यावर्षाणि १४४००० । कृतान्ते सन्ध्यांशः १४४००० । त्रेतादौ सन्ध्या १०८००० । त्रेतान्ते सन्ध्यांशः १०८००० । द्वापरादौ सन्ध्या ७२००० । द्वापरान्ते सन्ध्यांशः ७२००० । कल्यादौ सन्ध्या ३६००० । कल्यन्ते सन्ध्यांशः ३६००० । तद्युतौ युगमिति । तेषां चतुर्णां चरणप्रमाणानां युतौ युगप्रमाणम् । तच्च रदाब्धयोऽयुताहताः ४३२०००० । मनुः क्षमानगैर्युगैरिति । तैर्युगैरेकसप्तत्या मितैरेको मनुः । तैर्मनुभिर्युगेन्दुभिश्चतुर्दशभिर्दिनं सरोजजन्मनो निशा च तत्प्रमाणिका । ब्रह्मणो दिनतुल्या रात्रिश्च भवति । प्रमाणिकाशब्देन छन्दोऽपि सूचितम् । अहो एकसप्ततियुगो मनुरुक्तः । ब्रह्मदिने चतुर्दश मनवः । एकसप्ततिर्यावच्चतुर्दशभिर्गुण्यते तावत् षडून सहस्रं भवति ।

स्मृतिपुराणादौ तु

"चतुर्युगसहस्रेण ब्रह्मणो दिनमुच्यते" ।

तत् कथमिदमुच्यत इत्याशङ्क्य परिहरन् आह । सन्धय. स्युर्मनूनां कृताब्दैः समा आदिमध्यावसानेष्विति । आदिश्च मध्यानि चाव-

सानं च आदिमध्यावसानानि । एव तानि पञ्चदश । तेष्वादिमध्याव-
सानेषु मनूना सन्धयः स्युः । ते च कृताब्दसमकालाः । कृताब्दा यावत्
पञ्चदशभिर्गुण्यन्ते तावद्युगषट्काब्दतुल्या भवन्ति । अतस्तैर्मिश्रितैर्युग-
सहस्र ब्रह्मणो दिनमुच्यते । तत् कथमिदमुच्यत इत्यनुपपन्नमित्युपपद्यते ।
यद्ब्रह्मदिन सोऽपि कल्पसज्ञः । एव निशा च तत्प्रमाणिकेति । द्युरात्रं तु
कल्पद्वयमिति । अस्माद्दिनाद्यत् पूर्वपरिभाषया वर्षशत तद्-ब्रह्मण आयुः ।
यत् तस्यायुः स महाकल्प इत्युच्यते । ततोऽन्यो ब्रह्मा तदन्तेऽन्य
इति पुराणादौ कथ्यते श्रूयते च । विष्णुपुराणे ।

"निजेनैव तु मानेन आयुर्वर्षशत स्मृतम् ।
तत् पराख्य तदर्धं तु परार्धमभिधीयते" ॥

तत् कियन्तस्ते गता इत्याशङ्कायामाह । यतोऽनादिमानित्यादि ।
यतः कालोऽनादिमान् । अतो ये गतास्तान वेद्मि ॥ २१–२५ ॥

**वा. वा**–इदानीं ब्राह्ममानमाह खखाभ्रदन्तसागरैरिति ॥ २१–२४ ॥

एव ब्रह्मण आयुर्दायमाह शतायुरिति । अद्यावधि कियन्तः
पद्मोद्भवा गता इति मन्दप्रश्नस्योत्तरमाह यतोऽनादिमानेष इति । अनन्ता
गता इत्युत्तरम् ॥ २५ ॥

**मरीचिः**–अथ ब्राह्ममान विवक्षुरादावुपजीव्यत्वेन युगाङ्घ्रीन् प्रमाणि-
कयाऽऽह खखाभ्रदन्तसागरैरिति । अभ्र खम् । दन्ता द्वात्रिंशत् प्रसिद्धाः ।
समुद्रपर्यायाणा सङ्केतेन चतुःसख्याभिधेयत्वेन सागराश्चत्वारः । एवं चतु-
र्लक्षत्र्ययुतद्विसहस्रसख्यैश्चतुःस्थानस्थैः क्रमेण कृताद्यपेक्षया क्रमेणेत्यर्थः ।
युगाग्नियुग्मभूगुणैर्महायुगाङ्घ्रीणा निरूप्यमाणाना चतुर्णा युगाभिधेयत्वा-
द्युगपदेन चत्वारः । श्रौतेऽग्नयस्त्रयः प्रसिद्धा इति त्रयस्तत्पदेन । युग्मस्य
द्वित्वे पर्यवसानाद्द्वय तत्पदेन । गुणास्त्वावर्त्तिताः । कुर्वित्यभिधानादे-
तत्सङ्ख्यावर्त्तितैस्तैः सूर्यवत्सरैः । वर्षाणा बहुविधत्वेनैतैः सौरवर्षैरित्यर्थः ।
कृतादयः कृतत्रेताद्वापरकलिसञ्ज्ञाभिधेयाश्चत्वारो युगाङ्घ्रयः । महा-
युगचरणा असमा भवन्ति । न तु चत्वारश्चरणा महायुगचतुर्थांशमिताः ।

यथा एते ४३२००० चतुर्गुणाः कृतयुगसौरवर्षमानम् १७२८०००। त्रिगुणा-स्त्रेतामानम् १२९६०००। द्विगुणा द्वापरमानम् ८६४०००। यथास्थिताः कलियुगमानम् ४३२०००।

अत्रोपपत्तिः।

कृतादिचरणानां तुल्यत्वादर्शनात्
"कृतादीना व्यवस्थेय धर्मपादव्यवस्थया" *।

इति ब्रह्मवचनमूलेनादौ कलियुगमानमेकधर्मपादत्वाज्ज्ञेयम्। ततो धर्मानुपातेन द्वापरादिमानानि। अतः

"पञ्चसवत्सरैरेक प्रोक्त लघु युगं बुधैः।
लघुद्वादशकेनैक षष्टिरूप द्वितीयकम्॥
तद्द्वादशमितं. प्रोक्त तृतीय युगसज्ञकम्।
युगाना षट्शती तेषा चतुष्पादी कला युगे॥
चतुष्पादी कला सज्ञा तदध्यक्षः कलि. स्मृतः" †।

इति लगधप्रोक्तत्वात् पञ्चवर्षात्मक लघु युगम्। तद्द्वादशगुण ६० द्वितीयं युगम्। एतद्द्वादशगुण ७२० तृतीय युगम्। इदं षट्शतगुण-मेकपादधर्मकालिककलियुगमानं खखाभ्रदन्तसागरमितमुपपन्नम्। कृते चतुष्पादो धर्मः। त्रेतायां त्रिपादः। द्वापरे द्विपात्। कलावेकपादिति। पुराणप्रसिद्धधर्मपादैनैतानि वर्षाणि तदा स्वधर्मपादेन कानीत्यनुपातेन कृतादीना मानानि वर्षाणि सौरत्वाभ्युपगमात् सौरवर्षात्मकानीत्युक्त-मुपपन्नम्। यद्वा कृतादिचरणानां योगेन महायुगमित्यापाततस्तदशत्वेन ज्ञानात् तत्रत्यधर्मयोगतुल्यदशमितधर्मभोगेन महायुगम्।

"दिव्याब्दानां सहस्राणि द्वादशैव चतुर्युगम्" ‡।

* सूर्यसिद्धान्ते मध्यमाधिकारे १६ श्लो०।

† लगधरचिते ज्योतिषवेदाङ्गे एतानि पद्यानि नोपलभ्यन्तेऽतस्तत्कृतं ग्रन्थान्तरमपीति।

‡ ब्रह्मपुराणीयमिदं भवेच्च ब्रह्मस्फुटसिद्धान्तीयम।

इति ब्रह्मोक्तेनायुतहतरदाब्धिसौरवर्षमितं लभ्यते तदा स्वस्वधर्ममानैः किमित्यनुपातेन दशभक्तपूर्वकतद्गुणेन फलस्य तुल्यत्वात्। खखाग्नित्याद्युपपन्नम्। अत एव

"युगांशांशश्चतुस्त्रिद्विभूघ्नः कृतमुखं युगम्"।

इति वसिष्ठोक्तं युक्तम्॥ २१॥

ननु—

"चत्वार्याहुः सहस्राणि वर्षाणां तत् कृतं युगम्।
तस्य तावच्छतीसंख्या सन्ध्यांशश्चैव तादृशः॥
एकापायेन वर्त्तन्ते सहस्राणि शतानि च" *।
"एतद्दिव्यं नृमानेन सौरे खाङ्काग्निभिर्हतम्" †॥

इति मनूक्तेन कृतदिव्याब्दाः ४००० । त्रेतामानम् । ३००० द्वापरमानम् २००० । कलिमानम् १०००

एवां क्रमेण सन्ध्यासन्ध्यांशाश्च तुल्याः स्वदशांशमिताः। कृतसन्ध्या ४०० कृतसन्ध्यांशमितिश्च। त्रेतासन्धिसन्ध्यांशमानम् ३०० । द्वापरस्य- २०० । कलेः १०० । एभ्यः कृतादीनां सौरवर्षमानानि जातानि। कृत- मानम् १४४०००० । एतत्सन्ध्यासन्ध्यांशमानम् १४४००० । त्रेतामानम् १०८०००० । सन्ध्यातदंशमानं प्रत्येकम् १०८००० । द्वापरमानम् ७२०००० । सन्ध्यातदंशमानम् ७२००० । कलिमानम् ३६०००० । सन्ध्यातदंशमानम् ३६००० ।

तथा च मनूक्तैस्तन्मानैः कृतादिभिस्त्वदुक्तकृतादिमानानां विसंवादाद्विरोध इत्यतो युगाङ्घ्रीणां विशेषणमेतदुपजीवकत्वेन वक्ष्यमाणोपजीव्यत्वेन च महायुगमानं च प्रमाणिकयाऽऽह स्वसन्ध्यकांतदशकैरिति। स्वसन्ध्यकांतदशकैः पूर्वोक्तकृतादियुगचरणाः स्वीयस्वीयसन्ध्यासन्ध्यांशैः स्वाद्यन्तावस्थितरूपैः। अत्रैषां बहुत्वाद्बहुवचनम्। युताः। चकार एवकारार्थः। युता एव सन्तः सिद्धाङ्कतुल्याः सन्तीत्यर्थः। न सन्ध्यांश-

* एतत्सार्धपद्यं मनुस्मृतौ १ अध्याये ६९—७० श्लो०।
† एतत् पद्यार्धं मनुस्मृतौ नोपलभ्यते।

भिन्नरूपकेवलकृतादियुगचरणा उक्ताङ्कमिता येनाविरोधः । ननु तथाऽपि त्वदुक्तौ केवलाना तेषा ज्ञानमपेक्षाया न स्यादत सन्ध्यासन्ध्याशयो-र्मानमाह निजार्कभागसमितैरिति । 'द्वादशादित्या' इति श्रुतेः । सूर्यप-र्यायशब्दाना द्वादशवाचकत्वम् । तेन निजाना स्वोक्तकृतादिचरणाना द्वादाशाशमितैः प्रत्येक सन्ध्यासन्ध्याशैरित्यर्थ. । तथा च यदधिक तदू-नप्रोक्तकृतादिचरणा' केवला भवन्ति विलोमकर्मणेति भाव: । यथा कृत-युगम् १७२८००० । अस्य द्वादशाशमिता सन्ध्या कृतपूर्वकाले १४४००० । एतत्तुल्यः सन्ध्याशः कृतसमाप्त्युत्तरकाले । अनयोर्मध्ये केवलकृतयुगमा नम् १४४०००० । त्रतादौ सन्ध्या १०८००० । त्रेतान्ते सन्ध्याशश्च । मध्ये त्रेतामानम् १०८०००० । द्वापरादौ सन्ध्या ७२००० । द्वापरान्ते सन्ध्याशश्च । मध्ये द्वापरमान च ६२०००० । कल्यादौ सन्ध्या ३६००० तदन्ते तदशश्च । मध्ये कलिमानम् ३६०००० । अत्र केवलचर णाना दशाशरूपसन्धिसन्ध्य शयोर्मन्वभिमतयोः सत्त्वाद्विशिष्टे दशा शद्वयरूपाधिकत्वाच्च । यथा 'स्वाशाधिकोनेन तु तेन भागान्' 'लवा-ढ्योनो हरो हर.'–इति विलोमसूत्रेण विशिष्टमानाना द्वादशाशः सन्ध्याशयोः प्रत्येक सन्ध्यामान सिद्धम् । अत एवोभयोः सन्धिरूपेणैकस-न्ध्युपगमात् सूर्यसिद्धान्ते' षष्ठाशः सन्धयः स्वकाः'–इति पाठो युक्त. । एव च ग्रहचारप्रवृत्तिकालात् कृतयुगचरणाना स्वसन्ध्यापूर्वकारम्भेण स्वसमा-प्त्युत्तरस्वसन्ध्याशसमाप्तिरूपेण च सम्भवात् स न्ध्यारम्भसन्ध्याशसमाप्त्यन्ताव-च्छिन्नकालस्यैव कृतादिव्यवहारः स्वसम्बन्धात् । तेन सन्ध्यासन्ध्याशयुतः केवलकृतादीना कृतादिमानसम्भवेन गणितलाघवार्थं च मया तेषा विशिष्टमान सूर्याद्युक्तत्वादुक्तम् । मनुना तु पृथक् पृथगुक्त भिन्नस्वरूपात् । महायुगज्ञानार्थमेतेषा योगे सन्ध्या तदशाश्च योज्या एव । अन्यथा सन्ध्यासन्ध्याशकथनस्य व्यर्थतापत्तेः । तथा च

"सन्ध्यासन्ध्याशसहितं विज्ञेय तच्चतुर्युगम्" * ।

* मध्यमाधिकारे १६ श्लो० ।

इति सूर्यसिद्धान्तोक्तेन च न विरोध इति भावः । अथ प्रकृतमाह तद्युताविति । तेषां कृतादिचरणानां प्रागुक्तानां युतौ सङ्कलनेनैक्ये कृते युगं कृतादिचतुश्चरणात्मकमहायुगमानं स्यात् । लाघवार्थं तत्संख्यामाह रदाब्धय इति । 'एकदशशतसहस्रायुत'—इत्यादिपाटीप्रसिद्धायुतसंख्यया आहता । वधवाचकशब्दैर्गुणनाभ्युपगमात् । तथा चत्वारि प्रयुतानि लक्षत्रयमयुतद्वयं चेति संख्या सिद्धा । यथा कृतादीनाम् १७२८०००, १२९६०००, ८६४०००, ४३२००० एषां योगे जातमुक्तमानम् ४३२००००। न च महायुगमानकथनेन ब्रह्ममानं वक्तुं शक्यमिति कृतादीनां व्यर्थतेति वाच्यम् । अग्रे 'याताः षण्मनव.' इत्याद्युक्तकल्पगतवर्षसाधने उपयोगात् ॥ २२ ॥

अथावान्तरयहचारोपजीव्यत्वाद्ब्रह्ममानमाह मनुः कुमानगैरिति । कुलाचलानां सप्तत्वात् पर्वतपर्यायशब्दानां सप्तसंख्यावाचकत्वादेकसप्ततियुगैः पूर्वोक्तमहायुगमानैरावर्त्तितैरिति शेषः । एको मनुः स्यात् । अस्योपजीवकमाह युगेन्दुभिरिति । तैर्मनुभिश्चतुर्शभिर्गुणितैरित्यर्थः । सरोजजन्मनो ब्रह्मणो दिनं स्वत्रिशद्घटिकात्मकं सौरवर्षमानं भवेत् । तत्प्रमाणिका । च एवार्थे । दिनमानप्रमाणैव निशा तेन सदा ब्रह्मदिनरात्र्योः समत्वम् । नास्मदादिदिनरात्रिमानतुल्यत्वम् । जरौ लगौ' इति पूर्वोक्तलक्षणात् प्रमाणिकाशब्देन छन्दोऽपि सूचितम् ।

यथा—

युगमानम् ४३२०००० । एकसप्ततिगुणं मनुमानम् ३०६७२०००० । चतुर्दशगुणं ब्रह्मणो दिनमानम् ४२९४०८०००० ॥ २३ ॥

ननु-

"सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः" ॥

इति भगवद्वाक्याभिमतयुगसहस्ररूपदिनेन त्वदुक्तप्रकाराभिमतषड्नसहस्रयुगरूपदिनस्य विसंवादाद्विरोध इत्यतस्तत्परिहारं सविः-

यथाऽऽह सन्धयः स्युरिति । मनूना चतुर्दशसङ्ख्याकानाम् । आदिमध्याव-सानेषु मन्वारम्भपूर्वकालमनुसन्धिकालसकलमनुसमाप्त्युत्तरकालेष्वित्यर्थः । कृताब्दैः कृतसञ्ज्ञयुगचरणसङ्ख्यावर्षैः समास्तुल्याः प्रत्येक मिलित्वा सन्धयः पञ्चदशसङ्ख्याकाः स्युः । वारप्रवृत्तिकालात् कृतयुगे गते मन्वारम्भस्त-त्समाप्त्युत्तरकाले कृतयुगे गते द्वितीयो मनुरित्यादिना चतुर्दशमनूना पञ्चदश सन्धयो भवन्तीति स्फुटार्थः । अतोऽविरोध इत्याह तैरिति । तैः पञ्चदशसन्धिभिर्मिश्रितैर्युक्तैः प्रागानीतदिनवर्षैरित्यर्थात् क्षिप्तम् । युगाना सहस्र वेधसो ब्रह्मणो दिन स्यात् इत्यविरोध इति भावः । यथा युगसार्धद्वयाशरूपकृतयुगचरणः १७२८००० । पञ्चदशगुणो जात षड्गुण महायुगमानम् २५९२०००० । अनेनान्तरस्थकालेन पूर्वदिन-वर्षाणि ४२९४०८०००० युतानि जातानि युगसहस्रमित ब्रह्मणो-दिनम् ४३२०००००००। ननु

"युगाना सप्ततिः सैका मन्वन्तरमिहोच्यते ।
कृताब्दसख्या तस्यान्ते सन्धिः प्रोक्तो जलप्लवः ॥
ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश ।
कृतप्रमाणः कल्पादौ सन्धिः पञ्चदश स्मृतः ॥
इत्थं युगसहस्रेण भूतसहारकारकः ।
कल्पः ‥ … … … … … … ‥ . ."* ॥

इत्यनेन सूर्यसिद्धान्ते त्वदभिमतवर्षैः कल्प उक्तः । त्वया तु ब्रह्म-दिनमुक्तमिति पुनर्विरोध इत्यत आह स इति । स ब्रह्मदिवसः । अपि-शब्द एवार्थे । तेन ब्रह्मदिवस एव कल्पः कल्पाभिधेयो न तत्तुल्यान्य-कालः केषां चिदभिमतोऽयं दूषितत्वात् । ननूक्तप्रकारेण दिन युगसह-'स्रमुक्त रात्रिस्तु निशा च तत्प्रमाणिकेत्यनेन न युगसहस्रमिता । अतो रात्रि युगसहस्रान्ताम्'—इत्यनेन विरोधोऽत आह द्युरात्रमिति। कल्पद्वय

* मध्यमाधिकारे १८–२० श्लो० ।

युगसहस्रस्य कल्पत्वाद्युगसहस्रद्वितयम् । तुरेवार्थे । द्युरात्रमहोरात्रम् । ब्रह्मणः । तथा च दिनरात्र्योः समत्वेनाविरोधो वक्ष्यमाणोपजीव्य-ब्रह्माहोरात्रकथनच्छलेन सूचित इति भावः ।

"कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती" * ।

इति सूर्यसिद्धान्तेऽप्युक्तम् ॥ २४ ॥

अथ ब्रह्ममानान्तरभेदरूपतत्स्थितिं भुजङ्गप्रयातेनाह शतायुरिति । शतानन्दो ब्रह्मा । एवं पूर्वोक्तकालपरिभाषया अहोरात्रस्य मासीकरण तस्य वर्षीकरणमिति रूपेणेत्यर्थः । शतायुः स्ववर्षशतायुः प्रदिष्ट उक्तः । अहोरात्रमानम् ८६४0000000 । त्रिंशद्गुणं मासमानम् २५९२00000000 । द्वादशगुणं ब्रह्मवर्षं सौरवर्षमानम् ३११0४00000000 । महाकल्पमाह तदायुरिति । तदायुर्ब्रह्मायुर्महाकल्पो महाप्रलयः प्राकृतिकप्रलय इति यावत् । उपसहरतीति । उक्तप्रकारेणाद्यैर्मुनिभिः । त्रुट्यादिप्रलयान्तकालनिरूपणमुक्तम् ।

"परमायुः शतं तस्य तयाऽहोरात्रसङ्ख्यया" † ।

इति सूर्यसिद्धान्तोक्तेश्च । ननु ब्रह्मरूपेश्वरस्यायुर्न सम्भवति नित्यत्वात् । न चेश्वरेण सृष्ट्यर्थं ब्रह्माणः कृतास्ते तु एतद्वर्षान्तरेणैवेति तेषामर्थादेवैतदायुः ।

"निजेनैव तु मानेन आयुर्वर्षशतं स्मृतम्" ।

इति विष्णुपुराणोक्तत्वाच्चेति वाच्यम् । तर्हि कालस्य नित्यत्वात् तदन्तेऽन्यो ब्रह्मा तदन्ते महाप्रलय इत्यादिव्यवस्थया वर्त्तमानकाले कति ते ब्रह्माणो गतास्तान् न वेद्मीति मन्दाशङ्कां परिहरन्नाह यत इति । यत्कारणात् । एष प्रसिद्धः कालोऽनादिमान् । उत्पत्त्यभावात् । ततस्तत्कारणात् । अहं भास्कराचार्यः । अत्र वर्त्तमानकाले ये यत्सङ्ख्याकाः पद्मोद्भवा ब्रह्माणो गतास्तान् न वेद्मि । अनन्ता गता

* मध्यमाधिकारे २० श्लो॰ ।
† मध्यमाधिकारे २१ श्लो॰ ।

इत्युत्तरम् । तदियत्ताज्ञान नास्तीति भावः । यः कश्चिद्वदति गत ब्रह्मणः सख्याज्ञान तदप्ययुक्त मानाभावादिति ॥ २५ ॥

इदानीमन्यदाह ।

तथा वर्त्तमानस्य कस्यायुषोऽर्धं
गतं सार्धवर्षाष्टकं केचिदूचुः ।
भवत्वागमः कोऽपि नास्योपयोगो
ग्रहा वर्त्तमानद्युयातात् प्रसाध्याः ॥ २६ ॥

**वा भा.**–तथा वर्तमानस्य ब्रह्मण आयुःकालस्य कि गतमिति न वेद्मि तत्र केचिदाचार्या आयुषोऽर्धं गत केचित सार्धवर्षाष्टक गतमित्यूचुः । तत्रागम. प्रमाणम् । इहागमद्वैविध्ये क. प्रमाणमित्यत्रास्माक नाग्रहः । यतोऽस्य गतैर्वर्षमासैर्दिनैरपि प्रयोजनाभावः । ग्रहास्तु वर्तमानस्य दिवसस्य गतात् साध्याः ॥ २६ ॥

**वा. वा**–अन्यदपि न वेद्मि आगमद्वैविध्यादित्याह तथा वर्त्तमानस्येति । ननु गतवर्षाज्ञाने ग्रहसाधन कथ स्यादित्याशङ्काया सयुक्तिकमुत्तरमाह भवत्वागम इति ॥ २६ ॥

**मरीचिः**–ननु कालस्यानादित्वाद्गतब्रह्मणा सख्याज्ञानं माऽस्तु पर वर्त्तमानब्रह्मणो गतायुर्वर्षादिसख्या वदेति मन्दाशङ्का परिहरन् पूर्वोक्तब्रह्मदिनस्य ग्रहकर्मण्युपयोग इति भुजङ्गप्रयातेनाह तथा वर्तामनस्येति। वर्त्तमानस्य कस्य ब्रह्मणः । आयुषे गतायुर्वर्षादिज्ञान तथा यथा गतब्रह्मणा सख्याज्ञान गतायुः सख्यामपि न जानामि विप्रतिपत्तिसत्त्वात् कालस्य नित्यत्वाच्च । तानाह अर्धमिति । आयुष. शतवर्षात्मकस्य अर्धं पञ्चाशद्वर्षमित गतम् । 'आयुषोऽर्धमित तस्य' इति सूर्यसिद्धान्तोक्तेश्च । केचिदाचार्याः सार्धवर्षाष्टकम् । षण्मासयुताष्टवर्षमित गतमित्यूचुः ।

तथा च वटेश्वरः ।

"कजन्मनोऽष्टौ सादलाः समा ययुस्तथा समाप्ताः"–इति ।

अष्टौ सदलाः क्रमेण समासा ययुरित्यर्थः । अनयोर्मतयोरुपेक्षामाह भवत्विति । अनयोर्मध्ये कोऽप्यन्यतर आगमः प्रमाणं भवतु । नास्माकमाग्रहः। हेतुमाह नोपयोग इति । अस्य गतायुर्वर्षादिविचारस्य । उपयोगः प्रयोजनं न । तथा चास्माकं ग्रहसाधने यस्योपयोगस्तद्विचार आवश्यक इति गतायुर्वर्षादिविचारोऽनुपयुक्तः । यतस्तत्साधनेन तद्दिनमासवर्षाणामनुपयुक्तत्वेन प्रयोजनाभाव इति भावः । ननु यथैषां प्रयोजनाभावेन तदन्तर्गतवर्त्तमानदिनस्याप्यप्रयोजकत्वात् पूर्वं ब्रह्मदिनमानं व्यर्थमुक्तमित्यत आह ग्रहा इति । ग्रहाः सूर्यादयो वर्त्तमानव्युयातात् ब्रह्मणो वर्त्तमानदिनगतसौरवर्षसमूहात् साध्या इत्यर्थः । तथा च वर्त्तमानदिनगतस्येच्छात्वेन संपूर्णदिवसस्य प्रमाणत्वमर्थत एव सिद्धत्वाद्ग्रहसाधनेऽनुपातार्थप्रमाणेच्छयोरत्यन्तप्रयोजनाद्वर्त्तमानदिनमानमुपयुक्तत्वेनोक्तम् । तत्प्रसङ्गान्महाप्रलयादिकमप्युक्तमिति । तेन वर्त्तमानदिनगतसौरवर्षसमूहस्येच्छात्वेन प्रयोजनमिति तज्ज्ञानमावश्यकमिति भावः । अत्र युक्तिः । कालस्यानाद्यनन्तत्वाच्चिरवधित्वेन ग्रहचारनिरूपणस्याशक्यतयाऽवश्यमेव कश्चिदौपाधिकोऽवधिरवगन्तव्यः । स च कोटिगुणितरदाब्धि-४३२0000000 सौरवर्षमितः पूर्वाचार्यैरवधित्वेनोपकल्पितः । तैरेव ग्रहमन्दशीघ्रोच्चपातपर्ययाणां पूर्यमाणत्वात् । येन हि कालेन सर्वेषां भगणा युगपन्निरवयवीभवन्ति स एव ग्रहसाधनविषयेऽवधिरित्यभ्युपगमादतिरिक्तेनास्माकं प्रयोजनाभावात् । तथा चावधिवर्षसमस्य पितामहदिनस्य स्मृतावुक्तत्वात् । स्मृतिप्रामाण्येनैव व्यवहारार्थं तदुद्दिष्टब्रह्ममानस्य तत्स्वरूपतयाऽङ्गीकार इति । ब्रह्ममानेन स्वदिनगतं च यदि कल्पसौरवर्षैर्ब्रह्मत्रिंशद्घटिकास्तदेष्टसौरवर्षैः का इत्यनुपातेन ॥ २६ ॥

इदानीं तत्कारणमाह ।

यतः सृष्टिरेषां दिनादौ दिनान्ते
लयस्तेषु सत्स्वेव तच्चारचिन्ता ।

अतो युज्यते कुर्वते तां पुनर्ये-
ऽप्यसत्स्वेषु तेभ्यो महद्भ्यो नमोऽस्तु ॥ २७ ॥

वा भा—यत एषां ग्रहाणां दिनादौ सृष्टिर्दिनान्ते लयः। यदि महाकल्पगताद्ग्रहाः साध्यन्ते तर्हि यावत्योऽस्य विभावर्यो गतास्तासु ग्रहाभाव एव। अतो विद्यमानेष्वेव ग्रहेषु तच्चारचिन्ता कर्तुं युज्यते। यत् तु कैश्चिदविद्यमानेष्वपि तेषु महाकल्पगताद्वर्त्तमानाः कृतास्तान् प्रति वक्रोक्त्या सोपहासमाह। तेभ्यो महद्भ्यो नमोऽस्त्विति ॥ २७ ॥

वा. वा.—कस्माद् ग्रहा वर्त्तमानद्युयानात् साध्यन्त इति तत्कारणमाह यतः सृष्टिरिति। ये महाकल्पादेर्ग्रहानयन कुर्वन्ति तेषां नमोऽस्त्वित्युपहासः। कल्पादिरेव ब्रह्मदिनादिः स एव पूर्वगतिप्रारम्भकाल इत्यवश्यमेव स्वीकार्यं सौरतन्त्रदत्तैः। अन्यथा यावद्दिनेशदर्शन तावद्दिनमिति लक्षणेऽव्याप्तिः स्यात्। यत् तु 'कल्पो ब्राह्ममहः'—इत्यत्र यावत्कल्पप्रमाणमुक्त तत्संमितमेव ब्रह्मदिनमान न तदैव ब्रह्मदिनप्रवृत्तिः। किन्तु कल्पादेः कृताद्रिवेदतुल्यदिव्याब्देषु शतघ्नेषु गतेषु ब्रह्मदिनप्रवृत्तिरिति व्याख्यान तत्र कालविशेषसंख्यावाचकस्य कल्पशब्दस्य संख्यामात्रपरत्वेऽदोषः। यथा रवीन्दुयोगात् प्रवृत्तस्य त्रिंशत्तिथ्यात्मकस्य चान्द्रस्य पञ्चम्यादितस्त्रिंशत्तिथिसंख्यामात्रपरत्वे स्वार्थपरित्याग मन्यन्ते तद्वदत्रापि। सर्वजनसम्मतकल्पप्रवृत्तेः ससन्धिचतुर्दशमन्वात्मकस्य कल्पस्य सौरसम्मतसृष्ट्यादितः ससन्धिचतुर्दशमन्वात्मकपरतायां स्वार्थपरित्याग एव महान् दोषः। अथ भवन्मतेऽपि यदि युगपद ग्रहसृष्टिसंचरणं तदा शतपथप्रभृतिप्रतिपादितक्रामिकसृष्टिर्विरुध्येत। यदि च कल्पादितः प्राग्ग्रहसृष्टिः कल्पादितो ब्रह्मदिनारम्भ इति मते यावद्दिनेशदर्शन तावद्दिनमिति लक्षणेऽतिप्रसङ्गः प्रसज्येत। किं च यावत् क्षितिजोपरि रविबिम्बसंचारस्तावद्दिनमिति लक्षणेन कल्पादितः प्राग्ग्रहसृष्टावपि गमनापरपर्यायस्य संचारस्य कल्पादित एव स्वीकृतत्वात् करतलकलितामलकवत् सकलं भूगोलं पश्यतो ब्रह्मण आकल्पं

रविविम्बसंचारः स्वक्षितिजोपर्यैव भवतीति कल्पादितो ब्रह्मदिनारम्भे न किञ्चिद्‌बाधकम् । तथा मन्मतेऽपि कल्पादावेव रविसृष्टिस्ततः शतघ्नकृताद्रिवेदतुल्यदिव्याब्दैर्ग्रहगतिप्रारम्भ इति यावद्रविनेशदर्शन तावद्दिनमिति लक्षणे न किञ्चिद्‌बाधकमस्तीति । यत्रोभयोः समो दोषः परिहारोऽपि वा समो नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे इति ब्रूयात् । प्रतिब्रूयादेन किं भवता कल्पादिरेव ब्रह्मदिनादिस्तत्रैवादित्यो ह्यादिभूतत्वादिति सूर्यसिद्धान्तोक्तेः सूर्यविम्बसृष्टिरित्यभ्युपगतम् । यावत् स्वक्षितिजोपरि रविविम्ब तावद्दिनमिति लक्षणं वा किमपराद्धं युगपद्ग्रहसृष्टिगतिवादिना । वेदविरोध इति चेत् । स च युगपद्रविगतिसृष्टिवादिनस्तवापि मते समान एव । कथमयमनुक्तोपालम्भः । न च मया युगपत् स्वीक्रियते किन्तु कल्पादौ रविसृष्टि । रविगतिर्ग्रहगतिप्रारम्भ इति । तर्ह्यत्रापि दूषणमस्ति । त्वयापरपर्यायकल्पान्ते भग्रहाणां लयश्रवणात् । कल्पादितो युगमहीधरवेदवर्षेषु शतगुणितेषु गतिप्रारम्भाभिधानात् कल्पभगणादीनामानर्थक्यम् । तस्मात् कल्पादावेव ग्रहगतिप्रारम्भः समुचित इति । यथेच्छाकाले ग्रहासत्त्व दोषस्तथा प्रमाणकालेऽपि ग्रहासत्त्व दोष इति सामान्यत उक्त तेष्वसत्सु ये तत्त्वार्थचिन्ता कुर्वते तेभ्यो महद्भ्यो नम इति ।

तथा चाह श्रीपतिः ।

"ज्योतिर्ग्रहाणां विधिवासरादौ
सृष्टिर्लयस्तद्दिवसावसाने ।
यस्मादतोऽस्मिन् गणिते ग्रहाणां
योग्यो मते नः खलु कल्प एव" इति ॥

वस्तुतस्तु युगकुदिनादिप्रमाणं युगभगणादिफलमिच्छेष्टाहर्गणाद्येव । तत्र सावयवेन गुणने भजने च शिष्यक्लेशो माभूदिति भगवता पङ्कजवनविकासकेन सूर्येण मन्दशीघ्रोच्चपातभगणाद्यं सहस्रेण सवर्ण्यित्वा पठितमिति ग्रहासत्त्वदोषाशङ्काऽपि नास्ति । तस्मान्महाकल्पाद्यो

ग्रहान्यन कुर्वते तेषामेवेद दूषणमित्यलम् । ब्राह्ममानकथन सङ्कल्पा-द्युपयोगितया प्राजापत्यमानयत् । शास्त्रान्तरे प्राजापत्यमानमभिहितम् ।

"मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम्" इति ॥ २७ ॥

**मरीचिः**—ननूक्तयुक्त्या कल्परूपब्रह्मदिनस्य प्रमाणत्वे ग्रहसाधनार्थं सिद्धेऽप्यवान्तरग्रहचारसाधनार्थं कल्पगतस्येच्छात्व न युक्तम् । कालस्यानाद्यनन्तत्वेन ग्रहचारस्य चराचरस्य च सर्वदा स्थितत्वेन कल्पाधिककाले ग्रहचारप्रवृत्तिकालाद्ग्रहचारस्य भगणाद्यात्मकस्य साधनात् । महाकल्पावच्छिन्नकाले ग्रहचारप्रवृत्तिकालाद्गतकालस्येच्छात्व युक्तम् । अग्रे चान्यब्रह्मकृतसृष्टेः सत्त्वात् तच्चारप्रवृत्तिकालात् पूर्वरीत्या ग्रहसाधनमिति नानवस्था तथा च ब्रह्मणो गतदिनमासवर्षाणा तत्साधने प्रयोजनाद्ग्रहा वर्त्तमानद्युयातात् प्रसाध्या इत्यस्यासिद्धत्वाच्च भवत्वागमः कोऽपि नास्योपयोग इति कथमुक्तम् । अन्यथा ग्रहसाधनस्यासाधनतापत्तेः ।

अत एव ।

"आयुषोऽर्धं गत तस्य शेषकल्पोऽयमादिमः ।
कल्पादस्माच्च मनव. षड्व्यतीताः ससन्धयः ॥
वैवस्वतस्य च मनोर्युगाना त्रिघनो गतः ।
अष्टाविशाद्युगादस्माद्यातमेतत् कृत युगम् ॥
अतः काल प्रसख्याय सख्यामेकत्र पिण्डयेत्" * ।
इति सूर्यसिद्धान्तोक्तम् ।
"कल्पपरार्धे मनव· षट् कस्य युगत्रिघनम् ।
त्रीणि कृतादीनि कलेर्गोऽगैकगुणाः ३६७९ शकान्तेऽब्दाः" † ॥

इति ब्रह्मगुप्तोक्तस्यागतायुरङ्गीकारेण ब्रह्मजन्मकालात् सौरवर्षाणि कल्पाना परार्धसख्यया मितमिति यथाश्रुतार्थेन गतानि ।

* मध्यमाधिकारे २१–२३ श्लो ।
† ब्रह्मस्फुटसिद्धान्ते मध्यमाधिकारे २६ श्लो ।

यथा कल्पाब्दाः ४३२०००००००। एते परार्धसंख्ययाऽष्टादशस्थानात्मिकयाऽऽहता जाता द्विनिवेदाः खचतुर्विंशत्येकाहताः ४३२००००००००००००००००००००००००। वर्त्तमानकल्पे षण्मनवश्चतुर्युगत्रिघनस्त्रीणि कृतादीनि। सर्वेषां योगवर्षाणि कृत्वा कलिगतैर्वर्षैः पूर्वस्थापितैः कल्पपरार्धमितवर्षैश्च सह विक्रमशकान्ते कजन्मनोऽतीतानि वर्षाणि नवनगशशिमुनिकृतनवयमाद्रिनवेन्दुखचतुर्दशर्काद्विगुणाब्धिमितानि ४३२००००००००००००००१९७२९४१७९। अमितायुरनङ्गीकारे तु "कल्पात् परो महाकल्पस्तस्यार्धम्" *इति सूर्यसिद्धान्तोक्त एवार्थः। तेन तत्र तद्वर्षाण्येतानि गोनगेन्दुनगाब्धिनवद्व्यद्रिनवेन्दुद्विशरशरेषुभूमितानीति कथमुक्त ग्रहा वर्त्तमानद्युयातात् प्रसाध्या इत्यत एतद्विरासपूर्वं सयुक्तिकं तद्दृढीकरणं भुजङ्गप्रयातेनाह यतः सृष्टिरेषामिति। यस्मात् कारणात्। एषां ग्रहादीनां दिनादौ ब्रह्मदिनरूपकल्पप्रारम्भक्षणे सृष्टिः सृजनं भचक्रनियोजनादिकं दिनान्ते कल्पसमाप्तिक्षणे लयो ब्रह्मोदरान्तर्लीनता।

"अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके" ॥

इति भगवदुक्तेः। अतोऽस्मात् कारणात्। तेषु ग्रहेषु। सत्सु विद्यमानेषु। एवकारो ग्रहानधिकरणकालव्यवच्छेदार्थः। तच्चारचिन्ता ग्रहगतिविचारो युज्यते कर्त्तुं युक्तो भवतीत्यर्थः। तथा च ग्रहाणां कल्पावच्छिन्नकाले सत्त्वाद्वर्त्तमानद्युयातात् प्रसाध्या इति प्रागुक्तं युक्तमेवेति भावः। अन्यथा ग्रहानधिकरणकाले ब्रह्मरात्रौ 'सति कुड्ये चित्रम्, इति न्यायेन तदसाधनेऽत्वपि उक्तरीत्या ग्रहसाधनमनिवारितं स्यात्। अत एव।

"ग्रहनक्षत्रोत्पत्तिर्ब्रह्मदिनादौ दिनक्षये प्रलयः।
यस्मात् कल्पस्तस्माद्ग्रहगणिते कलयाताब्दाः" †॥

---

* ब्रह्मस्फुटसिद्धान्ते मध्यमाधिकारे २६ श्लो.।

† नेदं पद्यं ब्रह्मस्फुटसिद्धान्ते उपलभ्यते।

इति ब्रह्मगुप्तोक्तार्यापूर्वप्रतिपादितमहाकल्पगता ग्रहपरा उक्ताः ।

सिद्धान्तशेखरेऽपि ।

"ज्यौतिर्ग्रहाणां विधिवासरादौ सृष्टिर्लयस्तद्दिवसावसाने ।
यस्मादतोऽस्मिन् गणिते ग्रहाणां योग्यो मतो नः खलु कल्प एव"—इति ॥

अत एव सूर्यसिद्धान्ते ग्रहसाधनार्थं 'अग्नमूनना तु सपीड्य' इत्यादिगताब्दसाधन युक्तम् । ननु भगवता सूर्येणैव मार्गद्वयप्रदर्शनं कृतम् । अन्यथा द्विवार गताब्दसाधनानुपपत्तेः । यस्तु द्वितीयमार्गस्य युक्तियुक्तत्वेन प्रथमोऽमुख्यः । अत एव भगवता प्रथमेऽस्वरस हृदि मत्वाऽग्रे द्वितीयमार्गस्योक्तिः । तथा च महाकल्पगताद्ग्रहसाधनस्यापि समूलत्वेन प्राचीनपूर्वाचार्यग्रन्थेषु कथन भविष्यत्येवातः कथ तद्विचारणसूचकस्यैवकारस्य पूर्वं तथाऽपि दानमित्यत आह कुर्वत इति । ये पूर्वाचार्या असत्सु अविद्यमानेषु एषु ग्रहेषु अपिशब्दाद्विद्यमानेष्वित्यर्थः । विद्यमानेष्वविद्यमानेषु चेति महाकल्पे इति यावत् । ता ग्रहचारचिन्ता कुर्वते कुर्वन्तीत्यर्थः । तेभ्यो महद्भ्यो नमोऽस्त्वित्यत्यन्ततिरस्कृतवाक्येन उपकृत बहु तत्र किमुच्यते इत्यादि बहूपहासो व्यज्यते । तथा च महाकल्पगताद्ग्रहसाधन यैः कृत भविष्यति तदयुक्तम् । सूर्यानभ्युपगमेन मूलाभावात् । अन्यथा ग्रहसाधनोपजीव्य सूर्योक्तद्वितीयगताब्दसाधन व्यर्थं स्यात् । पूर्वोक्तद्वितीयगताब्दसाधनस्य--'आद्यब्रह्मणो द्वितीयपरार्धे'—इत्यादिसङ्कल्पोपयुक्तत्वाच्चेत्येवकारदान युक्तमिति भावः । अत एव सत्सु ग्रहेषु तच्चारजिज्ञासाऽपि युज्यते ।

"तज्जिज्ञासा नमस्तेभ्यो भवेद्येषामसत्स्वपि"—इति ।

इति श्रीपत्युक्तं युक्तम् । अत्राधुनिकाः—

"विधेर्दिनादौ युगपत् समस्तं भूत्वा ग्रहाः प्रागगमनप्रवृत्ताः ।
इतीरितं वेदविरोधिनस्ते ब्रह्मार्कचन्द्रादिमताद्विभिन्नम् ॥

यः समानोदकं प्रेतं वहेद्वापि दहेत वा ।
तस्याशौचं दशाहं स्यादन्येषां तु त्र्यहं विदुः ॥ इति ।

अन्येषां दाहकादिव्यतिरिक्तानां, समानोदकपदं सगोत्रस्याप्युपलक्षणं समानगोत्रत्वाविशेषात् । सपिण्डानां तु वहनाद्यभावेऽपि दशाहमस्त्येवेति न तन्निमित्तमाधिक्यम् । अत एव देवलः ।

विहितं तु सपिण्डानां प्रेतनिर्हरणादिकम् ।
तेषां करोति यः कश्चित्तस्याधिक्यं न विद्यते ॥ इति ।

अबन्धुमित्यनेन बन्धुत्रयवहनादौ त्रिरात्रमुक्तम् । तदाह मनुः ।

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ इति ।

बन्धुवत्स्नेहातिशयेन, मातृबान्धवाः पितृबान्धवाद्युपलक्षकाः सम्बन्धसाम्यात् ।

अनुगमनाशौचमाह ।

**अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा ।**
**स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्ध्यति ॥४३॥**

ज्ञातिं सपिण्डाद्व्यतिरिक्तं समानजातीयं ब्राह्मणं पूर्वानुवृत्ते, इच्छया कामतोऽनुगम्य सचैलं स्नात्वाग्निं स्पृष्ट्वा घृतं प्राश्य विशुध्यति । तदाह कूर्मः ।

प्रेतीभूतं द्विजं विप्रो योऽनुगच्छेत्तु कामतः ।
स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥ इति ।

अज्ञातिमेव वा असमानजातीयं क्षत्रियादिकमप्यनुगम्येदमेव वक्ष्यमाणेन समुच्चितं शुद्धिहेतुरिति वक्तुमज्ञातिमेव वेत्युक्तम् । घृतप्राशनं च शुद्ध्यर्थमिति न भोजननिवर्तकं तत्कार्यकारित्वाभावात् ।

विप्रस्य क्षत्रियानुगमनाशौचमाह ।

**क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति ।**
**एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति ॥ ४४ ॥**

यो ब्राह्मणो मृत क्षत्रियमज्ञानान्मौर्ख्यादनुगच्छति स एकाहमशौच कृत्वा परदिने सचैल स्नात्वाग्नि स्पृष्ट्वा पञ्चगव्य पीत्वा शुध्यति। अत्र घृतपञ्चगव्ययोः शुध्यर्थत्वेन समानकार्यत्वाद् घृतप्राशननिवृत्तिः।

विप्रस्य वैश्यानुगमनाशौचमाह।

**शवं तद्वैश्यमज्ञानाद्ब्राह्मणो ह्यनुगच्छति।**
**कृत्वाशौचं द्विरात्रं च प्राणायामान् षडाचरेत्॥४५॥**

यो ब्राह्मणो मृत वैश्यमज्ञानान्मौर्ख्यादनुगच्छति स द्विरात्रमाशौच कृत्वा परदिने सचैल स्नात्वाग्नि स्पृष्ट्वा पञ्चगव्य प्राश्य षट् प्राणायामानाचरेत् पूर्वञ्च पञ्चगव्येन घृतस्य निवर्तनात्तदेवानुवर्तते न घृतम्।

विप्रस्य शूद्रानुगमनाशौचमाह।

**प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः।**
**अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत्॥ ४६॥**
**त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।**
**प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति॥४७॥**

यो ब्राह्मणो ज्ञानदुर्बलो मुर्खो मृत शूद्र स्मशान नीयमानमनुगच्छेत्स त्रिरात्रमाशौच कृत्वा परदिने समुद्रगा नदीं गत्वा सचैलं स्नात्वाग्नि स्पृष्ट्वा प्राणायामशत विधाय घृत प्राश्य विशुध्यति।

अत्र घृतोपादान मध्ये पञ्चगव्येन निवर्त्तितस्य पुनः प्राप्त्यर्थम्। एव क्षत्रियस्य वैश्यशूद्रानुगमने एकरात्रद्विरात्रे वैश्यस्य शूद्रानुगमने एकाह इत्यूहनीयम्।

एव शूद्रानुगमननिषेधे द्विजैस्ते कथमनुसरणीया इत्यत आह।

**विनिवर्त्त्य यदा शूद्रा उदकान्तमुपस्थिताः।**
**द्विजैस्तदानुगन्तव्या एष धर्मः सनातनः॥ ४८॥**

उदकान्तमुदकक्रियान्त विनिवर्त्य कृत्वा आशौचसमाप्त्यावधि यावत् यदा उपस्थिताः स्थितास्तदा द्विजैस्त्रैवर्णिकैरनुगन्तव्याः शोकापनोदायानुसर्त्तव्या इति। शूद्रस्य त्रैवर्णिकानुगमने तु सत्योक्तिः 'स्पर्शं विना-

नुगमने शूद्रो नक्तेन शुध्यति" इति पारस्करस्मरणात् । रात्रौ चेत्सूर्योदयेन । एव ब्राह्मणस्य ब्राह्मणार्थन्तद्गृहं गत्वा रोदनेऽहोरात्रमन्यथार्वागस्थिसञ्चयात्स्नानमूर्ध्वमाचमन क्षत्रियवैश्यार्थे तद्गृहे गत्वा रोदने द्विरात्रमन्यथार्वागस्थिसञ्चयादहोरात्रमूर्ध्वं सज्योतिः शूद्रार्थे तद्गृहङ्गत्वा रोदने त्रिरात्रमन्यथार्वागस्थिसञ्चयाद् द्विरात्रमूर्ध्वमेकाह इति । एवमेवानन्तरैकान्तरार्थे रोदनेऽन्येषामपि ज्ञेय प्रातिलोम्येन रोदने तु स्नानमेव सर्वेषामित्यादि षडशीतिविवृतौ शुद्धिचन्द्रिकायामेवाविष्कृतमिति नेहोच्यते ।

चेतश्चञ्चलचारुचित्रविषया भुक्तिर्यदि श्रेयसी
मुक्तिर्वा यदि वाञ्छिताऽभयपरा ऽऽनन्दात्मिका स्थेयसी ।
तल्लक्ष्मीनिलयं विमृश्य सलय गङ्गाम्भसः सर्वदा
तिष्ठ श्रीमधुसूदनाङ्घ्रिकमलासक्त हि नक्तन्दिवम् ॥ १ ॥
धर्माधिकारिकुलकैरवकाननेन्दु—
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते विवृतस्तृतीयो-
ऽध्यायः कलावुचितशुद्धिविनिर्णयाय ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयविनायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहराया तृतीयोऽध्यायः ॥



॥ श्रीगणेशायनमः ॥

सुरालयनिवासिनां मरकतप्ररोहभ्रमो
भुवस्तलनिवासिनामसितरत्नयूपभ्रमः ।
अधोभुवनवासिनां रविसुताजलौघभ्रम-
स्त्रिविक्रमपदक्रमो जयति यत्र सोऽभूत्क्रमः ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
शास्त्रे पराशरकृते क्रियते चतुर्था-
ऽऽध्याये प्रकीर्णकसुतादिविनिर्णयोऽत्र ॥ १ ॥

अथोक्तवक्ष्यमाणयोराचारप्रायश्चित्तकाण्डयोः शेषान् धर्मान् अन्तरा प्रतिपादयितुं सङ्करकाण्डमारभते । तत्र पूर्वाध्यायान्ते हीनवर्णेशवानुगमनरूपप्रकीर्णप्रायश्चित्ताभिधानेन बुद्धिस्थे प्रकीर्णक एवोद्बन्धनमृतोद्वहनादि प्रायश्चित्त विधातुं तन्निन्दामाह ।

अतिमानादतिक्रोधात्स्नेहाद्वा यदि वा भयात् ।
उद्बन्धनीयात् स्त्री पुमान् वा गतिरेषा विधीयते ॥१॥

मानमतिक्रान्तोऽतिमानो नीचाधिक्षेपादिस्तस्मादतिक्रोधः पौनःपुन्येन मर्म्मोद्घाटनादौ क्रोधावेशः स्नेहभययोरप्यतिशब्दानुषङ्गेणातिस्नेहस्य द्रोणदशरथादिमरणहेतुत्वमतिभयस्य च महापराधिभृत्यादिमरणहेतुत्वं स्फुटी भवति ततश्च स्त्री पुमान्वा जातिविशेषानादरेण यद्युद्बन्धनीयादुद्बन्धनेन गलपाशेन म्रियेत तदैषा वक्ष्यमाणा गतिर्नरकप्राप्तिर्भवति उद्बन्धनीयादिति क्र्यादेर्बन्धबन्धन इत्यस्माद्धातोर्विधिलिङि श्नाप्रत्यये कृते व्यत्ययो बहुलमित्यनेन द्विविकरणतायां शपि कृते निष्पद्यते ।

प्रतिज्ञातां गतिं दर्शयति ।

**पूयशोणितसंपूर्णे त्वन्धे तमसि मज्जति ।**
**षष्ठिवर्षसहस्राणि नरकं प्रतिपद्यते ॥ २ ॥**

पूयशोणिताभ्यां सम्पूर्णेऽन्धे तमसि अन्धतामिस्राख्ये नरकविशेषे षष्ठिवर्षसहस्राणि मज्जति तत्र च नरकयातनां तावत्कालमेव प्रतिपद्यते प्राप्नोति । तथा चेशावास्यश्रुतिः ।

असूर्या नाम ते लोका अन्धेन तमसा वृत्ताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ इति ।

वक्ष्यमाणप्रायश्चित्तनिमित्तं निषेधति ।

**नाशौचं नोदकं नाग्निं नाश्रुपातं च कारयेत् ।**

आशौचं दशाहादि उदकमुदकदानमग्निमग्निदानमश्रुपातो रोदनं चकाराद्वहनादि न कारयेन्न कुर्यात्प्रत्येकं निषेधेन तदतिक्रमाणामपि प्रत्येकमेव प्रायश्चित्तनिमित्तता गम्यते । अत्र प्रकरणार्थमाह ब्रह्मपुराणे ।

क्रोधात्प्राय विषं वह्निं शस्त्रमुद्बन्धनं जलम् ।
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ॥
महापातकिनो ये च पतितास्ते प्रकीर्तिताः ।
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसंचयः ॥
न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित् ॥ इति ।

उक्तनिषेधातिक्रमे प्रायश्चित्तमाह ।

**वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा ॥ ३ ॥**
**तप्तकृच्छ्रेण शुध्यन्तीत्येवमाह प्रजापतिः ।**

ये तादृशशवस्य वोढारो वाहका अग्निप्रदातारो दाहकाः पाशच्छेदकरा गलपाशान् छेत्तारस्तथाशब्देनाशौचोदकदानादिकर्तारश्च ते सर्वे वक्ष्यमाणलक्षणेन तप्तकृच्छ्रेण शुध्यन्तीति प्रजापतिराह । एतच्चाकामतो दाहादिकरणे कामतस्तु द्विगुणं तदुक्तं ब्राह्मे ।

एतानि पतितानां तु यः करोति विमोहितः ।
तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा ॥ इति ।

एतानि दाहादीनि पूर्वप्रकृतत्वात्, विमोहितो मूर्खः, यद्यप्यत्रो-भयत्रापि कामाकामपदे न स्तस्तथाप्येकगुणद्वैगुण्यश्रवणादेव तयोः कामाकामविषयत्वं सिध्यति । "विहितं यदकामाना कामात्तद्द्विगुणं भवे-दिति"स्मरणात् । उपपातकिसंस्कारे प्रायश्चित्तमाहात्रिः ।

उपपातकसंयुक्तो मानवो म्रियते यदि ।
तस्य संस्कारकर्त्ता च प्राजापत्यं समाचरेत् ॥ इति ।

उद्बन्धनन्यायमन्यत्राप्यतिदिशति ।

**गोभिर्हतं तथोद्बन्धं ब्राह्मणेन तु घातितम् ॥ ४ ॥**
**संस्पृशन्ति तु ये विप्रा वोढारश्चाग्निदाश्च ये ।**
**अन्ये ये चानुगन्तारः पाशच्छेदकराश्च ये ॥ ५ ॥**
**तप्तकृच्छ्रेण शुद्धास्ते कुर्युर्ब्राह्मणभोजनम् ।**
**अनडुत्सहितां गां च दद्युर्विप्राय दक्षिणाम् ॥ ६ ॥**

यथोद्बन्धनमृतं तथा गोहतं ब्राह्मणहतं चेति व्याख्येयमन्यथा पौनरुक्त्यात् । गोग्रहणं शृङ्ग्याद्युपलक्षणम् । तदाह ब्रह्मपुराणे ।

शृङ्गिदंष्ट्रिनखिव्यालविषवह्निमहाजलैः ।
सुदूरात्परिहर्त्तव्यैः कुर्वन् क्रीडां मृतस्तु यः ॥
नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता ।
निगृहीतः स्वयं राज्ञा चौरदोषेण कुत्र चित् ॥
परदारान्हरन्तश्च रोषात्तत्पतिभिर्हताः ।
असमानैश्च सङ्कीर्णैश्चण्डालाद्यैश्च विग्रहम् ॥
कृत्वा तैर्निहितास्तद्वच्चण्डालादीन्समाश्रिताः ॥ इति ।

अत्र गवादिभिः क्रीडन् नागानां विप्रियं कुर्वन्, इत्यादिना आत-तायितया बुद्धिपूर्वप्रवृत्त्या मृतानामाशौचाद्यभाव उच्यते । प्रामादिकमरणे तु पातित्याभावादस्त्येवाशौचम् ।

यदि कश्चित्प्रमादेन म्रियतेऽग्न्युदकादिभिः ।
तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया ॥

इत्यङ्गिरः स्मरणात् । तदेतान्ये संस्पृशन्ति वहन्ति दहन्ति वा ये चान्येऽनुगच्छन्ति पाशादिकं च्छिन्दन्ति ते सर्वे तप्तकृच्छ्रं कुर्युरित्यतिदिश्य ब्राह्मणान्भोजयित्वा गोमिथुनं दद्युरित्युपदिश्यते । तदाह च्यवनः । आत्मघातकस्पर्शनदहनवहने तप्तकृच्छ्रं चरेद्वत्सगावौ दक्षिणा ब्राह्मणेभ्विति ।

तप्तकृच्छ्रस्यानेकरूपत्वात्स्वाभिमतस्य स्वरूपमाह ।

**त्र्यहमुष्णं पिबेद्वारि त्र्यहमुष्णं पयः पिबेत् ।**
**त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षो दिनत्रयम् ॥ ७ ॥**
**षट्पलं तु पिबेदम्भस्त्रिपलं तु पयः पिबेत् ।**
**पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते ॥ ८ ॥**

नीरक्षीरघृतवातानामेकैकं प्रतित्र्यहं षट्त्र्येकपलपरिमितं पिबेदेवं द्वादशाहसाध्यस्तप्तकृच्छ्रो भवति । तथा च मनुः ।

तप्तकृच्छ्रं चरेद्विप्रो जलक्षीरघृतानिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः ॥ इति ।

तप्तपदं च समानकालद्रव्यं शीतकृच्छ्रं व्यावर्त्तयति । तथा च यमः ।

त्र्यहं शीतं पिबेत्तोयं त्र्यहं शीतं पयः पिबेत् ।
त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परं त्र्यहम् ॥ इति ।

त्रिरात्रं चोष्णमाहृतमिति मूलपाठे तु त्रिवारमास्यपूरणमुष्णोदकवाप्यं पिबेदित्यर्थः ।

पतितसंसर्गे प्रायश्चित्तं विधातुं तन्निन्दामाह ।

**यो वै समाचरेद्विप्रः पतितादिष्वकामतः ।**
**पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥ ९ ॥**
**मासार्धमासमेकं वा मासद्वयमथापि वा ।**
**अब्दार्धमब्दमेकं वा भवेदूर्ध्वं तु तत्समः ॥ १० ॥**

यो विप्रोऽन्यो वा पतितादिषु पतिता ब्रह्महादयो वक्ष्यमाणाश्चत्वार आदिशब्देनातिदिष्टपातित्यानां पतितापत्यादीनां ग्रहणं "पतितोत्पन्नः पतितो भवतीति" वसिष्ठस्मरणात्। तेषु च पञ्चाहं दशाहं द्वादशाहं पक्षं मासं मासद्वयं षण्मासं संवत्सरं वा समाचरेत्सम्यगाचारं वक्ष्यमाणासनादिभिर्व्यवहारं कुर्यात्सोऽपि पापभाग्भवतीति सम्बन्धः। तथा च वक्ष्यति द्वादशान्ते।

आसनाच्छयनाद्यानात्सम्भाषासहभोजनात्।
सङ्क्रामन्तीह पापानि तैलबिन्दुरिवाम्भसि ॥ इति।

संवत्सरादूर्ध्वं तु पतितसंसर्गेण तत्समः पतितसमो भवेत्तु पतितः, राजसमो मन्त्रीतिवत्।

तथा च पाद्मे। महापातकिन उपक्रम्य
एतैः सह समायोगं यः करोति दिने दिने।
तुल्यतां याति सोऽप्याशु कलौ संवत्सरे गते ॥ इति।

एतैः पूर्वोक्तैर्महापातकिभिः सह दिने दिने प्रतिदिनं समायोगं संसर्गं यः करोति सोऽपि कलौ संवत्सरे गतेऽतीते स ह्याशु स्वल्पसंसर्गेणापि तुल्यतां साम्यं यातीत्यर्थः। ननु "संवत्सरेण पतति पतितेन सहाचरन्नि" त्यादिशङ्खादिवाक्यैः संवत्सरमात्रसंसर्गेण पातित्यस्यैवाभिधानात्कथं संवत्सरानन्तरं संसर्गेण पतितसाम्यमेव न पातित्यमिति चेत्। सत्यम्। युगभेदेन व्यवस्थितविषयाणां स्मृतीनामेकमूलत्वासम्भवेनैकवाक्यत्वाभावात् संवत्सरेण पातित्योत्पत्तौ वक्ष्यमाणषाण्मासिकप्रायश्चित्तानुपपत्तेश्चात्र सम्पूर्णमहापातकप्रायश्चित्ताभावात्। न च तदन्यथानुपपत्त्या संवत्सरशब्दः किंचिदूनसंवत्सरपरः कल्प्यः। मुख्यार्थे बाधकाभावेन लक्षणाया अन्याय्यत्वात्। न च वचनान्तरविरोधो बाधकः। तस्यैतच्छास्त्रोत्पत्तिप्रयोजनप्रपञ्चनेनैव परिहृतत्वात्। पातित्यं तु उत्पादकाभावादेव न, कलौ पतति कर्मणेत्यभिधानात्। संसर्गपातित्यस्य युगान्तरविषयत्वेन त्रिपाद्यां व्यवस्थापनात्। अत एव संसर्गदोषः पापे-

ष्विति कलिवर्ज्यप्रकरणेऽभिहितमित्यलम् । पृथक् पृथक् व्यवस्थितप्रायश्चित्तविधानार्थमनेकपक्षोत्कीर्त्तन विधित्सितप्रायश्चित्तस्याल्पताबोधनायाकामत इत्युक्तम् ।

इदानीमुक्तपक्षेषु प्रायश्चित्तान्याह ।

**त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् ।**
**तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत् ॥ ११ ॥**
**चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे मतः ।**
**कुर्याच्चान्द्रायणं षष्ठे सप्तमे त्वैन्दवद्वयम् ॥ १२ ॥**
**शुध्यर्थमष्टमे चैव षण्मासान् कृच्छ्रमाचरेत् ।**

तल्लक्षणमाह विष्णु । अथ कृच्छ्राणि भवन्ति त्र्यहं नाश्नीयादिति । द्वितीयपक्षे दशाहसंसर्गे कृच्छ्रं प्राजापत्यमाचरेत् । निरुपपदः कृच्छ्रशब्दः प्राजापत्यमाचष्टे कृच्छ्रं प्राजापत्यमिति देवलवचनात् । तत्स्वरूपमाह मनुः ।

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं तु नाश्नीयात्प्राजापत्यं चरन् द्विजः ॥ इति ।

यद्यपि प्राजापत्यं स्वयमप्युपरिष्टाद्वक्ष्यति तथापि तस्य प्राजापत्यद्वयस्थानीयत्वाच्चेहोपयोगः । तृतीयपक्षे द्वादशाहसंसर्गे सान्तपनकृच्छ्रमाचरेत् । तल्लक्षणमाह जाबालिः ।

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् ।
एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनम् ॥
कृच्छ्रं सांतपनं नाम सर्वपापप्रणाशनम् ॥ इति ।

यद्यपि

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् ।
जग्ध्वा परेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं चरन् ।

इति याज्ञवल्कीयं द्वैरात्रिकमपि कृच्छ्रं सांतपनमस्ति तथापि तन्न प्रकृतोपयोगि द्वितीयपक्षोक्तात्प्राजापत्यान्न्यूनत्वात् । न चोदाहृतस्यापि सप्ताह-

साध्यत्वात्प्राजापत्यन्यूनतास्त्येवेति वाच्यम् । त्रिरात्रोपवासवतः प्राजापत्यादस्य सप्ताहोपवासात्मकस्य पञ्चगव्याशनक्लेशेनाधिकत्वादिति । चतुर्थे पक्षे पक्षसंसर्गे दशाहमुपवासमाचरेत् । यद्यप्यत्रोपवासो न श्रुतस्तथापि वक्ष्यमाणपराकसाहचर्यात्कल्पनीयः । तथाविधव्रतान्तराभावात् । पञ्चमपक्षे माससंसर्गे पराकः कर्तव्यतया मतः । तत्स्वरूपमाह याज्ञवल्क्यः । द्वादशाहोपवासेन पराकः परिकीर्त्तित इति । षष्ठपक्षे मासद्वयसंसर्गे वक्ष्यमाणलक्षणं चान्द्रायणं कुर्यात् । सप्तमपक्षे षाण्मासिकसंसर्गे ऐन्दवं चान्द्रायणं तयोर्द्वयं कुर्यात् । अष्टमपक्षे संवत्सरसंसर्गे षण्मासपर्यन्तं नैरन्तर्य्येण कृच्छ्रं प्राजापत्यमभ्यसेत् । षण्मासाभ्यासेन च पञ्चदशसङ्ख्योऽसौ सम्पद्यते । शुध्यर्थमिति सर्वशेषः । संवत्सरश्चात्र सावनमानेन षष्ठ्यधिकशतत्रयाहोरात्रो गृह्यते । ततश्चाब्दमेकं वेत्यादावत्यन्तसंयोगवाचिन्या द्वितीयया नैरन्तर्याभावेऽप्यन्तरितदिवसगणनया षष्ठ्यधिकशतत्रयदिवसव्यापित्वं संसर्गे साधनीयमेव च पञ्चाहादिषाण्मासिकान्तेषु सर्वेषु पक्षेषु ज्ञेयम् । एते च प्रायश्चित्तकल्पा अकामतः संसर्गे ज्ञेयास्तथोपक्रमात् । कामतः संसर्गे तु धर्मप्रदीपोक्ताः ।

पञ्चाहे तु चरेत्कृच्छ्रं दशाहे तप्तकृच्छ्रकम् ।
द्वादशाहे तु संसर्गे उपवासो दशाचरेत् ॥
पराकस्त्वर्द्धमासे स्यान्मासे चान्द्रायणं चरेत् ।
मासत्रये तु कुर्वीत कृच्छ्रं चान्द्रायणोत्तरम् ॥
षाण्मासिके तु संसर्गे कृच्छ्रं त्वब्दार्द्धमाचरेत् ।
संसर्गे चाब्दिके कुर्यादर्द्धं चान्द्रायणोत्तरम् ॥
अत ऊर्ध्वं तु संसर्गे षडब्दं व्रतमाचरेत् ॥ इति ।

ननु निमित्तपरिगणने नवमोऽपि पक्ष उपन्यस्तो "भवेदूर्ध्वं तु तत्सम इति तत्कथमत्र प्रायश्चित्तं नोपदिष्टमिति चेत् । सत्यम् । समत्वाभिधानेनैव तस्योक्तत्वात् । यथा हि पतितसंसर्गो न पातित्यहेतुः कलौ पतति कर्मणेत्यभिधानात् संसर्गदोष इति कलिवर्ज्ये निषेधाश्च । महापातकप्रकरणे तत्प्रायश्चित्तानभिधानाच्च । ततश्च महापातकत्वा-

भावे पापहेतुत्वे च सति समत्वाभिधानेन प्रायश्चित्तमतिदेशेनागच्छत्यत्रान्तरव्यवहितत्वादर्द्धमेव भविष्यति गुर्वधित्तेपादिष्विव । तथा च स्मरन्ति सग्रहकाराः ।

व्रतादिदेशे पादोनं समे त्वर्धं प्रकीर्तितम् ।
अतिदेशे स्वतः प्राप्तिः समत्वे चानुमानिकी ॥ इति ।

अत एव धर्मप्रदीपे वर्षाधिकससर्गेऽपि षडब्दमेवोक्तम् । अत ऊर्ध्वं तु ससर्गे षडब्दव्रतमाचरेदिति । अनेन कामतोऽपि वर्षाधिकससर्गे षडब्दाभिधानेनाकामतस्तादृशससर्गेऽर्द्धं प्रायश्चित्त कैमूतिकन्यायेनैव दर्शितमिति सर्वं सुस्थम् । एतेन प्रकीर्णकप्रायश्चित्तप्रस्तावे पतितससर्गस्य महापातकस्य प्रायश्चित्ताभिधानमसगतमिति चोद्यं निरस्तम् । उक्तकल्पानां प्रकीर्णत्वात् ।

ननु

पापेन पतितैर्नैषां संसर्गं याति मानवः ।
स तस्यैव व्रत कुर्यात्तत्ससर्गविशुद्धये ॥

इति मन्वादिभिः पूर्णप्रायश्चित्ताभिधानात्कथमिदमर्द्धं प्रायश्चित्तमुच्यते । सत्यम् । "संवत्सरेण पतति पतितेन सहाचरन्" इत्यनेन पूर्वपातित्यमभिधाय तदभिधानात् पातित्ये च पूर्णं प्रायश्चित्त युक्तमेव । प्रकृते च न पातित्यमभिमतमित्युक्तमेव । नचैवमेभिस्तु सवसेद्योवै वत्सर सोऽपि तत्सम इति याज्ञवल्क्यवाक्ये ऽप्यर्द्धं प्रायश्चित्त व्याख्यायेत समत्वाभिधानादिति वाच्यम् । एते महापातकिनो यश्च तैः सह सवसेदित्यनेनाहत्य ससर्गिणोऽपि तत्र महापातकित्वोपदेशात् । उक्तपक्षेषु प्रायश्चित्तानुष्ठानानन्तर तदङ्गतया पक्षसख्याप्रमाणेन प्रथमपक्षे कि चित्सुवर्ण द्वितीये तद्द्विगुण तृतीये तत्त्रिगुणमित्यादिक्रमेण दक्षिणा दातव्या सुवर्णानीति नपुसकनिर्देशाद्धात्कि चित् परिमाण सुवर्णं षोडशमाषपरिमित तस्य पुल्लिङ्गसुवर्णशब्दवाच्यत्वादिति । पतितोत्पन्नत्वमपि ससर्गविशेषः । तदाह वसिष्ठः । पतितोत्पन्नः

पतितो भवति अन्यत्र स्त्रियाः सा हि परगामिनी तामरिक्थामुपेया दिति। कन्योद्वाहे विशेषमाह हारीतः। पतितस्य कन्या विवस्त्रामाप्लाः व्याहोरात्रोपोषिता प्रातः शुक्लेन वाससाच्छाद्य नाहमेतेषा न ममैत इति त्रिरुच्चैरभिदधाना तीर्थेषु गृहेषु वोद्वहेदिति। उपोषिता प्रायश्चित्ता-नन्तर प्रायश्चित्त त्वाह बौधायनः। अशुचिशुक्रोत्पन्नानां तेषां शुद्धिमि-च्छता प्रायश्चित्त पतनीयाना तृतीयोंशः स्त्रीणामशात्तृतीयानामिति। पतितोत्पन्नाना शुद्धिमिच्छता पतितप्रायश्चित्तस्य तृतीयोंशः प्रायश्चित्त स्त्रीणा तु तृतीयस्यापि तृतीयोंश इत्यर्थः। तत्संसर्गे तु पूर्वोक्तकालेषु पूर्वोक्ता एव प्रायश्चित्तकल्पाः कामाकामाभ्या विज्ञेयाः।

वर्षाधिकसंसर्गे तु तत्रापि मुख्यप्रायश्चित्तार्द्धमेव साम्याभिधानसा मर्थ्यात्। एव मुपपतक्यादिसंसर्गेऽप्यूह्येयम्।

एवमुपदिष्टप्रायश्चित्तानि निमित्तान्यभिधायेदानीमुह्येयप्रायश्चि त्तान्यपि कानि चिन्निमित्तान्याह।

**ऋतुस्नाता तु या नारी भर्त्तारं नोपगच्छति।**
**सा मृता नरके याति विधवा च पुनः पुनः॥ १४॥**

रजोदर्शनदिनादारभ्य षोडशदिनानि ऋतुस्तत्र चतुर्थदिवसे स्नाता या स्वयमेव भर्त्राहूता वा मैथुनाय नोपसर्पति सा मरणानन्तर नरकम-नुभूय पश्चादनेकजन्मसु पुनः पुनर्विधवा भवति। तथा च नारदीये।

आहूता या तु वै भर्त्रा नानुयाति त्वरान्विता।
सा ध्वाङ्क्षी जायते पुत्रि दशजन्मानि पञ्च च॥ इति।

अत्र चानन्तरवक्ष्यमाणार्द्ध कृच्छ्रार्द्धं पादकृच्छ्रमूह्येयम्। स्त्रीणामर्द्धं प्रकीर्तितमिति न्यायात्।

न केवलं स्त्र्येव प्रत्यवैति किं तु पुरुषोऽपीत्याह।

**ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।**
**घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः॥ १५॥**

यः पुमान्स्वविधौ विद्यमानः स्वस्थोऽपि सन् द्वेषादिना ऋतुस्नातां भार्यां चतुर्थदिनादारभ्याषोडशादन्यतमायां रात्रौ नोपगच्छति स घोरायां भ्रूणहत्यायां गर्भहननप्रत्यवायेन युज्यत इति न संदेहः । तथा च देवलः ।

यः स्वदारान् ऋतुस्नातां स्वस्थः सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति प्रजां प्राप्तां विनाश्य सः ॥ इति ।

अत्रोचेय प्रायश्चित्तमाह बृहस्पतिः । ऋतौ न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्द्धमाचरेदिति ।

न केवलं ऋत्वतिक्रमे स्त्रियाः प्रत्यवायः किं तु भर्त्रतिक्रमेऽपीत्याह ।

**दरिद्रं व्याधितं धूर्त्तं भर्त्तारं यावमन्यते ।**
**सा शुनी जायते मृत्वा शूकरी च पुनः पुनः ॥ १६ ॥**

नानाविधभोगकामनया दरिद्रं निस्वं निरन्तरं तच्चित्तानुरञ्जनासामर्थ्यसम्भवात्क्रोधाद्व्याधितं दीर्घतीव्रामयग्रस्तं परस्त्रीसम्भोगसम्भवान्मत्सराद्धूर्त्तं परस्त्रीलम्पटं भर्त्तारं स्वपतिं या स्त्र्यवमन्यते तिरस्करोति सा मृत्वा शुनी भूत्वा पुनः पुनः शूकरी जायते । तथा च ब्रह्माण्डपुराणे ।

कामाद्रोषान्मत्सराद्वा भर्त्तारं याऽवमन्यते ।
सा सप्तजन्मकं यावन्नारकी स्यान्न संशयः ॥ इति ।

अत्रोचेय प्रायश्चित्तमाहापस्तम्बः । भर्तुर्व्यतिक्रमे कृच्छ्रमिति व्यतिक्रमस्तिरस्कारो न व्यभिचारस्तत्र यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतमित्यनेन प्रायश्चित्तान्तराम्नानेन कृच्छ्रप्रायश्चित्तासम्भवात् ।

न केवलपत्यवमानेनैव स्त्री प्रत्यवैति किं तु तच्छुश्रूषापरिहारेण व्रताद्यनुष्ठानेनापीत्याह ।

**पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् ।**
**आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ॥ १७ ॥**

जीवति पत्यौ या स्त्री उपवासव्रतयात्रादिकमनुतिष्ठेत्सा भर्तृप्रतिकूलानुष्ठानेन तदायुर्हरति स्वयं च निषिद्धानुष्ठानेन नरकं प्राप्नोति । अत एवाहात्रिः ।

न व्रतेनोपवासेन धर्मेण विविधेन च ।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥ इति ।

तर्हि पतिशुश्रूषाया अविरोधेन तदनुष्ठाने को बाध इत्यत आह ।

**अपृष्ट्वा चैव भर्त्तारं या नारी कुरुते व्रतम् ।**
**सर्वं तद्राक्षसान् गच्छेदित्येवं मनुरब्रवीत् ॥ १८ ॥**

या स्त्री पतिं पितरं पुत्रं वाऽपृष्ट्वा अननुमान्य व्रताद्याचरेत्तदनुष्ठित व्रतादि सर्वं राक्षसास्तर्पयति नास्याभिमतं फलं साधयतीति मनुराह । तदाह मार्कण्डेयः ।

नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन वा ।
निष्फलं तु भवेत्तस्या यत्करोति व्रतादिकम् ॥ इति ।

अस्यापि भर्त्रतिक्रमरूपत्वात्पूर्वोक्तकृच्छ्रमेव प्रायश्चित्तम् । एवं च पतिशुश्रूषाया अविरोधेन तदनुज्ञयानुष्ठितं व्रतादि धर्मजनकं स्त्रिया इति पूर्वोत्तरवाक्याभ्यामुक्तं भवति । तदेतत्स्पष्टमाहतुः शङ्खलिखितौ । न व्रतोपवासनियमेज्यादानं दमो वानुग्रहकरः स्त्रीणामन्यत्र पतिशुश्रूषायाः कामं तु भर्तुरनुज्ञया व्रतोपवासनियमादीनामन्यतमः स्त्रीधर्म इति ।

इदानीं स्त्रीणामव्यवहार्यतानिमित्तमाह ।

**बान्धवानां सजातीनां दुर्वृत्तं कुरुते तु या ।**
**गर्भपातं च या कुर्यान्न तां सम्भाषयेत्क्वचित् ॥ १९ ॥**

या स्त्री बान्धवानामसपिण्डानां सजातीनां सपिण्डानां च दुर्वृत्तं प्राणवियोगानुकूलं विषप्रयोगाभिचारादिव्यापारं करोति या च गर्भपातमौषधादिप्रयोगेण करोति तां द्विविधामपि क्वचिदपि निमित्ते न सम्भाषयेन्न सम्भाषणादिभिर्व्यवहरेत्तस्यास्त्याज्यत्वात् । तथा च याज्ञवल्क्यः ।

व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्तृवधादौ च तथा महति पातके ॥ इति ।

भर्तृपदं तद्बन्धूनामप्युपलक्षणं "न भर्त्तारं तद्बन्धून् वा द्विष्यादिति" शङ्खलिखितस्मरणात् ।

ननु यथोक्तप्रायश्चित्तानुष्ठाने कुतो न व्यहार्यतेत्यत आह ।

**यत्पापंब्रह्महत्यायां द्विगुणं गर्भपातने ।**
**प्रायश्चित्तं न तस्याः स्यात्तस्मात् त्यागो विधीयते ॥२०॥**

यद्ब्रह्महनने पाप तद्गर्भपातने द्विगुण भवति ब्राह्मणगर्भविषयमेतत् । ब्रह्महत्यापापद्वैगुण्याभिधानात् ततश्चायमर्थः । यत्र गर्भत्व न तत्र ब्राह्मणत्व यथा क्षत्रियगर्भे, यत्र ब्राह्मण्य न तत्र गर्भत्वं यथा त्वचे, ब्राह्मणगर्भे चोभयमपीति परस्परासङ्कीर्णमेकत्र विद्यमानं पापद्वैगुण्यनिमित्त भवति पृथग्निषेधविषयत्वात् । यथा सवनस्थब्राह्मणवधे 'द्विगुण सवनस्थे तु ब्राह्मणे व्रतमादिशेदिति" तद्द्वैगुण्यात् । अत एव गोगर्भवधेऽप्यङ्गप्रत्यङ्गसपूर्णे द्विगुण गोव्रतं चरेदिति व्रतद्वैगुण्य वक्ष्यति । एव क्षत्रियादिगर्भेष्वप्यूह्यम् । नन्वेव पापद्वैगुण्य प्रायश्चित्तद्वैगुण्यमस्तु द्विगुण गोव्रत चरेदिति न्यायादत आह । तस्या ब्राह्मणादिगर्भघातिन्याः प्रायश्चित्त व्यवहारापादक नास्ति ।

नीचाभिगमन गर्भपातन भर्तृहिंसनम् ।
विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवम् ॥

इति योगिस्मरणात् । तस्मात्तस्यास्त्याग एव विधीयते । तथा च योगीश्वर । गर्भे त्यागो विधीयते गर्भभर्तृवधादौ च तथा महति पातक इति । त्यागश्च धर्मकार्यसम्भोगयोरेव न त्वात्यन्तिकः ।

पतितानामेष एव विधिः स्त्रीणा प्रकीर्तितः ।
वासो गृहान्तिक देयमन्न वासः सरक्षणम् ॥

इति तस्यैव स्मरणात् । ननु हत्वा गर्भमविज्ञातमेतदेव व्रत चरेदिति मनुना ब्रह्महत्याव्रतातिदेशात्कथ तदभाव इति चेत् ।

सत्यम् । तस्यामुष्मिकनरकादिनिवर्तकत्वेऽप्यैहिकव्यवहारानापादकत्वात् । तथात्वे त्याग विधिविरोधस्य दुष्परिहरत्वात् । तस्मात्प्रायश्चित्ताचरणेऽपि तस्या व्यवहार्यत्व नास्तीति सर्ववचनानामविरोधः । प्रायश्चित्त च गर्भगतवर्णानुसारेण कल्प्यम् । गर्भहा च यथावर्णमिति

स्मरणात् । एतदप्यनिर्णीतस्त्रिपुल्लिङ्गे । हत्वा गर्भमविज्ञातमिति स्मरणात् । विज्ञाते तु तत्तद्वधनिमित्तमेव । एतदपि स्वपतिनिहितगर्भविषयम् । जारगर्भवधे तु प्रायश्चित्तविशेषश्चतुर्विंशतिमतेऽभिहित ।

गर्भपाते विनिर्दिष्टं यथावर्णं विधिव्रतम् ।
जारगर्भे विशेषः स्याद्यथोक्तमृषिभिः पुरा ॥
ब्रह्मगर्भवधे कृच्छ्रमब्द सान्तपनाधिकम् ।
क्षत्रगर्भवधे चैव चरेच्चान्द्रायणद्वयम् ॥
वैश्यस्य चैन्दव प्रोक्त पराक' शूद्रघातने ।
प्रायश्चित्तमिद प्रोक्त गर्भपाते विशेषतः ॥ इति ।

इदानीं नास्तिक्ये तूपपातके प्रायश्चित्तमुक्त्वेतु तन्निन्दामाह ।

**न कार्यमावसथ्येन नाग्निहोत्रेण वा पुनः ।**
**स भवेत्कर्मचण्डालो यस्तु धर्मपराङ्मुखः ॥ २१ ॥**

यः श्रुतिस्मृत्युक्तधर्मेभ्य पराङ्मुखस्तेषामैहिकामुष्मिकफलसाधकत्वाभावाङ्गीकारेणाननुष्ठाता स जन्मना ब्राह्मणादिरपि कर्मणा चण्डालो भवेत् यतस्तस्यैवमुक्तिरावसथ्येन स्मार्ताग्निना अग्निहोत्रेण वा न कार्यं न प्रयोजन प्रत्यक्षेण फलानुपलम्भात् । को हि तद्वेद यदमुष्मिन् लोकोऽस्ति वा नवेति श्रुत्या च सशयाविष्करणात्तत्फलसद्भावे किं प्रमाणमिति । अत्रोक्तेयं प्रायश्चित्तमाह वसिष्ठ' । नास्तिक कृच्छ्र द्वादशरात्र चरित्वा विरमेन्नास्तिक्यान्नास्तिकवृत्तिस्त्वतिकृच्छ्रमिति । सकृदसकृन्नास्तिक्ये कृच्छ्रातिकृच्छ्रावित्यर्थ' । अत्यन्ताभ्यासे तु शव. । नास्तिके नास्तिकवृत्तिः सवत्सर ब्राह्मणगृहे भैक्ष्यं चरेदिति ।

नास्तिकनिन्दाप्रसङ्गेन बीजिक्षेत्रिणोः पित्रोरपि तामुक्त्वेतु पुत्रभेदकथने लौकिकौ तौ दृष्टान्तयति ॥

**ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।**
**स क्षेत्री लभते बीजं न बीजी भागमर्हति ॥ २२ ॥**

ओघो जलप्रवाहो वातो वात्या तयोरन्यतरेण परक्षेत्रादाहृत

अभिवाद्यैव शिरसा मत्कृते [1]द्विजसत्तमम् ।
[2]प्रसाद्य च सुतार्थं मे [3]सर्ववित्त्वं यथात्मना ॥ ३ ॥
श्रुत्वैव राज्ञो वचनं तदा [4]च द्विजसत्तमः ।
जगाम तत्र यत्रासौ वर्त्तते काश्यपात्मजः ॥ ४ ॥
प्रसाद्य च द्विजश्रेष्ठं शिरसाभिप्रणम्य च ।
अब्रवीत् [5]प्रस्तुतं वाक्यं राज्ञा यदभिचोदितम् ॥ ५ ॥
पुत्रस्ते समनुप्राप्तो यज्ञं कृत्वा [6]महात्मनः ।
राज्ञो दशरथस्यैष श्वशुरस्य [7]महात्मनः ॥ ६ ॥
पूर्वमेव हि तत्सर्वं [8]श्रुतं सम्बन्धकं कृतम् ।
यज्ञकर्म च वीरस्य राज्ञो दशरथस्य तत् ॥ ७ ॥
श्लाघनीयस्तु सम्बन्धी राजा देवसमो हि सः ।
ततो [9]महर्षिर्भगवान् तस्य राज्ञो महात्मनः ॥ ८ ॥
श्रुत्वा [10]च वचनं तस्य द्विजस्य [11]च महायशाः ।
गमने मतिमाधत्त पुत्रस्यानयने तदा ॥ ९ ॥
स हि शिष्यवृतस्तत्र प्रयातो द्विजसत्तमः ।
लोमपादस्य नगरीं रम्यां पुत्रदिदृक्षया ॥ १० ॥
सम्पूज्यमानो धर्मात्मा ग्रामैर्घोषैश्च सर्वशः ।

1 P द्विजसत्तम 2 G 3 प्रसादय &c but P has प्रसाद्यच 3 G 3 सर्वारंभ &c but P has सर्वावस्य &c 4 G 4 स &c 5 G 5 प्रसृत &c, P प्रमित &c. 6. G 6 महायशा but P has महात्मनः 7 P तथैवच 8, G. 7 श्रुत्वा &c 9 G 8 हर्षितवान् विप्र• & P मर्षितवान् विप्र. &c 10 G 9 तु &c 11. G सुमहायशा•

भक्ष्यभोज्यमुपादाय नरास्तं समुपागमन् ॥ ११ ॥
किंकराः समुपातिष्टन् रात्रिंदिवमतंद्रिताः ।
ऊचुः प्रणम्य शिरसा किं मुने करवामहे ॥ १२ ॥
तानब्रवीत् स विप्रेन्द्रः सर्वानेव समागतान् ।
किमर्थं क्रियते पूजा श्रोतुमिच्छामि तत्त्वतः ॥ १३ ॥
तत ऊचुर्महात्मानं सम्बन्धी ते नराधिपः ।
तस्याज्ञा क्रियते ब्रह्मन् व्येतु ते मानसो ज्वरः ॥ १४ ॥
श्रुत्वा [1]तु तेषां वचनं मनसो ह्लादनं शुभम् ।
प्रसादमगमद्राज्ञः सहामात्यपुरस्य सः ॥ १५ ॥
विभाण्डकवचः श्रुत्वा किंकरा हृष्टमानसाः ।
त्वरिता जग्मुराख्यातुं [2]राज्ञः प्रियनिवेदनम् ॥ १६ ॥
तच्छ्रुत्वा वचनं तेषां मनसः प्रीतिवर्द्धनम् ।
मंत्रिभिः सह धर्मात्मा प्रत्युद्गम्य नराधिपः ॥ १७ ॥
दृष्ट्वा तु मुनिशार्दूलं प्रणम्य च पुनः पुनः ।
[3]उवाच सफलं जन्म दर्शनात्तव सुव्रत ॥ १८ ॥
[4]तथेति च स राजानमुवाच द्विजसत्तमः ।
[5]माभूद्भयं ते राजेन्द्र प्रसन्नोऽस्मि तवानघ ॥ १९ ॥

---

1 P तेषाच &c 2 G 16 राज्ञश्चप्रियदर्शिन but P agrees without our text 3 For this line G 18-19 (a) अब्रवीद्राजशार्दूलो विभाण्डकमिदवचः ॥ अद्यमेसफल जन्म दर्शनात्तवसुव्रत (२) This line is wanting in P 4 Before this line P reads the line प्रत्युदगतश्च त राजा सामात्य सपुरोहित. । 5 G

ततः प्रसन्नो नृपतिः पुरस्कृत्य द्विजोत्तमम् ।
[1]प्राविशन्नगरीं श्रीमानर्चितः सर्वमङ्गलैः ॥ २० ॥
स्वलङ्कृतं गृहञ्चैव प्रावेशयदरिंदमः ।
पुरोहितेन सहितः प्रगृह्यार्घ्यं समाद्रवत् ॥ २१ ॥
अभिवाद्य पुनश्चैव न्यायतः प्रतिपूज्य च ।
तस्थुः प्राञ्जलयः सर्वे समासाद्य द्विजोत्तमम् ॥ २२ ॥
ततः शान्तां पुरस्कृत्य ताः स्त्रियः समलङ्कृताम् ।
न्यवेदयन्त विप्राय स्नुषेयं तव मानद ॥ २३ ॥
प्रतिगृह्य स तां शान्तां समालिङ्ग्य च धर्मवित् ।
अङ्के निवेश्य च तदा विस्मयं परमं गतः ॥ २४ ॥
द्विजोत्सङ्गात् समुत्थाय [2]अभिवाद्य द्विजोत्तमम् ।
[3]प्राविशत् प्राञ्जलिर्भूत्वा श्वशुरस्य समीपतः ॥ २५ ॥
[4]सो ऽनुजज्ञे तथा शान्तां राजानं चैव योषितः ॥
प्रायश्चित्तं च कृतवान् पुत्रस्य द्विजसत्तमः ॥
[5]महर्षिभिः पूज्यमानः ससुतश्च वनं ययौ ॥ २६ ॥

आदिकाण्डे ऋष्यशृङ्गस्य वनगमनम् ॥

---

20 मातेभयभूद &c  1 P प्रविश्य नगरी &c  2 G 25 साभिवाद्य &c  3 G 26 आविशत &c  4 G 26 सो ऽनुज्ञाप्य &c but P has सो ऽनुजज्ञे &c After this line of our text P hasthe lines·—जग्मुरादाय शाता च सर्वा नरवरस्त्रियः । ऋष्यशृग पुरस्कृत्य पुरस्कृतमुपस्थित ॥ सो ऽभिवाद्य गुरु तत्र तस्थौ प्राञ्जलिरग्रत । स पुत्र समुपाघ्राय बाहुभ्या परिषस्वजे ॥ अके समुपवेश्यैन तत· प्रोवाच धर्मवित्। गच्छाव पुत्र भद्रते वनवासोह्यनुत्तम.॥ ब्राह्मणस्य द्विजश्रेष्ठ ब्रह्मणा सप्रकल्पित· । श्रुत्वैवतु पितुर्वाक्य प्रतस्थे द्विजसत्तम ॥  5 P महर्षि. पूज्यमानश्च &c

XIX

[1]पित्रा चैव यथाकालं स संपृष्टो महात्मना ।
सर्वमावेदयामास पित्रे वृत्तमशेषतः ॥ १ ॥
स चापि सुभृशं प्रीतस्तच्छ्रुत्वा पुत्रभाषितम् ।
यज्ञवृत्तमशेषेण हविषस्तस्य चोद्भवम् ॥ २ ॥
अनावृष्ट्यां च घोरायां देवस्याभिप्रवर्षणम् ।
लोमपादस्य विषये पूजां पुत्रस्य चोत्तमाम् ॥ ३ ॥
वध्वाश्च लाभं शान्ताया रूपवत्या धनस्य च ।
लोमपादेन सम्बन्धं राज्ञा दशरथेन च ॥ ४ ॥
राज्ञो दशरथस्यापि यज्ञमिष्टवतस्तदा ।
सुकृतस्य फलं जातं प्रत्यक्षं भुवि दुर्लभम् ॥ ५ ॥
प्रकृत्या पुण्यशीलस्य भूय एव तदाभवत् ।
धर्मानृशंस्यं सत्येषु पुण्ये चाभिरतं मनः ॥ ६ ॥
अवाप्तं चात्मनो मेने लोके जन्मसमुद्भवम् ।
तदवाप्य फलं पुण्यं सुकृतस्य स्वकर्मणः ॥ ७ ॥
तिस्रो महिष्यस्तास्तस्य राजर्षेरभवन् पुरा ।
गुणवत्योऽनुरूपाश्च [2]रूपेणाप्सरसां समाः ॥ ८ ॥
कौशल्या सदृशी [3]तत्र कैकेयी चाभवच्छुभा ।

---

1 This and the following 9 Slokas are wanting in B This Sloka is the 2nd one of this Chapter in P, the first being ऋष्यशृङ्गश्चनिर्वर्त्य क्रतुं राज्ञाभिसत्कृतः । जगाम शान्तया सार्धं पुनरेव यथागतं ॥ 2 P रूपेणाप्सरसोपमा 3 G 9. चैव &c, but P has तत्र &c

सुमित्रा वामदेवस्य [1]बभूव तरुणी सुता ॥ ९ ॥
तासां प्रजज्ञिरे पुत्राश्चत्वारोऽमिततेजसः ।
रामलक्ष्मणशत्रुघ्नभरता देवरूपिणः ॥ १० ॥
[2]जन्मतेजोगुणज्येष्ठं पुत्रमप्रतिमौजसम् ।
कौशल्या जनयद्रामं विष्णुतुल्यपराक्रमम् ॥ ११ ॥
कौशल्या शुशुभे तेन पुत्रेणामिततेजसा ।
[3]यथाधिपेन देवानामदितिर्वज्रपाणिना ॥ १२ ॥
भवाय स हि लोकानां रावणस्य वधाय च ।
विष्णोर्वीर्यार्द्धतो यज्ञे रामो राजीवलोचनः ॥ १३ ॥
तेजोवीर्याधिकः शूरः श्रीमान् [4]सर्वगुणाकरः ।
[5]बभूवानुपमश्चैव शक्राद्विष्णोश्च पौरुषे ॥ १४ ॥
[6]तथा लक्ष्मणशत्रुघ्नौ सुमित्रा जनयत् सुतौ ।

---

1 G 9 बभूवकरणीसुता, P करणी चाभवत सुता 2 For this, and the foll 3 Slokas, B XVIII. 8-12 ततो यज्ञे समाप्तेतु ऋतूनां षट समत्ययुः। ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ नक्षत्रेऽदितिदैवत्ये स्वोच्च संस्थेषु पंचसु। ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥ प्रोद्यमाने जगन्नाथ सर्वलोक नमस्कृत। कौशल्याजनयद्राम दिव्यलक्षणसयुत ॥ बिष्णोरर्धं महाभाग पुत्रमैक्ष्वाकुनन्दन । लोहिताक्ष महाबाहुरक्तोष्ठ दुन्दुभिस्वन ॥ कौशल्या शुशुभेतेन पुत्रेणामिततेजसा । यथावरेणदेवानामदितिर्वज्रपाणिना ॥ 3 After this Sl P has the 3 additional lines —सहि देवै सगंधर्वैर्याचितश्च महर्षिभिः। विष्णो पुत्रत्वमेधीति कृत्वात्मानं चतुर्विध ॥ राज्ञो दशरथस्याशुभार्यासु तिसृषु प्रभो। 4 G 14 गुणगणाकरः 5, G 14 बभूवानवर &c, but P has बभूवानुपम &c 6 For this and the following two Slokas B. 13-15 भरतोनामकैकेय्याजज्ञेसत्यपराक्रमः। साक्षाद्विष्णोश्चतुर्भाग. सर्वैः समुदितो गुणैः ॥ अथ लक्ष्मणशत्रुघ्नौ सुमित्रा जन

दृढभक्ती महोत्साहौ रामस्या[1]नुपमौ गुणैः ॥ १५ ॥
[2]तावप्यास्तां चतुर्भागौ विष्णोः संपिण्डितावुभौ ।
एक [3]एव चतुर्भागादपरस्मादजायत ॥ १६ ॥
भरतो नाम कैकेय्याः पुत्रः सत्यपराक्रमः ।
धर्मात्मा च महात्मा च प्रख्यातबलविक्रमः ॥ १७ ॥
[4]ते [5]दीप्तयशसः सर्वे महेष्वासा नरर्षभाः ।
अपूरयन्त ते कामान् पितुर्धर्मे[6]विशारदाः ॥ १८ ॥
स चतुर्भिर्महाभागैः पुत्रैर्दशरथो [7]नृपः ।
बभूव परमप्रीतो देवैरिव पितामहः ॥ १९ ॥

---

यत्सुतौ । सर्वास्त्रकुशलौ वीरौ विष्णोरर्धसमन्वितौ ॥ पुष्येजातस्तुभरतो मीनलग्ने प्रसन्नधी. । सार्पेजातौ तु सौमित्री कुलीरे ऽभ्युदिते रवौ 1 G 15 ऽवरजौ &c, P ऽनवमौ &c 2 Between the two lines of this Sl P reads the line—चतुर्भागस्य चैकस्य एकैक पादशो ऽदधत् । 3 G 16 एक &c, but P has एव &c

4 In place of this and the following Sl B 16-24 राज्ञ. पुत्रामहात्मानश्चत्वारो जज्ञिरे पृथक् । गुणवन्तो ऽनुरूपाश्च रुच्याप्रोष्ठपदोपमाः ॥ जगु.कलं च गंधर्वा. ननृतुश्चाप्सरोगणा· । देव दुदुभयो नेदु पुष्पवृष्टिश्च खात् पतत् ॥ उत्सवश्चमहानासीदयोध्यायां जनाकुल । रथ्याश्च जनसबाधा नटनर्तकसकुला· ॥ गायनैश्च विराविण्यो वादनैश्च तथापरैः । विरेजु विंपुलास्तत्र सर्वरत्नसमन्विता ॥ प्रदेयाश्च ददौ राजा सूतमागधबंदिना । ब्राह्मणेभ्यो ददौ वित्त गोधनानि सहस्रश ॥ अतीत्यैकादशाहतु नाम कर्मतथाकरोत् । ज्येष्ठ राम महात्मानं भरत कैकयीसुत ॥ सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपर तथा । वसिष्ठः परमः प्रीतोनामानि कुरुते तदा ॥ ब्राह्मणान्भोजयामास पौरजानपदानपि । अददद्ब्राह्मणाना च रत्नौघममितबहु ॥ तेषा जन्मक्रियादीनिसर्वकर्माण्यकारयत ॥ 5 G 18 दीप्तमनस· &c, but P has दीप्तयशसः &c, 6. G 18 परायणाः, but P has विशारदाः 7 G 19 वृत ः

[1]तेषां केतुरिव श्रेष्ठो रामो लोकहिते रतः ।
स्वयम्भूरिव देवानां सर्वेषां समदर्शनः ॥ २० ॥
बाल्यात् [2]प्रभृति तं भक्तो लक्ष्मणो लक्ष्मिवर्द्धनः ।
प्रजाभिरामं धर्मात्मा भ्राता भ्रातरमग्रजम् ॥ २१ ॥
सोऽपि प्रियतरस्तस्य प्राणेभ्योऽपि परन्तपः ।
लक्ष्मीवान् लक्ष्मणो भ्रातुर्ज्येष्ठस्यारि[3]विघातनः ॥२२॥
[4]मृष्टमन्नं तथा भोगानश्नाति न हि तं विना ।
न विन्दति रतिं [5]क्वापि मुहूर्त्तमपि तं विना ॥ २३ ॥
मृगयामथवान्यत्र यान्तं राममनुव्रतः ।
लक्ष्मणोऽपि जगामैनं धनुरादाय पृष्ठतः ॥ २४ ॥
[6]भरतस्यापि शत्रुघ्नो रामस्येव हि लक्ष्मणः ।
प्राणैः प्रियतरो भ्राता तस्यापि[7] सम्मतोऽभवत् ॥२५॥

---

but P has नृप  1 For this, and the following 4 slokas, B 24 32 — तेषा केतुरिव ज्येष्ठो रामो रतिकर पितु ॥ बभूव भूयो भूताना स्वयम्भूरिव समत । सर्वे वेदविद शूरा सर्वेलोकहितेरता ॥ सर्वे ज्ञानोपसपन्ना सर्वे समुदितागुणै । तेषा मपि महातेजा राम सत्यपराक्रम ॥ इष्ट सवस्य लोकस्य शशाक इवनिर्मल । गज स्कधेश्वपृष्ठे च रथचर्यासु समत ॥ धनुर्वेदे च निरत पितु शुश्रूपणे रत । बाल्यात्प्र भृतिसुस्निग्धो लक्ष्मणो लक्ष्मिवर्द्धन ॥ रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यश । स र्वप्रियकरस्तस्य रामस्यापि शरीरत ॥ लक्ष्मणो लक्ष्मिसंपन्नो वहि प्राणइवापर । नच तेर्नाविना निद्रा लभते पुरुषोत्तमः ॥ मृष्टमन्नमुपानीतमश्नाति नहित विना । यदाहि- हयमारूढो मृगया याति राघव ॥ अथैन पृष्ठतोऽभ्येति स धनुः परिपालयन । 2 P प्रभृत्यनुगतो &c  3 G 22 विघातिन  4 G 23 मिष्ट &c, P has both मिष्ट &c and मृष्ट &c as alternatives  5 G 23 चैव &c  6 For this Sl B32-33 भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हिस । प्राणै प्रियतरो नित्य तस्यचासीत्तथाप्रिय ॥  7 G 25 स तथाभवत

[1]ते ख्यातयशसः सर्वे परस्परहिते रताः ।
तुष्टिमुत्पादयाञ्चक्रुः पितु[2]र्वचनपौरुषैः ॥ २६ ॥
[3]स चतुर्भिर्महाभागैः पुत्रैर्दशरथो नृपः ।
लोकपालैरिव बभौ [4]वृतः साक्षात्प्रजापतिः ॥ २७ ॥
तेषां ध्वज[5]समालक्ष्मो रामो रतिकरः पितुः ।
प्रजाभिरामश्च भृशं बभूव सहजैर्गुणैः ॥ २८ ॥
गुणैरेवाभिरामैः स रञ्जयामास हि प्रजाः ।
राम इत्यभिविख्यातं नाम तस्य तथाकृतम् ॥ २९ ॥
व्रतोपनयनादींश्च यथाकालं नराधिपः ।
कारयामास संस्कारांस्तेषां वेदविधानतः ॥ ३० ॥
ते हि वेदविदः सर्वे सर्वशास्त्रार्थकोविदाः ।
ह्रीमन्तश्च विनीताश्च सर्वैस्समुदिता गुणैः ॥ ३१ ॥
स्वगुणै रञ्जयामासुः सर्वे [6]ते हि मनोहराः ।
पौरजानपदांश्चैव [7]बन्धूनन्यान् विशेषतः ॥ ३२ ॥

आदिकाण्डे दशरथपुत्रजन्म ॥

1 For this, and the following 6 Slokas B 33-37 सचतुर्भिर्महाभागैः पुत्रैर्दशरथ प्रियैः ॥ बभूवपरमप्रीतो देवैरिवपितामह· । ते यदा ज्ञानसपन्ना सर्वे समुदिता गुणैः ॥ ह्रीमत· कीर्त्तिमतश्च सबज्ञा दीर्घदर्शिन । तेषामेवप्रभावाणा सर्वेषा दीप्ततेजसा ॥ पिता दशरथो हृष्टो ब्रह्मलोकाधिपोयथा । तेचापि मनुजव्याघ्रा वैदिकाध्ययने रताः ॥ पितृशुश्रूषणरता धनुर्वेदे च निष्ठिता· । 2 G 26 विनयपौरुषै, but P has वचनपौरुषै· 3 This Sl is wanting in G, but P has it 4 P साक्षात्देवप्रजापतिः 5 G 27 इवालक्ष्यो &c 6 G. 31 तेऽतिमनोहराः 7 G 31 बन्धूश्चान्यानशेषत·, P बन्धूनन्यान्विशेषतः

[1]पुत्रत्वं तु गते [2]विष्णौ राज्ञो दशरथस्य तु ।
उवाच देवानाहूय स्वयम्भूर्भगवानिदम् ॥ १ ॥
[3]सत्यसन्धस्य देवस्य सर्वेषां वो हितैषिणः ।
विष्णोः सहायान् समरे कुरुध्वं कामरूपिणः ॥ २ ॥
मायाविदश्च [4]वीरांश्च वायुवेगसमाञ्जवे ।
नयज्ञान् बुद्धिसम्पन्नान् विष्णुतुल्यपराक्रमान् ॥ ३ ॥
असंहार्यानुपायज्ञान् दिव्यसंहननान्वितान् ।
सर्वास्त्रगुणसंपन्नान[5]मृतप्राशिभिः समान् ॥ ४ ॥
अप्सरस्सु च मुख्यासु [6]गन्धर्वाणां वधूषु च ।
[7]यक्षपन्नगकन्यासु [8]तथा विद्याधरीषु च ॥ ५ ॥
[9]किन्नराणां च योषित्सु वानराणाञ्च सर्वशः ।
जनयध्वमपत्यानि हरीन् हरिपराक्रमान् ॥ ६ ॥
[10]ते तथेति प्रतिज्ञाय ब्रह्मणो वचनं सुराः ।

---

I For this Sl B Chap XVII 1 पुत्रत्व तु गते बिष्णौ राज्ञ स्तस्य महात्मन । उवाच देवता. सर्वा स्वयभूर्भगवानिद ॥ 2 P has देवे बिष्णौ दशरथस्य च and देवे राज्ञो दशरथस्य च as alternatives. 3 For this Sl B 2 सत्यसधस्य वीरस्य सर्वेषा नो हितैषिण । विष्णो सहायान बलिनः सृजध्वकामरूपिण ॥ 4 B 3 शूराश्च &c 5 B 4 मतप्राशनानिव. 6 B 5 गंधर्वीणा तनषु च 7 B 5 & G 5 यक्ष &c 8 B 5 ऋक्ष &c. 9 For this Sl B 6 किन्नरीणा च गात्रेषु वानरीणा तनूषु च । सृजध्व हरिरूपेण पुत्रास्तुल्यपराक्रमान ॥ Between this and the next Sl of our text B (7) reads पूर्वमेव मया सृष्टो जाबवान्टक्षपुगव । जृभमानस्य सहसा मम वक्त्राद जायत ॥ 10 For this Sl B 8 ते तथोक्ता भगवता तत्प्रतिश्रुत्य शासनं । जनयामासुरेव ते पुत्रान् वानररूपिण ॥

जनयाञ्चक्रिरे पुत्रानात्मतुल्यपराक्रमान् ॥ ७ ॥
[1]देवर्षियक्षगन्धर्वाः सिद्धाश्च सहकिन्नरैः ।
[2]चारणाश्च सुतान् शूरान् ससृजुः कामरूपिणः ॥ ८ ॥
[3]ते सृष्टा बहुसाहस्रा दशग्रीव[4]वधेऽसवः ।
अप्रमेयबलादेवैर्वानराः कामरूपिणः ॥ ९ ॥
[5]ते गजाचलवर्ष्माणः सिंहसंहननौजसः ।
ऋक्षवानरगोपुच्छा जज्ञिरे सङ्घचारिणः ॥ १० ॥
[6]यस्य देवस्य यद्वीर्यं यद्बलं यः पराक्रमः ।
तस्य तस्यैव सदृशः स सपुत्रो व्यजायत ॥ ११ ॥

---

1 For this Sl B 9 ऋषयश्चमहात्मानः सिद्धविद्याधरोरगाः । चारणाश्च सुतान् वीरान्ससृजुर्वनचारिणः ॥ 2 G 8 वानराश्च &c. P has चारणाश्च an वानराश्च as alternat'ves Between this, and the next Sl of our text B (10 17) has वानरेंद्र महेंद्राभमिंद्रो वालिनमात्मज । सुग्रीव जनयामास तपन स्तपता वरः ॥ बृहस्पतिस्त्व जनयत्तार नाम महाकपि । सर्ववानरमुख्याना बुद्धिमत मनुत्तम ॥ धनदस्य सुत श्रीमान वानरो गधमादन । विश्वकर्मात्वजनयन्नल नाम महाकपिं ॥ पावकस्य सुत श्रीमान्नीलोऽग्निसदृशप्रभ । तेजसा यशसा वीर्यादत्यरिच्य तवीर्यवान् ॥ रूपद्रविणसपन्नावश्विनौ रूपसमतौ । मैंदच द्विविदचैव जनयामासतु स्वय ॥ वरुणो जनयामास सुषेण नाम वानर । शरभजनयामास पर्जन्यस्तुमहाबल । मारुतस्यौरस श्रीमान्हनूमान्नाम वानर । वज्रसहननोपेतो वैनतेयसमोजवे ॥ सर्ववानरमुख्येषु बुद्धिमान बलवानपि । 3 For this Sl B 17-18 तेसृष्टा बहुसाहस्रा दशग्रीववधोद्यताः ॥ अप्रमेयबला वीरा विक्रांता. कामरूपिण. । 4 G 9 वधेप्सुभि. Betweu the two lines of this Sl of our text G has the line महामेघौघकर्माणो मेघस्वननिनादिन which however, is wanting in P 5 For this Sl B 18-19, तेगजाचलसंकाशा वपुष्मातो महाबला ॥ ऋक्षवानरगोपुच्छा. क्षिप्रमेवाभिजज्ञिरे । 6 For this Sl B 19-20 यस्य देवस्य यद्रूप वेषो यश्च पराक्रम' ॥ अजायत समं तेन तस्य तस्य पृथक् पृथक ।

[1]गोलाङ्गूलीषु चोत्पन्नाः केचिदद्भुतविक्रमाः ।
[2]वानरीषु च यक्षीषु किन्नरीषु च वानराः ॥ १२ ॥
[3]शैलशृङ्गप्रहरणा महापादपयोधिनः ।
नखदंष्ट्रायुधाश्चैव कामरूपा बलान्विताः ॥ १३ ॥
[4]आचालयेयुरचलानुन्मथेयुर्महाद्रुमान् ।
क्षोभयेयुश्च सहसा गम्भीरान् सलिलाशयान् ॥ १४ ॥
[5]दारयेयुः क्षितिं दोर्भ्यामुत्पतेयुर्नभस्तलम् ।
पातयेयुर्जलधरानुत्प्लुत्याकाशचारिणः ॥ १५ ॥
[6]गृह्णीयुरपि मातङ्गान् मत्तान् प्रजवितान् [7]हयान् ।
पतङ्गानपि वेगेन पातयेयुर्नभस्तलात् ॥ १६ ॥
[8]ईदृशानां [9]तदा जज्ञे हरीणां कामरूपिणाम् ।

---

1 For this Sl B 20 21 गोलाङ्गूलेषु चोत्पन्ना किंचिदुन्नतविक्रमाः ॥ ऋक्षीषु च तथा जाता वानरा किन्नरीषु च । 2 G 13 वानरीष्वपि etc Between this, and the following Sl of our text B (21 25) has the lines,—देवामहर्षिगन्धर्वास्तार्क्ष्ययक्षायशस्विन. ॥ नागा. किंपुरुषाश्चैव सिद्धविद्याधरोरगा॰ । बहवो जनयामासुर्हृष्टास्तत्र सहस्रश. ॥ चारणाश्चसुतान्वीरान्ससृजुर्वनचारिण । वानरान्सुमहाकायान् सर्वान्वै वनचारिणः ॥ अप्सर सु च मुख्यासु तथाविद्याधरीषुच । नागकन्यासु च तदा गन्धर्वीणा तनूषुच ॥ कामरूपबलोपेता यथाकाम विचारिण ॥ सिंहशार्दूलसदृशा दर्पेण च बलेन च । 3 For this Sl B 25 26 शिलाप्रहरणा. सर्वे सर्वे पर्वतयोधिन । नखदंष्ट्रायुधा॰ सर्वे सर्वे सर्वास्त्रकोविदा. । 4 For this Sl B 26-27 विचालयेयु॰ शैलेंद्रान् भेदयेयु. स्थिरान्द्रुमान् ॥ क्षोभयेयुश्च वेगेन समुद्र सरितापति । 5 For this Sl B 27 28 दारयेयु क्षिति पदभ्यामाप्लवेयुर्महार्णवान् ॥ नभस्तल विशेयुश्च गृह्णीयुरपितोयदान । 6 For this Sl B 28 29 गृह्णीयुरपि मातगान् मत्तान् प्रव्रजितान वने ॥ नर्दमानाश्च नादेन पातयेयु र्विहंगमान् । 7 G 16 वने 8. For this, and the following Sl B 29-31 ईदृशाना प्रसूतानि हरीणा कामरूपिणा ॥ शत शतसहस्राणि यूथपाना महात्मना । ते प्रधानेषुयूथेषु हरीणा हरियूथपाः ॥ बभूवुर्यूथशान् श्रेष्ठान् वीराश्चाजनयन् हरीन । 9 & 17 तथा &c

अनेकानि सहस्राणि यूथपानां महात्मनाम् ॥ १७ ॥
शतसाहस्रसंख्येषु वानराणां तरस्विनाम् ।
बभूवुर्यूथपाः सर्वे ते यूथेषु महाबलाः ॥ १८ ॥
[1]ऋक्षराजन्तु तत्रान्ये उपतस्थुर्वनौकसः ।
अन्ये नानाविधान् शैलान् काननानि च भेजिरे ॥ १९ ॥
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ।
भ्रातरावुपतस्थु[2]श्च सर्व एव हरीश्वराः ॥ २० ॥

[3]तैर्मेघवृन्दाचलतुल्यकायै-
र्महाबलैर्वानरयूथपालैः ।
बभूव भूर्भीमशरीररूपैः
समावृता रामसहायहेतोः ॥ २२ ॥

आदिकाण्डे वानरोत्पत्तिः ॥

---

1 For this Sl B 31-32 अन्ये ऋक्षवत. प्रस्थानुपतस्थु सहस्रशः ॥ अन्ये नाना विधाञ्छैलान्काननानि च भेजिरे । 2 B 33 स्ते सर्वे च हरियूथपा । Between this and the following Sl of our text, B (32 36) has, नलं नील हनूमंत मन्याश्च हरियूथपान् ॥ ते तार्क्ष्यबलसंपन्नाः सर्वेयुद्धविशारदाः । विचरतोऽर्दयन्सर्वान् सिंहव्याघ्रमहोरगान् ॥ (a) महाबलो महाबाहुर्वालीविपुलविक्रमः । जुगोप भुजवीर्ये-णाऋक्षगोपुच्छवानरान् ॥ तैरिय पृथिवी शूरै. सपर्वतवनार्णवा । कीर्णा विविधसंस्थानै र्नानाव्यञ्जनलक्षणै ॥ (a) V has ताश्चसर्वान्महाबाहु &c 3 For this Sl B 37.

(b) तैर्मेघवृंदाचलकूटसन्निभै
र्महाबलैर्वानरयूथपाधिपै. ।
बभूवभूर्भीमशरीररूपै.
समावृता रामसहायहेतोः ॥

(b) The first half of this Sl in B differs from the second half in Metre

## XXI

[1]एतस्मिन्नेव काले तु विश्वामित्र इति श्रुतः ।
महर्षिरभ्ययाद्द्रष्टुमयोध्यायां नराधिपम् ॥ १ ॥
तस्य यज्ञो हि रक्षोभिस्तदा विलुलुपे किल ।
मायावीर्य्यबलोन्मत्तैर्धर्मकामस्य धीमतः ॥ २ ॥
रक्षार्थन्तस्य यज्ञस्य द्रष्टुमैच्छत् स पार्थिवम् ।
न हि शक्नोत्यविघ्नेन [2]समाप्तुं स मुनिः क्रतुम् ॥ ३ ॥
[3]स राज्ञो दर्शनाकाङ्क्षी दृष्ट्वा द्वाःस्थानुवाच ह ।
राज्ञ आवेदयध्वं मां संप्राप्तं गाधिनः सुतम् ॥ ४ ॥
[4]तस्य ते वचनं श्रुत्वा राजवेश्म प्रदुद्रुवुः ।
सम्भ्रान्तमनसः शीघ्रं विश्वामित्रानुकीर्त्तनात् ॥ ५ ॥
[5]गत्वा च राजभवनं विश्वामित्रं महामुनिम् ।
प्राप्तमावेदयामासुर्नृपाय प्रणताः स्थिताः ॥ ६ ॥
[6]ततो राजा दशरथः सामात्यः सपुरोहितः ।

---

1 For this, and the following two Slokas B Chap. 18 37-39 अथराजा दशरथस्तेषां दारक्रियां प्रति ॥ चिंतयामासधर्मात्मा सोपाध्याय सबान्धवः । तस्यचिंतयमानस्य मन्त्रिमध्ये महात्मन ॥ अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः । 2 P तमाप्तु etc 3 For this Sl B 39–40 सराज्ञो दर्शनाकाङ्क्षी द्वाराध्यक्षानुवाचह ॥ शीघ्रमाख्यात मा प्राप्त कौशिक गाधिन सुत । Before this Sl. of our text P has ततस्तेषां विनाशार्थमुद्यत. सतपोनिधिः । विश्वामित्रो महातेजा ह्ययोध्यामभ्ययात् पुरीम् ॥ 4 For this Sl B 40-41 तच्छ्रुत्वा वचन (a) तस्य राज्ञो वेश्म प्रदुद्रुवु. ॥ सभ्रातमनसः सर्वे तेन वाक्येन चोदिताः ॥ (a) V has प्रासाद्राजवेश्म &c 5 For this Sl B 41 42 तेगत्वा राज भवन विश्वामित्रमृषि तदा ॥ प्राप्तमावेदयामासुर्नृपायेक्ष्वाकवेतदा । 6 For this Sl. B 42 43 तेषां तद्वचन श्रुत्वा सपुरोधाः समाहितः ॥ प्रत्युज्जगाम संहृष्टो ब्रह्माण

[1]प्रत्युद्ययौ मुनिं द्रष्टुं ब्रह्माणमिव वासवः ॥ ७ ॥
[2]तं दृष्ट्वा स तदा राजा तपसा द्योतितप्रभम् ।
[3]प्रणम्य[4]प्राञ्जलिः स्थित्वा चक्रे चाभिप्रदक्षिणम् ॥ ८ ॥
[5]स राज्ञा पूजितस्तेन प्रत्युद्गम्य स्वयं तदा ।
कुशलानामयं प्रीतः पप्रच्छ वसुधाधिपम् ॥ ९ ॥
[6]वसिष्ठं च समागम्य प्रहसन् मुनि[7]पुङ्गवः ।
यथार्हं चार्चयित्वैनं पप्रच्छानामयं ततः ॥ १० ॥
ततो यथार्हमन्योऽन्यं पूजयित्वा समेत्य[8]तु ।
सर्वे ते हृष्टमनसो राज्ञस्तस्य निवेशनम् ॥ ११ ॥
[9]विविशुः सहिता राज्ञा निषेदुश्च यथार्हतः ।
उपविष्टाय तस्मै स विश्वामित्राय धीमते ॥ १२ ॥
वसिष्ठसहितो राजा स्वयमेव महामनाः ।

---

मिव वासवः । 1 P has मुनिप्रत्युद्ययौ &c 2 For this Sl B 43 44 सदृष्ट्वा ज्वलित दीप्त्या तापस संशितव्रत ॥ प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत । 3 G 8 प्रणमत &c 4 P has प्राञ्जलि कृत्वा &c 5 For this Sl B 44 47 सराज्ञ प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्म्मणा ॥ कुशल चाव्यय चैव पर्य्यपृच्छ नराधिप । पुरे कोशे जनपदे बाधवेषु सुहृत्सु च ॥ कुशल कौशिको राज्ञ पर्य्यपृच्छ त्सुधार्म्मिक । अपिते सन्नता सवे (a) सामन्तारिपवो जिता ॥ दैव च मानुष चैव कर्म्मते साध्वनुष्ठित । (a) V and S have सामन्ता &c 6 For this, and the following Sl B 47 48 वसिष्ठ चसमागम्य कुशल मुनिपुगवः ॥ ऋषीं श्चतान्यथान्याय महाभागउवाचह । तेसर्वे हृष्टमनसस्तस्यराज्ञो निवेशन ॥ 7. P has सत्तम॰ 8 G 11 च 9 For this, and the following two slokas B 49-50 विविशु पूजितास्तेन निषेदुश्च यथार्हतः । अथहृष्टमना राजा विश्वामित्रमहामुनि ॥ उवाच परमोदारो हृष्टस्तमभिपूजयन् ।

पाद्यमर्घ्यं च [1]गाश्चैव विधिना [2]प्रत्यपादयत् ।
अर्चितं च ततो राजा विश्वामित्रमभाषत ।
प्राञ्जलिः प्रणतो वाक्यमिदं प्रीतमना इव ॥ १४ ॥
[3]यथा मृतस्य संप्राप्तिर्यथा कालेऽभिवर्षणम् ।
यथा सदृशदारेषु पुत्रजन्माभिकाङ्क्षितम् ॥ १५ ॥
प्रणष्टस्य यथा लाभ इष्टस्यागमनं यथा ।
[4]परमानन्दकं मन्ये तथाद्य तव दर्शनम् ॥ १६ ॥
[5]कस्तेऽभिलषितः कामः किं करोमि प्रशाधि माम् ।
पात्रभूतोऽसि मे विप्र चिरस्याभ्यागतोऽतिथिः ॥ १७ ॥
[6]त्वं हि राजर्षिकुलजस्तपोभिर्नियमै[7]स्तथा ।
ब्रह्मर्षित्वमनुप्राप्तस्तस्मात्पूज्यतमोऽसि मे ॥ १८ ॥

1 G 13 गाचापि &c, but P has गाचैव &c 2 G 13 प्रत्यवेदयत 3 For this, and the follc ng S. B 50-52 यथाऽमृतस्य सप्राप्तिर्यथावर्ष मनूदके ॥ यथा सदृशदारेषुपुत्रज न्माप्रजस्यवे । प्रनष्टस्य यथालाभो यथा हर्षो (a) म होदय. ॥ तथैवागमन मन्ये स्वागत ते महामुने । (a) V has महोदये (a better reading) 4 P has the following Sl on the Margin, to be read between this, and the next Sl of our text स्वप्ने यथार्थलाभ स्याद गतसत्वस्य जीवित । मुने तवागमस्तद्वत सत्यमेतद्ब्रवीमिते ॥ 5 For this Sl B 52-53 कंचते परम काम करोमि किमुहर्षित ॥ पात्रभूतो ऽसिमे ब्रह्मन दिष्ट्या प्राप्तोऽसिमा नद । 6 For this, and the following four Slokas B 53 58 अद्य मे सफलं जन्म जीवित च सुजीवित ॥ यस्माद्विप्रेन्द्रमद्राक्ष सुप्रभाता निशा मम । पूर्व राजर्षिश ब्देन तपसाद्योतितप्रभ ॥ ब्रह्मर्षित्वमनुप्राप्त पूज्यो ऽसि बहुधा मया । तददभूतमभू द्विप्र पवित्र परम मम ॥ शुभक्षेत्रगतश्चाह तव सदर्शनात्प्रभो । ब्रूहि यत्प्रार्थित तुभ्य कार्यमागमन प्रति ॥ इच्छाम्यनुगृहीतोऽह त्वदर्थ परिवृद्धये । कार्यस्य न विमर्श च गतु मर्हसि सुव्रत ॥ कर्त्ताचाहमशेषेण दैवत हि भवान्मम । ममचायमनुप्राप्तो महानभ्युदयो द्विज ॥ तवागमनज कृत्स्नो धर्मश्चानुत्तमो द्विज ॥ 7 P has तदा

[1]प्रत्युद्ययौ मुनिं द्रष्टुं ब्रह्माणमिव वासवः ॥ ७ ॥
[2]तं दृष्ट्वा स तदा राजा तपसा द्योतितप्रभम् ।
[3]प्रणम्य[4]प्राञ्जलिः स्थित्वा चक्रे चाभिप्रदक्षिणम् ॥ ८ ॥
[5]स राज्ञा पूजितस्तेन प्रत्युद्गम्य स्वयं तदा ।
कुशलानामयं प्रीतः पप्रच्छ वसुधाधिपम् ॥ ९ ॥
[6]वसिष्ठं च समागम्य प्रहसन् मुनि[7]पुङ्गवः ।
यथार्हं चार्चयित्वैनं पप्रच्छानामयं ततः ॥ १० ॥
ततो यथार्हमन्योऽन्यं पूजयित्वा समेत्य[8]तु ।
सर्वे ते हृष्टमनसो राज्ञस्तस्य निवेशनम् ॥ ११ ॥
[9]विविशुः सहिता राज्ञा निषेदुश्च यथार्हतः ।
उपविष्टाय तस्मै स विश्वामित्राय धीमते ॥ १२ ॥
वसिष्ठसहितो राजा स्वयमेव महामनाः ।

---

मिव वासव । 1 P has मुनिप्रत्युद्ययौ &c 2 For this Sl B 43 44 सदृष्ट्वा ज्वलित दीप्त्या तापस संशितव्रत ॥ प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत । 3 G 8 प्रणमत &c 4 P has प्राञ्जलि कृत्वा &c 5 For this Sl B 44 47 सराज्ञ प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्म्मणा ॥ कुशल चाव्यय चैव पर्य्यपृच्छ नराधिप । पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ॥ कुशल कौशिको राज्ञ. पर्य्यपृच्छ त्सुधार्म्मिक । अपि ते सन्नता सर्वे (a) सामन्तारिपवो जिता ॥ दैव च मानुष चैव कर्म्म ते साध्वनुष्ठित । (a) V and S have सामन्ता &c 6 For this, and the following Sl B 47 48 वसिष्ठ चसमागम्य कुशल मुनिपुङ्गव॰ ॥ ऋषीं श्चतान्यथान्याय महाभागउवाचह । तेसर्वे हृष्टमनसस्तस्यराज्ञो निवेशन ॥ 7 P has सत्तम॰ 8 G 11. च 9 For this, and the following two slokas B 49-50 विविशु पूजितास्तेन निषेदुश्च यथार्हतः । अथहृष्टमना राजा विश्वा मित्रमहामुनिं ॥ उवाच परमोदारो हृष्टस्तमभिपूजयन् ।

पाद्यमर्घ्यं च [1]गाञ्चैव विधिना [2]प्रत्यपादयत् ॥१३॥
अर्चितं च ततो राजा विश्वामित्रमभाषत ।
प्राञ्जलिः प्रणतो वाक्यमिदं प्रीतमना इव ॥ १४ ॥
[3]यथा मृतस्य संप्राप्तिर्यथा कालेऽभिवर्षणम् ।
यथा सदृशदारेषु पुत्रजन्माभिकाङ्क्षितम् ॥ १५ ॥
प्रणष्टस्य यथा लाभ इष्टस्यागमनं यथा ।
[4]परमानन्दकं मन्ये तथाद्य तव दर्शनम् ॥ १६ ॥
[5]कस्तेऽभिलषितः कामः किं करोमि प्रशाधिमाम् ।
पात्रभूतोऽसिमेविप्र चिरस्याभ्यागतोऽतिथिः ॥ १७ ॥
[6]त्वं हि राजर्षिकुलजस्तपोभिर्नियमै[7]स्तथा ।
ब्रह्मर्षित्वमनुप्राप्तस्तस्मात्पूज्यतमोऽसि मे ॥ १८ ॥

---

1 G 13 गाचापि &c, but P has गाचैव &c  2 G 13 प्रत्यवेदयत 3. For this, and the following Sl B 50-52 यथाऽमृतस्य सप्राप्तिर्यथावर्ष मनूदके ॥ यथा सदृशदारेषुपुत्रज न्माप्रजस्यवै । प्रनष्टस्य यथालाभो यथा हर्षो (a) म होदय ॥ तथैवागमन मन्ये स्वागत ते महामुने । (a) V has महोदये (a better reading)  4 P has the following Sl on the Margin, to be read be tween this, and the next Sl of our text स्वप्ने यथार्थलाभ स्याद गतसत्वस्य जीवित । मुने तवागमस्तद्वत सत्यमेतद्ब्रवीमिते ॥  5 For this Sl B 52-53 कंचते परम काम करोमि किमुहर्षित ॥ पात्रभूतो ऽसिमे ब्रह्मन् दिष्ट्या प्राप्तोऽसिमा नद ।  6 For this, and the following four Slokas B 53 58 अद्य मे सफल जन्म जीवित च सुजीवित ॥ यस्माद्विप्रेंद्रमद्राक्ष सुप्रभाता निशा मम । पूर्वं राजर्षिश ब्देन तपसाद्योतितप्रभ ॥ ब्रह्मर्षित्वमनुप्राप्त पूज्यो ऽसि बहुधा मया । तददभूतमभू द्विप्र पवित्र परम मम ॥ शुभक्षेत्रगतश्चाह तव सदर्शनात्प्रभो । ब्रूहि यत्प्रार्थित तुभ्य कार्यमागमन प्रति ॥ इच्छाम्यनुगृहीतोऽह त्वदर्थं परिवृद्धये । कार्यस्य न विमर्शं च गतु मर्हसि सुव्रत ॥ कर्त्ताचाहमशेषेण दैवत हि भवान्मम । ममचायमनुप्राप्तो महानभ्युदयो द्विज ॥ तवागमनज कृत्स्नो धर्मश्चानुत्तमो द्विज ॥  7 P has तदा

साक्षादिव ब्रह्मणो [1]मे तवाभ्यागमनं [2]तथा ।
[3]पूतोऽस्म्यनुगृहीतश्च तवाभ्यागमनान्मुने ॥ १९ ॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
त्वामिहाभ्यागतं दृष्ट्वा प्रतिपूज्य प्रणम्य च ॥ २० ॥
तत्कार्यं येन चार्थेन प्राप्तोऽसि मुनिपुङ्गव ।
कृतमित्येव तद्विद्धि मान्योऽसि सुभृशं मम ॥ २१ ॥
स्वकार्यं हि विमृष्यत्वं वक्तुमर्हसि कौशिक ।
भगवन्नास्त्यदेयं मे त्वामद्य प्रतिविद्यते ॥ २२ ॥

[4]इदमतिमधुरं निशम्य वाक्यम्
श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा [5]गुणैर्निविष्टो
मुनिवृषभः परां जगाम हर्षम् ॥

आदिकाण्डे विश्वामित्रागमनम् ॥

XXII

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ १ ॥

---

1. P has वै &c 2 G 19. मतम् 3 G 19. प्रीतो &c but P has पूतो &c Between this, and the following Sl of our text, P has यंगाज्ञाभिषेकेण यथा प्रीतिर्भवेदिव । तवागमे विप्रवर प्रीतिमानभव तथा ॥ 4 For this Sl. B 59 इति हृदयसुखनिशम्य वाक्यं श्रुतिसुखमात्मवता विनीतमुक्त । प्रथितगुणयशा गुणैर्विशिष्टः परम ऋषिः परम जगाम हर्षं ॥ 5. P has गुणैर्निविष्टो

॥ श्रीः ॥

ॐ नमः परमात्मने ।

# खण्डनोद्धारस्य भूमिका ।

वाचस्पतिमिश्रविरचितसांख्यतत्त्वकौमुद्याः श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येण स्वकृतटीकासहितमुद्रिते पुस्तके विज्ञापने ४पृष्ठे प्रतिपादितं "वाचस्पतिमिश्रस्तु तां द्वासप्ततिश्लोकीं कौमुद्याख्यव्याख्ययालञ्चकार तेनाचार्यमिश्रेण षट्सु दर्शनेषु टीकाकारीति लोकप्रसिद्धिः ।" "एत्र खण्डनकृतः श्रीहर्षाच्च तस्यार्वाचीनता वाचस्पतिमिश्रेण हि खण्डनकृत्प्रदत्तन्यायदूषणाना समुद्धारार्थः खण्डनोद्धारनामा प्रबन्धो निरमायि इत्येवं चिन्तामणिकृतः गङ्गेशोपाध्यायात् प्राक् खण्डनखण्डखाद्य—नैषधादिग्रन्थकृतः श्रीहर्षाच्च पश्चात् तेनाविर्भूय धरणीमण्डल मण्डनायितमित्यनुमीयते ।" इत्यवलोक्य खण्डनोद्धारग्रन्थान्वेषणे कृते वैकुण्ठनिवासिनां वाराणसीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यापकानां पण्डितवरश्रीबालशास्त्रिणां पुस्तकालये एकं वाचस्पतिमिश्रकृतखण्डनोद्धारस्य पुस्तकं(१) लब्धवान् तदनन्तर महामहोपाध्यायश्रीराममिश्रशास्त्रिणां पुस्तकसंग्रहे द्वितीयं (२) ततश्च कलिकातास्थगवर्नमेण्टसंस्कृतकालेजस्थ तृतीय(३) पुस्तकमिति पुस्तकत्रयसंवादेनास्य मुद्रणं सम्यग् भविष्यतीति निश्चित्य

(१) पुस्तकमिद केनचित् पण्डितेन लिखित नातिप्राचीन प्राय. शुद्ध सम्पूर्णम् ।

(२) पुस्तकमिद नवीन खण्डितम् ।

(३) पुस्तकमिदं प्राचीन परिशोधितम । लेखकेनात्र लिपिकाल एवं लिखितः "॥ ४५ समये कार्त्तिकसुदि अष्टम्या गुरौ लिखित एवेति ॥"

वाराणसीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षाणां श्रीमदार्थरवेनिसमहाशयानामाज्ञां समधिगम्य काशीविद्यासुधानिधिनामके पत्रे मुद्रणेऽह प्रवृत्तोऽस्मि । समारब्धे मुद्रणे मुद्रणोपयुक्तरीत्या समालोचितेष्वादर्शपुस्तकेषूपलब्ध पुस्तकत्रयमेकस्मात् परमादर्शपुस्तकात् साक्षात् परम्परया वा लिखितं विज्ञातम् यत परमादर्शपुस्तके यत्र यत्र जीर्णत्वकृमिभक्षितत्वादिनाक्षराणि विलुप्तानि तत्र तत्रैवेषु पुस्तकेष्वपि चिह्नादिना सूचितानि किन्तु लेखकशोधकप्रमादेन शुद्धाशुद्धिभेदाः क्वचित्पाठभेदाश्च दृश्यन्ते । तत्र पण्डितवरश्रीबालशास्त्रिसङ्गृहीत पुस्तक सर्वापेक्षया समीचीनमिति तत्पाठोऽत्र मूले स्थापितोऽन्ये पाठभेदाष्टिप्पण्याम् । अत्र पाठापपाठविवेचने विलुप्ताक्षरोद्धारे स्वर्गनिवासिमहामहोपाध्यायश्रीमद्गुरुवरश्रीकैलासचन्द्रभट्टाचार्यशिरोमणिभिः सम्यगनुगृहीतोऽस्मि । श्रीहर्षकृतः खण्डनखण्डखाद्यग्रन्थो यथा दुरधिगमस्तदुद्धारस्ततोऽपि दुरधिगम इति नैव तिरोहितमस्ति विदुषामित्येतादृशस्य कार्यस्य सम्पादने प्रवृत्तस्य मम प्रमादेन दृष्टिदोषेण वा मुद्रासम्पादकानवधानेन सीसकाक्षरयोजकप्रमादेन च जाता अशुद्धीर्विद्वांसो गुणैकपक्षपातिन संशोध्येद दृष्टिपूतं कृत्वा मामकीनं परिश्रमं सफलयन्त्विति सर्वशक्तिमन्त परमेश्वर भूयोभूयः प्रार्थय इति ।

तत्र तावद्ग्रन्थकाराणां चरितानि यथा दुरधिगमानि तथा प्रतिपादित मया किरणावलीभूमिकायां न्यायकन्दलीभूमिकायां तार्किकरक्षाभूमिकाया प्रतिपादयिष्यते च न्यायवार्तिकभूमिकायाम् । अत्र यथोपलब्ध निरूप्यते ।

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यैः सांख्यतत्त्वकौमुदीविज्ञापने साख्यतत्त्वकौमुदीखण्डनोद्धारकर्त्रोरैक्य प्रतिपादित तदवल

म्यैव मयापि वाचस्पतिमिश्रोदयनाचार्यश्रीहर्षाणामेककालावस्थायित्वं किरणावलीभूमिकायां निरूपितम् । किं तु स चायमेव खण्डनोद्धारग्रन्थश्चेत् तदा तथा न सम्भवति । यतो वाचस्पतिमिश्रोऽस्मिन् खण्डनोद्धारे २५ पृष्ठे "विस्तरस्तु तत्त्वालोके मयैवोक्त इतीहोपरम्यते" इत्युक्तवान् । न्यायतत्त्वालोकाख्ये(१) न्यायसूत्रवृत्तिग्रन्थे च १ अध्याये १ आह्निके बाधनालक्षणं दुःखमितिसूत्रव्याख्याने "तथा चात्मापराङ्गान्यत्वे सति दुःखविषयबुद्धिविषयप्रमेयत्वमेव दुःखलक्षणमिति वाचस्पतिमिश्राः" इति । एवं समानानेकधर्मोपपत्तेरित्यादिसंशयसूत्रव्याख्याने "प्रामाण्यसंशयजन्योऽप्ययं कोटिस्मारकसमानधर्माध्यवसायजन्मापीति टीकाकृतः" इति च षड्दर्शनटीकाकारमाचार्यवाचस्पतिमिश्रं प्रमाणयति स्म । अतः सम्भवति च प्रथमं ८८६ विक्रमवर्षे प्रस्थानत्रयभाष्यकर्ता श्रीशङ्कराचार्यस्तदनन्तरं ८९८ शाकाब्दे शाङ्करभाष्यव्याख्याभामती—साङ्ख्यतत्त्वकौमुद्यादिकर्ता वाचस्पतिमिश्रो यस्य वचनानि तत्त्वचिन्तामणिकर्तृगङ्गेशोपाध्यायैः पक्षताग्रन्थे "वाचस्पतिवचनयोरविरोध" इत्यादिना समुद्धृतानि ततश्च १५२९ विक्रमसंवत्सरासन्ने समये तत्त्वचिन्तामणिप्रकाश(२)खण्डनोद्धारकर्ता वाचस्पतिमिश्रः । अयमेव षड्दर्शनटीकाकारमाचार्यवाचस्पतिमिश्रं स्वकृततत्त्वालोके प्रमाणयति स्म । अयं च वाचस्पतिमिश्रः शङ्करमिश्रसमानकालिकः यथाहुः सम्प्रदायविदः ।

"शङ्करवाचस्पत्योः समानौ शङ्करवाचस्पती भवतः ।
पक्षधरप्रतिपक्षी लक्षीभूतो न च क्वापि ॥" इति ॥

(१) अस्य ग्रन्थस्यैकं खण्डितपुस्तकमस्मन्निकटे वर्तते अत्रापि प्रथमसूत्रावतरणिकायाम् "अत्र चिन्तामणिकृतः आरब्धसमाप्तौ मङ्गलं नाङ्गं न वा प्रधानमहेतुत्वात्" इत्युक्तम् ।

(२) अस्य तत्त्वचिन्तामणिप्रकाशस्य मैथिलाक्षरैस्तालपत्रेषु लिखितं जीर्णं प्रत्यक्षखण्डपुस्तकमस्मन्निकटे वर्तते ।

शङ्करमिश्रस्तत्त्वचिन्तामणिमयूखादिकर्ता वैक्रम १५२६ संवत्सरात् पूर्वकालभावी यतोऽस्मिन् संवत्सरे लिखितं तत्कृतखण्डनखण्डखाद्यटीकापुस्तकं वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये वर्तते ।

पक्षधरापरपर्यायजयदेवमिश्रस्तु महेशठक्कुरस्य भ्रातुः मेघठक्कुरापरपर्यायस्य भगीरथठक्कुरस्य गुरुः । यथाह किरणावलीप्रकाशप्रकाशिकायाम् ।

"विंशाब्दे जयदेवपण्डितकवेस्तर्काब्धिपारं गतः
श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मजः ।
श्रीधीरातनयेन तेन रचिता श्रीमन्महेशाग्रज
श्रीदामोदरपूर्वजेन जयतादाचन्द्रमेषा कृतिः ॥"

अथ महेशठक्कुरो दरभङ्गामहाराजस्य मूलपुरुषः । अत्र मिथिलादेशे जनकपुरस्थानात् पञ्चक्रोशान्तरे ईशानदिग्भागे धनुःक्षेत्रे 'धनुखा' इति प्रसिद्धे कूपे प्रस्तरपट्टे वक्ष्यमाणं पद्यं लिखितमस्ति ।

"आसीत् पण्डितमण्डलाग्रगणितो भूमण्डलाखण्डलो
जातः खण्डवलाकुले गिरिसुताभक्तो महेशः कृती ।
शाके रन्ध्रतुरङ्गमश्रुतिमही १४७८ संलक्षिते हायने
वाग्देवीकृपयाशु येन मिथिलादेशः समस्तोऽर्जितः ॥" इत्यादि ।

१४७८ शाकवर्षे १६१३ विक्रमवर्षे वृद्धावस्थायां राज्यं सम्पादितवान् अपि च विंशद्वर्षवयस्को जयदेवमिश्रात् तर्कशास्त्रमधीतवानिति १५२६ विक्रमवर्षासन्ने स्थितस्य शङ्करमिश्रस्य जयदेवमिश्रेण समानकालिकत्वं कथञ्चित्सङ्गच्छते । तदानीमेव खण्डनोद्धारकर्ता वाचस्पतिमिश्रोऽप्यासीदिति पूर्वोक्तशङ्करवाचस्पत्योरिति वाक्येनाव गम्यते ।

अन्योऽपि वाचस्पतिमिश्रो विवादचिन्तामण्याद्यधर्मशास्त्रनिबन्धकर्ता अपरोऽपि वाचस्पतिमिश्रो भास्कराचार्यकृतसिद्धान्तशिरोमणिव्याख्याकारस्य लक्ष्मीधरमिश्रस्य पितेत्याद्यनेके वाचस्पतयो न्यायवार्त्तिकभूमिकाया निरूपयिष्यन्त इत्युपरम्यत इति शिवम् ॥

बनारस
गवर्नमेण्टसंस्कृतकालेज
पुस्तकालये
२४ मई १९०९

निवासस्थानम् ।
गोवर्धनसराय नई सड़क
बनारस सिटी

विन्ध्येश्वरीप्रसादद्विवेदी



॥ श्रीः ॥

# खण्डनोद्धारस्य शुद्धिपत्त्रम्[१] ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २० | वादिनार्न्नियम | वादिना नियम |
| ४ | ७ | कथयितु श्च | कथयितुश्च |
| ६ | १६ | सारस्वत | सरस्वत |
| ८ | २५ | तात्विकी | तात्त्विकी |
| ८ | २७ | तात्विक | तात्त्विकम् |
| १७ | १ | ऽसती | सता |
| १३ | २ | आहाररूपा | आहायरूपा |
| १७ | १२ | प्रत्यासत्या | प्रत्यासत्त्या |
| १७ | १५ | प्रकाशत्व | प्रकाशत्व |
| १६ | २२ | प्रियत्व | प्रियत्व |
| २२ | ६ | चिणात | दाचिणात |
| २४ | २१ | वृद्धिधात्वर्थ | बृधिधात्वर्थ |
| २६ | १४ | धाश्चर्रात | धाश्चरति |
| २६ | २५ | ह्नल्यग्रे | ह्नुल्यग्रे |
| ३२ | २४ | ब्रह्मणोऽभेद | ब्रह्मणोरभेद |
| ३६ | १३ | रूपान्तरा वृत्ति | रूपान्तरावृत्ति |
| ३८ | ८ | महामही | महीमही |
| ४२ | १ | सङ्गसु कस्य | सङ्कसुकस्य |
| ४२ | २० | ऽभदे | ऽभेदे |
| ४५ | २४ | श्रुतिनां | श्रुताना |
| ४७ | १७ | दोषवत्वे | दोषवत्त्वे |
| ४६ | ११ | जल्पष्ट | जल्प |
| ५३ | ६ | तथा हि | तथाहि |
| ५३ | १३ | उदीते | उदेति |
| ५५ | ६ | र्मिमित्ता | निमित्ता |
| ५५ | १६ | न ह्यथि | नह्यधि |
| ५६ | २६ | नवस्यादि दोषा | नवस्यादिदोषा |
| ५७ | ११ | रात्तजैव | रागजैव |
| ५७ | १४ | नार्हिति | नार्दिति |
| ५८ | ८ | करणास्तु | करण तु |
| ५८ | १२ | समाधिवेशा | समावेशा |
| ५६ | ४ | तथा हि | तथाहि |
| ६० | १५ | लच्तता | लच्यता |
| ६० | २० | इत्यत्र । यथा | इत्यत्र यथा |
| ६१ | ३ | ऽनावश्यत्वात | ऽनावश्यकत्वात् |
| ६१ | २० | घटश्यापाति | घटस्यापाति |
| ६१ | २५ | पेक्षते | पेक्ष्यते |
| ६२ | ४ | व्यवधापितत्त्वात | व्यवधापितत्वात् |
| ६२ | ५ | परामशण | परामर्शेन |
| ६३ | २६ | यद्धमा | यद्धूमा |
| ६४ | ६ | स्तेऽपि | स्ते अपि |
| ६६ | १ | त्यतिता | त्यतीता |
| ७१ | १० | सिदध्य | सिदध्यु |
| ७१ | ११ | सिदध्य | सिदध्यु |
| ७४ | २२ | मूलेप्रदेशे | मूलप्रदेशे |
| ८१ | २५ | तद्दा | तदद्दा |
| ८२ | १५ | प वह्नि | पि वह्नि |
| ८४ | १२ | स्वव्यघात | स्वव्याघात |
| ६० | १८ | पहूषे | पहूषे |
| ६१ | ३ | सहत्व | महत्त्व |
| ६७ | १६ | सत्वादिसत्त्वादि | सत्त्वादि |
| ११० | २ | एवञ्च च | एवञ्च |
| ११० | ३ | विरद्ध | विरुद्ध |
| १२६ | २२ | अभ्युपत | अभ्युपगत |
| १२६ | १६ | र्भवतीत्यपरः | र्भवन्तीपर |
| १३६ | १२ | तुण | गुण |
| १४० | १४ | वेत्सा | वेत्सो |
| १४७ | १७ | प्रात्तण्य | प्रागण्य |
| १७० | २ | न्यतरं | न्यतरत् |

(१) यासामशुद्धीना दर्शनमात्रादेव बोधो भवति नात्र तासां समुल्लेख. कृत । यथा १०५ पृष्ठे १० पङ्क्तौ "स्वरूपा सिद्धिः" ।

**गर्त्तोत्तरपदाच्छः । ४ । २ । १३७ ॥**

देशवाचिन इत्येव ॥ अणोऽपवादः । वृकगर्त्तीयम् । उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् ॥

**गहादिभ्यश्च । ४ । २ । १३८ ॥**

गहीयः । मुखपार्श्वतसोर्लोपश्च । मुखतीयः । पार्श्वतीयः । अव्ययानां भमात्रे टिलोपस्यानित्यतां ज्ञापयितुमिदम् ॥ कुग् जनस्य परस्य च ॥ * ॥ जनकीयम् । परकीयम् ॥ देवस्य च ॥ * ॥ देवकीयम् ॥ स्वस्य च ॥ * ॥ स्वकीयम् ॥ वेणुकादिभ्यश्छण् वाच्यः ॥ * ॥ वैणुकीयम् । वैत्रकीयम् । औत्तरपदकीयम् । मध्यो मध्यमञ्चाण् चरणे इति गणे पठ्यते । तस्यायमर्थः । मध्यशब्द प्रत्ययसन्नियोगेन मध्यममापद्यते । मध्यमीयः । चरणे तु प्रत्ययार्थेऽण् भवति । माध्यमा इति । तदेतद्विशेषे एवोच्यते । पृथिवीमध्यस्य मध्यमभावश्चरणसम्बन्धेन निवासलक्षणोऽणिति । पृथिवीमध्यवाच्येव मध्यशब्दो ग्राह्यो न मध्यान्तरवाचीत्यर्थः । चरणसम्बन्धेन निवासलक्षणोऽणित्यस्य च चरणसम्बन्धेन योऽण् विधीयते अण् चरणे इत्यनेन स निवासलक्षणो द्रष्टव्यः सोऽस्य निवास इत्यस्मिन्नेवार्थे भवतीत्यर्थः । तेन पृथिवीमध्य निवास एषा कठादीनाञ्चरणानामित्यस्मिन्नर्थे माध्यमा इति भवति ॥

**प्राचां कटादेः । ४ । २ । १३९ ॥**

प्राग्देशवाचिनः कटादेश्छ स्यात् ॥ अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् ।

**राज्ञः क च । ४ । २ । १४० ॥**

वृद्धत्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्र विधीयते ॥ राजकीयम् ।

**वृद्धादकेकान्तखोपधात् । ४ । २ । १४१ ॥**

अक,इक,एवमन्तात्खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात् ॥ ब्राह्मणको नाम जनपदः यत्र ब्राह्मणा आयुधजीविनः । ब्राह्मणकोष्णिके सञ्ज्ञायामिति निपातनात्साधुः । तत्र जातो ब्राह्मणकीयः । शाल्मलिकीय. । आयोमुखीयम् । अकेकान्तग्रहणमपनीय कोपधग्रहणं कर्त्तव्यम् । इहापि यथा स्यात् । एणिकीयः । सौसुकं नाम बाहीकग्रामः । सौसुकीयः ॥

**कन्थापलदनगरग्रामह्रदोत्तरपदात् । ४ । २ । १४२ ॥**

कन्थादिपञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः ॥ ठञ्ञिठादेरपवादः । दाक्षिकन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । माहकग्रामीयम् । दाक्षिह्रदीयम् ।

**पर्वताच्च । ४ । २ । १४३ ॥**

अणोऽपवादः । पर्वतीयः ॥

**विभाषा ऽमनुष्ये । ४ । २ । १४४ ॥**

मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात् पक्षे ऽण् ॥ पर्वतीयानि पार्वतानि वा फलानि । अमनुष्ये किम् । पर्वतीयो मनुष्यः ॥

**कृकणपर्णाद्भारद्वाजे । ४ । २ । १४५ ॥**

भारद्वाजदेशवाचिभ्यामाभ्यां छः ॥ अणोऽपवादः । कृकणीयम् । पर्णीयम् । भेति किम् । कार्कणम् । पार्णम् ॥

इति श्रीव्याकरणदीपिकायां पाणिनिसूत्रवृत्तौ चतुर्थस्याध्यायस्य द्वितीयः पादः समाप्तः ॥

# अथ चतुर्थाध्यायस्य तृतीयः पादः ।

युष्मदस्मदोरन्यतरस्यां खञ् च । ४ । ३ । १ ॥

चाच्छः ॥ पक्षेऽण् । युवयोर्युष्माकं वा अयं युष्मदीयः । अस्मदीयः ॥

तस्मिन्नणि च युष्माकास्माकौ । ४ । ३ । २ ॥

युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च ॥ यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ॥

तवकममकावेकवचने । ४ । ३ । ३ ॥

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च ॥ तावकीनः । तावकः । मामकीनः । मामकः । छे तु त्वदीयः । मदीयः ॥

अर्द्धाद्यत् । ४ । ३ । ४ ॥

अर्द्ध्यः ॥ सपूर्वाट्ठञ् वक्तव्यः ॥ * ॥ वल्यर्थं वस्तु वालेयं तस्यार्द्धमेकदेशस्तत्र भव वालेयार्द्धिकम् । गौतमार्द्धिकम् ॥

परावराधमोत्तमपूर्वाच्च । ४ । ३ । ५ ॥

परार्द्ध्यम् ॥ अवरार्द्ध्यम् । अधमार्द्ध्यम् । उत्तमार्द्ध्यम ॥

दिक्पूर्वपदाट्ठञ् च । ४ । ३ । ६ ॥

चाद्यत् ॥ पौर्वार्द्धिकम् । पूर्वार्द्ध्यम् ।

ग्रामजनपदैकदेशादञ्ठञौ । ४ । ३ । ७ ॥

ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदाद्-र्द्धान्तादञ्ठञौ स्तः ॥ इमे ऽस्माकं ग्रामस्य जनपदस्य वा पौर्वा र्द्धाः । पौर्वार्द्धिका. । ग्रामस्य पूर्वस्मिन्नर्द्धे भवा इति तद्धितार्थे समासः । ठञ्ग्रहणं स्पष्टार्थम् । अञ्चेत्युक्तेऽयतोऽप्यनुकर्षः सम्भाव्येत ॥

## मध्यान्मः । ४ । ३ । ८ ॥

मध्यमम् ॥

## अ साम्प्रतिके । ४ । ३ । ९ ॥

मध्यशब्दादकारप्रत्यय. स्यात्साम्प्रतिकेऽर्थे ॥ उत्कर्षापकर्षहीनो मध्यो वैयाकरणः । मध्य दारु । नातिह्रस्व नातिदीर्घमित्यर्थ. ॥

## द्वीपादनुसमुद्रं यञ् । ४ । ३ । १० ॥

समुद्रसमीपे यो द्वीपस्तद्विषयात् द्वीपशब्दात् यञ् स्यात् ॥ कच्छाद्यणो मनुष्यवुञश्चापवादोऽयम् ॥ द्वैप्यम् । द्वैप्या । अनुसमुद्र किम् । द्वैपमन्यत् । द्वैपको मनुष्यः ॥

## कालाट्ठञ् । ४ । ३ । ११ ॥

कालवाचिनष्ठञ् स्यात् ॥ मासिकम् । सांवत्सरिकम् । सायम्प्रातिकः । पौन पुनिकः ॥ कथ तर्हि शार्वरस्य तमसो निषिद्धये इति कालिदासः । अनुदितौषसराग, इति भारविः । समानकालीनं प्राक्कालीनमित्यादि च । अपभ्रंशा एवैत इति प्रामाणिकाः । तत्र जात इति यावत्कालाधिकारः ॥

## श्राद्धे शरदः । ४ । ३ । १२ ॥

ठञ् स्यात् ॥ ऋतवणोऽपवादः । शारदिकं श्राद्धम् ।

**विभाषा रोगातपयोः । ४ । ३ । १३ ॥**

शारदिकः शारदो वा रोगः । आतपो वा । एतयोः किम् । शारदं दधि ॥

**निशाप्रदोषाभ्याञ्च । ४ । ३ । १४ ॥**

वा ठञ् स्यात् ॥ नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् ॥

**श्वसस्तुट् च । ४ । ३ । १५ ॥**

श्वस्शब्दाट्ठञ् वा स्यात्तस्य तुडागमश्च ॥ द्वारादित्वादैजागमः ॥ शौवस्तिकम् । पक्षे श्वस्त्य श्वस्तनम् ॥

**सन्धिवेलाद्यृतुनक्षत्रेभ्यो ऽण् । ४ । ३ । १६ ॥**

सन्धिवेलादिभ्यः ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् ॥ सन्धिवेलायां भवं सान्धिवेलम् । ग्रैष्मम् । तैषम् । सन्धिवेला सन्ध्या अमावास्या त्रयोदशी चतुर्दशी पञ्चदशी पौर्णमासी प्रतिपत् । संवत्सरात्फलपर्वणोः । सांवत्सरं फलं पर्व वा । सांवत्सरिकमन्यत् ॥

**प्रावृष एण्यः । ४ । ३ । १७ ॥**

प्रावृषेण्यः ।

**वर्षाभ्यष्ठक् । ४ । ३ । १८ ॥**

वर्षासु साधु वार्षिकं वासः । कालात्साधुपुष्प्यत्पच्यमानेष्विति साध्वर्थे ॥

**छन्दसि ठञ् । ४ । ३ । १९ ॥**

वर्षाभ्यष्ठकोऽपवादः । स्वरे भेदः । वार्षिकम् ॥

**वसन्ताच्च । ४ । ३ । २० ॥**

ठञ् स्याच्छन्दसि ॥ वासन्तिकम् ।

**हेमन्ताच्च । ४ । ३ । २१ ॥**

छन्दसि ठञ् ॥ हैमन्तिकम् । योगविभाग उत्तरार्थः ॥

**सर्वत्राण् च तलोपश्च । ४ । ३ । २२ ॥**

हेमन्तादण् स्यात्तलोपश्च वेदलोकयो' ॥ चकारात्पक्षे ऋत्वण् । हैमनम् । हैमन्तम् ।

**सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च । ४ । ३ । २३॥**

सायमित्यादिभ्यश्चतुर्भ्यः अव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च ॥ तुटः प्रागनादेशः । अनद्यतन इत्यादिनिर्देशात् । सायन्तनम् । चिरन्तनम् । प्राह्णप्रगयोरेदन्तत्व निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् ॥ चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ॥ * ॥ चिरत्नम् । परुत्नम् । परारित्नम् ॥ प्रगस्य छन्दसि गलोपश्च ॥ * ॥ प्रत्नम् ॥ * ॥ अग्रादिपश्चाड्डिमच् ॥ * ॥ अग्रिमम् । आदिमम् । पश्चिमम् ॥ * ॥ अन्ताच्च ॥ * ॥ अन्तिमम् ॥

**विभाषा पूर्वाह्णापराह्णाभ्याम् । ४ । ३ । २४ ॥**

आभ्या ट्युट्युलौ वा स्तस्तयोस्तुट् च ॥ पक्षे ठञ् । पूर्वाह्णेतनम् । अपराह्णेतनम् । घकालतनेष्वित्यलुक् । पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनम् । अपराह्णतनम् । पौर्वाह्णिकम् । आपराह्णिकम् ।

**तत्र जातः । ४ । ३ । २५ ॥**

सप्तमीसमर्थाज्जात इत्यर्थे अणादयो घादयश्च स्युः ॥
स्रुघ्ने जातः स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीण इत्यादि ॥

**प्रावृषष्ठप् । ४ । ३ । २६ ॥**

एण्यस्यापवादः । प्रावृषि जातः । प्रावृषिकः ।

**संज्ञायां शरदो वुञ् । ४ । ३ । २७ ॥**

ऋत्वणोऽपवादः ॥ शारदका दर्भविशेषा मुद्गविशेषाश्च ॥

**पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् । ४ । ३ । २८ ॥**

पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः ॥

**पथः पन्थ च । ४ । ३ । २९ ॥**

पथि जातः पन्थकः ।

**अमावास्याया वा । ४ । ३ । ३० ॥**

अमावास्यकः ॥ आमावास्य । सन्धिवेलाद्यण् । एकदेशविकृतस्यानन्यत्वादमावास्यानन्यत्वादमावस्याशब्दादपि । अमावस्यकः । आमावस्यः ।

**अ च । ४ । ३ । ३१ ॥**

अमावास्यः । अमावस्यः ॥

**सिन्ध्वपकराभ्यां कन् । ४ । ३ । ३२ ॥**

सिन्धुकः ॥ कच्छाद्यणि मनुष्याद्वुञि च प्राप्ते । अपकरकः । औत्सर्गिकेऽणि प्राप्ते ॥

**अणञौ च । ४ । ३ । ३३ ॥**

क्रमात्स्तः ॥ सैन्धवः । आपकरः ॥

**श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्त-विशाखाषाढाबहुलाल्लुक् । ४ । ३ । ३४ ॥**

एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् ॥ लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः । तिष्य' । पुनर्वसुः । हस्तः । विशाखः । अषाढ' । बहुलः ॥ चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसख्यानम् ॥ * ॥ चित्रायां जाता चित्रा । रेवती । रोहिणी । आभ्या लुक्तद्धितलुकीति लुकि कृते । पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष् ॥ फल्गुन्यषाढाभ्या टानौ वक्तव्यौ ॥ * ॥ स्त्रियामित्येव । फल्गुनी । अषाढा ॥ श्रविष्ठाषाढाभ्या छण् वक्तव्यः ॥ * ॥ अस्त्रियामपि । श्राविष्ठीयः । आषाढीय. ॥

**स्थानान्तगोशालखरशालाच्च । ४ । ३ । ३५ ॥**

एभ्यो जातार्थस्य लुक् स्यात् ॥ गोस्थाने जातः गोस्थानः । अश्वस्थानः । गोशालः । खरशालः । विभाषासेनेति नपुसकत्वे ह्रस्वत्वम् ।

**वत्सशालाभिजिदश्वयुक्छतभिषजो वा । ४ । ३ । ३६ ॥**

एभ्यो जातार्थस्य लुग्वा स्यात् ॥ वत्सशाले जातः वत्सशालः । वात्सशालः । अभिजित् । आभिजितः । अश्वयुक् । आश्वयुजः । शतभिषक् । शातभिषज. ॥

**नक्षत्रेभ्यो बहुलम् । ४ । ३ । ३७ ॥**

जातार्थप्रत्ययस्य बहुलं लुक् स्यात् ॥ रोहिणः । रौहिण. ।

**कृतलब्धक्रीतकुशलाः । ४ । ३ । ३८ ॥**

तत्रेत्येव । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः ॥

**प्रायभवः । ४ । ३ । ३९ ॥**

तत्रेत्येव ॥ स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः ॥

**उपजानूपकर्णोपनीवेष्ठक् । ४ । ३ । ४० ॥**

औपजानुकः । औपकर्णिकः । औपनीविकः ।

**संभूते । ४ । ३ । ४१ ॥**

स्रुघ्ने सम्भवति स्रौघ्नः ।

**कोशाड्ढञ् । ४ । ३ । ४२ ॥**

कौशेयं वस्त्रम् ।

**कालात्साधुपुष्प्यत्पच्यमानेषु । ४ । ३ । ४३ ॥**

हेमन्ते साधुः हैमन्तः प्राकारः ॥ वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः । शरदि पच्यन्ते शारदाः शालयः ॥

**उप्ते च । ४ । ३ । ४४ ॥**

हेमन्ते उप्यन्ते हैमन्ता यवाः ।

**आश्वयुज्या वुञ् । ४ । ३ । ४५ ॥**

ठञोऽपवादः । आश्वयुज्यामुप्ता आश्वयुजका माषाः ॥

**ग्रीष्मवसन्तादन्यतरस्याम् । ४ । ३ । ४६ ॥**

पक्षे ऋत्वण् । ग्रैष्मकम् । ग्रैष्मम् । वासन्तकम् । वासन्तम् ।

**देयमृणे । ४ । ३ । ४७ ॥**

कालादित्येव ॥ मासे देयमृणं मासिकम् ।

**कलाप्यश्वत्थयवबुसाद्वुन् । ४ । ३ । ४८ ॥**

**श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्त-विशाखाषाढाबहुलाल्लुक् । ४ । ३ । ३४ ॥**

एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् ॥ लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः ॥ चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ॥ * ॥ चित्रायां जाता चित्रा । रेवती । रोहिणी । आभ्या लुक्तद्धितलुकीति लुकि कृते । पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष् ॥ फल्गुन्यषाढाभ्या टानौ वक्तव्यौ ॥ * ॥ स्त्रियामित्येव । फल्गुनी । अषाढा ॥ श्रविष्ठाषाढाभ्या छण् वक्तव्यः ॥ * ॥ अस्त्रियामपि । श्राविष्ठीयः । आषाढीयः ॥

**स्थानान्तगोशालखरशालाच्च । ४ । ३ । ३५ ॥**

एभ्यो जातार्थस्य लुक् स्यात् ॥ गोस्थाने जातः गोस्थानः । अश्वस्थानः । गोशालः । खरशालः । विभाषासेनेति नपुंसकत्वे ह्रस्वत्वम् ।

**वत्सशालाभिजिदश्वयुक्छतभिषजो वा । ४ । ३ । ३६ ॥**

एभ्यो जातार्थस्य लुग्वा स्यात् ॥ वत्सशाले जातः वत्सशालः । वात्सशालः । अभिजित् । आभिजितः । अश्वयुक् । आश्वयुजः । शतभिषक् । शातभिषज ॥

**नक्षत्रेभ्यो बहुलम् । ४ । ३ । ३७ ॥**

जातार्थप्रत्ययस्य बहुलं लुक् स्यात् ॥ रोहिणः । रौहिणः ।

**कृतलब्धक्रीतकुशलाः । ४ । ३ । ३८ ॥**

तत्रेत्येव। स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा स्रौघ्नः॥

**प्रायभवः। ४। ३। ३९॥**

तत्रेत्येव॥ स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः॥

**उपजानूपकर्णोपनीवेष्ठक्। ४। ३। ४०॥**

औपजानुकः। औपकर्णिकः। औपनीविकः।

**संभूते। ४। ३। ४१॥**

स्रुघ्ने सम्भवति स्रौघ्नः।

**कोशाड्ढञ्। ४। ३। ४२॥**

कौशेयं वस्त्रम्।

**कालात्साधुपुष्प्यत्पच्यमानेषु। ४। ३। ४३॥**

हेमन्ते साधुः हैमन्तः प्राकारः॥ वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। शरदि पच्यन्ते शारदाः शालयः॥

**उप्ते च। ४। ३। ४४॥**

हेमन्ते उप्यन्ते हैमन्ता यवाः।

**आश्वयुज्या वुञ्। ४। ३। ४५॥**

ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः॥

**ग्रीष्मवसन्तादन्यतरस्याम्। ४। ३। ४६॥**

पक्षे ऋत्वण्। ग्रैष्मकम्। ग्रैष्मम्। वासन्तकम्। वासन्तम्।

**देयमृणे। ४। ३। ४७॥**

कालादित्येव॥ मासे देयमृणं मासिकम्।

**कलाप्यश्वत्थयवबुसाद् वुन्। ४। ३। ४८॥**

यस्मिन्काले मयूराः कलापिनो भवन्ति स उपचारात्कलापी तत्र देयमृणं कलापकम् । अश्वत्थस्य फलमश्वत्थः । तद्युक्तः कालोऽश्वत्थः। यस्मिन्कालेऽश्वत्थाः फलन्ति तत्र देयमश्वत्थकम्। यस्मिन्यवबुसमुत्पद्यते तत्र देयं यवबुसकम् ।

**ग्रीष्मावरसमाद् वुञ् । ४ । ३ । ४९ ॥**

ग्रीष्मे देयमृणं ग्रैष्मकम् । आवरसमकम् ।

**संवत्सराग्रहायणीभ्यां ठञ् च । ४ । ३ । ५० ॥**

चाद् वुञ् ॥ सांवत्सरिकम् । सांवत्सरकम् । आग्रहायणिकम् । आग्रहायणकम् ।

**व्याहरति मृगः । ४ । ३ ५१ ॥**

कालवाचिनः सप्तम्यन्ताच्छब्दायते इत्यर्थेऽणादयः स्युः यो व्याहरति स मृगश्चेत् ॥ निशाया व्याहरति नैशो मृगः । नैशिकः ।

**तदस्य सोढम् । ४ । ३ । ५२ ॥**

कालादित्येव ॥ निशासहचरितमध्ययनं निशा तत्सोढमस्य नैशः । नैशिकः ॥

**तत्र भवः । ४ । ३ । ५३ ॥**

स्रुघ्ने भवः स्रौघ्नः । राष्ट्रियः ।

**दिगादिभ्यो यत् । ४ । ३ । ५४ ॥**

दिश्यम् । वर्ग्यम् ।

**शरीरावयवाच्च । ४ । ३ । ५५ ॥**

दन्त्यम् । कण्ठ्यम् ।

**दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् । ४ । ३ । ५६ ॥**

दार्तेयम्। कौचेयम्। कलशिर्घटः। तत्र भवं कालशेयम्। बास्तेयम्। आस्तेयम्। आहेयम्।

## ग्रीवाभ्योऽण् च। ४। ३। ५७॥

चाड्ढञ्। ग्रैवम्। ग्रैवेयम्।

## गम्भीराञ्ञ्यः। ४। ३। ५८॥

गम्भीरे भव गाम्भीर्यम्।

## अव्ययीभावाच्च। ४। ३। ५९॥

परिमुख भवं पारिमुख्यम्। परिमुखादिभ्य एवेष्यते। नेह। औपकूलः॥

## अन्तःपूर्वपदाट्ठञ्। ४। ३। ६०॥

अव्ययीभावादित्येव। वेश्मनि अन्तर्वेश्मम्। तत्र भवमान्तर्वेश्मिकम्। आन्तर्गणिकम्॥ अध्यात्मादेष्ठञिष्यते॥*॥ अध्यात्मम्भवमाध्यात्मिकम्। अनुशतिकादित्वादुभयपदवृद्धिः। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलौकिकम्। अध्यात्मादिराकृतिगणः॥ समानस्य तदादेश्च इष्यते॥*॥ समाने भव सामानिकम्। सामानग्रामिकः। सामानदेशिकः॥ उर्द्धन्दमाच्च देहाच्च॥*॥ दमे उत्तरपदे ठञ्सन्नियोगेन ऊर्द्धशब्दस्य मकारान्तत्व निपात्यते। और्द्धंदमिकः। और्द्धुदेहिकम्। अत्र तु न मान्तत्वं भाष्ये तदनुच्चारणात्॥ मुखपार्श्वइत्येताभ्यां तसन्ताभ्यामीयो वक्तव्यः॥*॥ मुखतीयः। पार्श्वतीयः। कुग्जनस्य परस्य च ईयो वक्तव्यः॥*॥ जनकीयम् परकीयम्। ईयः कार्योऽथ मध्यस्य॥*॥ मध्यीयः॥ मण्मीयौ चापि प्रत्ययौ॥*॥ माध्यमः। मध्यमीयः।

गहादिषु मध्यो मध्यमं चाण् चरण इति यत्पठितं तत्र पृथिवीमध्यवाचीमध्यशब्दो गृह्यत इत्युक्तम् । ततोऽन्यत्रापि भवार्थे मध्यमीय इति यथा स्यादिति मीयप्रत्ययविधिः । जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति यथा स्यात् मध्यान्तरवाचिनो मा भूदित्येवमर्थं गहादिषु पृथिवीमध्यस्य मध्यमभाव इत्युक्तम् ॥ मध्यो मध्यन्दिनञ्चास्मात् ॥ * ॥ मध्यशब्दो मध्यशब्दमापद्यते दिनञ् चास्मात्प्रत्ययो वक्तव्य इत्यर्थः । माध्यन्दिन उद्गायति ॥ स्थाम्नो लुगजिनात्तथा ॥ * ॥ उभाभ्यामपि तदन्तविधिरिष्यते । अश्वत्थामा । उष्ट्राजिनः । सिंहाजिनः । व्याघ्राजिनः ॥ बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं च ञ्य इष्यते । गम्भीराञ्ञ्य इत्यत्र वक्तव्यमित्यर्थः ।

**ग्रामात्पर्यनुपूर्वात् । ४ । ३ । ६१ ॥**

ठञ् स्यात् । अव्ययीभावादित्येव । पारिग्रामिकः । आनुग्रामिकः ।

**जिह्वामूलाङ्गुलेश्छः । ४ । ३ । ६२ ॥**

जिह्वामूलीयम् । अङ्गुलीयम् ।

**वर्गान्ताच्च । ४ । ३ । ६३ ॥**

कवर्गीयम् ।

**अशब्दे यत्खावन्यतरस्याम् । ४ । ३ । ६४ ॥**

पक्षे पूर्वेण छ । मद्वर्ग्यः । मद्वर्गीणः । मद्वर्गीयः । अशब्दे किम् । कवर्गीयो वर्णः ॥

**कर्णललाटात्कनलङ्कारे । ४ । ३ । ६५ ॥**

कर्णिका । ललाटिका ॥

**तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः । ४ । ३ । ६६ ॥**

सुपां व्याख्यानः सौपो ग्रन्थः । तैङः । कार्तः । सुप्सु भवं सौपम् । व्याख्यातव्यनाम्नः किम् । पाटलिपुत्रस्य व्याख्यानी सुकोसला । पाटलिपुत्रं हि तया व्याख्यायते । ईदृक्सन्निवेशविशिष्टमिति । न त्विदं व्याख्यातव्यस्य नाम । ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात् । नामग्रहणस्य च प्रसिद्धुपसंग्रहार्थत्वात् ॥

**बह्वचोऽन्तोदात्ताट्ठञ् । ४ । ३ । ६७ ॥**

षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वं तस्य व्याख्यानस्तत्र भवो वा षात्वणत्विकः ॥

**क्रतुयज्ञेभ्यश्च । ४ । ३ । ६८ ॥**

सोमसाध्येषु यागेष्वेतौ प्रसिद्धौ । तत्रान्यतरोपादानेन सिद्धे उभयोपादानसामर्थ्यादसोमका अपीह गृह्यन्ते । अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः । वाजपेयिकः । पाकयज्ञिकः । नावयज्ञिकः । बहुवचनं स्वरूपविधिनिरासार्थम् । अनन्तोदात्तार्थ आरम्भः ॥

**अध्यायेष्वेवर्षेः । ४ । ३ । ६९ ॥**

ऋषिशब्देभ्यो लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाध्याये ठञ् स्यात् ॥ वसिष्ठेन दृष्टो मन्त्रो वासिष्ठस्तस्य व्याख्यानस्तत्र भवो वासिष्ठिकोऽध्यायः । अध्यायेषु किम् । वासिष्ठी ऋक् ॥

**पौरोडाशपुरोडाशात्ष्ठन् । ४ । ३ । ७० ॥**

पुरोडाशसहचरितो मन्त्रः पुरोडाशः स एव पौरोडाशः । ततः ष्ठन् । पौरोडाशिकः । पुरोडाशिकः ।

**छन्दसो यदणौ । ४ । ३ । ७१ ॥**

छन्दस्य: ॥ छान्दस: ॥

**द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् । ४ । ३ । ७२ ॥**

द्व्यच: ॥ ऐष्टिक: । पाशुक: । ऋत् । चातुर्होतृक: । ब्राह्मणिक: । आर्चिक: । प्राथमिक: । आध्वरिक: । पौरश्चरणिक: । नामाख्यातग्रहणं संघातविगृहीतार्थमिति वार्तिकम् । तत्र विगृहीतग्रहणमाख्यातार्थम् । नामशब्दात्तु द्व्यच्त्वादेव सिद्धम् । नामिक: । आख्यातिक: । नामाख्यातिक: ॥

**अणृगयनादिभ्य: । ४ । ३ । ७३ ॥**

ठञादेरपवाद: ॥ आर्गयन: । औपनिषद: । वैयाकरण: ।

**तत आगत: । ४ । ३ । ७४ ॥**

स्रुघ्नादागत: स्रौघ्न: ॥

**ठगायस्थानेभ्य: । ४ । ३ । ७५ ॥**

शुल्कशालाया आगत: शौल्कशालिक: ॥

**शुण्डिकादिभ्योऽण् । ४ । ३ । ७६ ॥**

आयस्थानठक्छादीनां चापवाद: । शुण्डिकादागत: शौण्डिक: । कार्कण: । तैर्थ: ॥

**विद्यायोनिसम्बन्धेभ्यो वुञ् । ४ । ३ । ७७ ॥**

औपाध्यायक: । पैतामहक: ॥

**ऋतष्ठञ् । ४ । ३ । ७८ ॥**

वुञोऽपवादः । हौतृकम् । मातृकम् । भ्रातृकम् ।

**पितुर्यच्च । ४ । ३ । ७९ ॥**

चाठुञ् । रीङ् ऋत. । यस्येति चेति लोपः । पित्र्यम् । पैतृकम् ॥

**गोत्रादङ्कवत् । ४ । ३ । ८० ॥**

विदेभ्य आगत वैदम् । गार्गम् । दाक्षम् । औपगवकम् ।

**हेतुमनुष्येभ्यो ऽन्यतरस्यां रूप्यः । ४ । ३ । ८१ ॥**

समादागत समरूप्यम् । विषमरूप्यम् । पक्षे गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तरूप्यम् । दैवदत्तम् ।

**मयट् च । ४ । ३ । ८२ ॥**

सममयम् । विषममयम् । देवदत्तमयम् ।

**प्रभवति । ४ । ३ । ८३ ॥**

तत इत्येव । हिमवतः प्रभवति हैमवती गङ्गा ॥

**विदूराञ् ञ्यः । ४ । ३ । ८४ ॥**

विदूरात्प्रभवति वैदूर्यो मणिः ।

**तद्गच्छति पथिदूतयोः । ४ । ३ । ८५ ॥**

स्रुघ्न गच्छति स्रौघ्नः पन्था दूतो वा ॥

**अभिनिष्क्रामति द्वारम् । ४ । ३ । ८६ ॥**

तदित्येव ॥ स्रुघ्नमभिनिष्क्रामति स्रौघ्न कान्यकुब्जद्वारम् ॥

**अधिकृत्य कृते ग्रन्थे । ४ । ३ । ८७ ॥**

तदित्येव । शारीरकमधिकृत्य यतो ग्रन्थः शारीरकीयः । शारीरक भाष्यमिति तु अभेदोपचारात् ॥ लुबाख्यायिकाभ्यो बहुलम् ॥ * ॥

तादर्थ्ये चतुर्थी । आख्यायिकाभिधानाय प्रत्ययस्तस्य बहुल लुबित्यर्थः । वासवदत्ता । न च भवति । भैमरथी ।

**शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।४।३।८८॥**

शिशूनां क्रन्दन शिशुक्रन्दः । तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीय. । यमस्य सभा यमसभम् । क्लीबत्व निपातनात् । यमसभीय. । किरातार्जुनीयम् । वाक्यपदीयम् । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयम् । विरुद्धभोजनीयम् ॥ द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ॥ * ॥ दैवासुरम् । राक्षोऽसुरम् ।

**सो ऽस्य निवासः । ४ । ३ । ८९ ॥**

स्रुघ्नो निवासो ऽस्य स्रौघ्नः ।

**अभिजनश्च । ४ । ३ । ९० ॥**

स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । यत्र स्वयं वसति स निवासः । यत्र पूर्वैरुषित सोऽभिजन इति विवेकः ।

**आयुधजीविभ्यश्छः पर्वते । ४ । ३ । ९१ ॥**

पर्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येत्यर्थे छः स्यात् । हृद्गोलः पर्वतो ऽभिजनो येषामायुधजीविनां ते हृद्गोलीया. । आयुधेति किम् । ऋक्षोद. पर्वतोऽभिजनो येषा ते आर्क्षोदा द्विजाः ॥

**शण्डिकादिभ्यो ञ्यः । ४ । ३ । ९२ ॥**

शण्डिको ऽभिजनोऽस्य शाण्डिक्यः ।

**सिन्धुतक्षशिलादिभ्योऽणञौ । ४ । ३ । ९३ ॥**

सिन्ध्वादिभ्योऽण् तक्षशिलादिभ्योऽञ् स्यादुक्तेऽर्थे ॥ सैन्धवः । तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः ॥

उपासनस्य ध्यायत्यर्थध्यानरूपत्वात्, ध्यायतेश्चासीनेषु बकादिष्वेकविषयदृष्टिषु प्रयोगादासीन एवोपासीतेत्यर्थः ॥

## अचलत्वं चापेक्ष्य ॥ ४ । १ । ९ ॥

किञ्च "ध्यायतीव पृथिवी"त्यत्र श्रुतौ पृथिव्या अचलत्वमपेक्ष्य ध्यानोपचारो दृष्टः । तस्मादपि लिङ्गादासीन एवोपासीत ॥

## स्मरन्ति च ॥ ४ । १ । १० ॥

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः" इत्यादिना बाह्यासनविधानस्मरणाच्चासीन एवोपासीत । यद्वा योगशास्त्रे पद्मकादीनां शारीरासनानां स्मरणादासीन एवोपासीतेत्यर्थः ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ४ । १ । ११ ॥

दिग्देशकालेषु संशयः, किमङ्गानाश्रितोपासनेषु दिगादिनियमोऽस्ति न वेति । तेष्वासननियमवदस्ति-नियम इति प्राप्ते ब्रूमः । प्राच्यादिदिङ्नियमः प्रदोषादिकालनियमो नदीतीरादिदेशनियमो वा नास्ति । कुतः । यत्र दिशि देशे काले वा चित्तस्यैकाग्रता प्रत्ययप्रवाहैान्मुख्यं तत्रोपासीत, दिगादिविशेषाश्रवणादित्यर्थः । यद्वा उपासन इष्टाया एकाग्रतायाः सर्वत्राविशेषादित्यर्थः । "समे शुचौ शर्करवह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे नियोजयेत्"इति श्रुतिरपि चित्तस्यैकाग्र्यसम्पादके देश उपासीतेति दर्शयति । शर्कराः सूक्ष्मपाषाणाः । जला-

श्रयवर्जनं शीतनिवृत्त्यर्थम् । चक्षुःपीडनं मशकादिकम् । तस्मादुपासने दिगादिनियमो नास्तीति सिद्धम् ॥

## आप्रायणात्तत्रापि हि दृष्टम् ॥ ४ । १ । १२ ॥

उपास्यसाक्षात्कारद्वारा फलहेतुषूपासनेष्वहंग्रहनामकेषु संशयः, किं कदाचिदुपासनं कृत्वोपरमेत्, उत यावज्जीवमुपासीतेति । पूर्वपक्षे कदाचित्कृतप्रत्ययावृत्तेरदृष्टद्वारा मृतिकाले ध्येयबुद्धिहेतुत्वं फलं, सिद्धान्ते धारावाहिकोपासनस्य साक्षादेव तद्धेतुत्वमिति विभागः । तत्र देशादिनियमाश्रवणात्तदभाववत्, यावज्जीवमुपासनाश्रवणात्तदभाव इति प्राप्ते ब्रूमः । आप्रायणाद्देहपातपर्यन्तमुपासीत । हि यतः, तत्रापि मरणकालेऽपि "स यावत्क्रतुरस्माल्लोकात्प्रैति" इति श्रुत्या ध्येयप्रत्ययानुवर्तनं दृष्टम् । न च तददृष्टसाध्यम्, दृष्टे सम्भवत्यदृष्टकल्पनाऽनुपपत्तेः । श्रुतौ सर्वनामार्थ उपासकः । क्रतुरुपासनम् । "सदा तद्भावभावितः" इति स्मृतिश्च यावज्जीवमुपासनं दर्शयति । तस्मादहंग्रहोपास्तयो यावज्जीवमनुष्ठेया इति सिद्धम् ॥

एवं ज्ञानसाधनानुष्ठाने यत्नाधिक्यार्थं फलाध्यायेऽपि साधनानुष्ठानक्रमं विचार्य, फलाध्यायस्थां फलचिन्तामुपक्रमते ।

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४ । १ । १३ ॥

तथाचास्य फलविचारप्रतिबन्धकसाधनजिज्ञासाऽभावरूपाऽवसरसङ्गतिर्लब्धा । किं ब्रह्मविद्यायामुत्पन्नायां विदुषो भविष्यत्पापासम्बन्धपूर्वपापविनाशौ भवतो न-

वेति सन्देहः । पूर्वपक्षे सत्यामपि विद्यायां पापफलभोगानन्तरं विद्यातो मुक्तिः, सिद्धान्ते विद्योत्पत्त्यनन्तरमेव मुक्तिः, इति बोध्यम् । तत्र फलभोगं विना नास्ति विद्यया पापनाश इति प्राप्ते, ब्रूमः । तदधिगमे ब्रह्मसाक्षात्कारे सत्युत्तरपूर्वाघयोरश्लेषविनाशौ भवत एव । कुतः । तयोर्विदुषि श्रुत्या व्यपदेशात् । "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति श्रुतिर्विद्यात उत्तरस्य पापस्याश्लेषं दर्शयति । "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति श्रुतिर्विद्यातः पूर्वस्य पापस्य विनाशं व्यपदिशति । एवं निर्गुणविदोऽपि पापक्षय व्यपदिशति "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इत्यादिका श्रुतिः । तस्माद्ब्रह्मविद्यावतः पूर्वोत्तरपापासम्बन्ध इति सिद्धम् ॥

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४ । १ । १४ ॥**

पूर्वं ब्रह्मविद्यावतः पापनाशासम्बन्धावुक्तौ । तद्वत्पुण्यस्यापि नाशासम्बन्धौ भवतो न वेति सन्देहे, तत्त्वज्ञानपुण्ययोः शास्त्रीयत्वेनाग्निहोत्रदर्शयोरिव विरोधाभावान्न भवत इत्यभ्यधिकाशङ्कायां, पूर्वन्यायमतिदिशति । इतरस्यापि पापादितरस्य पुण्यस्याप्येवमघवदश्लेषो विनाशश्च ज्ञानाद्भवतः, "उभे उहैवैष एते तरति" इत्यादिश्रुतिषु पापासम्बन्धवत्पुण्यासम्बन्धस्यापि व्यपदेशात् । अपिनाबुशब्दोऽप्यर्थः । एष ब्रह्मसाक्षात्कारवान् । सूत्रे तुशब्दोऽवधारणार्थः । एवं ब्रह्मसाक्षात्कारवतः पुरुषधौरेयस्य पुण्यपापयोर्बन्धहेत्वोरभावात् देहपाते मुक्तिरवश्यं भवत्येवेत्यधिकरणद्वयस्य फलमुक्तम् । अग्निहोत्र-

दर्शयोरविरुद्धफलत्वमुपाधिः । अस्यातिदेशत्वान्न पृथक्सङ्गत्याद्यपेक्षा ॥

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४ । १ । १५ ॥**

पूर्वं ज्ञानात्कर्मक्षय उक्तः । तस्य प्रारब्धकर्मव्यतिरिक्तविषयत्वेनात्रापवादात्सङ्गतिः । ज्ञानजन्यकर्मक्षयः किमविशेषेण कर्ममात्रस्य भवत्युत प्रारब्धकर्मव्यतिरिक्तस्येति संशयः । पूर्वपक्षे जीवन्मुक्त्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तत्र "क्षीयन्ते चास्य कर्माणी"त्यविशेषेण श्रवणात्कर्ममात्रस्य क्षय इति प्राप्ते, ब्रूमः । ये पुण्यपापे एतद्देहावच्छेदेन सुखदुःखानुभवार्थं प्रवर्तेते ते आरब्धकार्ये । तद्व्यतिरिक्ते अनारब्धकार्ये पूर्वे अनादिभवपरम्परायां ज्ञानोत्पत्तिपर्यन्तं सञ्चिते । ते एव क्षीयेते । कुतः । तदवधेः, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"इति देहपातावधिश्रवणादित्यर्थः । तथा च विशेषश्रुत्यनुसारादविशेषश्रुतिर्नेतव्येति भावः । ब्रह्मात्मत्वसाक्षात्कारवान्यावन्न विमोक्ष्ये विमोक्ष्यते तस्य तावदेव चिरं तस्य तावानेव देहपातरूपो विलम्बः । अथ प्रारब्धकर्मभोगाद्देहपातानन्तरं सम्पत्स्ये ब्रह्मसम्पत्स्यत इत्यर्थः ॥

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४ । १ । १६ ॥**

पूर्वमनारब्धकार्याणां कर्मणां ज्ञानात्क्षय उक्तः । तस्य नित्यनैमित्तिकातिरिक्तानारब्धकार्यकर्मविषयत्वेनात्रापवादात्पादसङ्गतिः । किं नित्यनैमित्तिककर्मजातमनारब्धकार्यकर्मवज्ज्ञानात्क्षीयते न वेति सन्देहः । पूर्वपक्षे

काम्यकर्मण इव मुमुक्षूणां नित्यनैमित्तिकयोरप्यननुष्ठानं पङ्कप्रक्षालनन्यायात्, सिद्धान्ते तदनुष्ठानम्, इति बोध्यम् । तत्रानारब्धकर्मत्वाविशेषान्नित्यनैमित्तिककर्मजातं ज्ञानात्क्षीयत इति प्राप्ते, ब्रूमः । अग्निहोत्रादिनित्यनैमित्तिकं कर्म तत्कार्यायैव तस्य ज्ञानस्य यत्कार्यं मुक्तिरूपं तस्मा एव सत्त्वशुद्ध्यादिपरम्परया । कुतः । तद्दर्शनात्, यज्ञादिश्रुतौ ज्ञानहेतुत्वदर्शनादित्यर्थः । तथा च ज्ञानरूपफलैकनाश्यत्वं नित्यनैमित्तिककर्मजातस्य । नात्र पङ्कप्रक्षालनन्यायः, ज्ञानार्थत्वेनानुष्ठानस्यार्थवत्त्वादिति भावः॥

ननु नित्यादेर्ज्ञानार्थत्वे "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति विनियोगवाक्यं किंविषयकमित्यत आह ।

**अतोऽन्याऽपि ह्येकेषामुभयोः ॥ ४ । १ । १७ ॥**

अतोऽग्निहोत्रादेर्नित्यादिरूपादन्याऽप्यस्ति काम्यरूपा साधुकृत्या । तद्विषयमिदमेकेषां शाखिनां विनियोगवाक्यम्, तस्या ज्ञानानुपकारकत्वात् । तच्चानुपकारकत्वमुभयोर्जैमिनिबादरायणयोराचार्ययोरनुमतमित्यर्थः । नन्वस्याः काम्यसाधुकृत्याया "इतरस्याप्येवमसंश्लेष" इत्यत्र नाश उक्तः । कथं तस्या विनियोग इति चेत्, अत्र वक्तव्यम् । सुहृदः साधुकृत्यामुपयन्तीत्यस्याः कोऽर्थः । न तावत्तामेव प्राप्नुवन्तीत्यर्थः, द्रव्यादिवत्तस्याः प्राप्त्ययोगात् । नापि तत्फलं प्राप्नुवन्तीत्यर्थः, शास्त्रफलं प्रयोक्तरीति न्यायविरोधात् । न च वैश्वानरेष्टिन्यायः, अश्रवणात् सुहृदोऽनुद्देश्यत्वाच्च । तस्माद्विद्वत्सेवाकर्तरि सुहृदि विद्वन्निष्ठा साधुकृत्या स्वतुल्यां साधुकृत्यां जनयति,

स्वयं च ज्ञानान्नश्यतीत्यविरोधः । समानः पापकृत्यायामूहः । अर्थवादत्वान्नातीवाभिनिवेष्टव्यम् ॥

## यदेव विद्ययेति हि ॥ ४ । १ । १८ ॥

पूर्वं मुमुक्षूणां ज्ञानार्थं नित्यादिकमनुष्ठेयमित्युक्तम् । तत्किमङ्गाश्रितोपासनसहितमेव ज्ञानार्थमनुष्ठेयमिति नियम, उतोपासनसहितं केवलं वाऽनुष्ठेयमित्यनियमः, इति संशयः । एकविषयत्वं सङ्गतिः । पादसङ्गतिस्तु प्रासङ्गिकी बोध्या । पूर्वपक्षे केवलस्य नित्यादेर्ज्ञानहेतुत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तत्र नियमे प्राप्ते, ब्रूमः, नियमो न युक्त इति । तथाहि "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति श्रुतिर्विद्यासहितस्य कर्मणो वीर्यवत्तरत्वं ब्रुवन्ती विद्याहीनस्य कर्मणो वीर्यवत्त्वं फलहेतुत्वरूपं दर्शयति । तच्च केवलकर्मणो ज्ञानरूपफलहेतुत्वाभावे न युक्तं स्यात् । तस्मात्केवलमपि कर्म ज्ञानहेतुरित्यनियम इति सिद्धम् ॥

एवमनियमेनाग्निहोत्रादिकर्मणो ज्ञानार्थत्वान्न ज्ञानेन क्षय इत्युक्तम् । इदानीं प्रारब्धकर्मणाम् "अनारब्धकार्ये एव तु" इत्यत्र ज्ञानानिवर्त्यत्वेनोक्तानां निवृत्तिप्रकारमाह ।

## भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ ४ । १ । १९ ॥

किं ब्रह्मसाक्षात्कारवान्देहपातानन्तरमपि संसरति न वेति सन्देहः । पूर्वपक्षे साक्षात्कारस्य मुक्तिहेतुत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति विवेकः । तत्र देहपातात्पूर्वं यथा साक्षात्कारेऽपि संसारानुवृत्तिः, एवं देहपातानन्तरमपीत्यनारब्धाधिकरणदृष्टान्तेन प्राप्ते, ब्रूमः । स-

ञ्चितकर्मणां ज्ञानान्नाश उक्तः । इतरे त्वारब्धकार्ये पुण्यपापे भोगेन क्षपयित्वा विद्वान्ब्रह्म सम्पद्यते। "अथ सम्पत्स्ये" "ब्रह्मैव सन्ब्रह्माप्येति" इत्यादिश्रुतिभ्यो देहपातात्पूर्वं प्रारब्धकर्मणां सत्त्वत्कुलालचक्रभ्रमणन्यायेन मिथ्याज्ञानरूपनिमित्तनाशेऽप्यविद्यालेशानुवृत्तिर्युक्ता । तद्भोगानन्तरं कस्यचिदपि कर्मणो जन्ममरणलक्षणसंसारहेतोरभावान्न संसारः । तस्माद्भागेन प्रारब्धकर्मनाशानन्तरं विद्वान्स्वरूपानन्दात्मनाऽवस्थानलक्षणं स्वास्थ्यं मोक्षाख्यं लभत इति सिद्धम् ॥

इति चतुर्थध्यायस्य प्रथमः पादः ॥

---

पूर्वपादान्त्याधिकरण उत्क्रान्त्यनपेक्षा निर्गुणप्राप्तिरुक्ता । इदानीं सगुणविद्याफलभूतस्य ब्रह्मलोकस्योत्क्रान्तिं विना प्राप्त्ययोगात्तत्फलं निरूपयिष्यन्नेव तद्धेतुभूतामुत्क्रान्तिं निर्गुणब्रह्मविद्यतिरिक्तसर्वजनसमानां निरूपयितुं पादमारभते ।

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४ । २ । १ ॥

अस्त्युत्क्रान्तिक्रमबोधिका श्रुतिः "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति । प्रयतो म्रियमाणस्येत्यर्थः । तत्र वाङ्मनसि सम्पद्यत इत्यत्र संशयः, किं वृत्तिमत्या वाच एव मनसि लयात्मकसम्पत्तिरुच्यते, उत वाग्वृत्तेरेवेति । पुर्वपक्षे स्वोपादाने स्वस्य लय इति न्यायासिद्धिः, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तत्र श्रुतिबलाद्वाच एव मनसि लय इति प्राप्ते, ब्रूमः । उक्तिर्वा-

गिति भावव्युत्पत्त्या वाक्शब्देन वाग्वृत्तिरुच्यते । मनोवृत्तौ सत्यामेव मनसि वाग्वृत्तिः सम्प्रलीयते कुतः। दर्शनात्, मनोवृत्तौ सत्यामेव लोके वाग्वृत्तिलयस्य दर्शनात् । तर्हि "वाङ्मनसी"ति श्रुतेः का गतिरित्यत आह "शब्दाच्चे"ति। स्वोपादाने स्वस्य लय इत्यबाधितन्यायानुसारेण वाक्शब्दाद्वृत्तिवृत्तिमतोरभेदोपचारेण भावव्युत्पत्त्या वाऽर्थो नेय इत्यर्थः। नन्वनुपादाने वृत्तिलयो वा कथमिति चेत्, न, अग्निवृत्तिलयस्यानुपादानाप्सु दर्शनादिति ॥

उक्तश्रुतौ वाच एव श्रवणादिन्द्रियान्तराणां चक्षुरादीनां मनसि वृत्तिलयो नास्तीति भ्रमं वारयति ।

**अत एव च सर्वाण्यनु ॥ ४ । २ । २ ॥**

यत एव मनसो वागुपादानत्वाभावान्मनसि वाचो वृत्तिलयमात्रमत एव सर्वाणि चक्षुरादीन्यपि स्वानुपादाने मनसि सवृत्तिके स्ववृत्तिलयमात्रेणानुवर्तन्ते प्रलीयन्ते, न तु स्वरूपेणेत्यर्थः। "तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति श्रुतिः सर्वेषामिन्द्रियाणां मनसि वृत्तिलयबोधिका द्रष्टव्या। तस्मादुत्क्रमणादूर्ध्वमुपशान्ततेजा उपशान्तदेहौष्ण्यः पुनर्जन्म मनसि स्थितैरिन्द्रियैः प्राप्नोतीत्यर्थः ॥

एवं "वाङ्मनसी"ति वाक्यं विचार्य "मनः प्राणे" इत्युत्तरवाक्ये किं सर्वेन्द्रियवृत्तिलयाधारस्य मनसः प्राणे स्वरूपलयो वृत्तिलयो वेति संशये, "अन्नमयं हि सोम्य मन आपोमयः प्राण" इति श्रुतौ प्राणमनसोरबन्नविकारत्वश्रवणादबन्नयोश्चोपादानोपादेयभावात्स्वरूपलय इति प्राप्ते, सिद्धान्तयति ।

## तन्मनः प्राण उत्तरात् ॥ ४ । २ । ३ ॥

"स्वोपादाने" इत्यादिन्यायाभावाद्भवतिविन्द्रियाणां मनसि वृत्तिलयः । इह तु न्यायसत्त्वात्स्वरूपलय इति प्रत्युदाहरणसङ्गतिः, अतिदेशत्वात्सङ्गत्यनपेक्षा वा । 'तत्' सर्वेन्द्रियवृत्तिलयाधिकरणं मनोऽपि प्राणे स्ववृत्तिलयेनैव लीयते न स्वरूपेणेति 'मनः प्राणे' इत्युत्तराद्वाक्यादवगन्तव्यम् । सुषुप्तिमूर्च्छाऽवस्थयोः सवृत्तिके प्राणे सत्येव मनोवृत्तिलयदर्शनादिति हेत्वनुषङ्गः । न ह्यवन्नयोरुपादानोपादेयत्वमात्रेण तद्विकारयोरप्युपादानोपादेयभावो युक्तः, हिमघटयोस्तददर्शनादिति भावः ॥

एवं "मनः प्राणे" इति वाक्यं विचार्य, "प्राणस्तेजसी" त्युत्तरवाक्ये किं प्राणस्य वृत्तिलयस्तेजसि, उत जीवे, इति सन्देहे, श्रुतिबलात्तेजस्येवेति प्राप्ते, सिद्धान्तयति ।

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ । २ । ४ ॥

वाक्यक्रमादर्थक्रमाच्चाधिकरणक्रमो बोध्यः । 'सः' प्राणः 'अध्यक्षे' कार्यकारणसङ्घातस्वामिनि तत्साक्षिणि वा जीवे निवृत्तवृत्तिः सन्नवतिष्ठते । कुतः । तं जीवं प्रत्युपगमनानुगमनावस्थानेभ्यः । यथा राजानं यात्रेच्छावन्तं सन्तं भृत्या आभिमुख्येनागच्छन्ति "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती"ति श्रुतिरिन्द्रियाणां मुख्यप्राणसहितानां जीवं प्रत्याभिमुख्येनागमनं दर्शयति । "तमुत्क्रामन्तं प्राणोऽनूत्क्रामती"ति श्रुतिर्गच्छन्तं जीवं प्रत्यनुगमनं प्राणस्य दर्शयति । "सविज्ञानो भवती"ति श्रुतिः करणव्युत्पत्त्या विज्ञानशब्दवाच्येन्द्रि-

यजातस्य प्राणसहितस्य प्राप्तव्यकर्मफलज्ञानवति जीवेऽवस्थानं दर्शयति । तस्माज्जीव एव प्राणस्य वृत्तिलयः ॥

ननु कथं तर्हि "प्राणस्तेजसी"ति श्रुतिरित्यत आह ।

## भूतेषु तच्छ्रुतेः ॥ ४ । २ । ५ ॥

'तच्छ्रुतेः' प्राणस्तेजसीति श्रुतेः सूक्ष्मात्मना विद्यमानेषु तेजःसहितेषूत्तरदेहारम्भकेषु पञ्चभूतेषूपाधिषूपहितत्वेन विद्यमाने जीवे प्राणस्य वृत्तिलय इत्यवगन्तव्यम्, उपगमादिश्रुत्यन्तरानुसारात् । तथा चोपहितजीवप्राप्तौ प्राणस्योपाधितेज आदिभूतप्राप्तेरर्थसिद्धत्वा"त्प्राणस्तेजसी"ति श्रुत्युपपत्तिरित्यर्थः ॥

ननु "प्राणस्तेजसी"त्येकस्यैव तेजसः श्रवणा त्कथं तेजःसहितेषु भूतेष्वित्युक्तमित्यत आह ।

## नैकस्मिन्दर्शयतो हि ॥ ४ । २ । ६ ॥

एकस्मिन्नेव तेजसि जीव उत्क्रान्तिसमये नावतिष्ठते, उत्तरदेहस्य पाञ्चभौतिकत्वेन पञ्चभूतेषु स्थितेरावश्यकत्वात् । दर्शयतो हीममर्थं रंहत्यधिकरणे व्याख्याते प्रश्ननिरूपणे । यद्वा श्रुतिस्मृती इममर्थं दर्शयतः । "पृथ्वीमय आपोमयो वायुमय आकाशमयस्तेजोमयः" इत्याद्या श्रुतिः । "अण्व्यो मात्राऽविनाशिन्यो दशार्धानां तु याः स्मृताः । ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः" इति स्मृतिः । अण्व्यः सूक्ष्माः । मीयन्त इति मात्राः । प्राङ्मोक्षादविनाशिन्यः । दशार्धानां पञ्चानां भूतानामित्यर्थः । ननु जीवस्योत्क्रान्तिकाले भूताश्रयत्वं "तौ ह यदूचतुः कर्म हैव तदूचतु"रिति कर्माश्रयत्वबोधकश्रुतिविरुद्धमिति

चेन्न । कर्मणो बन्धनिमित्तत्वेनाश्रयत्वं, भूतानां देहोपादानत्वेनाश्रयत्वं, इत्यविरोधात् । तौ याज्ञवल्क्यार्तभागौ यज्ञोवाधारभूतमूचतुस्तत्कर्मैवेति श्रुतेर्वचनम् ॥

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४ । २ । ७ ॥

पूर्वोक्तामुत्क्रान्तिमुपजीव्य सन्दिह्यते, किमुत्क्रान्तिरविदुष एव, उत विदुषो दहरादिसगुणब्रह्मोपासकस्यापि, इति । तत्र "तयोर्ध्वमायन्नमृतत्वमेती"ति दहरोपासकस्य मोक्षश्रवणादविदुष एवोत्क्रान्तिरिति प्राप्ते ब्रूमः । सृतिः सरणानुकूलो देवयानमार्गः । तदुपक्रमात्पूर्वभाविनी योत्क्रान्तिः सा सगुणब्रह्मविदविदुषोः समानैव, "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते" इत्यादिसामान्यश्रवणात् । ननु कथं तर्हि सगुणविद्यायाममृतत्वश्रवणमिति तत्राह "अमृतत्वं चे"ति । "उष दाहे" इति धातोरिदं रूपं "अनुपोष्य" इति । रागादीन्क्लेशानदग्ध्वैवेदमापेक्षिकममृतत्वं ब्रह्मलोकप्राप्तिलक्षणं, न मुख्यो मोक्षः । अत एव "तयोर्ध्वमाय"न्निति मूर्धन्यनाडीद्वारोत्क्रान्तिपूर्वकत्वममृतत्वस्य दर्शितम् । तस्माद्विद्वदविदुषोः समानैवोत्क्रान्तिरिति सिद्धम् ॥

ननूत्क्रान्तिः समानेत्ययुक्तं, मृतस्य स्वरूपत एवात्यन्तं ब्रह्मसम्पत्तेः, इत्याक्षेपे, इदमारभ्यते ।

तदाऽपीतेः संसारव्यपदेशात् ॥ ४ । २ । ८ ॥

"तेजः परस्यां देवताया"मित्यत्र तेजः सजीवं सेन्द्रियजातं सप्राणं मनस्सहितं भूतान्तरसहितं परमात्मनि

सम्पद्यत इति सूक्ष्मशरीरस्य लयः श्रूयते । स लयः किमात्यन्तिक एवोतानात्यन्तिक इति संशयः । पूर्वपक्षे मृतमात्रस्य मुक्तिः, सिद्धान्ते तदभावः, इति बोध्यम् । तत्र ब्रह्मण उपादानत्वादात्यन्तिक एवैष लय इति प्राप्ते ब्रूमः । 'तत्' उक्तविशेषणं सूक्ष्मं तेजः 'आऽपीतेः' आमोक्षादवतिष्ठते, "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्ये ऽनुसंयन्ति यथाकर्म यथाश्रुतम्"इति संसारव्यपदेशात् । विधितत्त्वज्ञानशास्त्रयोर्मृतमात्रस्य मुक्तावानर्थक्यं प्रसज्येत । तस्मात्सुषुप्ताविवानात्यन्तिको लयः ॥

ननूक्तलक्षणं तेजो यद्यस्ति तर्हि देहान्निर्गच्छत्पार्श्वस्थैरुपलभ्येत प्रतिहन्येत चेष्वादिवन्मूर्तान्तरेणेत्यत आह ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४ । २ । ९ ॥

चकारः स्वरूपसौक्ष्म्यसमुच्चयार्थः । उक्तं तेजः प्रमाणतः स्वरूपतश्च सूक्ष्मम्, त्रसरेणुवच्चक्षुर्वच्च तस्य नाडीद्वारा निष्क्रमणश्रुत्या तथा सूक्ष्मत्वेनोपलब्धेः । अत्र सूक्ष्मत्वेनैव स्वच्छत्वमुपलक्ष्यते । तथा चानुद्भूतरूपवत्त्वेन सूक्ष्मत्वाच्चक्षुर्वन्नोपलभ्यते, स्वच्छत्वान्मूर्तान्तरेण न प्रतिहन्यते, स्वल्पत्वान्नाड्यादौ सञ्चारोपपत्तिरिति ॥

## नोपमर्देनातः ॥ ४ । २ । १० ॥

अत एव स्वच्छत्वलक्षणात्सौक्ष्म्यादसक्तत्वरूपादस्य सूक्ष्मशरीरस्य स्थूलदेहस्य दाहच्छेदनादिनिमित्तेनोपमर्देन नोपमर्द इत्यर्थः ॥

सूक्ष्मदेहसद्भावे चौष्ण्यलिङ्गकमनुमानमाह ।

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ४ । २ । ११ ॥

स्थूलदेह एष उपलभ्यमान ऊष्माऽस्यैव सूक्ष्मदेहस्य धर्मः । सत्येव सूक्ष्मदेहे तदुपलब्धेः, तदभावे मृतदेहे तदनुपलब्धेः, इत्यन्वयव्यतिरेकाभ्यां तद्धर्मत्वस्यैवोपपत्तेरित्यर्थः ॥

"आसृत्युपक्रमा"धिकरणे मुख्यामृतत्व उत्क्रान्त्यभावो दर्शितः । स न युक्त इत्याक्षिपति ।

## प्रतिषेधादिति चेन्न शारीरात् ॥ ४ । २ । १२ ॥

व्यवहिताधिकरणेनास्य सङ्गतिः । किं निर्गुणब्रह्मविद उत्क्रान्तिरस्ति न वेति सन्देहे, अस्तीति प्राप्तम् । ननु "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति" इति परब्रह्मविदः शरीरात्प्राणोत्क्रान्तिप्रतिषेधान्नास्त्युत्क्रान्तिरिति चेन्न । शारीराज्जीवादयं प्राणोत्क्रान्तिप्रतिषेधः, न शरीरात्, "न तस्मात्प्राणा उत्क्रामन्ती"ति माध्यन्दिनशाखायां जीवादेव प्राणोत्क्रान्तिप्रतिषेधस्य श्रुतत्वात् । तस्मात्प्राणादिसहितस्य परब्रह्मविदोऽप्युत्क्रान्तिरस्तीति पूर्वपक्षः । श्रुत्यर्थस्तु । मुक्तिप्रक्रमार्थोऽथशब्दः । बाह्यविषयकामनाशून्यत्वमकामत्वम् । मानसिकविषयकामनाशून्यत्वं निष्कामत्वम् । प्राप्तस्वरूपानन्दतृप्तत्वमाप्तकामत्वम् । तत्र हेतुरात्मकाम इति ॥

सिद्धान्तयति ।

## स्पष्टो ह्येकेषाम् ॥ ४ । २ । १३ ॥

एकेषां काण्वानां शाखायां प्राणानां परब्रह्मविदेहादुत्क्रान्तिप्रतिषेधो 'हि' यत उपलभ्यते, अतो न तस्योत्क्रान्तिरस्तीत्यर्थः । तथाहि "यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो नेति" आर्तभागप्रश्ने द्वितीयमनुत्क्रान्तिपक्षमाश्रित्य याज्ञवल्क्यो नोत्क्रामन्तीत्युक्त्वा, तर्हि प्राणोत्क्रान्त्यभावे मृतो न भवेदित्याशङ्क्य "अत्रैव समवनीयन्ते" इति प्राणविलयं प्रतिज्ञाय, तत्सिद्धये "स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" इत्युत्क्रान्त्यवधेर्देहस्योच्छ्वयनादिकमाह । एतत्सामान्यान्माध्यन्दिनशाखायामपि "तस्मा" दित्यनेन देहस्यैव ग्रहणं बोध्यम् । उत्पन्नात्मसाक्षात्कारस्य 'यत्र' यदा 'अयं' स्थूलः प्रत्यक्षः 'पुरुषो' देहो 'म्रियते' सर्वचेष्टाशून्योऽतिशीतलो भूमौ शेते, तदा 'अस्मात्' देहात्प्राणा उत्क्रामन्ति 'आहो' पक्षान्तरेणात्रैव नाशं यान्तीति प्रश्नार्थः । अत्र प्राणशब्देन सूक्ष्मदेह उक्तः । 'स' देह 'उच्छ्वयति' उच्छूनो भवति । नन्वयं रोगः कश्चिन्नेत्यत आह "आध्मायतो" ति । बाह्येन वायुना पूरितो विविधान्शब्दानार्द्रभेरीवत्करोति । यत आध्मातः शब्दवानतो 'मृतो' विलीनसूक्ष्मशरीरः सन्भूमौ शेत इत्यर्थः । तस्माज्जीवात्प्राणोत्क्रान्तेरप्राप्तत्वेन निषेधायोगाद्विद्वद्देहादेव प्राणोत्क्रान्तिप्रतिषेध इति न विदुषो मार्गोत्क्रान्ती स्तः ॥

## स्मर्यते च ॥ ४ । २ । १४ ॥

स्मर्यते च महाभारते मार्गोत्क्रान्त्योरभावः "सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः । देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः" इति । पदशब्दः प्राप्यपदवाची ।

स्वातिरिक्तपदशून्यस्य ब्रह्मविदः पदैषिणो देवा अपि मार्गे मुह्यन्ति मार्गं न जानन्ति तदभावादित्यर्थः । तस्माद्विदुषः स्वरूपे ब्रह्मण्येव प्राणानां लयो नोत्क्रान्तिरिति सिद्धम् ॥

ननु ब्रह्मणि प्राणलय इत्ययुक्तम्, पृथिव्यादिषु लयश्रुतेरित्याक्षेपे, इदमाह ।

## तानि परे तथा ह्याह ॥ ४ । २ । १५ ॥

किं विदुषः प्राणशब्दाभिधेयसूक्ष्मदेहलयः पृथिव्यादिषूत परब्रह्मणीति सन्देहे "गताः कलाः पञ्चदश प्रतिष्ठाः" इति विद्वद्विषयश्रुत्यैव पृथिव्यादिषु लयावगमात्तेष्वेव लय इति पूर्वपक्षः । यद्यपि मनःसहितानि दशेन्द्रियाणि पञ्चभूतसूक्ष्मसहितानि पञ्चप्राणसहितानि वा षोडशकलाः सन्ति, तथाऽपि प्राणमनसोरेकपृथिवीविकारत्वेनैक्यविवक्षया श्रुतौ पञ्चदशेत्युक्तम् । प्रतिष्ठाशब्देन तत्तत्कलोपादानानि पृथिव्यादीन्युच्यन्ते । तानि कलागतास्तत्र लीना इति यावत् । तत्र सिद्धान्तः । तान्युक्तविशेषणानीन्द्रियाणि षोडशकलात्मकसूक्ष्मदेहरूपाणि परे ब्रह्मणि लीयन्ते । तथा ह्याह श्रुतिः "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती"ति । यथा नद्यः समुद्रं प्राप्यास्तं गच्छन्ति, एवमेवास्य जीवस्य परितः सर्वतोऽनवच्छिन्नं प्रत्यग्रूपं ब्रह्म द्रष्टुरिमाः स्वानुभवगम्याः । स्वोपादाने स्वस्य लय इति व्याप्तिमूलकव्यावहारिकप्रमाणानुमानापेक्षया पूर्वश्रुतौ पृथिव्यादिषु लिङ्गशरीरलय उक्तः, तत्त्वावेदकश्रुत्यपेक्षया ब्रह्मविवर्तस्य सर्वस्य ब्रह्मणि लयो द्वितीयश्रुतावुक्तः,

इत्यविरोधः । स्वोपादानेषु प्रलीनाः कलाः स्वोपादानैः सह ब्रह्मणि विनश्यन्तीति श्रुतिद्वयतात्पर्यम् ॥

## अविभागो वचनात् ॥ ४ । २ । १६ ॥

सोऽयं विद्वत्कलाविलयः किमविदुष इवानात्यन्तिक उतात्यन्तिक इति सन्देहः । एकविषयत्वं सङ्गतिः । पूर्वपक्षे मोक्षासिद्धिः, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । यत्र फलं नोच्यते तत्र पूर्वोत्तरपक्षसिद्धिः फलमिति मन्तव्यम् । तत्रानात्यन्तिकलय इति प्राप्ते ब्रूमः । विदुषः कलानां ब्रह्मणा सहात्यन्तमविभाग एव, न सावशेषो लयः कलानाम् । कुतः । कलानां लयोक्त्यनन्तरं "भिद्येते तासां नामरूपे"इति कलानां शक्त्यात्मकनामरूपयोः पुरुषे लयमुक्त्वा "स एषोऽकलोऽमृतो भवती"ति वचनादित्यर्थः ॥

परविद्याचिन्तां प्रासङ्गिकीं समाप्य प्रकृतामपरविद्याचिन्तामनुसरति ।

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४ । २ । १७ ॥

आसृत्युपक्रमाधिकरणे सगुणब्रह्मविदुषामविदुषां च समानोत्क्रान्तिरित्युक्तम् । तत्र विद्वदुत्क्रान्तौ विशेषोऽत्रोच्यते । तस्य लीनवृत्तिकवागादिसमूहस्योत्क्रमिष्यतो जीवस्यौक आयतनं हृदयं तस्य यदग्रं नाडीद्वारमुखं तस्य ज्वलनं प्राप्तव्यकर्मफलज्ञानरूपं प्रद्योताख्यमादौ भवति । तेन प्रद्योतेन प्रकाशितद्वारो विद्वानविद्वांश्च भवति । तथाहि श्रुतिः "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते

* ब्रह्मा प्राह च नारदाय हिमगुर्दक्षौनकायामल
 माण्डव्याय वसिष्ठसञ्ज्ञकमुनिः सूर्यो मयायाह यत् ।
प्रत्यक्षागमयुक्तिशालि तदिद शास्त्र विहायान्यथा
 यत् कुर्वन्ति नरा न निर्वहति तद्विज्ञानशून्याश्चिरम् ॥
 मुनिप्रणीते मनुजैः क्व चिच्चेद्दृश्यतेऽन्तरम् ।
 तदा तदेव ससाध्य न कार्य सर्वमन्यथा" इति ॥

अस्य तात्पर्यार्थः । विधेर्दिनादौ युगपदेव भूतजातमुत्पद्यते तत एव ग्रहचारोऽपि प्रवर्त्तते यैरीरित ते सूर्यसिद्धान्ताद्यागमविरोधिनः । उक्त च ।

"ग्रहर्क्षदेवदैत्यादि सृजतोऽस्य चराचरम् ।
कृताद्रिवेदा दिव्याब्दाः शतघ्ना वेधसो गताः" † ॥

तथा ।

"धात्रा सिद्धपुरस्थितेन मधुमाःशुक्लादिमध्यन्दिने
 सौरेऽह्नि प्रवहानिले भवलये प्रत्यग्भ्रमे योजिते ।
मेषादिस्थितखेचरैः सह ततो वर्षादिवाराः सम
 प्रारब्धाः खगभुक्तयश्च सकलाः कल्पादितो नैव ताः" ॥

तथा ।

"षण्मनूना तु संपीड्य काल तत्सन्धिभिः सह ।
कल्पादिसन्धिना सार्धं वैवस्वतमनोस्तथा ॥
युगाना त्रिघनं यातं तथा कृतयुग त्विदम् ।
प्रोज्भ्य सृष्टेस्ततः काल पूर्वोक्त दिव्यसंख्यया ॥
सूर्याब्दसख्यया ज्ञेया कृतस्यान्ते गता अमी ।
खचतुष्कयमाद्र्यग्निशररन्ध्रनिशाकराः ॥
अत ऊर्ध्वममी युक्ता गतकालाब्दसख्यया" ‡ ।

* अयं श्लोक कमलाकृते 'सिद्धान्ततत्त्वविविवेके'ऽप्युपलभ्यते । तत्र चतुर्थचरणे 'यत् कुर्वन्ति नराधमास्तु तदसद्वेदोक्तिशून्या भृशम्' इति पाठः ।

† सूर्यसिद्धान्ते मध्यमाधिकारे २४ श्लो ।

‡ सूर्यसिद्धान्ते मध्यमाधिकारे ४५–४७ श्लो ।

तथा

'प्रागुक्तसृष्टिशरदः खरसत्रिनिघ्ना हीना विधेर्दिनगते खगभुक्तियाताः
स्युस्ते नवाद्रिकुगुणाष्टगजेषुपञ्चनन्देन्दवः शतमुखे सशका अभीष्टा.'' ॥

इत्यादिसूर्याद्यनेकवचननिवहेषु सहस्रघ्नवेदाङ्काभ्रसप्तभूसमिताब्दोनकमलभवनदिनयाताद्ग्रहचारसाधनमुक्तम् । न पुनर्वर्त्तमानदिनप्रारम्भसमयादतः कथमुच्यते ग्रहा वर्त्तमानद्युयातात् प्रसाध्या इति । किञ्च तर्कविरुद्धमप्येतत् । तथा हि ग्रहचारप्रवृत्तिः किं तावद्ग्रहोत्पत्तिकालावच्छेदेनाहोस्वित् तदनन्तरं वा । नाद्य. । चारस्य क्रियात्मकत्वेन समवायिकारणग्रहजन्यत्वात् । जन्यजनकयोरेककालावच्छिन्नोत्पत्तिकत्वस्यात्यन्ताप्रामाणिकत्वात् । द्वितीयेऽपि ग्रहोत्पादनं निशि दिवसे वा । नाद्यः । तदा हि विधेर्जागरदवस्थत्वेन दिवसत्वं स्याच्च स्याच्च रात्रित्वं 'भवति तावदयं शयितः'—इत्यादिस्वोक्तिविरोधाच्च । नान्त्यः । तथाऽपि द्युयाताद्ग्रहसाधनस्यानुपपत्ते. । रवेरभावदिनादौ ग्रहोत्पत्तिरिति व्याघाताच्च । तस्मादसृष्टतापत्त्या सन्ध्यात्मकस्य कस्यचित् सृष्टिकालस्य वेदबोधितस्यावश्यमुरीकरणायत्ततया तदुत्तरमेव भचारविचारो युक्तः । ननु सुप्तोत्थितेनैवादौ भगवता हिरण्यगर्भेण भचक्रं प्रचक्रमे ततोऽन्यज्जगदित्युचितम् । द्युयाताद्ग्रहसाधनमिति चेन्न । तत्कारणस्य तेजसस्तदाधारयोर्वायुनभसोश्चासृष्टत्वात् । कथं तत्सृष्टिस्थिती स्याताम् । अतः कल्पादित एव ग्रहचारप्रवृत्तिरिति प्रलपता सृष्ट्वा भचक्रमित्याद्यत्र क्त्वाप्रत्ययस्य पूर्वोत्तरभावबोधकत्वेन स्वयमुदीरितार्थस्य व्याघातरूपबाणहननमपश्यता विज्ञानशून्यतामात्रमाभातीति सिद्धान्तसुन्दरतट्टीकाकारादयो वर्णयन्ति । तत् तुच्छम् । कल्पादावेव सुप्तोत्थितस्य निमेषोन्मिषितसिसृक्षापराधीनचेतसो वेधसोऽखिलकर्त्तव्यसृष्टेः प्रागेव परमसूक्ष्मसमये ग्रहादिनिर्माणे बाधकाभावात् ।

''आदौ सर्वस्य जगत उदगाच्चक्षुषो विधेः
कल्पादौ जगतामात्मा तस्थुषामपि भास्करः'' ॥

इति पराशरोक्तेः । 'उदगादयमादित्यो विश्वेन सहसा सह'[1]। इत्यादिश्रुतीनां च ग्रहाद्युपलक्षणपरत्वेन साधकत्वाच्च । 'ग्रहर्क्षदेवदैत्यादि'—इत्यत्र सकलसृष्टौ तावद्विलम्बाभिधानं न तु ग्रहसृष्टाविति न विरोधः । ननूक्तमेवोपादानाधारयोरसृष्टत्वात् कथं तत्सृष्टिरिति चेन्न । संवर्त्तसलिलोल्लसत्फुल्लपाथोजकर्णिकामध्यमध्यासीने महाभूतवलयवेल्लितविग्रहे विधातरि विद्यमाने तदुपादानाधारयोरभाव इति वदतः कथं नाम न व्याघातः । तेजोऽभावे विधेर्जन्मान्धत्वमाकाशाभावे च बधिरत्वं स्यात् । अन्ततो दोधूयमानानां परमाणूनां तदानीमपि विद्यमानतया सिसृक्षासहकारिणा कर्मणा प्रारम्भकसंयोगोत्पत्तौ ग्रहादिजनने बाधकाभावात् । ननु प्रतिसंयोगं क्रियाविभागपूर्वसंयोगनाशोत्तरसंयोगोत्पत्तिक्रमेण क्षणचतुष्टयस्यापेक्षितत्वाद्बहुप्रारम्भकानेकसंयोगोत्पत्तौ कस्यचित् कालस्यान्तरावश्यवाच्यतया ग्रहा वर्तमानद्युयातात् प्रसाध्या इति तथाऽप्यसिद्धमिति चेन्न । अनेकक्षणात्मकस्यापि परमसूक्ष्मतया कालस्यान्तरायत्वेऽपि तत्कृतविशेषानुपलम्भात् । यथा हि चक्षुषः प्राचीनमहीधरमौलिमण्डलायमानमण्डलचण्डकिरणसंयोगनयनगोलकविभागयोरान्तरालिको विद्यमानोऽप्यनेकक्षणघटितः कालविशेषो न विशेषतः परिचेतुं शक्यते । अन्यथा शाखाचण्डरश्म्योरतुल्यकालग्रहणाभिधानं न स्यात् । किञ्च विधिविभावरीविरामावसरे तेजोनभस्वन्नभसामविद्यमानतां वदतो महाभ्रान्तत्वमवगम्यते । तथा हि ब्राह्मलये ह्यन्तर्निमग्नमहीवलयस्य संवर्त्तसमीरणावर्त्तसमुच्छलल्लोलवहलकल्लोलचुम्बितनभोमण्डलस्य विकसत्फणिपतिफणामणिगणावलीमिलन्मयूखपुञ्जपिञ्जरितस्य महाजलधेस्तदुपरि शयानस्य श्रीपुरुषोत्तमस्य तत्पार्षदादीनां च पुराणादिषु श्रवणात् । यदपि रजनीशेषे जगदुत्पत्तिवादिनां मतं दूषितं जाग्रत्त्वाद्दिनत्वं स्यान्न स्याच्च रात्रित्वमिति तदप्युपेक्ष्यम् ।

[1] ऋग्वेदसंहितायाम् म १, अ० १०, सू ५ ।

न हि जागरणतदभावौ दिनरात्रिलक्षणयोः प्रविष्टौ। येन दिनत्वे रात्रित्वाभावापत्तिः स्यात्। अपि तु नयनसञ्चारयोग्यदेशवृत्तिरविसञ्चारकत्वं दिनत्वं तदभावे रात्रित्वमिति लक्षणात्। ननु महाप्रलये तादृशदेशवृत्तिरविसञ्चाराभावस्य विशेष्याभावाधीनस्य सत्त्वाद्रात्रिलक्षणातिव्याप्तिः। न च तादृशदेशावृत्तिरविसञ्चारकत्वं रात्रित्वमिति वाच्यम्। ब्रह्मरजन्यामव्याप्तिरिति चेन्न। तादृशदेशवृत्तिरविसञ्चारचरमध्वसान्यतरत्वावच्छिन्नाभावस्य विवक्षितत्वात्। अस्मन्मते तु कल्पादिग्रहसृष्टेरङ्गीकृतत्वान्न चाशङ्का न चोत्तरम्। यदपि रव्यभावाद्दिनादौ ग्रहोत्पत्तिव्याघातो वर्णितस्तदपि मन्दम्।

"अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे"।

इति भगवद्वचन इव युगसहस्रावच्छिन्नकालविशेषे दिनशब्दस्य लाक्षणिकत्वात्। 'अथ षण्मनूना तु सपीड्य' इत्याद्यार्षवचनैः सहस्रघ्ने दाङ्कशून्यपर्वतभूमितवर्षोनात् कल्पगताद्ग्रहसाधनस्य प्रतिपादितत्वात् कथमतिविरुद्धं कल्पगताद्ग्रहसाधनमुच्यत इति सत्यम्।

"सुप्तोत्थितो हि भगवान् कल्पादौ ससृजे ग्रहान्।
तदैव योजयामास प्रवहाख्ये नभस्वतम्"॥

इति वृद्धपराशरोक्तेरयं भावो नास्माकम्। 'कलौ पाराशरस्मृतिः'- इति स्मरणात्। अथ यथाकाल गतमनवस्त्वेकसप्ततिहताश्चतुर्युगाब्दहताश्च कार्याः। तेषु कृतप्रमाण क्षेप्य तदेव तत्र भूयोगतसंख्याहत व ततो वर्त्तमानमन्वन्तराद्गतचतुर्युगसंख्याहतानि चतुर्युगाब्दानि युगानि च वर्त्तमानयुगात् चैत्रप्रारम्भे गताब्दानि च। एवमिष्टकालाब्दगणो भवति। स द्वादशहतश्चैत्रसितादिमासयुक्तस्त्रिंशद्गुणो वर्त्तमानमाससितादितिथिसहितः कार्य एवं सौरो दिनगणो भवति। त पृथक् कल्पाधिमासकहतं कल्परविदिनैर्विभजेल्लब्धा गताधिमासाः। तैस्त्रिंशद्गुणैरर्काहर्गणो युक्तश्चन्द्राहर्गणो भवति। तं पृथक्स्थ कल्पावमहत कल्पचन्द्रदिनैर्विभजेल्लब्धानि गतावमानि। तैश्चन्द्राहर्गणो हीनो गत-

सावनाहर्गणो भवतीति विष्णुधर्मोत्तरपुराणान्तर्गतपैतामहसिद्धान्त-द्वितीयग्रहगत्यध्याये स्फुटोक्तेश्च । अत एव ।

"कलिसञ्ज्ञे युगचरणे पराशर्यं मतं प्रशस्तमतः ।
वक्ष्ये तदहं तन्मम तत्तुल्यं मध्यमन्यत्र ॥
एतत्सिद्धान्तद्वयमीषद्याते कलौ युगे जातम् ।
स्वस्थाने दृक्साम्यदमतेन खेटाः स्फुटाः कार्याः ॥
नात्र मते सृष्ट्यब्दाः शेषं कल्पादितः प्राग्वत् ।
त्रैराशिकेन साध्यं द्युगणाद्यखिलं तु कल्पगतात्" ॥

इति द्वितीयपराशरमताधिकारे लघ्वार्यभटोक्तमपि संगच्छते-ऽतोऽन्यथाऽनुपपत्त्योभयं परस्परविरुद्धमपि कल्पभेदेन प्रमाणमित्यभ्युपे-यम् । नन्वस्तु मतद्वयस्यापि समूलत्वं तथाऽप्यस्मत्कल्पे कुतश्चारप्रवृ-त्तिरिति चेत् । मैवम् ।

"चारप्रवृत्तौ खेटानां तथा धर्मस्य निर्णये ।
श्वेतवाराहकल्पे तु मतं पराशरं विदुः" ॥

इति गर्गवचनमेव पृच्छतु भवान् । 'तस्मात् षण्मनूनां तु संपीड्य' इत्यादिकल्पान्तरग्रहसाधनविषयाणि वचनान्यालोक्य विषयभेदसंजाता-नामस्मिन् कल्पेऽपि तथैव चारप्रवृत्तिं वदतां श्रीमद्भास्करेणेव भास्करेण सह स्पर्धमानानां खद्योतानामिव गवां प्रसारो विदुषामुपहासकरः । न चैवमप्यस्मिन् कल्पेऽपि सर्वेषां लोकानां सूर्यसिद्धान्तादौ प्रवृत्तिस्तथा-ऽपि कथं युक्तेति वाच्यम् ।

"यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यम् ।
दृश्यते तेन पक्षेण कुर्यात् तिथ्यादिनिर्णयम् ॥
संसाध्य स्पष्टतरं बीजं नलिकादियन्त्रेभ्यः ।
तत्संस्कृतास्तु सर्वे पक्षाः साम्यं भजन्त्येव ॥
ध्यानग्रहोपदेशाद्बीजं ज्ञात्वा च दैवज्ञैः ।
तत्संस्कृतग्रहेभ्यः कर्त्तव्यौ निर्णयादेशौ ॥

कि तेनापि सुवर्णेन कर्णाघात करोति यत् ।
तथा किं तेन शास्त्रेण यत्र प्रत्यक्षतः स्फुटम्" ॥

इत्यादिवसिष्ठसूर्यशाकल्यवचनैर्यस्मिन् काले यत्पक्षानीतो ग्रह आकाशे दृग्योग्यस्तस्मिन् काले तत्पक्षस्य तद्विषये प्रामाण्यप्रतिपादनात् । अत एवैतत्कल्पसिद्धपक्षेण 'कालभेदोऽत्र केवलम्' इत्युक्तत्वाद्यदा ग्रह आकाशे न संवदति तदैतत्पक्षस्याप्यप्रामाण्य बीजदानेन तदाऽपि तस्य प्रामाण्यमिति सर्वाभ्युपगम । तथा च दृग्गणितैक्येन बीजदानेन च प्रामाण्ये सिद्धे कल्पान्तरसिद्धपक्षस्यैतत्कल्पसिद्धपक्षेणाविशेषत्वप्रतिपादनात् प्रवृत्तिरुभयत्र तुल्येति न क्षतिः । एतेन

"अस्मिन् कृतयुगस्यान्ते सर्वे मध्यगता ग्रहाः
विना तु पातमन्दोच्चान्मेषादौ तुल्यतामिताः"[1] ॥

इति सूर्यसिद्धान्तवचन सहाय कृत्वा भास्करमतेन सर्वेषा ग्रहाणा मेषादिस्थितत्वाभाव दृष्ट्वा च कश्चिन्मन्दबुद्धिरज्ञानराजपक्षपाती प्रत्यक्षविरोधमार्षविरोध चास्मासु दूषण शङ्कत्वेन वदति तदप्यपास्तम् । न हि तत्काले त्वया चावास्थितेनाकाशे ग्रहा दृष्टाः । येनैकपक्षस्याप्रामाण्यमभ्युपेयम् । आर्षविरोधस्य पूर्वपरिहारात् । अत एव स्वाभिमतसृष्टिवर्षात् काले कल्पगतादस्मदङ्गीकृतमार्गेण सर्वेषा मेषादिस्थत्वाभावेऽपि न क्षति । अत एव सर्वेषा पदार्थानामार्षोक्ताना वर्त्तमानकाले प्रत्यक्षसंवादात् कल्पितमानेऽपि न दोष. । यथा वेदबाह्याना मते सर्वमन्यथैव कल्पित फलसंवादायुक्तमङ्गीक्रियत इति कश्चित् ।

किं च ।

"विधेर्दिनादौ युगपत् समस्त भूत्वा ग्रहाः प्राग्गमनप्रवृत्ता." ।

इत्यत्र भवतोक्तपत्त्यर्थस्य समस्तकर्त्तृकतया ग्रहकर्त्तृकप्राग्गमनप्रवृत्तरूपक्रियान्तरवैयधिकरण्येन क्त्वाप्रत्ययः कथ नाम स्यात् । समानकर्तृकक्रिययोः प्राक्कालावच्छिन्नक्रियावाचिनो धातोः क्त्वाप्रत्ययशासनात् । ननु

[1] मध्यमाधिकारे ५७ श्लो० ।

विधिना कृता इति द्वयमध्याहार्यम् । भूत्वेन्यस्य कृत्वेत्यर्थः । तथा च विधिना विधे स्वस्य दिनादौ युगपत् समस्तं कृत्वा ग्रहाः प्राग्गमन-प्रवृताः कृता इत्यर्थ इति चेन्नैवम् । भवतेरुत्पत्त्यर्थस्य तत्प्रयोजकव्या-पारबोधकणिचमन्तरेण करोत्यर्थानालम्बनत्वात् । उक्तं च महाभाष्यटी-काकृता [1]"अभवतो गगनादेरक्रियमाणतया भवतश्च घटादेः क्रियमा-णतया भवत्यर्थं कर्त्तुं करोति कर्मत्वम् । एवं च भवतेरुत्पत्त्यर्थादुत्पद्यमानः करोत्यर्थमवलम्बते' इति । अध्याहारकल्पनागौरवाच्च । तस्मादस्मिन् पद्ये त्वाप्रयोगो भास्करोपहासजनितमतिभ्रमनिबन्धन इत्यलं परदो-षगवेषणपल्लवितेन । सूर्यसिद्धान्तानुसारिणो विरुद्धास्तु 'सूर्यसिद्धान्ता-द्युक्तमेव ब्रह्मगुप्तादिभिः सृष्टिविलम्बितकालान्तिकमन्तरं भङ्ग्यन्तरेण शक्तमप्युक्तं भिन्नमतमिव न वस्तुतः । तथा हि । सृष्टिविलम्बितकाल किलैतावानेव १७०६४००० विशाशेन चतुर्युगचतुष्टयम् । तत्र युगभगणाना-मेव लाघवादुपगमेन युगत्रये सर्वभगणाना पूर्णतोपलब्ध्या तत्सग्रहे दोषा-भावात् । तथा च तस्माद्युगत्रयवर्षेषु खचतुष्टयाङ्गनन्दार्कमितेषु शेषम् ४१०४०००। इदमपि विशाशेन युगमेव । तथा च कल्पगताद्ग्रहानयने विशाशभूत फलमूनीभूत तद्वस्तुभूतात् सूर्यकादब्दवृन्दात् साधितेषु ग्रहेषु सयोज्यमिति प्राप्तम् । तत्र प्राञ्चैराधुनिकैरुपायान्तरमासाद्य तद-न्तर सक्रामितु भगणाहर्गणयोरिव विशेष उपकल्पितः । तद्यथा कल्पे कुदिनानि प्राचा मते १५७७९१७८२८००० । आधुनिकमते तु १५७७९१६४५०००० । न्यूनान्येतानि १३७८००० । ततो ग्रहफलस्य तुल्यतोप-पादनाय विशाशवर्षसावनै-७८८९५८९१४०० स्तत्सावनान्तर-१३७८००० कालसभूततत्तद्ग्रहपर्ययतुल्य क्षेपमुपलभ्य कुट्टकेन गुणकभूतास्तस्य तस्य ग्रहस्य पर्यया: समानीताः । तस्मात् सृष्टिवर्षोनकल्पगतसाधितग्रहा एव कल्पगतादपि भवन्त्यतो न सूर्यादितो भिन्नमतः कुदिनभगणादीना सृष्टि-

[1] न सप्रत्युपलब्ध'कैयट'प्रभृतिषूलभ्यतेऽत सम्भाव्यते भर्तृहरिकृत 'सेतु'नाम्न्या महाभाष्यटीकाया भवेदिति ।

वर्षानुरोधेनान्यथा कल्पनात्'-इत्याहुस्तन्न। कुट्टकविषयाभावात्। असत्स्वेषु तेभ्यो महद्भ्यो नमोऽस्त्विति भास्करोक्तदूषणापत्तेश्च। विरुद्धमताभ्या फलैक्यसंवादस्य ब्रह्मणाऽपि कादाचित्कत्वेन युक्त्या दुरुपपादनत्वाच्च। अन्ये तु 'सुप्तोत्थितेन ब्रह्मणा रात्रिशेष एतावद्वर्षैर्ग्रहसृष्टिः कृता। ततः कल्पादिरेव ब्रह्मदिनादिः स एव पूर्वगतिप्रारम्भकाल इत्यस्मदङ्गीकृतमेव सूर्यसिद्धान्तानुसारिभिः स्वीकार्यमन्यथा यावद्दिनेशदर्शन ताव-द्दिनमिति लक्षणेऽव्याप्तिः। सृष्ट्यन्तर्गतकाले दिनांशे सूर्याभावात्। न च भवतोऽपि रात्रिशेषे सूर्यसृजनानन्तर कल्पादितः प्राक्काले सूर्यदर्श-नसत्त्वेनातिव्याप्तिस्तद्भिया यावत्त्वितिजोपरि रविबिम्बसञ्चारस्ताव-द्दिनमिति लक्षणाङ्गीकारात् कल्पादितः प्राक् सूर्यदर्शनसत्त्वेऽपि कल्पा-दित एव सञ्चारस्य स्वीकृतत्वाद्यथा नातिव्याप्तिस्तथा मन्यन्तेऽपि कल्पादावेव रविसृष्टिस्ततः शतघ्नकृताद्रिवेददिव्याब्दैर्ग्रहगतिप्रारम्भ इति। यावद्दिनेशदर्शन तावद्दिनमिति लक्षणे नाव्याप्तिरिति वाच्यम्। कल्पान्ते भग्रहाणा लयश्रवणात् कल्पादितो युगमहीधरवेदवर्षेषु शतगुणितेषु गतिप्रारम्भाभ्युपगमाच्च मन्दोच्चकल्पभगणानां त्वदभिज्ञातानामनुत्प-त्त्यापत्तेः। तस्मात् कल्पादावेव ग्रहगतिप्रारम्भोऽङ्गीकार्यः। एतेन 'विधेर्दिनादौ'—इत्यादिश्लोकद्वयोक्त दूषण निरस्तम्। तस्मात् कल्पा-दित एव ग्रहसाधन युक्तियुक्तमुचितम्। न चैव सूर्यसिद्धान्तादौ सृष्टि-वर्षोनकल्पगताद्ग्रहसाधन कथमुक्तमिति वाच्यम्। यस्मिन् काले सर्वेषा ग्रहणा भगणपूरण स कालो ग्रहसाधनोपजीव्यानुपाते स्वीकार्य इत्युक्त-त्वात्। तथा च कल्पादितः सृष्टिवर्षतुल्यवर्षेषु गतेषु सर्वेषा भगणपूर्त्ति-त्वात्। तत्कालादितो लाघवाद्ग्रहसाधने बाधकाभावात्। अत एव सूर्यसिद्धान्तादौ करणोक्तक्षेपवत् क्षेपकथनम्। अन्यथा क्षेपकयोजनकथना-पत्तेः'—इत्याहुस्तच्चिन्त्यम्। ब्रह्मणः शताधिकवर्षायुर्दोषत्वापत्तेः। उक्त-रीत्या प्रथमकल्पात् पूर्वमुक्तवर्षैर्जगतः सृजनाङ्गीकारात्। दिनादौ भगव-द्वचनेन सृष्टेरुक्तत्वाच्च। किञ्च उभाभ्या पक्षाभ्यामिष्टकाले साधितग्रह-

योस्तुल्यत्वाभावात् । अत एव सृष्टिवर्षे सर्वेषां ग्रहाणां पक्षद्वये-नापि कल्पभगणैर्भगणपूर्त्तित्वाभावः । यथा कल्पादितः सृष्टिवर्षान्ते १७०६४००० भौमस्य राश्यादेः सूर्यसिद्धान्तभास्करोक्तप्रकारेणातुल्यत्वात् ४ । २४ । ०′ ।, ७ । °२८ । १७′ । न चात्र शून्यता येन तत्र भगणपूर्त्तिः । एवमन्येषामपि । तथा च सूर्यसिद्धान्ते स्वभगणानुरोधेन कल्पादितो ग्रहसाधनार्थमपि सृष्ट्यादौ केषां चिद्राश्यात्मकक्षेपककथनापत्तेः । तस्मा-न्मदुक्तकल्पभेदव्यवस्थयोर्मतं सङ्गच्छत इति ॥ २७ ।

इदानीं वर्त्तमानदिगतमाह ।

याताः षण्मनवो युगानि भमितान्यन्यद्युगाङ्घ्रित्रयं
नन्दाद्रीन्दुगुणास्तथा शकनृपस्यान्ते कलेर्वत्सराः ।
गोद्रीन्द्वद्रिकृताङ्कदस्रनगगोचन्द्राः शकाब्दान्विताः
सर्वे संकलिताः पितामहदिने स्युर्वर्त्तमाने गताः ॥२८॥

स्वायम्भुवो मनुरभूत् प्रथमस्ततोऽमी
स्वरोचिषोत्तमजतामसरैवताख्याः ।
षष्ठस्तु चाक्षुष इति प्रथितः पृथिव्यां
वैवस्वतस्तदनु सम्प्रति सप्तमोऽयम् ॥ २९ ॥

वा. भा–श्लोकद्वयं स्पष्टार्थम् । इति ब्राह्ममानम् ॥ २८–२९ ॥

वा. वा–वर्त्तमानब्रह्मयातं मनूनां सञ्ज्ञा च वृत्तद्वयेनाह याताः षण्मनव इति। शकनृपस्यान्ते । शकाश्च ते नरश्च तान् पातीति शकनृपो विक्रमा-दित्यः । यथा मृगप्राणहरे सिंहे मृगपतिप्रयोगस्तथा शकनृपप्रयोगो विक्र-मादित्ये । 'शकनामानो म्लेच्छास्ते व्यापादिता यस्मिन् काले विक्रमार्केण स कालो लोके शकेन्द्रकाल इत्युच्यते'–इति भट्टोत्पलोक्तेः । य एव विक्रम-स्यान्तः स एव शालिवाहनादिरित्युच्चावचजनप्रसिद्धम् । अत्राङ्कानां वाम-तो गतिः । एकस्थानादृशकस्थानादिविन्यासस्य वामक्रमेणैवाद्यैः सङ्केति-तत्वात् । एक एव द्व्यादिनवावसानावृत्तिभिर्द्वित्वादिसङ्ख्या लभते । एव

नवैवाङ्काः सङ्कीर्तिताः । पुनरेक एव दशगुणोत्तरो दशकशतसहस्रादिसंख्या लभते । यत्र नवावसानावृत्त एको विन्यस्यते तदेकस्थानम् । यत्र नवान्ताङ्कावृत्त एव दशगुणोत्तरो विन्यस्यते तद्दशकादिस्थानमित्याहुः । स्थानानन्त्यात् संख्याया आनन्त्यम् । स्थानानां योऽवश्यमन्तव्य उत्तरावधिस्तस्य परार्ध इति संज्ञा कृता । आचार्येण परार्धस्याष्टादश स्थानान्युक्तानि । क्वचिच्छास्त्रान्तरेऽधिकान्युक्तानि । शून्यं नामाभावस्तदपि संख्यान्तर्गतमेव संख्याद्योतकत्वात् । एक एव सहस्रसंख्यां कथं द्योतयेद्यदि एकदशशतस्थानेष्वङ्कानामभावाच्छून्यनिवेशो न स्यात् । नन्वेकादिस्थानस्थितानामङ्कानामभावे यद्वच्छून्यनिवेशेन लक्षादिसंख्यावबोधस्तद्वत् परार्धादिस्थानस्थितानामभावे शून्यनिवेशनेनापि स्यात् । युक्तश्च वामक्रमाद्दक्षिण इति चेत् किमत्र वक्तव्यम् । उक्तमेवात्र बीजगणितं व्याख्यातवद्भिः कृष्णदैवज्ञैरुत्तरावधेरभावात् परिच्छिन्नसंख्यासु तत्सत्त्वेऽपि तस्यानियतत्वात् प्रथमावधेस्तु नियतत्वादिति । उत्तरावधेः प्रदक्षिणक्रमेणैव द्वितीयादिस्थानानां संज्ञाऽस्त्विति तत्रापीदमेवोत्तरम् । अभ्यर्हितस्थानस्यस्य पङ्क्तौ पूर्वनिवेशस्तदधःस्थितस्थानस्थानां सव्यक्रमेण स्थापनमुचितं लोकेषु तथा दृश्यते तत् त्वेकस्थानाद्वामक्रमेण दशकादिस्थानविन्यासेनोपपद्यते । अथ वा परमाण्वाद्यधिकृत्य द्व्यणुकादिसंज्ञाः क्रियन्ते तद्वदेकस्थानमधिकृत्य दशकादिस्थानसंज्ञाकरणे न कश्चिद्दोषः । एकादिस्थानसाध्यत्वाद्दशकस्थानादीनामुत्तरोत्तरसंख्याया पूर्वपूर्वसंख्यायाः सत्त्वात् । तस्मादेकमब्जं नवार्बुदानि सप्त कोट्यः प्रयुतद्वय लक्षनवकं चत्वार्ययुतानि सहस्रसप्तकं शतमेकं सप्त दशका नव चेति गताः शकादौ । ततः शकवर्षाण्येतेषु योज्यानि ॥ २८—२९ ॥

**मरीचिः**—अथ पूर्वं ग्रहा वर्तमानद्युयातात् प्रसाध्या इत्युक्तं तत्रेष्टकाले ब्रह्मदिनगतस्य सौरवर्षज्ञानं शार्दूलविक्रीडितेनाह याता इति । वर्तमाने ब्रह्मदिने अस्मिन् श्वेतवाराहकल्पे इत्यर्थः । षण्मनवः स्वसन्धिसप्तकयुता गताः । तन्मानं च मनुमानं ३०६७२०००० षड्गुणम्

१८४०३२०००० । कृतयुगमानम् १७२८००० सप्तगुणं सन्धिमानम् १२०९६०००। मनुसन्ध्योर्योगः षण्मनुमानम् १८५२४१६००० । सप्तममनोर्युगानि महायुगानि भमितानि । भानामश्विन्यादीनां सप्तविंशन्मितत्वात् सप्तविंशन्मितानि गतानि लिङ्गपरिमाणात्। तन्मानं च ११६६४०००० । ततो वर्त्तमानमहायुगस्यान्यत् किञ्चिद्गतम् । तत्किमत आह । युगाङ्घ्रित्रयम् । कृतत्रेताद्वापरयुगाख्यचरणत्रयं तन्मानं च ३८८८००० । ततः कलेर्वर्त्तमानकलियुगचरणस्य नन्दाद्रीन्दुगुणाः । नन्दशब्देन पूर्वाचार्यसङ्केतान्नवसङ्ख्याग्रहणादेकोनाशीतियुक्तशताधिकसहस्रत्रयमिता वत्सरा वर्षाणि तथा गतानि । एते सर्वे पूर्वज्ञाताङ्काः सङ्कलिताः सङ्कलनविधिनैकीकृताः सन्तः शकनृपस्य। शकाख्यम्लेच्छनरान् पिबति मारयतीति शकनृपो विक्रमादित्यः । तस्यान्ते विरामे शालिवाहनशकादावित्यर्थः । 'युधिष्ठिरो विक्रमशालिवाहनौ' इत्यादिकलियुगीयषट्शकनृपसंग्रहश्लोके विक्रमशकानन्तरं शालिवाहनशकारम्भ उक्तः । गता वत्सरा ब्रह्मदिनारम्भाद्भवन्तीत्यर्थः । योजकानां नियतत्वाल्लाघवात् सङ्कलितमप्याह गोद्रीन्दुद्वीत्यादि । गोशब्देन नवखण्डात्मकभूमेर्ग्रहणात् पूर्वाचार्यसङ्केताच्च नवसङ्ख्या । कृतयुगे धर्मस्य चतुष्पादत्वात् तत्पदेन लक्षणया चतुःसङ्ख्या । ब्रह्मणा नवसङ्ख्याङ्कानां कल्पितत्वादङ्कशब्देन नवसङ्ख्या । दस्रयोर्द्विसङ्ख्याश्रयत्वात् तत्पदेन द्विसङ्ख्या । तथा च तत्र गतवर्षाण्यमूनि १९७२९४९१७९ । वर्त्तमानकाले तज्ज्ञानमाह । शकाब्दान्विता इति । शालिवाहनशके केवलशकप्रयोगः पूर्वाचार्याणां वर्त्तमानत्वात् । तस्य अब्दाः । वर्त्तमानकाले यानि गतवर्षाणि लोकपरम्परया प्रसिद्धानि तैरन्विताः पूर्वसङ्कलितसिद्धाङ्काः । वर्त्तमानसौरवर्षादौ गताः कल्पगतसौरवर्षाणि भवन्ति । एतेन शकाब्दसङ्ख्यायामेव वर्त्तमानसौरवर्षमस्तीति बुद्धिविक्षेपवशाद्वृत्तानुशीलो दोषाकरादिवत् कश्चिदाह तदपास्तम् । गताब्दत्वानुपपत्तेः । जन्मपत्र्यादौ विक्रमार्कराज्यातीतसंवदिति रूपेण विक्रमशकस्य लिखनाच्च ॥ २८ ॥

अथ प्रसङ्गाद्गतमनूना नामानि वर्त्तमानस्यापि तदाह स्वायम्भुव इति । प्रथम आद्यः स्वायम्भुवः । ब्रह्मोत्पत्त्यादितो मनुः ससन्धितत्कालस्वामी ब्रह्मदिनारम्भात् प्रवृत्तोऽभूज्जात इत्यर्थः । ततस्तद्भोगकालानन्तरममी चत्वारो मनवो जाताः ससन्धयः क्रमेण उत्तरोत्तर न तु युगपत् । असम्भवात् । तन्नामान्याह स्वारोचिषोत्तमजतामसरैवताख्या इति । एव पञ्च । षष्ठः ससन्धिर्मनुश्चाक्षुषाख्यः । यद्यपि गणनया चाक्षुषस्य षट् सख्या लभ्यन्ते तथाऽपि पञ्चममन्वये चाक्षुषमनुरिति षष्ठपदेन द्योतनात् । अन्यथा पूर्ववत् तत इत्यनुक्तेन तज्ज्ञानासम्भवात् । तत् तस्माच्चाक्षुषात् अनु पश्चात् तदनन्तरमित्यर्थः । सम्प्रति वर्त्तमानकाले योऽय मनुरस्ति स सप्तमः । तन्नामाह वैवस्वत इति । सूर्यात्पन्नत्वात् । अत्र मानमाह इति । पृथिव्यामिति पुराणकथाप्रसङ्गात् प्रथितः ख्यातः पुराणमेवात्र मानमित्यर्थः ।

"वैवस्वतो मनुर्नाम माननीयो मनीषीणाम्" ।
इति प्रसिद्धोक्तेश्च ।

तथा च श्रीपतिः ।

"स्वायम्भवाख्यो मनुराद्य आसीत् स्वारोचिषश्चोत्तमतामसाख्यौ ।
जातौ ततो रैवतचाक्षुषौ च वैवस्वतः सम्प्रति सप्तमोऽयम्"—इति ॥

अन्यथा प्रयोजनाभावान्नोक्तानि । तानि तु—

"सावर्णिर्दक्षसावर्णिर्ब्रह्मसावर्णिकस्ततः ।
धर्मसावर्णिको रुद्रपुत्रो रौच्यश्च भौत्यकः" ॥

इति पुराणवचनाज्ज्ञेयानि । इद पद्यम् 'उक्ता वसन्ततिलका तभजा जगौ गः'—इत्युक्तत्वाद्वसन्ततिलकाख्यम् । 'सिंहोद्धतेयमुदिता मुनिकाश्यपेन'—इत्युक्तेश्च सिंहोद्धताख्य[1] च ॥ २९ ॥

इदानीं बार्हस्पत्यं मानुषमान चाह ।

**बृहस्पतेर्मध्यमराशिभोगात्**
**संवत्सरं सांहितिका वदन्ति ।**

१ 'उद्धर्षिणीयमुदिता मुनिसैतवेन' इति वृत्तरत्नाकरोक्तेरुद्धर्षिण्याख्य च ।

ज्ञेयं विमिश्रं तु मनुष्यमानं
मानैश्चतुर्भिर्व्यवहारवृत्तेः ॥ ३० ॥
वर्षायनर्त्तुयुगपूर्वकमत्र सौरान्-
मासास्तथा च तिथयस्तुहिनांशुमानात् ।
यत् कृच्छ्रसूतकचिकित्सितवासराद्यं
तत् सावनाच्च घटिकादिकमार्क्षमानात् ॥३१॥

**वा. भा** पूर्वश्लोके पूर्वार्धं सुगमम् । मनुष्यमानं तु विमिश्रं ज्ञेयम् । कुतः । यतो लोके चतुर्भिरेव मानैर्व्यवहारः प्रवर्त्तते । वर्षायनर्त्तुयुगादिकं सौरमानात् प्रवर्त्तते लोके । मासास्तिथयश्च चान्द्रात् । व्रतोपवासचिकित्सितसूतकवासराद्यर्कसावनात् । घटिकादिकं नाक्षत्रादेव । एवं सौरचान्द्रसावननाक्षत्रमानैश्चतुर्भिरेभिर्मिश्रितैर्मनुष्यमानम् ॥ ३०–३१ ॥

**वा. वा.** अथ बार्हस्पत्यमनुष्यमाने चाह । बृहस्पतेरिति । कल्पादेर्यावन्तो राशयो गुरुभुक्तास्ते षष्टितष्टा विजयाद्या गतसंवत्सरा भवन्ति । यतः कल्पादौ विजयः । दाक्षिणात्यास्तु मनुजमानात् संवत्सरमिच्छन्ति ।

तथा च रोमशसिद्धान्ते ।

"विजयाद्यास्तथाऽर्काब्दाः प्रभवाद्याः स्मृता बुधैः"–इति ।

किं तन्मनुजमानं विमिश्रमिति । सौरचान्द्रसावननाक्षत्राणां मध्ये द्वयोस्त्रयाणां सर्वेषां वा मिश्रणं तन्मिश्रमानम् । यस्माच्चतुर्भिर्मानैर्व्यवहारो बहु प्रवर्त्तते । चैत्रशुक्लप्रतिपदि रव्युदयान्मनुजमानप्रवृत्तिं वदन्ति । मानचतुष्टयप्रयोजनमाह । वर्षायनर्त्तुयुगपूर्वकमिति । वर्षं वत्सरः । वसतोऽयने यस्मिन् स वत्सरः । यातीत्ययनं राशिषट्केन दक्षिणोत्तराशां वेति । इयर्त्ति गच्छत्यसाधारणं लिङ्गमिति ऋतुः ॥ ३०–३१ ॥

**मरीचिः**–अथात्र बार्हस्पत्यमाननिरूपकोपजातिकापद्यं क्वचित् क्षेपकम् ।

"कल्पादितो मध्यमजीवभुक्ता ये राशयः षष्टिहृतावशेषाः ।
संवत्सरास्ते विजयाश्विनाद्या इतीज्यमानं किल संहितोक्तम्" ॥

इति दृश्यते तदपि व्याख्यायते। कल्पादितः कल्पादिमारभ्योक्त-रीत्या स्वकाले मध्यममानेन ये गुरुभुक्ता राशयस्ते षष्टितष्टाः शेषाङ्क-मिता विजयाद्याः संवत्सरा षष्ट्यन्तर्गता भवन्ति । शेष द्वादशतष्टमा-श्विनाद्या गताः संवत्सरा द्वादशमाससंज्ञान्तर्गता भवन्ति । तद्-ग्रिममासाख्य वर्त्तमानबार्हस्पत्यवर्षं भवति । कल्पादौ विजयसंवत्सर-प्रवृत्तेर्गुरोरश्विनीस्थत्वेनाश्विननामाख्यवर्षप्रवृत्तेश्च ।

"कल्पादिभुक्ता गुरुराशयो ये संवत्सरा. स्युर्विजयादयस्ते ।
बभाषिरे साहितिका हि पूर्वे वर्षाणि तस्याश्विनपूर्वकाणि" ॥

इति सिद्धान्तशेखरोक्तेश्च । इति इदमोज्यमान किल निश्चयेन संहितासूक्तमार्षोक्तमित्यर्थः ।

तथा च सूर्यसिद्धान्ते ।

"द्वादशघ्ना गुरोर्याता भगणा वर्त्तमानकैः ।
राशिभिः सहिता. शुद्धा. षष्ट्या स्युर्विजयादय."[1]इति ।

अत्रोपपत्ति स्पष्टा ।

अथ द्वेगकश्लोकोपपत्तिरूपप्रसङ्गाद्बार्हस्पत्यवर्षस्वरूपं मनुष्यमान चोपजातिकयाऽऽह बृहस्पतेरिति । बृहस्पतेर्मध्यममानेन यो राशिभो-गस्तस्माद्भूतो यः कालस्त संवत्सर बार्हस्पत्यवर्षं साहितिकाः संहिता-कर्त्तारो वसिष्ठाद्या वदन्ति । अन्यवर्षव्यावृत्तये समिति । साहितिका इत्यनेनन युक्तिः । किन्त्वागम एव प्रमाणमिति सूचितम् ।

तथा च वसिष्ठसिद्धान्ते ।

"मध्यगत्या भभोगेन गुरोर्गौरववत्सराः"–इति ।

अस्मान्मासदिनादिक परिभाषया ज्ञेयम् । मनुष्यमानमाह ज्ञेय-मिति । चतुर्भिर्मानैः सौरचान्द्रसावननाक्षत्रैर्विमिश्र मिश्रितं संयुक्त यत् कालमान तन्मनुष्यमान ज्ञेयम् । तथा च चतुर्मानात्मकमेक मनुष्यमानमि-त्यर्थः । 'मानुष तु कथित चतुर्भिदम्'–इति सिद्धान्तशेखरोक्तेः । ननु मनुष्यमानस्य तच्चतुर्मानात्मकत्वेनानतिरिक्तत्वान्निष्प्रयोजकत्वाच्च कथ-

[1] सूर्यसिद्धान्ते मध्यमाधिकारे ५५ श्लो ।

नमयुक्तमत आह । व्यवहारवृत्तेरिति । मनुष्यमानेन व्यवहारस्य सत्त्वादित्यर्थः । तथा च सौरचान्द्रसावननाक्षत्रैर्लोके व्यवहारस्य वर्तमानत्वात् सर्वत्र चतुर्मानानामावश्यकतया लाघवादेकशब्देन मनुष्याणां तद्ग्रहार्थं मनुष्यमानसंज्ञा तेषामुक्ता । प्रत्येकतः समुदायस्य भिन्नत्वादतिरिक्तमानत्वं च सिद्धमिति भावः । सौरचान्द्रसावननाक्षत्राणां मध्ये द्वयोस्त्रयाणां सर्वेषां वा मिश्रणं तन्मिश्रमानम् । यतश्चतुर्भिर्मानैर्व्यवहारो बहु प्रवर्तते । चैत्रशुक्लप्रतिपदि रव्युदयान्मनुजमानप्रवृत्तिं वदन्तीति केचित् ॥ ३० ॥

ननु चतुर्भिर्मानैर्व्यवहारः कथमस्तीत्यतः सिंहोद्धतयाऽऽह वर्षायनर्तुयुगपूर्वकमिति । वर्षं द्वादशमासात्मकम् । उत्तरदक्षिणायनद्वयम् । शिशिरादय ऋतवो मासद्वयात्मकाः । युगपूर्वकं युगादि महायुगमनुकल्पादीनां मानमत्र जगति सौरमानादस्ति ।

"भानोर्मकरसङ्क्रान्तेः षण्मासा उत्तरायणे ।
कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम् ॥
द्विराशिनाथा ऋतवस्ततोऽपि शिशिरादयः ।
मेषादयो द्वादशैते मासास्तैरेव वत्सरः[१]" ॥

इति सूर्यसिद्धान्तोक्तेः । मासा यत्र केवलास्तत्र ते चान्द्रमानाद् व्यवहारयोग्याः प्रवर्तन्ते । 'त्रिंशता तिथिभिर्मासश्चान्द्रः'–इति सूर्यसिद्धान्तोक्तेः । अत्र ज्योतिःशास्त्रे ज्ञातास्तिथयः प्रतिपदादयस्तथा चान्द्रमानात् । आसां मासांशत्वादिति भावः ।

"अर्काद्विनिसृतः प्राचीं यद्यात्यहरहः शशी ।
तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः"[२] ॥

इति सूर्यसिद्धान्तोक्तेः । यत् कृच्छ्रसूतकचिकित्सितवासराद्यम् । कृच्छ्रं चान्द्रायणादि प्रायश्चित्तकर्म शास्त्रे प्रसिद्धम् । सूतकं जन्ममरणाशौचम् । औषधोपचारश्चिकित्सितम् । वासरो वारः । आदिशब्दाद् दिननिशाप्रहरात्मककर्मादिकं च यत्किञ्चित् तत्सर्वं सावनात् सूर्यसावन-

१ सूर्यसिद्धान्ते मानाध्याये १०–११ श्लो । २ सूर्यसिद्धान्ते मानाध्याये १३ श्लो ।

मानात् । घटिकादिकर्म् । आदिपदात् पलप्राणादि । आर्क्षमानाचा-चान्द्रमानादित्यर्थं । एवकारार्थश्चकारः प्रत्येकं पञ्चम्यन्तेनान्वेति । तेन यन्मानेन यदुक्तं तदन्यमानादपेक्षितम् । तदा तत्पदपूर्वकं तत्पदेनैव सगृह्यत इति भाव. ।

तथा च श्रीपतिः ।

"वर्षाणि सौरात् प्रवदन्ति चान्द्रान्मासांस्तिथीः सावनतो दिनानि ।
सौरेन्दवाभ्यां तु विना न तत् स्याचान्द्रमानाद्घटिकादिकालः ॥
युगायनर्त्तुप्रभृतीनि सौरान्मानादहोरात्र्योरपि वृद्धिहानी ।
पर्वाधिमासोनदिनानि चान्द्रात् तथा तिथेरर्धमपि प्रदिष्टम् ॥
प्रायश्चित्तं सूतकाद्यं चिकित्सा यज्ञाद्येव कर्म वारादिकं च ।
शास्त्रे त्वस्मिन् खेचराणां च चारा विज्ञातव्याः सावनाद्भास्करीयात्" ॥
इति ॥ ३१ ॥

इदानीं मानोपसंहारश्लोकमाह ।

**एवं पृथङ्मानवदैवजैत्र-**
**पैत्रार्क्षसौरैन्दवसावनानि ।**
**ब्राह्मं च काले नवमं प्रमाणं**
**ग्रहास्तु साध्या मनुजैः स्वमानात् ॥ ३२ ॥**

**वा. भा.**–एवं कालस्य नव मानानि । तत्र ग्रहानयनं मनुष्यमानात् । यतस्ते मनुष्यैः साध्याः ॥ ३२ ॥

इति श्रीभास्करीये सिद्धान्तशिरोमणौ कालमानाध्यायः ।

**वा. वा.** अथोपसंहरति । एवं पृथङ्मानवेति ।

यद्यपि दैवमासुरं च मानं दिवसभेदाद्भिद्यते तथाऽप्यहोरात्रैक्यादभेद इति नवैव मानानि स्वीकृतानि । काले कलनात्मके ब्राह्मं नवमं प्रमाणं परिमाणमित्यर्थः । एवं वर्षादिकालस्तत्तन्मानैर्नवधा भिद्यत इति । मनुष्योपयोगित्वाच्छास्त्रस्य यथोपयोगस्तथैव ग्रहा मनुजैर्मनुष्यमानात् साध्याः । चकारोऽनुक्तसमुच्चयार्थस्तेन ग्रहसमवेतानि

[1]सदृशं राजशार्दूल त्वयैतद्वाक्यमीरितम् ।
सैारे वंशेऽभिजातेन वसिष्ठवशवर्त्तिना ॥ २ ॥
[2]यस्तु मेऽभिमतः कामस्त्वत्तः प्राप्तुमभीप्सितः ।
यदुद्दिश्यागतश्चास्मि कार्यं तच्छ्रूयतां [3]मम ॥ ३ ॥
[4]यज्ञसिद्धिकरं किञ्चिदास्थितोऽस्मिमहद्व्रतम् ।
न क्रोद्धव्यं मया तत्र कस्यचिद्भुवि भूपते ॥ ४ ॥
व्रते [5]चास्य समाप्ते मे यज्ञघ्नौ राक्षसाधमैा ।
वेदीमभ्येत्य तरसा रुधिरेणाभ्यवर्षताम् ॥ ५ ॥
[6]अभिभूतोऽसकृत्ताभ्यामहं नियम[7]तन्त्रितः ।
अपक्रम्याश्रमात्तस्माद्द्रष्टुं त्वामभ्युपागतः ॥ ६ ॥
न हि मे क्रोधमुत्स्रष्टुं क्षमं तत्र कथञ्चन ।
ईदृशी यज्ञदीक्षासैा मम [8]तत्र महाक्रतैा ॥ ७ ॥
[9]त्वत्प्रसादादविघ्नेन प्रापयेयं क्रियाफलम् ।

---

1 For this Sl B Chap XIX 2, सदृशं राजशार्दूल (a)तवैव भुविनान्यत । महावशप्रसूतस्य वसिष्ठ व्यपदेशिन ॥ (a) V has तवैतद &c 2 For this Sl B 3 यत्तुमे हृद्गत वाक्य तस्य कार्यस्य निश्चय । कुरुष्व राजशार्दूल भव सत्यप्रतिश्रव ॥ 3 G 3 इति 4 For this and the following Sl B 4 6 अह नियममातिष्ठे विध्यर्थंपुरुषर्षभ । तस्य विघ्नकरैा द्वैा तु राक्षसैा कामरूपिणैा ॥ व्रतेतु वहुशश्चीर्णे समाप्त्या राक्षसाविमैा । मारीचश्च सुबाहुश्च वीर्यवतैा सुशिक्षितैा ॥ तैा मासरुधिरैाघेण वेदि तामभ्यवर्षताम । 5. G 5 चाप्यसमाप्ते &c 6 For this, and the following Sl B 6–8 अवधूते तथाभूते तस्मिन्नियमनिश्चये ॥ कृतश्रमो निरुत्साह स्तस्माद्देशादपाक्रमे । न च मे क्रोधमुत्स्रष्टु बुद्धिर्भवति पार्थिव ॥ तथाभूताहि साचर्या नशापस्तत्र (a) मुच्यते । (a) S has विद्यते 7 G 6 यन्त्रितः 8 G 7 तस्मिन् &c 9 This Sl is wanting in B

त्रातुमर्हसि मामार्त्तं शरणार्थिनमागतम् ॥ ८ ॥
[1]तयो[2]स्तु प्रतिषेद्धारं रामं सत्यपराक्रमम् ।
दातुमर्हसि मे तत्र रक्षार्थममितैाजसम् ॥ ९ ॥
शक्तो ह्येष मया गुप्तः सहजेन च तेजसा ।
निहन्तुं समरश्लाघी स्रष्टारमपि रक्षसाम् ॥ १० ॥
विद्ये चास्मै [3]प्रदास्यामि तेजोबलसमन्विते ।
त्रयाणामपि लोकानां येनाजय्यो भविष्यति ॥ ११ ॥
[4]न च तैा राममासाद्य शक्तैा स्यातुं नराशनैा ।
हन्तुं [5]चैतैा न काकुत्स्थादन्य उत्सहते पुमान् ॥ १२ ॥
[6]तैा तु वीर्यबलोन्मत्तैा कालकल्पैा दुरासदैा ।
रामास्त्रबलनिर्दग्धैा शयिष्येते हतैा युधि ॥ १३ ॥
[7]भीर्न चैव त्वया कार्या रामं प्रति कथञ्चन ।
अहं ते प्रतिजानामि पतितैा विद्धि राक्षसैा ॥ १४ ॥
[8]वेद्म्यमोघबलं राममहं सत्यपराक्रमम् ।

---

1 For this, and the following 2 Slokas, B 8 11 स्वपुत्र राजशार्दूल राम सत्यपराक्रम ॥ काकपक्षधर घोर ज्येष्ठ मे दातुमर्हसि । शक्तोह्येष मया गुप्तो दिव्येन स्वेन तेजसा ॥ राक्षसाये वि कर्त्तार स्तेषामपि विनाशने । श्रेयश्चास्मै प्रदास्यामि बहुरूप न सशय ॥ त्रयाणामपि लोकाना येन ख्याति गमिष्यसि । 2 G 9 स्त्व &c 3 G 11 प्रयच्छामि &c 4 For this Sl B 11 12 नचतैा राममासाद्य शक्तैा स्यातु कथचन ॥ न चतैा राघवादन्यो हतुमुत्सहतेपुमान् । 5 G 12 चेमैा &c but P has चैतैा &c 6 For this Sl B 12-13 वीर्यात्सिक्तैा हि तैा पापैा कालपाशव शगतैा ॥ रामस्य राजशार्दूल न पर्याप्तो महात्मनः । 7 For this Sl B 13 14 नच पुत्रगत स्नेह कर्त्तुमर्हसि पार्थिव ॥ अह ते प्रतिजानामि हतैा तैा (a) विद्धि राक्षसैा (a) S has ब्रह्मराक्षसैा 8 For this Sl B 14 15 अह वेद्मि महात्मन

## XXIII

[1]तच्छ्रुत्वा व्यथितो राजा विश्वामित्रवचस्तदा ।
मुहूर्त्तमिव निश्चेष्टो ध्यात्वेदं वाक्यमब्रवीत् ॥ १ ॥
[2]ऊनषोडशवर्षोऽयमकृतास्त्रश्चमे सुतः ।
नयुद्धयोग्यतामस्य पश्यामि सह राक्षसैः ॥ २ ॥
[3]इयं त्वक्षौहिणी पूर्णाबलस्य मम दुर्जया ।
अविघ्नव्रतचर्यायास्तावत्तवभविष्यति ॥ ३ ॥
अहं स्वयं गमिष्यामि न रामोगन्तुमर्हति ।
बालोऽयमकृतास्त्रश्च न च वेत्तिबलाबलम् ॥ ४ ॥
[4]न चास्त्रशस्त्रकुशलो न च युद्धविशारदः ।
न च राक्षसयुद्धेषु योग्योऽयं कूटयोधिषु ॥ ५ ॥

---

1 For this Sl B XX 1 तच्छ्रुत्वा राजशार्दूल विश्वामित्रस्य भाषित । मुहूर्तमिव निःसञ्ज्ञः सञ्ज्ञावानिदमब्रवीत ॥ 2 For this Sl B 2 ऊनषोडश वर्षो मे रामो राजीवलोचन । नयुद्ध &c ॥ 3 For this, and the following Sl B 3—7 इयमक्षौहिणी सेना यस्याहं पतिरीश्वर । अनया सहितो गत्वा योद्धाहं तैर्निशाचरैः ॥ इमे शूराश्च विक्रान्ता भृत्या मेऽस्त्रविशारदा । योग्या रक्षोगणैर्योद्धुं न राम नेतुमर्हसि ॥ अहमेव धनुष्पाणिर्गोप्ता समरमूर्द्धनि । यावत्प्राणान्धरिष्यामि [a]तावद्योत्स्ये निशाचरैः ॥ निर्विघ्ना व्रतचर्या सा भविष्यति सुरक्षिता । अहं तत्र गमिष्यामि न रामं नेतुमर्हसि ॥ बालो ह्यकृतविद्यश्च न च वेत्ति बलाबल । [a] S has युध्यमानो &c Between the 2 lines of Sl. 3 of our text G (3—5) has the lines—अनया[a]ह वृतस्तत्र योत्स्यामि पिशिताशनै.॥ सन्ति शूराश्च मे योधा. कान्तान्तकयमोपमाः । रक्षसा प्रतियोद्धारस्ते मया सह[a]यान्त्वपि॥ यावत प्राणा धरिष्यन्ति युध्यतो मे निशाचरै. । [a] P तु &c [b] P यान्त्विति । 4 For this Sl B 7—8 न चास्त्रबलसंयुक्तो न च युद्धविशारदः ॥ न चासौ रक्षसा योग्य· कूटयुद्धा हि राक्षसा. ।

[1]रामेणाहं विहीनश्च मुहूर्त्तमपि नोत्सहे ।
जीवितुं मुनिशार्दूल न रामं नेतुमर्हसि ॥ ६ ॥
[2]नववर्षसहस्राणि ममजातस्य साम्प्रतम् ।
वृद्धेनोत्पादिताः पुत्रा मयाचैते कथञ्चन ॥ ७ ॥
प्राणैः प्रियतरा ब्रह्मन् ममैते देवरूपिणः ।
एभिर्विना न जीवेयमिति मे निश्चिता मतिः ॥ ८ ॥
त्यक्त्वाचान्यान् सुतान् रामे प्राणाः सम्प्रति मे स्थिताः ।
गुणाभिरामे लोकस्य सोमवत् प्रियदर्शने ॥ ९ ॥
उदारगुणसम्पन्नं मनोहृदयनन्दनम् ।
प्राणैः प्रियतरं पुत्रं नमेत्वं नेतुमर्हसि ॥ १० ॥
प्रणिपत्याभियाचे त्वां कृपणः पुत्रलालसः ।
[3]ज्येष्टं पुत्रं नमे रामं भगवन्नेतुमर्हसि ॥ ११ ॥
[4]अवश्यं यदि नेतव्यो [5]रामो वैषत्वया मुने ।
चतुरङ्गबलोपेत[6]स्ततो यातु मया सह ॥ १२ ॥

---

1 For this B 8—9। विप्रमुक्तो हि रामेण &c 2 For this, and the following 4 Slokas, B 10—12 षष्टिवर्षसहस्राणि जातस्य मम कौशिक ॥ कृच्छ्रेणोत्पादितश्चाय न राम नेतुमर्हसि । चतुर्णामात्मजाना हि प्रीति परमिका मम ॥ (a)ज्येष्ठ धर्म्मप्रधाने च न राम नेतुमर्हसि । (a) V has ज्येष्ठ धर्म्मप्रधान &c 3 P has the following line on the margin, to be read between this line, and the next Sl of our text,—चतुर्णामात्मजाना हि प्रीतिरत्र हि मे सदा । 4 For this Sl B 9—10 यदि वा राघव ब्रह्मन्नेतुमिच्छसि सुव्रत ॥ चतुरंग समायुक्त मया सह च त नय । 5 G 14. राम एष &c P has रामोऽयवै &c. 6 P तदा ।

[1]किंवीर्यौ राक्षसौ तौ च पुत्रौ कस्य कुतश्चतौ ।
किंप्रमाणौ च कावेतौ [2]राक्षसौ मुनिपुङ्गव ॥ १३ ॥
कथं च प्रतिकर्त्तव्यं [3]तयो रामेण [4]रक्षसोः ।
मामकैर्वा बलैर्ब्रह्मन् मया वा [5]कूटयोधिनोः ॥ १४ ॥
[6]सर्वं मे शंस भगवन् मया तत्र कथं तयोः ।
यज्ञे ते प्रतिकर्त्तव्यं नामतः कौ च तौ मुने ॥ १५ ॥
[7]श्रूयते हि महावीर्यो रावणो नाम राक्षसः ।
पुत्रो विश्रवसः क्रूरो भ्रातावैश्रवणस्य तु ॥ १६ ॥
[8]सते कश्चिन्नु यज्ञस्य विघ्नकृल्लोकरावणः ।
नशक्तास्तस्य संग्रामे वयंस्थातुं दुरात्मनः ॥ १७ ॥

---

1 For this Sl B 12—13 कि वीर्या राक्षसास्ते च कस्य पुत्राश्च के चते ॥कथप्रमाणा के चैतान रक्षति मुनिपुगव । 2 G. 15 तद्रू हि &c but 'P has राक्षसौ &c 3 B 13 तेषा &c P ततो &c 4 B 13 रक्षसा 5 B 14 कूटयोधिना 6 For this Sl B 14—15 सर्व मे शस भगवन् कथ तेषा मया रणे ॥ स्थातव्य दुष्टभावाना वीर्योत्सिक्ता हि राक्षसा॰ । 7 For this Sl B 15—18, तस्य तद्वचन श्रुत्वा विश्वामित्रोऽभ्यभाषत ॥ (a)पौलस्त्यवशप्रभवो रावणो नाम राक्षस । स ब्रह्मणा दत्तवरस्त्रैलोक्य बाधते भृश ॥ महाबलो महावीर्यो राक्षसैर्बहुभिर्वृतः । श्रूयते च (b) महाराज रावणो राक्षसाधिप ॥ साक्षाद्वैश्रवणभ्राता पुत्रो विश्रवसो मुने । (a) V पुलस्त्य &c (b) V महावीर्यो &c 8 For the rest of this Chap. B 18—28 यदा न खलु यज्ञस्य विघ्नकर्त्ता महाबल॰ ॥ तेन सचोदितौ तौ तु राक्षसौ च महाबलौ । मारीचश्च सुबाहुश्च यज्ञविघ्न करिष्यतः ॥ इत्युक्तो मुनिना तेन राजोवाच मुनि तदा । न हि शक्तोऽस्मि सग्रामे स्थातु तस्य दुरात्मन. ॥ स त्व प्रसाद धर्म्मज्ञ कुरुष्व मम पुत्रके । मम चैवाल्पभाग्यस्यदैवत हि भवान् गुरुः ॥ देवदानवगधर्वा यक्षा पतगपन्नगाः । न शक्ता रावणं सोढु कि पुनर्म्मानवा युधि ॥ स तु वीर्यवता वीर्यमादत्ते युधि रावण । तेन चाह न शक्तोऽस्मि सयोद्धु तस्य वा बलै ॥ सबलो वा मुनिश्रेष्ठ सहितो वा ममात्मजै । कथमप्यमरप्रख्य संग्रामाणामको

स[1] त्वं मेबालपुत्रस्य प्रदानं कर्त्तुमर्हसि ।
अनतिक्रमणीयोहि भवान् मे परमो गुरुः ॥ १८ ॥
देवदानव गन्धर्व यक्षरक्षोगणेष्वपि ।
नविद्यते रावणस्य प्रतियोद्धा दुरात्मनः ॥ १९ ॥
सहिवीर्यवतां वीर्यमादत्त इति नः श्रुतम् ।
तेन सार्द्धं न[2] शक्ताः स्मो योद्धुं वीर्यविघातिना ॥ २० ॥
अथवा लवणो नाम यज्ञहा ते मधोः सुतः ।
तथापि न विमोक्ष्यामि पुत्रं सोऽपि हि दुर्ज्जयः ॥२१ ॥
अथ कालान्तकप्रख्यौ पुत्रौ सुन्दोपसुन्दयोः ।
मारीचश्च सुबाहुश्च विघ्नं ते कुरुतः [3] सदा ॥ २२ ॥
तथापि न विमोक्ष्यामि पुत्रं [4]तेऽहं प्रसीद मे ।
तौ हि राक्षसकन्यायां जातौ मायाविनौ किल ॥ २३ ॥
एषामन्यतमं हित्वा प्रतियोत्स्यामि संयुगे ।
अन्यथा त्वनुनेष्यामि भवन्तं सहबान्धवैः ॥ २४ ॥

आदिकाण्डे दशरथवाक्यम् ॥

विद ॥ बालं मे तनय ब्रह्मचैव दास्यामि पुत्रक । अथ कालोपमौ युद्धे सुतौ-सुदोपसुदयो ॥ यज्ञविघ्नकरौ तौ ते नैव(a)दास्यामि पुत्रक । (b) मारीचश्च सुबाहुश्च वीर्यवतौ सुशिक्षितौ ॥ तयोरन्यतर योद्धु यास्यामि ससुहृद्गण । अन्यथा त्वनुनेष्यामि भवत सहबाधव ॥ इति नरपतिजल्पनाद्द्विजेंद्र कुशिकसुतं सुमहान् विवेशमन्यु । सुहुत इव मखेऽग्निराज्यसिक्त समभवदुज्ज्वलिता महर्षिवह्नि ॥ (a) V has दास्याम्यह सुत (b) Before this line, V and S read the line तौ तु राक्षसकन्यायां जातौ दैत्यकुलोद्भवौ । 1 G 20 मे त्व &c, 2 G 22 शक्तोऽसौ &c, but P has शक्ता स्मो &c 3 G 24 सह but P has सदा 4 G 25 रामं &c. but P has तेऽह &c

## XXIV

तच्छ्रुत्वा वचनं तस्य स्नेहव्याकुलिताक्षरम् ।
समन्युः कौशिको वाक्यं प्रत्युवाच महीपतिम् ॥ १ ॥
[1]पूर्वं करिष्य इत्युक्त्वा प्रतिज्ञां हातुमिच्छसि ।
राघवाणामयुक्तोऽयं सत्यधर्म्म[2]विपर्ययः ॥ २ ॥
[3]यद्येतत्ते क्षमं राजन् गमिष्यामि यथागतम् ।
[4]मिथ्याप्रतिज्ञां कृत्वेमां सुखीभव सुतैः सह ॥ ३ ॥
[5]तस्माद्रोषपरीतात्तु विश्वामित्रान्महौजसः ।
चचाल पृथिवी भीता[6]सुराश्च भयमाविशन् ॥ ४ ॥
[7]कौशिकं कुपितं[8]मत्वा[9]जगन्मैत्रो महामुनिः ।
वसिष्ठो भगवान् वाक्यं राजानमिदमब्रवीत् ॥ ५ ॥
[10]इक्ष्वाकूणां कुले जातःसाक्षाद्धर्म्म इव स्वयम् ।
[11]सत्यवाक् सततं भूत्वा नानृतं[12]वक्तुमर्हसि ॥ ६ ॥
[13]त्रिषु लोकेषु विख्यातः सत्यवागिति च प्रभो ।

---

1 For this Sl B XXI 2 पूर्वमर्थं प्रतिश्रुत्य प्रतिज्ञा हातुमिच्छसि । राघवाणामयुक्तोऽय कुलस्यास्य विपर्यय ॥ 2 G 2 व्यतिक्रम 3 For this Sl B 3 यदीद ते क्षम राजन् गमिष्यामि यथागतम । मिथ्याप्रतिज्ञ. काकुत्स्थ सुखी भव सुहृद्वृन. ॥ 4 P has मिथ्या &c 5 For this Sl B 4 तस्य रोषपरीतस्य विश्वामित्रस्य धीमत । चचाल वसुधा कृत्स्ना(a)देवाना च भय महत ॥ (a) V has विवेश च भय सुरान् । 6 G 4 सुराश्च भयमाविशत् but P has सुराश्च भयमाविशन् 7 For this Sl B 5 त्रस्तरूप तु विज्ञाय जगत्सर्वं महानृषि । नृपतिं सुव्रतो धीरो वसिष्ठो वाक्यमब्रवीत् ॥ 8. G 5 दृष्ट्वा &c 9 P has जगन्मित्र &c 10 For this Sl B 6. इक्ष्वाकूणा कुले जात. सक्षाद्धर्म्मइवापर· । धृतिमान्सुव्रत श्रीमान् न धर्म हातुमर्हसि॥ 11 P. सत्यवान् &c 12 P, कर्त्तुमर्हसि 13 For this Sl B 8 त्रिषु लोकेषु विख्यातो धर्म्मात्मा इति राघव· । स्वधर्मं प्रतिपद्यस्व नाधर्मं वोढुमर्हसि ॥

नार्हस्यद्य[1]मृषावादं वक्तुं धर्म्मव्यपेक्षया ॥ ७ ॥
कर्त्तास्मीति प्रतिज्ञाय नकरिष्यसि चेन्नृप ।
विश्वामित्रवचः सत्याद्भ्रष्टः पापमवाप्स्यसि ॥ ८ ॥
अनृतंमा वचः कार्षीर्म्माधर्म्म्याद्गीनशः पथः ।
सत्यप्रतिज्ञतां रक्ष[2]राजन् रामं विसर्जय ॥ ९ ॥
कृतास्त्रमकृतास्त्रं वा नैनं शक्ष्यन्ति राक्षसाः ।
गुप्तं कुशिकपुत्रेण[3]प्रधर्षयितुमाहवे ॥ १० ॥
[4]एष विग्रहवान् धर्म्मः एष[5]वेदविदांवरः ।
एष वीर्यवतां श्रेष्ठो विद्याज्ञानतपोनिधिः ॥ ११ ॥
[6]दिव्यान्यस्त्राण्यशेषेण वेदैष कुशिकात्मजः ।
देवाश्च न विदुर्यानि कुतोऽन्ये भुविमानवाः ॥ १२ ॥
[7]दत्तान्यस्मै कृशाश्वेन दिव्यान्यस्त्राण्यशेषतः ।
महीं पालयता पूर्वं प्रीतेनामिततेजसा ॥ १३ ॥

---

1 G मृषावादी भवितुं पुत्रहेतुना P मृषावादी भूत्वा धर्मव्यपेक्षया 2 For this, and the following Sl B S (a)प्रतिश्रुत्य करिष्येति उक्त वाक्यमकुर्वत । इष्टापूर्तवधो भूयात्तस्माद्राम विसर्जय ॥ (a) V has सश्रुत्यैव करिष्यामीत्यकुर्वाणस्य ॥ राघव, for the first line, as also a marginal reading agreeing with B 3 Between this, and the following line, P reads the lines, त्रिषु लोकेषु विख्यात धर्म्मात्मेति यशोगतम । न तद्विक्लवया बुद्ध्या सर्वथा हातुमर्हसि ॥ 4. G 9 राम राजन् &c but P has राजन राम &c 5 B 9 ज्वलनेनामृत यथा 6 For this Sl B 10 एष विग्रहवान् धर्म्म एष वीर्यवता वर. । एष विद्याधिको लोके तपसश्च परायण ॥ 7 P धर्म्मभृता वर 8 For this Sl B 11—12 एषोऽस्त्रा न्विविधान्वेत्तित्रैलोक्ये सचराचरे । नैनमन्य पुमान्वेत्ति न च वेत्स्यति केचन ॥ न देवा नर्षय. केचिन्नामरा न च राक्षसा । गधर्वा यक्षप्रवरा सकिन्नरमहोरगा. ॥ 7 For this Sl B 13—14 सर्वास्त्राणि (a)कृशाश्वस्य पुत्रा॰ परमधार्म्मिका । कौशिकाय पुरा

[1]जया च विजया चैव दाक्षायण्यौ महाव्रते ।
[2]तयोरस्त्राण्यशेषाणि जज्ञिरे विष्णुतेजसा ॥ १४ ॥
पञ्चाशतं तत्र सुतान् जनयामास वै जया ।
वधाय रिपुसैन्यानामजयान् कामरूपिणः ॥ १५ ॥
विजया जनयामास पुत्रान् पञ्चशतं वरान् ।
अस्त्राणामप्रधृष्याणामजेयानां महौजसाम् ॥ १६ ॥
[3]तानि सर्वाण्ययं वेद विश्वामित्रो महायशाः ।
सप्रयोगरहस्यानि ससंहाराणि राघव ॥ १७ ॥
तानि दास्यत्यशेषेण रामायैष महामुनिः ।
यैरस्त्रैस्तानि रक्षांसि रामो जेष्यत्यसंशयम् ॥ १८ ॥

---

दत्ता यदा राज्य प्रशासति ॥ तेपि पुत्रा (b)कृशाश्वस्य प्रजापतिसुतासुता । नैकरूपा महावीर्या दीप्तिमन्तो जयावहा ॥ (a) & (b) V has भृशाश्वस्य &c Between this, and the following Sl of our text G (14) has ते हि पुत्राः कृशाश्वस्य प्रजापति(a)सुतोपमा । नैकरूपा महात्मानो दीप्तिमन्तो (b)जयान्विता ॥ (a) P has समप्रभा (b)P महाबला 1 For this, and the following 2 Slokas, B 15—17 जयाच सुप्रभा चैव दक्षकन्ये सुमध्यमे । ते सूतेऽस्त्राणि शस्त्राणि शत परमभास्वरम ॥ पञ्चाशत सुतान लेभे जया(1)लब्धवरा वरान् । वधायासुरसैन्यानामप्रमेयानरूपिणः ॥ सुप्रभाजनयच्चापि पुत्रान्पञ्चाशत पुन । सहाराचाम दुर्धर्षान्दुराक्रामान्बलीयस ॥ (a)V has नाम परापरान् 2 G 15 ययो &c, but P has तयो &c 3 For this, and the following 2 Slokas, B 18—22 तानि चास्त्राणि वेत्त्येष यथावत कुशिकात्मज । अपूर्वाणा च जनने शक्तो भूयश्च धर्मवित ॥ तेनास्य मुनिमुख्यस्य धर्मज्ञस्य महात्मन । न किंचिदस्त्यविदित भूत भव्य च राघव ॥ एव वीर्यो महातेजा विश्वामित्रो महायशा । न रामगमन राजन् सशय गन्तुमर्हसि ॥ तेषा निग्रहणे शक्त स्वय च कुशिकात्मज । (a)तत्र पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ इति मुनिवचनात्प्रसन्नचित्तो रघुवृषभश्च मुमोद (b)पार्थिवः । गमनमभिरुरोच राघवस्य प्रथितयशा (c)कुशिकात्मजाय बुद्ध्वा ॥ (a) Before this line V has the additional

अनुग्रहार्थं रामस्य प्रजानामपि चात्मनः ।
नराम[1]गमने राजन् [2]विचारयितुमर्हसि ॥ १९ ॥

आदिकाण्डे वसिष्ठवाक्यम् ॥

---

XXV

[3]एवमुक्तो वसिष्ठेन राजा दसरथः सुतम् ।
संप्रहृष्टमना राममाजुहाव सलक्ष्मणम् ॥ १ ॥
[4]आदौ कृतस्वस्त्ययनं मातृभिः कृतमङ्गलम् ।
स्वयञ्चैव वसिष्ठेन कृतस्वस्त्ययनक्रियम् ॥ २ ॥
स्नेहान्मूर्द्धन्युपाघ्राय राजा दशरथः सुतम् ।
ददौकुशिकपुत्राय लक्ष्मणानुचरं तदा ॥ ३ ॥
[5]ततो वायुरवात् पुण्यो नीरजस्कः शुभः शुचिः ।

---

line—धनुर्भर्तोऽस्यशक्रस्तु विभियात्समरे विभो (b) S has भास्वर (c) S has कुशिकात्मजेन &c 1 G 20 गमन &c but P has गमने &c 2 G 20 निवारयितुम &c, but P has विचारायतुम &c P has the following additional Sloka on the margin, to end the chapter with —एव वीर्यामहातेजा विश्वामित्रो महायशाः । रमोह्यवेक्षितोऽनेन दुर्जय ससुरासुरे ॥ 3 For this Sl B XXII 1 तथा वसिष्ठे ब्रुवति राजा दशरथः स्वय । प्रहृष्टवदनो राममाजुहाव सलक्ष्मण ॥ 4 For this, and the following Sl B 2—3 कृतस्वस्त्ययन मात्रा पित्रा दशरथेन च । पुरोधसा वसिष्ठेन मगलैरभिमन्त्रित ॥ स पुत्र मूर्ध्न्युपाघ्राय राजा दशरथस्तदा । ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ 5 For this, and the following Sl B 4—5 ततो वायु. सुखस्पर्शो नीरजस्को ववौ तदा । विश्वामित्रगत रामं दृष्ट्वा राजीवलोचन ॥ पुष्पवृष्टिर्महत्यासीद्देवदुदुभि(a)निस्वनै. । शङ्खदुदुभिनिर्घोष. प्रयाते तु महात्मनि ॥ (a) S has निस्वनै

विश्वामित्रा[1]नुगं रामं दृष्ट्वा राजीवलोचनम् ॥ ४ ॥
पपात [2]पुष्पवृष्टिश्च गीतवाद्यञ्च शुश्रुवे ।
शङ्खदुन्दुभि[3]निर्घोषः प्रयाते रघुनन्दने ॥ ५ ॥
विश्वामित्रो ययावग्रे [4]तंरामः पृष्ठतो ऽ[5]न्वयात् ।
काकपक्षधरोधन्वी तञ्च सौमित्रिर[6]न्वयात् ॥ ६ ॥
[7]विश्वामित्रगतं रामं दृष्ट्वा देवाः सवासवाः ।
प्रहर्षमतुलं प्राप्ता दशग्रीववधैषिणः ॥ ७ ॥
[8]विश्वामित्रं महात्मानं तावुभौरामलक्ष्मणौ ।
[9]तदानुययतुर्वीरौ मत्तद्विरदविक्रमौ ॥ ८ ॥
बद्धगोधाङ्गुलित्राणौ खड्गतूणधनुर्धरौ ।
[10]यथानुजग्मतुः स्थाणुं कुमाराविवपावकी ॥ ९ ॥
अध्यर्द्धं योजनं गत्वा सरय्वा दक्षिणे तटे ।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ १० ॥
[11]वत्सराम जलं तावद्विधिवत् स्प्रष्टुमर्हसि
उपदेक्ष्यामि ते श्रेयो माभूत् कालस्य पर्ययः ॥ ११ ॥

---

1 G 4 गतं &c 2 G 5. पुष्पवृष्टि खाद्गोतनादश्च &c 3 P घोषश्च &c 4 B 6 ततो रामो महायशाः । 5 G 6 न्वगात्, 6 B 6 न्वगात् 7 This Sl is wanting in B 8 For this, and the following Sl B 7—11 कलापिनौ धनुष्पाणी शोभयानौ दिशो दश । विश्वामित्रं महात्मानं (a)त्रिशीर्षाविव-पन्नगौ ॥ अनुजग्मतुरक्षुद्रौ पितामहमिवाश्विनौ । अनुयातौ श्रिया दीप्तौ शोभयंताव-निंदितौ ॥ तदा कुशिकपुत्र तु धनुष्पाणी स्वलङ्कतौ । बद्धगोधाङ्गुलित्राणौ खड्गवतौ महाद्युती ॥ कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ । अनुयातौ श्रिया दीप्तौ शोभये-तामनिंदितौ ॥ स्थाणुं देवमिवाचिंत्य कुमाराविव पावकी । (a) V. has पंचशीर्षा विवोरगौ. 9 G 8 तदानु(a)जग्मतुर्वीरौ यथेन्द्र देवमश्विनौ (a) P. ययतुर्वीरौ &c.1 10 G 9 तदानु &c 11 For this Sl B 1 2 of Sl, 12 गृहाण वत्स

[1]गृहाणद्वे इमे विद्ये बलामतिबलां तथा ।
नते श्रमो जरा[2]चाभ्यां भविता नाङ्गवैकृतम् ॥ १२ ॥
न चसुप्तं प्रमत्तंवा धर्षयिष्यन्ति नैर्ऋताः ।
न चते सदृशो राम वीर्येणान्यो भविष्यति ॥ १३ ॥
[3]सदेवनरनागेषु लोकेष्विह पुमां स्त्रिषु ।
नसैाभाग्ये नदाक्षिण्ये न बुद्धिश्रुतिपैारुषे ॥ १४ ॥
नोत्तरे प्रतिपत्तव्ये [4]त्वत्तोऽन्योवाभविष्यति ।
एतद्विद्याद्वयं[5]गृह्य भविता नास्तिते समः ॥ १५ ॥
[6]क्षुत्पिपासे चते राम नात्यन्तं पीड़यिष्यतः ।
[7]जपतो [8]दुर्गकान्तारप्रदेशेष्वटवीषु च ॥ १६ ॥
[9]सारतां त्रिषु लोकेषु गमिष्यसि च राघव ।
[10]विद्याद्वयमिदं गृह्य यशश्चाव्ययमाप्स्यसि ॥ १७ ॥

---

सलिल माभूत कालस्य पर्यय ॥ 1 For this Sl B 13 मन्त्रग्राम गृहाणत्व बलामतिबला तथा । न श्रमो न ज्वरो वा ते न रूपस्य विपर्यय ॥ 2 G 12 वाभ्या &c 3 B 4. न बाह्वो सदृशो वीर्ये पृथिव्यामस्ति कश्चन ॥ 4 For this and the following Sl B 15—17 त्रिषु लोकेषु (a)वा राम न भवेत्सदृशस्तव ॥ बलामतिबल चैव पठत(b)स्तात राघव ॥ न सैाभाग्ये न दाक्षिण्ये न ज्ञाने बुद्धिनिश्चये । नोत्तरे प्रतिवक्तव्ये समो लोके तवानघ ॥ एतद्विद्याद्वये लब्धे न भवेत्सदृशस्तव । बला चातिबला चैव सर्वज्ञानस्य मातरैा ॥ (a) V & S वै &c (b) V & S स्तव &c 5 G 15 त्वत्तुल्यो वा &c 6 G 15 प्राप्य यशश्चाव्ययमाप्स्यसि 7 For this Sl B 18 क्षुत्पिपासे न ते राम भविष्येते नरोत्तम । बलामतिबला चैव(a)पठतस्तात राघव ॥ (a) V पठत पथि &c S पठतस्ततो &c For the first line of Sl 16 of our text G 16 बलामतिबला चैव ज्ञानविज्ञानमातरैा । क्षुत्पिपासे चतेराम नात्यर्थं पीडयिष्यत ॥ 8 G 17 जयश्च &c ॥ P has दिव्य &c 9 This line is wanting in B., but V has the following line for it— गृहाण सर्वलोकस्य गुप्तये रघुनन्दन । 10 This line is wanting in G For

पितामहसुते ह्येते विद्ये [1]आयुर्बलप्रदे ।
पात्रं त्वमसि काकुत्स्थ विद्ययोर्ग्रहणेऽनयोः ॥ १८ ॥
स्वभावजैर्गुणैर्दिव्यैः [2]काममस्यतुलैर्युतः ।
भूयस्तव गुणोत्कर्षमेते विद्ये करिष्यतः ॥ १९ ॥
[3]ततो रामो जलं स्पृष्ट्वा प्राञ्जलिः प्रणतः स्थितः ।
प्रतिजग्राह ते विद्ये विश्वामित्रात्तपोधनात् ॥ २० ॥
[4]गृहीतविद्योऽनुज्ञातस्ततो रामो महायशाः ।
तत्रोवास निशामेकां सरय्वां सहलक्ष्मणः ॥ २१ ॥

आदिकाण्डे विद्याप्रदानम् ॥

---

this line, and the following 2 Slokas B 19—21 विद्याद्वयमधीयाने यशः श्चाथ भवेद्भुवि । पितामहसुते ह्येते विद्ये तेज समन्विते ॥ (a)प्रदातु तव काकुत्स्थ सदृशस्त्व हि पार्थिव । काम बहुगुणा सर्वे त्वय्येते नात्र सशय ॥ तपसा सभृते चैते बहुरूपे भविष्यत (a) V प्रदास्ये &c 1 G 18 चायुर्बलावहे, P has आयुर्बलावहे 2 G 19 कामजैर्बहुलैर्वृत, P has कामैरप्यतुलैर्युतः 3 For this Sl B 21—22 ततो रामो जल स्पृष्ट्वा प्रहृष्टवदनः शुचि ॥ प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः । विद्यासमुदितो राम. शुशुभे(a)भीमविक्रम· ॥ (a) V भूरिविक्रम 4 For this Sl B 23—24. सहस्ररश्मिर्भगवान् शरदीव दिवाकर । गुरुकार्याणि सर्वाणि नियुज्य(a)कुशिकात्मज ॥ ऊषुस्ता रजनी तत्र सरय्वां सुसुख त्रय. ॥ दशरथनृपसूनुसत्तमाभ्या तृणशयनेऽनुचिते तदोषिताभ्या । कुशिकसुतवचोऽनुलालिताभ्या सुखमिव सा विबभौ विभावरी ॥ (a) S कुशिकात्मजे

# खण्डनोद्धारः ।

सन्मिश्रश्रीवाचस्पतिविरचितः ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकाल-
याध्यक्षेण पण्डितविन्ध्येश्वरीप्रसादद्विवेदिना
उक्तपाठशालीयन्यायशास्त्राध्यापकेन
न्यायाचार्योपाधिधारिणा
श्रीवामाचरणभट्टाचार्येण च

संस्कृतः ।


वाराणस्याम्

मेडिकल् हाल् नामकयन्त्रालये

१९०९ ईसवीयवत्सरे

मुद्रितः ।

शाल्यादिबीजं यस्यान्यस्य क्षेत्रे प्ररोहति स क्षेत्री बीजं बीजजन्यं फलं लभते न तु बीजीति लोके प्रसिद्धमेवेति ।

एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह ।

**तद्वत्परस्त्रियाः पुत्रौ द्वौ सुतौ कुण्डगोलकौ ।**
**पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः ॥ २३ ॥**

परेण संगता स्त्री परस्त्री तस्याः परस्त्रियाः सकाशात्परबीजेन सुतावुत्पन्नौ यौ द्वौ कुण्डगोलकौ पुत्रौ तावपि तद्वत्पूर्वोक्तन्यायेन यस्य भार्यायामुत्पन्नौ तस्यैव नोत्पादकस्येति । यथा

गोऽश्वोष्ट्रदासीषु महिष्यजाविकासु च ।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥

इति मनुस्मरणात् । तावेव लक्षयति जीवति पत्यौ जारोत्पन्नः कुण्डः कुण्डसंज्ञः, मृते तस्मिन् जारोत्पन्नो गोलकसंज्ञश्चेति । "अमृते च मृते चैव जारजौ कुण्डगोलकाविति" स्मरणात् । तयोश्च यद्यपि वर्णलक्षणाभावेनासंस्कार्यत्वं प्रतीयते तथापि वचनात्संस्कारः कार्यः । तथा च ब्रह्मपुराणे । षण्ढादीनुपक्रम्य "एवमेव द्विजैर्जातौ संस्कार्यौ कुण्डगोलकाविति" स्मरणात् । तयोर्मध्ये जारस्य गर्भोत्पादने वक्ष्यमाणपारदार्यप्रायश्चित्ताद्द्विगुणं प्रायश्चित्तम् ।

गमने तु व्रतं यत्स्याद्गर्भे तु द्विगुणं भवेदित्युशनःस्मरणात् । क्षेत्रिणस्तु द्वादशान्ते वक्ष्यमाणं सामान्यं प्रायश्चित्तम्,

चान्द्रायणं यावकं च तुलापुरुष एव च ।
गवां चैवानुगमनं सर्वपापप्रणाशनम् ॥

इतिज्ञेयम् । व्यभिचारिण्यास्तु दशमे वक्ष्यति ।

तर्हि बीजिनः कः पुत्र इत्यत आह ।

**औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः ॥**
**दद्यान्माता पिता वापि स पुत्रो दत्तको भवेत् ॥ २४ ॥**

यः क्षेत्रजः स्वक्षेत्रे संस्कृते स्वयमुत्पादितः स औरसः स एव बीजिनो मुख्यः पुत्रस्तदाह मनुः ।

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादितश्च यः ।
तमौरसं विजानीयात्पुत्रं प्राथमकल्पिकमिति ॥

ननु क्षेत्रजः पृथगेव कथं न गण्यते तस्याप्यन्यत्र पुत्रत्वेन परिगणनादिति चेन्नैवम् । कलौ नियोगनिषेधेनैव तस्याप्रसक्तेः ।

क्षेत्रजश्चैव बीजी च द्वावेतौ निरयं गतौ ।
न रक्षति च यो दारान् परदाराश्च गच्छति ॥

इति महाभारते कलिप्रक्रमे निन्दाश्रवणाच्च । तस्माद्यथापूर्वमेव साधीयः । तर्हि तदभावे कथमित्यत आह । दत्त इति दत्तो मातापितृभ्यामन्यतरेण वान्यस्मै । तल्लक्षणमाह मनुः ।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥ इति ।
आपदि प्रतिग्रहीतुरपुत्रत्वे, सपुत्रत्वे तु तस्यैव दोषः ।
अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिस्तथा ।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥

इत्यत्रिस्मरणात् । आपदि दुर्भिक्षादौ । अनापदि दाने दातुर्दोष इति प्राञ्चः । स च भ्रातृपुत्र एव कार्यः ।

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

इतिमनुस्मरणात् । नेदं यथा श्रुतमर्थवत् । अपुत्रदायाधिकारिक्रमे भ्रातृपुत्राणां पञ्चमस्थानस्थितिविरोधात् । पिण्डाधिकारेऽपि पत्नी भ्राता च तज्जश्चेति तृतीयस्थानस्थितिविरोधाच्च । किं तु पुत्रीकरणे भ्रातृपुत्रस्य सम्भवे नान्यस्येत्येवमर्थम् ।

तथा च बृहत्पराशरः ।

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् ।
स एव तस्य कुर्वीत पिण्डदानोदकक्रियामिति ॥

तस्मात्स एवादौ पुत्रः कार्यः । एवं चैकस्यापि तस्यानेकैरपि भ्रातृभिः

पुत्रीकरणमनेन सिद्धम् । ततश्च न त्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वेति निषेधस्यात्रानवकाश. । तेनेत्येकत्वनिर्देशात् । तदसम्भवे त्वदूरबान्धव बन्धुसन्निकृष्ट एव प्रतिगृह्णीयादिति च वसिष्ठोक्तो ज्ञेयः । अदूरबान्धव-मित्यत्यन्तदेशभाषाविप्रकृष्टस्य निषेधः । तद्धर्मानाह मनुः ।

गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ इति ।

अस्यार्थः, दत्त पुत्रो जनकस्य गोत्ररिक्थे न भजते तन्निमित्तदशाहादि न प्राप्नातीर्थः । अनेनान्यगोत्रस्यापि पुत्रीकरणमनुज्ञात पुत्र ददतश्च जनकस्य दत्तपुत्रकर्तृकस्वधा श्राद्धमपैति दत्तस्य जनकश्राद्धे नाधिकार इत्यर्थ. । यतो गोत्ररिक्थानुगः पिण्ड इति । पुत्रान्तराभावे तु तस्यापि रिक्थश्राद्धाधिकारोऽस्त्येव ।

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥

इति न्यायसाम्यात् ।

दत्त. पुत्रः पितुः कुर्याज्जनकस्य मृतेऽहनि ।
गङ्गायां च ततोऽन्यत्र न पुत्रान्तरसन्निधौ ॥

इति शातातपस्मरणाच्च । इदमपि दानानन्तर जनकस्यापुत्रत्वे, दानकाले त्वेकस्य दाननिषेधात् । भ्रातृपुत्रस्य त्वेकस्याप्यनेकपुत्रत्वे वि-शेषमाहापस्तम्बः । यदि द्विपितास्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षये-दिति । द्विपितेति द्विपितामहद्विप्रपितामहस्याप्युपलक्षण न्यायसा-म्यात् । द्वौ द्वाविति वीप्साश्रवणाच्च । एवमन्येषामपि द्विपितृकाणां द्रष्ट-व्यम् । तयाहव्यतिरिक्तेषु सर्वश्राद्धेष्वय विधिर्ज्ञेयः । तस्योभयत्रापि सापि-ण्डयन्त्रिपुरुषमेव ।

दत्तकाना तु पुत्राणां सापिण्ड्यं स्यात्त्रिपूरुषम् ।
जनकस्य कुले तद्वद्दुहीतुरिति धारणा ॥

इतिस्मरणात् ।

त्रिपुरुषमत्मानं विहायात्मना सह चतु.पुरुषं ज्ञेयम् ।

त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते ।
चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते ॥

इति मनुस्मरणात् । आपस्तम्बेन प्रपितामहपर्यन्तमेव द्वयोः पिण्डदानस्मरणाच्च । एकत्रावयवान्वयरूपं सापिण्ड्यमपरत्र निर्वाप्य पिण्डान्वयरूपमिति विशेषः । तस्य गोत्रद्वयेऽप्यनुद्वाहः ।

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथा ॥

इति स्मरणात् ।

तस्य परिवेदनदोषोऽपि नास्ति दत्तत्वात् ।
भिन्नोदरे च दत्ते च पितृव्यतनये तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

इति गौतमस्मरणाच्च । तथा परिवित्तिदोषोऽपि न समत्वात् । तथा मातामहा अपि तस्य प्रतिग्रहीतृमातृपितर एव पितामहन्यायस्य मातामहेष्वपि तुल्यत्वादिति दिक् । तर्हि तस्याप्यभावे कथमित्यत आह कृत्रिमक इति कृत्रिमकः स्वयमेव त्वं मे पुत्र इति कृतः । तल्लक्षणमाह मनुः ।

सदृशं तु प्रकुर्याद्यं गुणदोषविवर्जितम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥ इति ।

एतच्च मातापितृविहीनस्य तदनुज्ञातस्य वा सम्भवति अन्यथा पारतन्त्र्यात् । ततश्चान्योत्पन्नानां मध्ये कलावेतौ द्वावेवाभ्यनुज्ञायेते व्यभिचारोत्पन्नत्वाभावात् । ननु ।

अप्रशस्तास्तु कानीनगूढोत्पन्नः सहोढजः ।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः ॥

इति विष्णुस्मरणाद्गूढोत्पन्नः कानीनपौनर्भवसहोढजानां व्यभिचारोत्पन्नत्वेनाप्रशस्तत्वेऽपि पुत्रिकापुत्रक्रीतोत्सृष्टदत्तात्मनामतथात्वेन कुतो न परिगणनमिति चेत् ।

सत्यम् । तथापि दोषान्तरकलङ्कितत्वेनापरिग्रहस्तेषामिति वदाम. । तथा हि दत्तायाः कन्यायास्तत्पुत्रस्य वा परिग्रहे फलप्रत्यावृत्तिर्भवति यथा दत्ताया गोः स्वक्षीरादेवा प्रत्यावृत्तिरिति सा च निन्दिता वसिष्ठेन । अभ्रातृकाः पुसः पितॄनभ्येति प्रतीचीन गच्छति पुत्रत्वमिति अभ्रातृका कन्या प्रतिग्रहीतु. पुस· सकाशात्स्वरूपेण फलद्वारा वा पितॄनेवाभ्युपैति तेन प्रतीचीनमेव विपरीतमेव पुत्रत्व प्राप्नोतीति नासावुत्कृष्टेति । क्रीतस्तु क्रयेणैव दुष्टः । तथा हि पुत्रोत्पत्त्यर्थं क्रीताया भार्याया अपि यत्र निन्दितत्व तत्र कि साक्षात् क्रीतस्य पुत्रस्य वक्तव्यम् । तदुक्तम्

क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासी ता कवयो विदुः ॥ इति ।

स्वयदत्तोत्सृष्टयोस्तु मातृपितृपरित्यागनिदानानेकदोषोत्प्रेक्षणादेव दुष्टत्वमिति ।

अत एव मनुः ।

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मान स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ॥
मातापितृभ्यामुत्सृष्ट तयोरन्यतरेण वा ।
य पुत्र परिगृह्णीयादपविद्धः स उच्यते ॥

इति द्वयोरपि मातापितृपरित्यागेनैव स्वरूपमुदकीर्तयत् । तस्मादुक्तरीत्या अन्योत्पन्नेषु द्वावेव पुत्रावुत्कृष्टावित्याचार्याभिप्रायः सिद्धः । तयोरपि दत्तक एव कलावुत्कृष्ट इत्यभिप्रेत्य तल्लक्षणमाह । य मातापितरौ दद्याता दत्तक इति । अनेन च दत्तकलक्षणकरणेन पुत्रप्रतिनिधिषु दत्तकस्यैव मुख्यत्व नान्यस्येति सूचितम् ।

अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
न शक्यास्तेऽधुना कर्तुं शक्तिहीनतया नरैः ॥

इति बृहस्पतिस्मरणात् । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रह

इत्यन्यनिषेधाच्च । कृत्रिमपरिगणन स्वत्र कथ विद्गौणतामाश्रित्येति किं बहुना ।

एवं प्रसक्तानुप्रसक्तं परिसमाप्य प्रक्रान्तं प्रायश्चित्तमेवानुस्मरन्नुप पातके परिवेदने तद्विधातुमादौ तन्निन्दामाह ।

परिवित्तिः परिवेत्ता च यया च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः ॥ २५ ॥

ज्येष्ठेऽनूढे कनीयानुद्वहन्परिवेत्ता ज्येष्ठः परिवित्ति यया कन्यया परिविद्यते कनीयान्सा परिवेदिनी यश्च ता ददाति पित्रादि. स परिदायी यश्च तत्र याजकस्स परियष्टा ते सा च तौ च ते दातृसहितो याजको दातृयाजकः स पञ्चमो येषा ते सर्वे नरकभाजो भवन्ति । तथा च हारीतः । ज्येष्ठेऽनिविष्टे कनीयान्निविशन्परिवेता भवति परिवित्तिर्ज्येष्ठः परिवेदिनी कन्या परिदायी दाता परियष्टा याजकस्ते सर्वे पतिता इति । पतिता इत्यत्र नरकेष्विति शेषो योजनीयो वास्तवपातित्ये वक्ष्यमाण-प्रायश्चित्तानुपपत्तेः । ज्येष्टश्च सोदरो विवक्षितः "सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसग्रह"मिति गर्गस्मरणात् । यमयोस्तु ज्येष्ठनिर्णयमाह मनुः ।

जन्मज्येष्ठेषु चाह्वानं सुब्राह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥ इति ।
यस्यादौ गर्भोत्पत्तिः स ज्येष्ठः । तथा च स्मृत्यन्तरम् ।
यदा विशेद्द्विधाभूत बीज शुक्र परिस्त्ररत् ।
तदा भवेद्द्विधा गर्भः सूतिर्वंशविपर्ययादिति ॥

इदानीं तत्र प्रायश्चित्तमाह ।

द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च ।
कृच्छ्रातिकृच्छ्रौ दातुस्तु होता चान्द्रायणं चरेत् ॥२६॥

परिवित्तेर्द्वौ कृच्छ्रौ प्राजापत्यौ शुध्यर्थं चरणीयौ तु शब्दः परिवेत्तुरप्येतत्प्रायश्चित्तप्राप्त्यर्थ. ।

अत एव यमः ।

कृच्छ्रौ द्वयोः पारिवित्त्ये कन्यायाः कृच्छ्र एव च ।
अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणं चरेदिति ॥

द्वयो परिवित्तिपरिवेत्रोः कन्यायाः परिवेदिन्याः कृच्छ्रः शोधकः कन्यादातु कृच्छ्रातिकृच्छ्रं, तल्लक्षणमाह याज्ञवल्क्यः । कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिमिति । होता हावयिता याजकः, चान्द्रायणं वक्ष्यमाणलक्षणं चरेदिति। परिवेत्तुः प्रायश्चित्तानन्तरं कर्तव्यमाह वसिष्ठः । "परिविन्दानः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्विशेत तां चैवोपयच्छेतेति"। तस्मै ज्येष्ठाय तामूढां कन्यां दत्त्वा निवेद्य तदनुज्ञातः पुनर्निविशेत पुनरुद्वहेत् कामित्याकाङ्क्षायां तामेवोपयच्छेतेति । अयमेव न्यायो ज्येष्ठकनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चानुसन्धेयः। अत एव गौतमः । परिवित्तिपरिवेतृपर्याहितपर्याधात्रग्रेदिधिषूपतीनां संवत्सरं प्राकृतं ब्रह्मचर्यमिति । अग्रेदिधिष्वादौ विशेषमाह वसिष्ठः । अग्रेदिधिषूपतिः कृच्छ्रं द्वादशरात्रं चरित्वा निविशेत तां चैवोपयच्छेद्दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निविशेतेति । अग्रेदिधिषूपतिः कनिष्ठापतिस्तां परित्यज्य प्राजापत्यं कृत्वा निविशेत उद्वहेत्। कामित्याकाङ्क्षायां तां चैवेति स्वपरिणीतामेवेति दिधिषूपतिर्ज्येष्ठापतिस्तां तस्मै कनिष्ठापतये पूर्ववद्दत्वा कृच्छ्रातिकृच्छ्रौ कृत्वा पुनः स्वपरिणीतामेवोद्वहेदिति । यत्तु परिवित्तिपरिवेतृकन्यादातृयाजकानां द्वादशरात्रं सक्तुप्राशनं ब्राह्मणतर्पणं च तां पुनर्भुवमाचक्षते न भूयश्चैनामभिगच्छेदिति सुमन्तुवचने पुनस्तदुपगमननिषेधनं तज्ज्येष्ठस्य कनिष्ठोढाविवाहनिषेधार्थं न कनिष्ठस्यैव स्वोढाविवाहनिषेधार्थं तां चैवोपयच्छेदिति वसिष्ठस्मरणात् ।

ततश्च तस्मै दत्त्वेत्यनेनोपकल्पनमात्रमिति सिध्यति । एतेन परिवेदिन्यग्रेदिधिष्वादीनां भार्यात्वमेव नोत्पद्यते व्युत्क्रमविवाहादिति परास्तम् । तां पुनर्भुवमाचक्षत इति लिङ्गात् अग्रेदिधिष्वादेर्लक्षणमाह देवलः ।

ज्येष्ठाया यद्यनूढाया कन्यायामूह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषू स्मृतेति ।

चकारात् पितृष्वस्रादिदुहितृपरिणयनेऽपि स्मृत्यन्तरोक्त प्रायश्चित्तमभ्यनुज्ञातम् । तदाह सुमन्तुः । पितृस्वसृसुता मातुलसुता मातृसगोत्रा समानार्षेया विवाह्य चान्द्रायण चरेत् परित्यज्यैना बिभृयात् । शातातपोऽपि ।

परिणीय सगोत्रा तु समानप्रवरा तथा ।
कृत्वा तस्यास्तु ससर्गमतिकृच्छ्रं समाचरेत् ॥
मातुलस्य सुतामूढ्वा मातृगोत्रा तथैव च ।
समानप्रवरा चैव त्यक्त्वा चान्द्रायण चरेदिति ॥

व्युत्क्रमविवाहे तु प्रायश्चित्तमाह शातातपः । ब्राह्मणो राजन्यापूर्वा द्वादशरात्र चरित्वानिविशेत ता चैवोपयच्छेद्वैश्यापूर्वस्तप्तकृच्छ्र शूद्रापूर्वा कृच्छ्रातिकृच्छ्रमिति । राजन्यापूर्वा अकृतब्राह्मणीविवाह एव राजन्या परिणेतेत्यर्थः । एवमन्यत्राप्यूह्यम् । ताश्चैवोपयच्छेदिति परिवेदनेन व्याख्यातम् ।

उक्तस्य परिवेदनप्रत्यवायस्य क्व चिदपवादमाह ।

**कुब्जवामनषण्ढेषु गद्गदेषु जडेषु च ।**
**जात्यन्धे बधिरे मूके न दोषः परिविन्दतः ॥ २७ ॥**

कुब्जो वक्रपृष्ठवश. वामनः खर्वः षण्ढो नपुसको गद्गदोऽस्पष्टवाक् जडो विकलान्तकरणः । जात्यन्धो जन्मान्धः बधिर श्रोत्रेन्द्रियविकल. मूको वागिन्द्रियरहितः चकाराद्देशान्तरस्थादीना ग्रहणम् । तथा च कात्यायन. ।

देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्याभिसक्तपतितशूद्रकल्पातिरोगिणः ॥
जडमूकान्धबधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धानभार्याश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्ताश्च कामतः कारिणस्तथा ।

कुलटोन्मत्तचौराश्च परिविन्दन्न दुष्यति ॥ इति ।
देशान्तरस्थस्य प्रतीक्षाकालमप्याह ।

स एव ।

धनवार्धुषिकं राजसेवकं कर्षकं तथा ।
प्रोषितं च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥

अत्रापिशब्दसूचितं कालान्तरमाह वसिष्ठः । अष्टौ द्वादश वा वर्षाणि ज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवतीति । एकवृषणोऽण्डवृद्धिमान् कुब्जो भग्नपादः अभार्या मृतभार्या नैष्ठिकब्रह्मचारी वा कामकारीच्छया विवाहनिवृत्तो वेदमार्गनिवृत्तो वा तदेतान्परिविन्दतो न दोष इति । ननु जडमूकादीनां गाय्युच्चारणसामर्थ्याभावात् उपनयनमेव न सम्भवति कुतस्तरां विवाहः कुतस्तमां च परिवेदनदोषो यस्यायमपवाद इति चेत् । मैवम् । ब्रह्मपुराणे तेषामप्युपनयनस्मरणेन विवाहसम्भवात् । तथा हि ।

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।
तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ।
जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु ॥
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।
ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ॥
संस्कारमन्त्रहोमादीन् करोत्याचार्य एव तु ।
उपनेयाश्च विधिवदाचार्यं स्वसमीपतः ॥
आनीयाग्निसमीपं वा सावित्रीं संस्पृशन् जपेत् ।
कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेदिति ॥

तस्मादस्त्येव तेषामपि विवाहप्रसक्तिरिति तत्कनीयसां परिवेदनदोषापवादो युक्त एवेत्यलं विस्तरेण ।

किंच ।

**पितृव्यपुत्रः सापत्नः परनारीसुतस्तथा ।**
**दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ २८ ॥**

पितृव्यस्य पुत्रः सापत्नः सपत्नीपुत्रः परनारीसुतो दत्तकादिर्ज्येष्ठोऽपि कनिष्ठस्य दारसंयोगे विवाहे अग्निसंयोगे आन्याधाने तदुभयरूपे परिवेदने न दोषो न दोषाधायकः । तथा च यमः ।

पितृव्यपुत्रान्सापत्नान् परनारीसुतास्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

गौतमोऽपि ।

भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ इति ।

दाराग्निहोत्रसंयोग इत्यनेन परिवेदने निमित्तद्वयमुपन्यस्तम् । तदाह मनुः ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ इति ।

तत्र दारसंयोगे निर्णयः पूर्वमुक्तः । इदानीमग्निसंयोगे निर्णयमाह

**ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।**
**अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥ २९ ॥**

ज्येष्ठो भ्राता सोदरः स्वयमाधानाधिकारी तिष्ठेच्चेत्कनिष्ठेन त्वनुज्ञां विनाऽग्न्याधानं न कार्यम् । यदि ज्येष्ठोऽनुजानाति तदा तदनुज्ञया कनीयानग्न्याधानं कुर्वीतेति विवाहादग्न्याधाने विशेषाभिधानाय शङ्खस्य महर्षेर्वचनम् ।

तथा च वसिष्ठः ।

अग्रजस्तु यदानग्निरादध्यादनुजः कथम् ।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधीति ॥

अनग्निस्सत्यधिकारेऽनाहिताग्निः । अधिकारिणः पितुस्त्वनुज्ञयापि नाधानाधिकारः । तथा च चतुर्विंशतिमते ।

ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहम् ।
अनुज्ञातोऽपि सन्पित्रा नादध्यान्मनुरब्रवीदिति ॥

अनधिकारिणि पितरि त्वनुज्ञा विनापि पुत्रस्याधानाधिकारो भवति तथा च सुमन्तुः ।

पितुर्यस्याग्न्यनाधानं कथं पुत्रस्तु कारयेत् ।
अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥ इति ।

नन्वस्तु परिविदने कन्याया ज्येष्ठसमर्पणानन्तरं पुनस्तेनैव विवाहो वाग्दानानन्तरमनिष्पन्ने विवाहे तु वरवैगुण्ये ज्ञाते कथमित्यत आह ।

**नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।**
**पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ ३० ॥**

वाग्दानानन्तरं पाणिग्रहात्प्राक् पतावुत्पत्स्यमानपतित्वे पूर्वस्मिन्वरे नष्टे दूरदेशगमनेनापरिज्ञातवृत्तान्ते नारीणां कन्यानामन्यः पतिर्विधीयते । तदाह नारदः ।

परिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून्समतिक्रम्य कन्यान्यं वरयेद्वरम् ॥
स्त्रीपुंसयोस्तु सम्बन्धाद्वरणं प्राक् विधीयते ।
वरणाद्ग्रहणं पाणेः संस्कारोऽथ विचक्षणे ॥
तयोरनियतं प्रोक्तं वरणं दोषदर्शनादिति ।

अयमर्थः । यो वरो वाचा दत्तां कन्यां स्वीकृत्य केनचिद्योगेन देशान्तरं गतस्तं वरं त्रीनृतून् षण्मासानधार्यत्वे कन्यायाः प्रतीक्ष्य धार्यत्वे तु वर्षमात्रमपि ।

प्रदाय शुल्कं कन्याया गच्छेद्यः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयान्यस्मै विधानतः ॥

इति नारदवाक्यात्प्रतीक्ष्य अनन्तरमन्यं वरं सा कन्या वरयेत्तामन्यस्मै दद्यादित्यर्थः । तत्र हेतुमाह स्त्रीपुंसयोः सम्बन्धात् समागोत्प्राक् त्रितयं क्रियते तत्रादौ वरणं कन्याया वरेण भार्यात्वाय प्रार्थनं वरस्य च सम्प्रदानत्वाय कन्यादात्रा तदेव च वाग्दानं तदनन्तरपाणिग्रहणं ततोऽप्यनन्तरसंस्कारः सप्तपदप्रक्रमस्तयोः पाणिग्रहणसप्तपदक्रमयोरपेक्षया, वरणमेवानियतमनियामकं पतिपत्नीसम्बन्धस्य कृतेऽपि "प्रवरणे पतिसम्बन्धः

परावर्तते न पाणिग्रहणादावित्यर्थः । तयोरेव भार्यात्वोत्पादकत्वात् । अत एव मनुः ।

पाणिग्रहणमन्त्रैस्तु नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ इति ।

तत्रापि हेतुमाह दोषदर्शनादिति वरणपरावृत्तौ वरदोषदर्शनमेव हेतुरित्यर्थः । तदाह गौतमः । "प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति" । तस्माद्वाग्दानानन्तरं पाणिग्रहणात्प्राक् पूर्ववरे नष्टे वरान्तरेण तत्परिणयनं कार्यमिति सिद्धम् । यद्यन्यस्मै दत्ताया कन्याया पूर्ववरोऽप्यायाति तदा ऽनूढा तां स एव लभते ऊढाया तु स्वदत्तं द्रव्यमेव लभते न कन्यां तदाह कात्यायनः ।

अनेकेभ्योऽपि दत्तायामनूढाया तु तत्र वै ।
पुरागतश्च सर्वेषां लभते तादिमां सुताम् ॥
अथागच्छेत वोढाया दत्तं पूर्ववरो हरेत् ॥ इति ।

एवं मृतेऽपि पूर्ववरे वरान्तरेण तद्विवाहः कार्यः ।

तथा च वसिष्ठः ।

अद्भिर्वाचा च दत्ताया म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीतास्यात्कुमारी पितुरेव सा ॥ इति ।

मन्त्रोपनयनं पाणिग्रहणादिकं विना वाचा दानमिवाद्भिरपि दानं न भार्यात्वोत्पादकमित्यर्थः ।

अत एव यमः ।

नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ इति ।

नन्वस्तु वाग्दत्ताया नष्टे पत्यौ पत्यन्तरविधानं मृते तु तन्नोपपद्यते ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥

इति मानवे देवरेण तदुद्वहनस्मरणात् । नचैतावतापि समी-

हितसिद्धिरविशिष्टैवेति वाच्यम् । देवरात्र सुतोत्पत्तिरित्यनेन कलौ तन्नि-षेधात् । न च निषेधस्य विवाहानन्तरविधवाविषयत्वमस्तु तस्य नान्य-स्मिन् विधवानारी नियोक्तव्याद्विजातिभिरित्यनेन मनुनैव पूर्वं साधारण-तया निषिद्धत्वेन कलौ विशिष्य तन्निषेधानुपपत्तेः । तस्माद्वाग्दानानन्तरं मृते पत्यौ पत्यन्तरविधानमुपपन्नमिति चेत् । सत्यम् । तादृशविवाहस्य वाचनिकत्वेन देवरस्य पतित्वानुपपत्तेर्विशेषनिषेधाच्च । नाभावभ्यनुज्ञायते किं तु पतिशब्दस्य मिथ्यापतित्वयोग्येऽप्यनुज्ञायत इति न किञ्चि-द्दूषणम् । अथ वा मृते मृतकल्पे दीर्घतीव्रापद्ग्रस्त इति व्याख्येयम् । दासो दीर्घामयोऽपि वेति वक्ष्यमाणकात्यायनस्मरणात् । तथा प्रव्रजिते वाग्दा-नानन्तरं वैराग्यातिशयेन सन्यस्ते पूर्ववरे वरान्तराय सा देया । अत एव कात्यायनः ।

दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् ।
शूराणां निर्वृतानां च न देया कन्यका बुधैः ॥ इति ।

अवेद्या अज्ञेयाः । निर्वृता भोगेषु निर्विण्णाः । तथा क्लीबे निर्बीजे पूर्ववरे वरान्तरमन्वेषणीयम् ।

तथा च नारदः ।

अपत्यार्थं स्त्रियः सृष्टाः स्त्रीक्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हतीति ॥

तथा पतिते महापातकाद्यभिभूते पूर्ववरे वरान्तरं कार्यम् । तथा च गौतमः । प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति । चकाराद-न्यजातीयादेर्ग्रहणम् । तथा च कात्यायनः ।

स तु यद्यन्यजातीयः पतितः क्लीब एव वा ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा ॥
ऊढापि देया सान्यस्मै सहावरणभूषणेति ।

अत्रोढापीत्यपिशब्दः कैमुतिकन्यायेन वाग्दत्ताया एवान्यस्मै-दानमाचष्टे न तु ऊढायास्तथात्वे सगोत्राया अपि पुनर्विवाहः प्रसज्येत

तथा सति च मातृवत्परिपालयेदिति विरुध्येत पञ्चस्विति प्रचयशिष्ट सख्यानुवादो न परिसख्या । नन्वेव वाचा दत्ता मनोदत्ता अग्निपरिगता सप्तम पद नीता भुक्ता गृहीतगर्भा प्रसूताचेति सप्तविधा पुनर्भूस्ताः गृहीत्वा न प्रजाधर्मं विन्देतेति बौधायनवचो विरोधः स्यादिति चेन्मैवम् । तस्य निर्दुष्टवरविषत्वात् । अत एव नारदः ।

दत्ता न्यायेन य. कन्या वराय न ददाति ताम् ।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥

इति तत्र दण्ड विधत्ते । तस्मादेवंविधेषु विषयेषु कृतेऽपि वाग्दाने वरान्तराय दान भवतीति सिद्धम् । इदमित्थमेव व्याख्येयम् ।

उद्वाहितापि सा कन्या न चेत्सम्प्राप्तमैथुना ।
पुनः सस्कारमर्हन्ती यथा कन्या तथैव सा ॥

इत्यादिनारदादिवाक्यैकवाक्यतयोढायाः पुनरुद्वाहविषयत्वेन व्याख्याने तु ।

कुलटायाः पुनरुद्वाह ज्येष्ठाश गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजाया कमण्डलुम् ॥

इत्यादि पुराणवचनविरोधो दुष्परिहरः स्यात् । न च युगान्तरीयधर्मकीर्तनमेवेदमिति शङ्कनीय शास्त्रोत्पत्तिप्रयोजनविरोधादित्यास्तामतिविस्तरेण ।

नन्वस्तु वाग्दानानन्तर विवाहात्प्राक् पूर्वपतिनाशे पत्यन्तरविधान विवाहानन्तरं तु तन्नाशे किं कार्यमित्यत आह ।

**मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता ।**
**सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥ ३१ ॥**

विवाहानन्तर भर्तीर उत्पन्नभर्तृत्वे मृते या नारी ब्रह्मचर्यव्रते तिष्ठति सा मृता स्वर्गं लभते यथा ते नैष्ठिका ब्रह्मचारिणो ब्रह्मचर्येणैव स्वर्गं लभन्त इति । तथा च याज्ञवल्क्यः ।

मृते जीवति वा पत्यौ या नान्यमुपगच्छति ।
सेह कीर्तिमवाप्नोति मोदते चोमया सहेति ॥

अनेन विवाहानन्तरं भर्तृमरणे ब्रह्मचर्यमेव न तु पत्यन्तरविधानमुक्तं भवति ।

तथा च मनुः ।

काम तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य त्विति ॥

मृते भर्तरि ब्रह्मचर्यं स्वर्गसाधनं ततोऽपि स्वर्गातिशयसाधनमनुगमनमित्याह ।

**तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे ।**
**तावत्कालं च ते स्वर्गे भर्तारं याऽनुगच्छति ॥ ३२ ॥**

अध्यर्द्धास्तिस्रः कोट्यो मनुष्यदेहे रोमाणि भवन्ति तावदब्दसहस्रं स्वर्गतो गता भवति या स्त्री भर्तारमनुगच्छति तेन सहाग्निमारोहतीति ।

तथा च हारीतः ।

मृते भर्तरि या नारी धर्मशीला दृढव्रता ।
अनुगच्छति भर्तारं शृणु तस्यास्तु तत्फलम् ॥
तिस्रः कोटयोऽर्द्धकोटी च यानि लोमानि मानुषे ।
तावन्त्यब्दसहस्राणि स्वर्गलोके महीयते ॥
मातृकं पैतृकं चैव यत्र कन्या प्रदीयते ।
कुलत्रयं पुनात्येषा भर्तारं या नुगच्छति ॥

शङ्खः ।

मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
सारुन्धतीसमाचारा स्वर्गे लोके महीयते ॥ इति ।

नचात्र तस्मादुह न पुरायुषः स्वःकामी प्रेयादित्याद्यात्महननप्रतिषेधकश्रुतिविरोधः शङ्क्यः । तस्य सामान्यशास्त्रस्यानुगमनविधायकविशेषशास्त्रविषयपरिहारेण प्रवृत्तेः । नचेदमनुगमनं ब्राह्मण्यतिरिक्तविषयम् ।

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ।
इतरेषां तु वर्णानां स्त्रीधर्मोऽयं परः स्मृतः ॥

इति पैठीनस्यादिवचनादिति वाच्यम् । तस्य पृथक्चितिविषयत्वात् । तथाचोशना ।

पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।
अन्यासां चैव नारीणां धर्मोऽयं परमः स्मृतः ॥

इति । स चायमगर्भिणीनामबालापत्यानामाचण्डालान्तसाधारणो धर्मः । तथा च स्मृत्यन्तरे ।

बालसंवर्द्धनं मुक्त्वा बालापत्या न गच्छति ।
व्रतोपवासनिरता रजोद्रूभे च गर्भिणीति ॥

गर्भिण्या अनुगमने यथावर्णं गर्भहननप्रायश्चित्तमेव भवति । लग्नगर्भाया विशेषः स्मृत्यन्तरे ।

आद्वादशाब्दं नारोहेल्लग्नगर्भा हुताशनम् ।
इत ऊर्ध्वं समारोहेद्व्रतं कृत्वाधिकं स्वयमिति ॥
अदृष्टरजसोऽपि निषेधो बृहन्नारदीये ।
मृतानुगमनं कार्यं नादृष्टरजसा स्त्रियेति ॥

न केवलमनुगमनं स्त्रिया एवाभ्युदयहेतुः किं तु भर्तुरपीत्याह ।

**व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।**
**एवं स्त्री पतिमुद्धृत्य तेनैव सह मोदते ॥ ३३ ॥**

व्यालं सर्पं गृह्णातीति व्यालग्राही कुहकः स्वमन्त्रबलावष्टम्भेन बिलस्थं सर्पं यथोद्धरति तथानुगमनसुकृतबलेनापि नरकपतितमपि पतिमुद्धृत्य तेन सहावशिष्टसुकृतशेषमुपभुङ्क्ते इति । तथा च व्यासः ।

यदि प्रविष्टो नरकं बद्धः पाशैः सुदारुणैः ।
संप्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः ॥
तिष्ठते विवशो दीनो वेष्ट्यमानः स्वकर्मभिः ।
व्यालग्राही यथाव्यालं बलादुद्धरते बिलात् ॥
तद्वद्भर्तारमादाय दिवं याति च सा बलात् ।
या भर्तृपरमा नित्यं स्तूयमानाप्सरोगणैः ॥
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ।

**तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः । ४ । ३ । ९४ ॥**

तूदी अभिजनोऽस्य तौदेयः । शालातुरीयः । वार्मतेयः । कौचवार्यः ॥

**भक्तिः । ४ । ३ । ९५ ॥**

सोऽस्येत्यनुवर्तते । भज्यते सेव्यते इति भक्तिः । स्रुघ्नो भक्तिरस्य स्रौघ्नः ॥

**अचित्तादेशकालाट्ठक् । ४ । ३ । ९६ ॥**

अपूपा भक्तिरस्य आपूपिकः । पायसिकः । अचित्तात्किम् । दैवदत्तः । अदेशात्किम् । स्रौघ्नः । अकालात्किम् । ग्रैष्मः ॥

**महाराजाट्ठञ् । ४ । ३ । ९७ ॥**

माहाराजिकः ।

**वासुदेवार्जुनाभ्यां वुन् । ४ । ३ । ९८ ॥**

वासुदेवकः । अर्जुनकः ॥

**गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् । ४ । ३ । ९९ ॥**

अणोऽपवादः ॥ परत्वाद् वृद्धाच्छं बाधते । ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः । औपगवकः । नाकुलकः । बहुलग्रहणान्नेह । पाणिनो भक्तिरस्य पाणिनीयः । पौरवीयः ॥

**जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने । ४ । ३ । १०० ॥**

जनपदस्वामिवाचिनां बहुवचने जनपदवाचिना समानश्रुतीनां जनपदवत्सर्वं स्यात्प्रत्ययः प्रकृतिश्च ॥ जनपदतदवध्योश्चे-

तिप्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते तद्वदित्यतिदेशः । यथा अङ्गा जनपदो भक्तिरस्याङ्गकः । तथा अङ्गा क्षत्रिया भक्तिरस्याङ्गक इत्यपि भवति । जनपदिनां किम् । पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः । सर्वग्रहण प्रकृतेरप्यतिदेशार्थम् । तेन मद्राणां राजा माद्रः । द्व्यञ्मगधेत्यण् । स भक्तिरस्य मद्रक इत्यत्र मद्रशब्दातिदेशो मद्रवृज्योः कन्प्रत्ययातिदेशश्च सिद्ध्यति । जनपदेनेति किम् । पौरवो राजा भक्तिरस्य पौरवीयः ॥

## तेन प्रोक्तम् । ४ । ३ । १०१ ॥

प्रकर्षेणोक्त प्रोक्तमुच्यते न तु कृतम् ॥ कृते ग्रन्थे इत्यनेनैव गतार्थत्वात् । अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः । पाणिनिना प्रोक्त पाणिनीयम् ।

## तित्तिरिवरतन्तुखण्डिकोखाच्छण् । ४ । ३ । १०२ ॥

छन्दोब्राह्मणानीति तद्विषयता । तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः । वारतन्तवीया । खाण्डिकीया । औखीयाः । अथेह कस्मान्न भवति तित्तिरिणा प्रोक्ताः श्लोका इति । शौनकादिभ्यश्छन्दसीत्यतश्छन्दसीत्यपकर्षणात् । छन्दस्यभिधेये इति तदर्थात् ॥

## काश्यपकौशिकाभ्यामृषिभ्यां णिनिः । ४ । ३ । १०३ ॥

कल्पस्ताभ्या प्रोक्त इति स्मर्यते ॥ तस्यापि तद्विषयतेष्यते । काश्यपेन प्रोक्तमधीयते काश्यपिनः । कौशिकिनः । ऋषिभ्यां किम् । इदानीन्तनेन गोत्रकाश्यपेन प्रोक्त काश्यपीयम् ।

## कलापिवैशम्पायनान्तेवासिभ्यश्च । ४ । ३ । १०४ ॥

कलाप्यन्तेवासिभ्यः । हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः । वैशपायनान्तेवासिभ्यः । आलम्बिन ॥

## पुराणप्रोक्तेषु ब्राह्मणकल्पेषु । ४ । ३ । १०५ ॥

तृतीयान्तात् प्रोक्तार्थे णिनिः स्यात् यत्प्रोक्तं पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति ॥ पुराणेन चिरन्तनेन मुनिना प्रोक्ताः । भल्लु । भाल्लविन । शाट्यायन । शाट्यायनिन । कल्पे अर्थे उदाहरणमाह । पिङ्ग । पैङ्गी कल्पः । पुरेति किम् । याज्ञवल्कानि ब्राह्मणानि । सुलभेन प्रोक्तानि सौलभानि । आश्मरथः कल्पः । यज्ञवल्काश्मरथाभ्यां कण्वादिभ्यो यञन्ताभ्यामणि आपत्यस्येति यलोपः ॥

## शौनकादिभ्यश्छन्दसि । ४ । ३ । १०६ ॥

णिनि प्रोक्ते । छाणोरपवादः । शौनकेन प्रोक्तमधीयते शौनकिन । वाजसनेयिन । छन्दसि किम् । शौनकीया शिक्षा । कठशक इत्यत्र पठ्यते तत्सङ्घातार्थम् । केवलाद्धि लुकं वक्ष्यति । कठशकाभ्यां प्रोक्तमधीयते काठशकिनः ॥

## कठचरकाल्लुक् । ४ । ३ । १०७ ॥

आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात् ॥ कठेन प्रोक्तमधीयते कठाः । चरकाः । कठाद्वैशम्पायनान्तेवासित्वाण्णिनिः । चरकादण् । तयोर्लुक् । छन्दसीत्येव । चारका श्लोकाः ॥

## कलापिनोऽण् । ४ । ३ । १०८ ॥

वैशम्पायनान्तेवासित्वात्प्राप्तणिनेरपवादः ॥ कलापिनां प्रोक्तमधीयते कालापाः । नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापीत्याद्युपसंख्यानादिनण्यनपत्ये इति प्रकृतिभावाभावाट्टिलोपः । अथाण्ग्रहणं किमर्थम् । ननु किं यथाविहितमित्येव वचनसामर्थ्यात् यो विहितो न च प्राप्नोति स एवाण् भविष्यति । एवन्तर्ह्यधिकविधानार्थम् । तेन माथुरी वृत्तिरित्यादौ छादयो न ॥

**छगलिनो ढिनुक् । ४ । ३ । १०९ ॥**

कलाप्यन्तेवासित्वात्प्राप्तिणिनेरपवादः । छगलिना प्रोक्तमधीयते छागलेयिनः ॥

**पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः । ४ । ३ । ११० ॥**

अत्र णिनिरनुवर्तते । तद्विषयता चेष्यते । पाराशर्येण प्रोक्तमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः ॥

**कर्मन्दकृशाश्वादिनिः । ४ । ३ । १११ ॥**

भिक्षुनटसूत्रयोरित्येव । तद्विषयता चेष्यते । कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः ॥

**तेनैकदिक् । ४ । ३ । ११२ ॥**

सुदाम्ना अद्रिणा एकदिक् सौदामनी ॥

**तसिश्च । ४ । ३ । ११३ ॥**

स्वरादिपाठादव्ययत्वम् । पीलुमूलेन एकदिक् पीलुमूलतः ॥

**उरसो यच्च । ४ । ३ । ११४ ॥**

चात्तसिः । अणोऽपवादः । उरसा एकदिक् उरस्यः । उरस्तः ।

**उपज्ञाते । ४ । ३ । ११५ ॥**

तेनेत्येव । पाणिनिना उपज्ञातं पाणिनीयम् ॥

**कृते ग्रन्थे । ४ । ३ । ११६ ॥**

तेनेत्येव । वररुचिना कृतो वाररुचो ग्रन्थः ॥

**संज्ञायाम् । ४ । ३ । ११७ ॥**

तेनेत्येव । अग्रन्थार्थ आरम्भः । मक्षिकाभिः कृतं माक्षिकं मधु ॥

## कुलालादिभ्यो वुञ् । ४ । ३ । ११८ ॥

तेन कृते सञ्ज्ञायाम् । कुलालेन कृतं कौलालकम् । वारुडकम् ।

## क्षुद्राभ्रमरवटरपादपादञ् । ४ । ३ । ११९ ॥

तेन कृते सञ्ज्ञायाम् । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ।

## तस्येदम् । ४ । ३ । १२० ॥

उपगोरिदं औपगवम् ॥ वहेस्तुरणिट् च ॥ * ॥ इडर्थं वचनम् । संवोढुः स्वं सांवहित्रम् ॥ अग्नीधः शरणे रण् भं च ॥ * ॥ अग्निमिन्धे अग्नीत् । तस्य स्थानं आग्नीध्रम् । तात्स्थ्यात्सोऽप्याग्नीध्रः ॥ समिधामाधाने षेण्यण् ॥ * ॥ सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ॥

## रथाद्यत् । ४ । ३ । १२१ ॥

रथ्यञ्चक्रम् ॥ रथाद्रथाङ्ग एवेष्यते नान्यच्च । रथसीताहलेभ्यो यद्विधाने तदन्तविधिरुपसङ्ख्यायते । परमरथ्यम् ।

## पत्त्रपूर्वादञ् । ४ । ३ । १२२ ॥

पत्त्रं वाहनम् । अश्वरथस्येदं आश्वरथम् ।

## पत्त्राध्वर्युपरिषदश्च । ४ । ३ । १२३ ॥

अञ् स्यात् ॥ पत्त्राद्वाह्य इति वाच्यम् ॥ * ॥ अश्वस्येदं वहनीयं आश्वम् । आध्वर्यवम् । पारिषदम् ।

## हलसीराट्ठक् । ४ । ३ । १२४ ॥

हालिकम् । सैरिकम् ॥

**द्वन्द्वाद् वुन् वैरमैथुनिकयोः ॥ ४ । ३ । १२५ ॥**

काकोलूकिका । कुत्सकुशिकिका ॥ वैरे देवाऽसुरादिभ्यः प्रतिषेधः ॥ * ॥ दैवाऽसुरम् । राक्षोऽसुरम् ।

**गोत्रचरणाद्वुञ् ॥ ४ । ३ । १२६ ॥**

औपगवकम् ॥ चरणाद्धर्माम्नाययोरिति वक्तव्यम् ॥ * ॥ काठकम् ॥

**सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ ४ । ३ । १२७ ॥**

घोषग्रहणमपि कर्त्तव्यम् ॥ * ॥ अञ् । बिदानां सङ्घोऽङ्को घोषो वा बैदः । बैद लक्षणम् । यञ् । गार्गः । गार्गम् । इञ् । दाक्षः । दाक्षम् । परम्परासम्बन्धोऽङ्कः । साक्षात्तु लक्षणम् । णकारो बैदी स्थूणा अस्य वैदीस्थूण इत्यत्र अणन्तलक्षणङीप्पुंवद्भावप्रतिषेधार्थः ॥

**शाकलाद्वा ॥ ४ । ३ । १२८ ॥**

अण् वोक्तेऽर्थे । पक्षे चरणत्वाद्वुञ् । शकलेन प्रोक्तमधीयते शाकलाः । तेषां सङ्घोऽङ्को घोषो वा शाकलः । शाकलकः । लक्षणे क्लीबता ॥

**छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ ४ । ३ । १२९ ॥**

छन्दोगानां धर्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । चरणाद्धर्माम्नाययोरित्युक्तम् । तत्साहचर्यान्नटशब्दादपि तयोरेव ॥

**न दण्डमाणवान्तेवासिषु ॥ ४ । ३ । १३० ॥**

दण्डप्रधाना माणवास्तेषु शिष्येषु च वुञ् न स्यात् । दाक्षाः दण्डमाणवाः शिष्या वा ॥

**रैवतिकादिभ्यश्छः ॥ ४ । ३ । १३१ ॥**

तस्येदमित्यर्थे ॥ वुञोऽपवादः । तेषां गोत्रप्रत्ययान्तत्वात् । रैवतिकीयः । वैजवापीयः ।

**कौपिञ्जलहास्तिपदादण् ॥ ४ । ३ । १३२ ॥**

कुपिञ्जलस्यापत्यं इहैव निपातनादण् अन्यथा इञ् स्यात् । तदन्तात्पुनरण् । कौपिञ्जलः । गोत्रवुञोऽपवादः । हस्तिपादस्यापत्यं हास्तिपदः । इहैव निपातनादण् पद्भावश्च । अन्यथा यस्येतिलोपस्यासिद्धत्वान्न स्यात् । तस्यायं हास्तिपदः । चरणवुञोऽपवादः ॥

**आथर्वणिकस्येकलोपश्च ॥ ४ । ३ । १३३ ॥**

अण् स्यात् । अथर्वणा प्रोक्तो वेद उपचारादथर्वा तमधीते वसन्तादित्वात् ठक् । आथर्वणिकः । दाण्डिनायनादिसूत्रेण निपातनाट्टिलोपाभावः । अथवा ऽथर्वणा प्रोक्तो वेदः तेन प्रोक्तमित्यण् । ततश्छन्दोब्राह्मणानीति तद्विषयतायामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक् । तस्य विधानसामर्थ्यान्न प्रोक्ताल्लुक् । आथर्वणिकः । तस्यायमाथर्वणो धर्म आम्नायो वा । चरणवुञोऽपवादः । अत्रेदमवधेयम् । यथान्यासे आथर्वणार्थमाथर्वणिकार्थे च चतुर्ग्रहणं क्रियते । वसन्तादिष्वथर्वन्शब्दः आथर्वणशब्दश्च पठ्यते । षष्ठाध्याये प्रकृतिभावार्थं ग्रहणं क्रियते । इदं चतुर्थमिकलोपार्थम् । तच्च द्विर्ग्रहणं शक्यमकर्तुम् । कथम् । तेन प्रोक्तमिति प्रकृत्य ऋषिभ्यो लुगवश्यवक्तव्यः । वसिष्ठोऽनुवाकः । विश्वामित्रोऽनुवाक इत्येवमर्थम् । ततो वक्तव्यम् । अथर्वणो वेति । तेन सिद्धं । अथर्वा इति । आथर्वण इति च । अस्मादेव भाष्यप्रयोगात्तद्विषयता वैकल्पिकी ।

अथ वसन्तादिष्वाथर्वणशब्दः पठितव्यस्तत्र नैवार्थे. प्रकृतिभावार्थेन नापीकलोपार्थेन । ननु वसन्तादिष्वाथर्वणपाठेनाथर्वणमधीत इति विग्रहे आथर्वणिकसिद्धावपि अथर्वाणमधीत इति विग्रहे आथर्वणिको नैव सिध्येदिति चेन्न । तस्माद्धि प्रत्ययो नैवोत्पद्यते । किन्तु विग्रह एव । अव्यविकन्यायात् । किन्तु आथर्वणिकानां धर्म आम्नायो वा इत्यर्थे आथर्वणशब्दो न सिध्यतीकलोपार्थवचनस्यासत्त्वे इति परम वशिष्यते । तदपि न । अथर्वणा प्रोक्तमित्यर्थे आथर्वणशब्दस्य सिद्धत्वात् । अथर्वणा प्रोक्तस्यैव च तेषामाम्नायत्वात् । आम्नायान्तरस्य तु तेषामाथर्वणशब्दवाच्यस्याभावात् । तत्राथर्वणिकसम्बन्ध्याम्नाय इत्यर्थे सम्बन्धबोधकषष्ठीघटितवाक्यमेव प्रयोक्तव्य आथर्वणिकानामिदमिति । न तु तत. प्रत्ययोऽनभिधानात् । धर्मस्त्वाथर्वणसादृश्यादाथर्वणशब्देनैवाभिधास्यत इति तत्रापि नैव प्रत्ययः । पुत्रधनादिरूपसम्बन्ध्यन्तरे तु नैव प्रत्यय. प्राप्तश्चरणाद्धर्माम्नाययोरिति वचनादिति नागनाथमतम् । समाप्ता. शैषिकाः ॥

## तस्य विकारः ॥ ४ । ३ । १३४ ॥

अश्मनो विकारे टिलोपो वक्तव्य इति टिलोपः । अश्मनो विकार आश्मनः । भास्मनः । मार्तिकः । हाल॰ । सैर । अश्मन्भस्मन्शब्दौ मनिन्प्रत्ययान्तौ मृदस्तिकन् त्रयोऽपि नित्स्वरेणाद्युदात्ताः । हल नब्विषयत्वात् । सीर. क्रन्नन्तत्वात् । शैषिकाणा निवृत्तत्वात्तदधिकारोक्ताष्ठगादयोऽपि नेह ॥

## अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ ४ । ३ । १३५ ॥

चाद्विकारे । मयूरस्यावयवो विकारो वा मायूर । अत्र प्राणिभ्योऽञ वक्ष्यति । लघावन्तइति मध्योदात्तोऽयम् । तत्रानुदात्तादे-

रजः सिद्धत्वादुदात्ताद्यर्थं वृद्धेषु मयड्बाधनार्थं चावश्यकमिदं परत्वादनुदात्तादिष्वपि प्रवर्तते । मौर्वं काण्डं भस्म वा । पैप्पलम् । मुर्वाशब्दस्तृणधान्यानां च द्व्यषामित्याद्युदात्तः । लघावन्ते इति पिप्पलशब्दोऽपि ।

**बिल्वादिभ्योऽण् ॥ ४ । ३ । १३६ ॥**

काण्डपाटलीशब्दाभ्यां वृद्धलक्षणस्य मयटोऽपवादः । शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः । बैल्वः । अण्ग्रहणं बाधकबाधनार्थम् । बिल्वादिभ्यो यथाविहितमित्युच्यमाने हि पाटलीशब्दान्ङीषन्तादनुदात्तादिलक्षणस्याञो बाधके मयटि प्राप्ते पुनर्वचनादञेव स्यात् । अण्ग्रहणात्त्वणेव भवति ॥

**कोपधाच्च ॥ ४ । ३ । १३६ ॥**

अणस्यात् । तर्कु । तार्कवम् । तैत्तिडीकम् । लघावन्ते इति मध्योदात्तोऽयम् ।

**त्रपुजतुनोः षुक् ॥ ४ । ३ । १३८ ॥**

अभ्यामणस्याद्विकारे । एतयोः षुगागमश्च । त्रापुषम् । जातुषम् ॥

**ओरञ् ॥ ४ । ३ । १३९ ॥**

दैवदारवम् । पीतद्र्वर्थानामित्याद्युदात्तोऽयम् । पीतद्रु सरलो वनस्पतिः सोऽर्थो येषां तेषामादिरुदात्त इति तदर्थं ॥

**अनुदात्तादेश्च ॥ ४ । ३ । १४० ॥**

दाधित्थम् । कापित्थम् । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तावेतौ ॥

**पलाशादिभ्यो वा ॥ ४ । ३ । १४१ ॥**

पालाशम् कारीरम् ॥

**शम्याः ष्लञ् ॥ ४ । ३ । १४२ ॥**

शामीलं भस्म । षित्वान्ङीष् । शामीली स्रुक् ।

**मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ ४ । ३ । १४३ ॥**

प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयो ॥ अश्ममयम् । आश्मनम् । भाषाया किम् । खादिरो यूपः । अभक्ष्येत्यादि किम् । मौद्गः सूपः । कार्पासमाच्छादनम् । उभयत्र बिल्वाद्यण् । एतयोः किम् । इत उत्तरैर्विशेषप्रत्ययैः प्राणिरजतादिभ्योऽञित्येवमादिभिः सह सम्प्रधारणायां परत्वात् एव स्युः पक्षे मयडपि यथा स्यादित्येवमर्थम् । कपोतमयम् । पूर्वेषां तु प्रत्ययाना मयडभावपक्षे सावकाशत्वान्मयट्पक्षे परत्वान्मयडेव लभ्यते इति बोध्यम् ॥

**नित्यं वृद्धशरादिभ्यः ॥ ४ । ३ । १४४ ॥**

आम्रमयम् । शरमयम् । आरम्भसामर्थ्यादेव सिद्धे नित्यमिति किम् । योगविभागेनान्यत्रापि क्वचिन्नित्यार्थम् । तेनैकाचो नित्यम् । त्वङ्मयम् । वाङ्मयम् । कथ तर्हि आप्यमम्मयमिति । तस्येदमित्यणन्तात्स्वार्थे ष्यञ् ॥

**गोश्च पुरीषे ॥ ४ । ३ । १४५ ॥**

गोः पुरीष गोमयम् ॥

**पिष्टाच्च ॥ ४ । ३ । १४६ ॥**

मयट् स्याद्विकारे । पिष्टमय भस्म । कथ पैष्टी सुरेति । सामान्यविवक्षाया तस्येदमित्यण् ॥

**संज्ञायां कन् ॥ ४ । ३ । १४७ ॥**

पिष्टादित्येव । पिष्टस्य विकारविशेषः पिष्टकः । पूपोऽपूपः पिष्टकः स्यात् ॥

**व्रीहेः पुरोडाशे ॥ ४ । ३ । १४८ ॥**

मयट् स्यात् । बिल्वाद्यणोऽपवादः । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ॥

**असंज्ञायां तिलयवाभ्याम् ॥ ४ । ३ । १४९ ॥**

तिलमयम् । यवमयम् । संज्ञायां तु तैलम् । यावकः ॥

**द्व्यचश्छन्दसि ॥ ४ । ३ । १५० ॥**

विकारे मयट् स्यात् ॥ शरमयं बर्हिः । यस्य पर्णमयी जुहूः ॥

**नोत्वद्वर्ध्रबिल्वात् ॥ ४ । ३ । १५१ ॥**

उत्वानुकारवान् । मौञ्जं शिक्यम् । वर्ध्रं चर्म । तस्य विकारो बार्ध्री रज्जुः । बैल्वो यूपः । तपरकरणं किम् । धूममयान्यभ्राणि । मतुब्निर्देशस्तदन्तविधिनिरासार्थः । अन्यथेहैव स्यात् । वैणवी यष्टिः ॥

**तालादिभ्योऽण् ॥ ४ । ३ । १५२ ॥**

अञ्मयटोरपवादः । तालाद्धनुषि । तालं धनुः । अन्यत्तालमयम् । ऐन्द्रायुधम् । समासस्वरेणान्तोदात्तोऽयम् । अण्ग्रहणं बाधकबाधनार्थम् । अन्यथा यथाविहितमित्युच्यमाने प्राण्यजन्ताद्वार्हिणशब्दाद्वृद्धान्मयट् स्यात् । वचनं तु जितश्च तत्प्रत्ययादित्यञो बाधनार्थं स्यात् ॥

**जातरूपेभ्यः परिमाणे ॥ ४ । ३ । १५३ ॥**

अण्स्यात् । बहुवचनात्पर्यायग्रहणम् । हाटकः । तापनीयः ।

सौवर्णा वा निष्कः । परिमाणे किम् । हाटकमयी यष्टिः ॥

**प्राणिरजतादिभ्यो ऽञ् ॥ ४ । ३ । १५४ ॥**

शौवम् । बाकम् । प्राणिना कुपूर्वाणामित्याद्युदात्तावेतौ ॥ श्वानं विध्यतीति क्विप् । न हि वृतीति दीर्घः । ग्रहिज्येति संप्रसारणम् । कृदुत्तरपदप्रकृतिस्वरेणातोदात्तोऽयम् । श्वाविधो विकारः शौवाविध । द्वारादित्वादैजागमः । अचानुदात्तादिलक्षणाञो बाधको वृद्धिलक्षणो मयडप्यनेन परत्वाद्बाध्यते । राजतम् । अनुदात्तादीना मिह पाठो मयड्बाधनार्थः ॥

**ञितश्च तत्प्रत्ययात् ॥ ४ । ३ । १५५ ॥**

ञिद्यो विकारावयवप्रत्ययस्तदन्तादञ्स्यात्तयोरेवार्थयोः ॥ मयटोऽपवादः । शामीलम् । दाधित्थम् । ञितः किम् । बैल्वमयम् ।

**क्रीतवत्परिमाणात् ॥ ४ । ३ । १५६ ॥**

प्राग्वतेष्ठञित्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते ॥ अणादीनामपवादः । निष्केण क्रीतम् । नैष्किकम् । एव निष्कस्य विकारोऽपि नैष्किकः । शतस्य विकारः शत्यः । शतिकः । साहस्र । वतिः सर्वसादृश्यार्थः । अध्यर्धपूर्वद्विगोर्लुगसंज्ञायामित्यादिकमप्यतिदिश्यते । द्विसहस्रः । द्विसाहस्र. । द्विनिष्कः । द्विनैष्किकः ॥

**उष्ट्राद्वुञ् ॥ ४ । ३ । १५७ ॥**

प्राण्यञोऽपवादः । औष्ट्रक ॥

**उमोर्णयोर्वा ॥ ४ । ३ । १५८ ॥**

औमम् । औमकम् । और्णम् । और्णकम् । वुञभावे यथाक्रममणञौ । तृणधान्यानामित्युमाऽद्युदात्ता ॥

**एण्या ढञ् ॥ ४ । ३ । १५९ ॥**

ऐणेयम् । एणस्य तु ऐणम् । प्राग्यञ् ॥

**गोपयसोर्यत् ॥ ४ । ३ । १६० ॥**

गव्यम् । मयड्बाधनार्थं वचनम् । पयस्यम् ॥

**द्रोश्च ॥ ४ । ३ । १६१ ॥**

द्रुर्वृक्षस्तस्य विकारोऽवयवो वा द्रव्यम् ॥

**माने वयः ॥ ४ । ३ । १६२ ॥**

द्रोरित्येव । द्रोर्विकारभूतं प्रस्थादिपरिमाण द्रुवयम् । यौतव द्रुवय पाय्यमिति मानार्थक चयम् ॥

**फले लुक् ॥ ४ । ३ । १६३ ॥**

विकारावयवप्रत्ययत्य लुक् स्यात्फले । आमलक्या फलमामलकम् ॥

**प्लक्षादिभ्यो ऽण् ॥ ४ । ३ । १६४ ॥**

विधानसामर्थ्यान्न लुक् । प्लाक्षम् । नैयग्रोधम् ॥

**जम्ब्वा वा ॥ ४ । ३ । १६५ ॥**

जम्बूशब्दात्फलेऽण् वा स्यात् । जाम्बवम् । पक्षे ओरञ् । तस्य लुक् । जम्बु ॥

**लुप् च ॥ ४ । ३ । १६६ ॥**

जम्ब्वा. फलप्रत्ययस्य लुब् वा स्यात् ॥ लुपि युक्तवत् । जम्ब्वाः फलं । जम्बूः ॥ फलपाकशुषामुपसङ्ख्यानम् ॥ * ॥ व्रीहयः । मुद्गाः ॥ पुष्पमूलेषु बहुलम् ॥ * ॥ मल्लिकायाः पुष्प मल्लिका । जात्याः पुष्प जाती । विदार्या मूलं विदारी । बहुलग्रहणान्नेह । पाटलानि

पुष्पाणि । साल्वानि मूलानि । बाहुलकात्क्वचिल्लुक् । अशोकम् । करवीरम् ॥

**हरीतक्यादिभ्यश्च ॥ ४ । ३ । १६७ ॥**

एभ्यः फलप्रत्ययस्य लुप्स्यात् । हरीतक्यादीना लिङ्गमेव प्रकृतिवत् । हरीतक्याः फलानि हरीतक्य ॥

**कंसीयपरशव्ययोर्यञञौ लुक्च ॥ ४ । ३ । १६८ ॥**

कंसीयपरशव्यशब्दाभ्या यञञौ स्तश्छयतोश्च लुक् ॥ न तु यञञोर्विधानसामर्थ्यात् । नापि प्रकृतेर्लुक्शब्देन विधानात् । नाप्यौणादिकयोः । प्रातिपदिकाधिकारेण ततः परयोर्लुगित्यर्थात् । तेषामव्युत्पन्नत्वाच्च । कंसाय हित कंसीयम् । तस्य विकार. कांस्यम् । परशवे हितं परशव्यम् । तस्य विकारः पारशव. । प्राग्दीव्यतीयाः समाप्ताः ॥

इत्योरम्भट्टेन श्रीघोण्डभट्टविश्वरूपात्मजेन वैजनाथभट्टविश्वरूपापरनामधेयेन विरचितायां व्याकरणदीपिकासमाख्यायां पाणिनिसूत्रवृत्तौ चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः ॥



श्रीगणेशाय नमः ॥

# अथ चतुर्थाध्यायस्य चतुर्थः पादः ।

—— o ——

**प्राग्वहतेष्ठक् ॥ ४ । ४ । १ ॥**

तद्वहतीत्यतः प्राक् ठगधिक्रियते ॥ तदाहेति माशब्दादिभ्य उपसङ्ख्यानम् ॥ * ॥ मा शब्द कार्षीरिति य आह स माशब्दिकः ॥ आहौ प्रभूतादिभ्यः ॥ * ॥ प्रभूतमाह प्राभूतिक । पार्याप्तिक ॥ पृच्छतौ सुस्नातादिभ्यः ॥ * ॥ सुस्नातं पृच्छति सौस्नातिकः । सौखशायनिकः । आनुशतिकादिः ॥ गच्छतौ परदारादिभ्य. ॥ * ॥ पारदारिकः । गौरुतल्पिकः ॥

**तेन दीव्यति खनति जयति जितम् ॥ ४ । ४ । २ ॥**

अक्षै दीव्यति आक्षिकः । अभ्र्या खनति आभ्रिकः । अक्षै जयति आक्षिक । अक्षैर्जितमाक्षिकम् ॥

**संस्कृतम् ॥ ४ । ४ । ३ ॥**

दध्ना संस्कृत दाधिकम् । मारिचिकम् ॥

**कुलत्थकोपधादण् ॥ ४ । ४ । ४ ॥**

ठकोऽपवादः । कुलत्थैः संस्कृत कौलत्थम् । तैत्तिडीकम् ॥

**तरति ॥ ४ । ४ । ५ ॥**

उडुपेन तरति औडुपिकः ॥

**गोपुच्छाट्ठञ् ॥ ४ । ४ । ६ ॥**

गौपुच्छिकः ॥

**नौद्व्यचष्ठन् ॥ ४ । ४ । ७ ॥**

नाविकः । घटिक । बाहुभ्या तरति बाहुका स्त्री ॥

**चरति ॥ ४ । ४ । ८ ॥**

तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । शाकटिकः । दध्ना चरति दाधिकः ॥

**आकर्षात् ष्ठल् ॥ ४ । ४ । ९ ॥**

आकर्षो निकषोपलः । आकषादिति पाठान्तरम् । तेन चरति आकर्षिकः । षित्वान्ङीष् । आकर्षिकी ।

आकर्षात्पर्पादेर्भस्त्रादिभ्य कुसीदसूत्राच्च ।
आवसथात्किसरादेः षितः षडेते ठगधिकारे ॥

षडिति सूत्रषट्केन विहिता इत्यर्थ । प्रत्ययास्तु सप्त ॥

**पर्पादिभ्यः ष्ठन् ॥ ४ । ४ । १० ॥**

पर्पेण चरति पर्पिकः । पर्पिकी । येन पीठेन पङ्गवश्चरन्ति स पर्पः । अश्विकः । रथिकः ॥

**श्वगणाट्ठञ्च ॥ ४ । ४ । ११ ॥**

चात् ष्ठन् । श्वादेरिञीत्यचेकारादावित्युपसङ्ख्यानादैच् । श्वगणेन चरति श्वागणिकः । श्वागणिकी । श्वगणिकः । श्वगणिकी ॥

**वेतनादिभ्यो जीवति ॥ ४ । ४ । १२ ॥**

वेतनेन जीवति वैतनिकः । धानुष्क ॥

**वस्नक्रयविक्रयाट्ठन् ॥ ४ । ४ । १३ ॥**

वस्नेन मूल्येन जीवति वस्निकः । क्रयविक्रयग्रहणं सङ्घात-विगृहीतार्थम् । क्रयविक्रयिकः । क्रयिक. । विक्रयिकः ॥

**नौद्व्यचष्ठन्** ॥ ४ । ४ । ७ ॥

नाविकः । घटिकः । बाहुभ्यां तरति बाहुका स्त्री ॥

**चरति** ॥ ४ । ४ । ८ ॥

तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हास्तिना चरति हास्तिकः । शाकटिकः । दध्ना चरति दाधिकः ॥

**आकर्षात् ष्ठल्** ॥ ४ । ४ । ९ ॥

आकर्षो निकषोपलः । आकषादिति पाठान्तरम् । तेन चरति आकर्षिकः । षित्वान्ङीष् । आकर्षिकी ।

आकर्षात्पर्पादेर्भस्त्रादिभ्य कुसीदसूत्राच्च ।

आवसथात्किसरादे षितः षडेते ठगधिकारे ॥

षडिति सूत्रषट्केन विहिता इत्यर्थ । प्रत्ययास्तु सप्त ॥

**पर्पादिभ्यः ष्ठन्** ॥ ४ । ४ । १० ॥

पर्पेण चरति पर्पिकः । पर्पिकी । येन पीठेन पङ्गवश्चरन्ति स पर्पः । अश्विकः । रथिकः ॥

**श्वगणाट्ठञ्च** ॥ ४ । ४ । ११ ॥

चात् ष्ठन् । श्वादेरिञीत्यत्रेकारादावित्युपसङ्ख्यानादैज्न । श्वगणेन चरति श्वागणिकः । श्वागणिकी । श्वगणिकः । श्वगणिकी ॥

**वेतनादिभ्यो जीवति** ॥ ४ । ४ । १२ ॥

वेतनेन जीवति वैतनिकः । धानुष्कः ॥

**वस्नक्रयविक्रयाट्ठन्** ॥ ४ । ४ । १३ ॥

वस्नेन मूल्येन जीवति वस्निकः । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः ॥